श्रेष्ठि-देवचन्द्र लालभाई-जैनपुस्तकोद्धारे-ग्रन्थाङ्कः १६.

याकिनीमहत्तरासूनुश्रीहरिभद्रसूरीश्वरविनिर्मितः

न्यायविशारद-न्यायाचार्यश्रीमद्यशोविजयोपाध्यायविरचितया स्याद्वादकल्पलताभिधानया टीकया विभूषितः

# शास्त्रवार्तासमुच्चयः ।

( एतद्रूपोऽयं प्रथमो विभागः )

शास्त्रविशारदजैनाचार्य-श्रीविजयधर्मसूरीश्वरपादाम्भोजभ्रमरेण श्रेष्ठित्रिकमचन्द्रात्मजेन
न्यायतीर्थपदवीधारिणा पण्डितहरगोविन्ददासेन संशोधितः ।

'झवेरी नगीनभाई घेलाभाई' इत्यनेन ( एतद्भाण्डागारस्यैकतमेन कार्यवाहिणा ) प्रकाशितः ।

Rs 2-0-0. ] ( अस्याः पुनर्मुद्रणाद्याः सर्वेऽधिकाराः एतद्भाण्डागारकार्यवाहकाणामायत्ताः स्थापिताः ) [ प्रति ५००.

वीरसंवत् २४४०. विक्रमसंवत् १९७०. ईसु १९१४.

स्वोपज्ञवृत्तिसमावृतो वत्स्यति
आविर्भावयिष्यते द्वितीयोऽंशः



Printed 1 to 432 by Harakhchand Bhurabhai in the "Dharmâbhyudaya" Printing Press, Benaras.

Title, Preface, Index etc. printed by R. Y. Shedge in the Nirnaya-sagar Press, 23, Kolbhat Lane, Bombay.

Published by Shah Naginbhai Ghelabhai Javeri, 325, Javeri Bazar, Bombay.

## Sheth Devchand Lalbhai Jain Pustakoddhár Fund Series. No. 16.

# PREFACE.

Jain literature, comprising as it does almost all the branches that are characterestic of ancient Indian literature, holds no insignificant niche in the gallery of that literature. It is considerable even as it is at present, and was more so in former times. This is not the proper place to enumerate the great writers and their works that constitute the glory of that literature. The fact that the Jain writers had flourished in great abundance in times gone by, is evident from the vast stock of literature that has survived to this day, though it is yet in an unexplored state. Their eminence in subject matter as well as language is manifest to those who are conversant with it.

Along with Indian literature at large, Jain literature too has been a participator in the unhappy fate it met with at the hands partly of alien bigotry, and partly of mutual religious jealousy, and from the peculiarities of the climate. There was a time when there was no other alternative to secure the very existence of such literature but that of burying it in subterranean archives. The very method employed for the safety of the works became later on instrumental in further diminishing the stock,

and that at a time when there was not the least chance of its being further enriched. Those upon whom had fallen the task of being the hereditary custodians of such collections, had inherited the traditions of their forefathers, *viz.*, those of not suffering any part of such collection to see the rays of the Sun, lest they might be deprived of them, and the works most dear to them be destroyed by the assailants. It is very strange indeed that these traditions are alive even at this day when there is peace all round, and when the time is most propitious for the development of literature. Fire even has contributed its quota to the destruction of the records. Add to these the all round degeneration among the followers of the faith, when far from the prospects of further expansion, the faith was in imminent danger of being extinct. It was during this time that more attention was paid to the performance of external rites and ceremonies, and practically nothing was done in the direction of education and literature and the stirring up of the inner spirit of faith. It is only very recently that a practical revival of a salutary character is visible. Owing to circumstances above mentioned, the literary results of the arduous labour and the great learning of the Âchâryas and the Sâdhus of the faith, could not be made accessible.

It may perhaps not be out of place here to give in short, the history of the fund that has led to the publication of the series. The *late Sheth Devchand Lalbhai Javeri*, in whose memory this fund

has been inaugurated, left by his will a sum of Rs. 45,000 along with other sums to be spent in various other matters, to be devoted to some benevolent purpose. This amount was further enhanced by a sum of Rs. 25,000 set apart by *Gulabchand Devchand Esq.*, to be spent in some good purpose in the memory of the said *Sheth Devchand Lalbhai*. It was at the advice of *Pannias Shree Ânand Sâgar Gani* that these sums which made the original funds in Trust, were amalgamated, and the present Trust was inaugurated. At present the funds of this Trust amount to about Rs. 100,000 the original being further enhanced by the property of "*Bai Vijkore*" the deceased daugther of the said Sheth Devchand Lalbhai, which was directed to be made over to this Trust by her. The object of this Trust is to devote the interest of the funds for the preservation and the development of "*the Jain Shwetamber religious literature.*"

This work was composed in the year 1055 of the Mahâveera Era and the year 585 of the Vikrama Era. The author of this small work, which consists of 700 verses, was the great impartial preceptor, *Shrimad Haribhadra Âchârya* who has set up his ideal as follows:—

"पक्षपातो न मे वीरे, न द्वेषः कपिलादिषु;
युक्तिमद्वचनं यस्य, तस्य कार्यः परिग्रहः."

The author has dealt out equal justice to all schools of thought, which can be evidently seen from the very first expository sentence of the work, which runs as follows:—

"यं श्रुत्वा सर्वशास्त्रेषु, प्रायस्तत्त्वविनिश्चयः। जायते द्वेषशमनः"

We have in our possession a small yet elegant commentary composed by the great Âchârya himself, which we are shortly going to publish as the second part of this work. But, we present to our more thoghtful readers a lucid commentary named, **'स्याद्वादकल्पलता'** written by *Nyâyâchârya Yashovijaya Upâdhyâya.*

We had a mind to publish the biography of *Shrimad Haribhadra Âchârya* but the want of time has forced us to give up the idea for the present. We shall, if possible, lay it before our readers in the second part of this work.

We have got this work prepared by *Pundit Hargovinddas Trikamchand Shah*, a scholar of **न्याय** and an ex-student of the *Shree Yashovijay Pâthashâlâ of Benares.*

We express our deep and sincere indebtedness to the following for providing us with the original manuscripts of this work :—

*Pannias Shree Siddhivijaya, Pannias Shree Ânandsâgara, Yoganishtha Shree Buddhi-Sâgara and Javeri Bhogilal Tarachand* a trustee of *Dehlâ's Upâshraya* of Ahmedabad, and others.

We are glad in laying this work before the appreciative public as "No. 16th" of our series.

JAVERI BAZÂR,
BOMBAY.
*November, 1913.*

NAGINBHAI GHELABHAI JAVERI,
*for the Trustees of*
The Sheth Devchand Lalbhai Jain Pustakoddhâr Fund.

# प्रस्तावना ।

बुद्धः शुद्धो न शुद्धोदनतनयनयो नास्तिको नास्तदोषो
नो न्याय्यो न्यायमार्गो विमलमतिमता नापि वैशेषिकी दृक् ।
प्रेक्षाक्षेत्रं न सांख्यं न सततमहतं शासनं जैमिनीयं
गम्भीरप्रौढतर्के विलसति सति सद्वाङ्मये हारिभद्रे ॥ १ ॥

एतस्य सांप्रतमत्रभवतां भवतामभिमुखीकर्तुं प्रस्तुतस्य ग्रन्थस्य विनिर्माता स एव **श्रीमान् हरिभद्रसूरिः**, यस्य द्विजकुललब्धजन्मनोऽपि, अभिनिविष्टबुद्धीनां स्वप्नेऽप्यसुनिर्वहया ज्ञानाभिमानाविर्भूतया प्रतिज्ञया 'दूषणान्यपि तत्तत्कारणकलापकलितानि भूषणत्वेन परिणमन्ते' इत्यबाधितसिद्धान्तमिव सत्यापयतः समवाप्तभगवदर्हद्धर्मस्य तत्तत्प्रभावककार्यप्रादुर्भावकतयाऽर्हच्छासनसौधावष्टम्भस्तम्भत्वेन चतुश्चत्वारिंशदधिकाया ग्रन्थानां चतुर्दशशत्या विधायकत्वेन च समुपलब्धात्मलाभा सुकीर्तिनर्तकी जगद्रङ्गमण्डपेऽद्य यावद् नरीनृत्यते ।

पूर्वस्मिन्ननेहसि षट्स्वपि दर्शनेषु स्वस्वदर्शनग्रन्थप्रणयनपद्धतिरधिकारिवर्गभेदेन प्रायो विभागत्रयविभक्ताऽभवदिति विभाव्यते;—(१) गद्याकारेण "अल्पाक्षरमसंदिग्धम्०"[1] इत्यादिलक्षणलक्षितसूत्रसमूहशालिनी, (२) पद्यप्रकारेणानुष्टुब्वृत्तवृन्दात्मना कारिकामयी, (३) गद्यपद्य-

१ "अल्पाक्षरमसंदिग्धं सारवद् विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥ १ ॥"

मयोभयात्मा गद्यबहुला पद्यप्रचुरा वा प्रकीर्णा च । तत्राद्यायां निजाभीष्टतत्त्वस्वरूपमात्रप्रकाशनम् [illegible] प्रकटतया वा क्वचिदपरसिद्धान्तापकर्षसूचनं वा प्रस्तूयते । द्वितीयायां युक्तिसूक्तिविभूषितया किञ्चिद्विस्तृतपद्धत्या पराभिमतमन्तव्यनिराकरणम्, स्वाभीप्सितानां च तेषां स्फुटीकरणं विधीयते । तृतीयस्यां पुनरेकमेव कञ्चित् प्रतिनियतविषयम्, बहून् वा तान् कक्षाद्वयव्युत्पन्नानधिकारिणोऽपेक्ष्य यावद् बुद्धिबलोदयं परपक्षप्रतिक्षेपः स्वपक्षसिद्धिश्च सुसूक्ष्मविचारभरावगाहिन्या प्रतिपादनप्रणाल्या प्रकटीक्रियते ।

सत्यप्यस्मिन् श्रेणित्रितये प्रथमतः प्रपठनीयान् प्रथमकोटिप्रविष्टान् ग्रन्थानधीतवतः, व्युत्पत्तिं च तेष्वासादितवतः, अथ च ततोऽपि विशेषमभिलषतोऽधिकारिणः समाश्रित्य परोपकारसारोऽयं ग्रन्थकारो द्वितीयपद्धतिमलंकुर्वन्तं संस्कृतपद्यात्मकं ग्रन्थमिममनुष्टुप्छन्दसां सप्तभिः शतैर्विनिरमास्त,[1] नाम चास्य 'प्रमातारः, समवगम्य ग्रन्थनाम्नोऽर्थशून्यतां स्वप्रवृत्तिप्रतिबन्धं मा विधिषत, प्रमाय वा याथार्थ्यमिन्द्रगोपादिष्विवातथ्यनामस्वन्यग्रन्थेष्विव ग्रन्थेऽस्मिन् प्रवृत्तिमारभमाणाः फलावाप्तिपराङ्मुखा मा जनिषत, मा तनिषत च संजातानाश्वासास्तत्कर्तरि विप्रतारकत्वकलङ्कशङ्काम्' इति सुदूरमवलोकमानः सुशकानुष्ठानयोरप्यर्थशून्याऽयथार्थयोराह्वयोर्व्यवच्छेदेन सततमौचितीमावहत् प्रतिपन्नार्थतथात्वाव्यभिचारित्वं "शास्त्रवार्तासमुच्चयः" इति समयुक्त, व्यभक्त च ग्रन्थमेनं स्तबकाकारेष्वेकादशसु विभागेषु[2] । एतेन 'एतेनैव ग्रन्थकृताऽन्येऽपि दर्शनविषयमिममधिकृत्यानेकेऽनेकान्तजयपताकादयोऽद्यापि प्रतीतिपथमवतरन्तो ग्रन्था अग्रन्थिषत, इति तत एव विषयस्यास्य निर्णयात् पिष्टपेषणमिवानुकुर्वन्नयं

---

१ "शतानि सप्त श्लोकानामनुष्टुप्छन्दसां कृतः । आचार्यहरिभद्रेण शास्त्रवार्तासमुच्चयः" ( स० ११, श्लो० ५६ ) इति ग्रन्थकर्त्रैव ग्रन्थान्ते प्रतिपादनात् ।

२ यद्यपि मूलग्रन्थे स्वोपज्ञटीकायां च नायं विभाग उपलब्धचरः, तथापि स्याद्वादकल्पलतायां तद्विलोकनेन ग्रन्थकृतोऽपि स विभागोऽनुमत इति संभाव्यते ।

ग्रन्थः कथमिव साफल्यमश्नुवीत ?' इत्यारेकापि रिक्तविषयीकृता, तेषां ग्रन्थानां तृतीयकोव्युक्तलक्षणलक्षितत्वेन विजातीयविषयसंदर्भगर्भत्वात् । न खलु तत्रोपनिबद्धान्येव प्रतिपत्तव्यवस्तून्यत्र प्रतिपाद्यत्वेनाध्यक्षत, येनास्य निरर्थकतामुक्तार्थतां वा संशयीरन्, स्वप्रवृत्तिं चात्र भवन्तीं निरुन्धीरन् धीराः, अतिरिक्ताधिकारियोग्यत्वादस्य ।

इदमत्र किञ्चिद् विचार्यमाणं न नाम नोचितीभवितुमर्हति यदुत, ईदृशीमेव कर्कशतर्कपरिष्कृतपद्धतिमादधद्वयः, आश्रयद्वयश्चार्हतमत-विभिन्नानि तानि तानि स्वमतमन्तव्यानि, [१]माध्यमककारिका—[२]श्लोकवार्तिकादिभ्यः प्रबन्धनिबन्धेभ्यः सामान्यतो विशेषतश्च कर्तृगोचरं कृतिविषयं च कं कमतिशयं ग्रन्थेऽत्र विलोकामहे ? इति । विचारश्चायमत्र स्थलसंकोचेन न विस्तरतः शक्यानुष्ठानः, संक्षेपतः पुनर्निरीक्षितोभयग्रन्थानामथ च ताटस्थ्यमातिष्ठानानामयमेवार्हति निर्बाधो निर्णयः, तथाहि—माध्यमकादिकर्तारः स्वपक्षसिद्धिमुपलिप्सवः परपक्षप्रतिक्षेपाविनाभाविनीं च तां निजमनसि विनिश्चिन्वन्त इव यथा तथा परपक्षप्रतिवादमेव लक्ष्यकार्षुः, अकार्षुश्चान्यशास्त्राणां तत्कर्तॄणां च महात्मनां मत्सराध्मातमानसा इवापशब्दैर्दूरूपप्रतिरूपका[३]दिभिरवहेलनाम्, इति न तादृशादरभाजनं भवन्ति मध्यस्थानाम् । अयं पुनरनूनज्ञानविभवस्तद्विपरीतलक्षणो विचक्षणो ग्रन्थकारः 'न हि रागद्वेषोपप्लुतमानसैर्निर्मीयमाणो विचारः स्वीकर्तव्यताकोटिमुपढौकते' इति स्वहृदयमिवाविर्भावयन्, अन्यत्कुर्वन् परदर्शनमन्त-व्यानि, आदरदृष्ट्या विगाहमानः परतीर्थिकशास्त्राणि, बहु मन्वानश्च तत्प्रणेतॄन् विपश्चितः, 'अनुसंधेयानि महात्मनां वचनानि' इत्युक्तिमाश्रयन्,

---

१ नागार्जुनप्रणीतः शून्यवादनिरूपणपरोऽयं ग्रन्थः । २ कुमारिलभट्टविहितो जैमिनीयकतिपयसूत्रव्याख्यानरूपः पूर्वमीमांसादर्शनग्रन्थः ।

३ "यस्य दर्शनतेजांसि परवादिमतेन्धनम् । दहन्त्यद्यापि लोकस्य मानसानि तमांसि च ॥ १ ॥"
इत्यादिमाध्यमकारिकाटीकाकारचन्द्रकीर्त्यादिभिः प्रणीतैः ।

यथा परदर्शनानि विगतदृष्टेष्टविरोधादिकल्मषाणि भवितुमर्हन्ति तथा पौर्वापर्येणानुसंदधानः, सन्न्याय[illegible]गतभगवदर्हद्दर्शनसंगतिशालीनि च तानि विदधानः, विरलमन्यत्रोपलभ्यमानाभिर्युक्तिततिभिः संपादयति निर्बाधं स्वमन्तव्यं सिद्धिसौधाध्यासधैर्यधारि सौन्दर्यभाजा वचनविन्यासेन । प्रत्यलश्चैतन्निदर्शनाय

"एवं प्रकृतिवादोऽपि विज्ञेयः सत्य एव हि । कपिलोक्तत्वतश्चैव दिव्यो हि स महामुनिः ॥" इति श्लोकपर्यन्तः सांख्यमताधिकारः । तत आदधात्ययं ग्रन्थः सर्वेषामपि सर्वदर्शनज्ञानमुपलिप्सूनामालोकनीयताम्, आवहति विश्वेषामपि द्विधाक्लेशोद्विग्नानां विश्वसनीयताम्, अर्हति च समेषामपि तटस्थानामुपादेयतामिति ।

यच्च दर्शनमेव सकलम्, तदंशो वा कश्चन तादृशबाधाद्याहितत्वेन न कथञ्चिदपि संगतिमाप्नोति, तस्य प्रतिक्षेपोऽप्यत्र तेन प्रौढिमानमश्नुवानेन तर्कसंपर्केण निरूपयांबभूवे, यं प्रज्ञाविषयीकुर्वता मध्यस्थेन संख्यावता ग्रन्थकर्तुः शेमुष्युन्मेषं परां स्तुतिमनुपनीय न स्थैर्यमाधातुं शक्यते; यावता तदितरैर्ग्रन्थप्रणयिभिः स्वपक्षसिद्धये विरच्यमाना युक्तिप्रबन्धाः प्रायः प्रतिवादिप्रतिपादितप्रतिद्वन्द्वितर्कोपहन्यमाना दोषपङ्ककलङ्कितात्मानः सन्तः प्रख्यापयन्ति तद्ग्रन्थितॄणां स्वाभिमताभिनिवेशसहकृतं विमलविज्ञानविरहम्; सत्यापयन्ति "[1]आग्रही बत निनीषति[2] युक्तिम्" इत्युमा[3]स्वातिवाचकेनोच्चानं सूक्तम्, प्रतापयन्ति चेत्थं मनस्विनां वितथवादमसहमानानि मनांसि; यथा श्लोकवार्तिके चोदनासूत्रे

---

१ आग्रही बत निनीषति युक्तिं तत्र, यत्र मतिरस्य निविष्टा । पक्षपातरहितस्य तु युक्तिर्यत्र, तत्र मतिरेति निवेशम् ॥ १ ॥
२ नेतुमिच्छति न तु शक्नोतीति ध्वनिः । ३ यदाह ज्ञानकलशः संदेहसमुच्चये-"उक्तं चोमास्वातिवाचकैः" "आग्रही०" ।

“चोदना जनिता बुद्धिः प्रमाणं दोषवर्जितैः । कारणैर्जन्यमानत्वाल्लिङ्गाप्तोक्त्यक्षबुद्धिवत् ॥”

इति श्लोकोक्तस्तर्कस्तत्प्रतिद्वन्द्विना

“चोदनाजनिता बुद्धिरप्रमा गुणवर्जितैः । कारणैर्जन्यमानत्वादलिङ्गा[2]प्तोक्तबुद्धिवत् ॥”

इत्यनेन निरस्यमाणः; यथा वा

“दोषाः सन्ति न सन्तीति पौरुषेयेषु चिन्त्यते । वेदे कर्तुरभावात्तु दोषाशङ्कैव नास्ति नः ॥”

इत्ययमपि

“गुणाः सन्ति न सन्तीति पौरुषेयेषु चिन्त्यते । वेदे कर्तुरभावात्तु गुणाशङ्कैव नास्ति नः ॥”

इत्यनेन प्रतिहन्यमानः । इत्यलं बहुना प्रसङ्गेन ।

---

१ कर्तृपुरुषाश्रयगुणदोषनिबन्धने हि शब्दधियः प्रामाण्याप्रामाण्ये जगति विनिश्चिते, इति कर्त्रभावे वेदे तद्बुद्धेः कथमिव प्रामाण्यं भवेत् ? इति प्रेर्यस्य परिजिहीर्षया तत्र पुरुषकर्तृकत्वाभावेन तदाश्रयदोषाणामपि निराधाराणामनवस्थितेर्दोषाभावनिमित्तं स्वतस्तत्प्रामाण्यमभिवाञ्छता कुमारिलभट्टेन तत्साधनाय पद्यमिदमभिहितम्। एतच्च प्रतिवादिभिः सुगतसुतादिभिर्वेदे कर्तृपुरुषव्यावृत्तौ तदाश्रयगुणानामप्यभावेन गुणाभावकारणकमप्रामाण्यमासञ्जितवद्भिस्तमेव श्लोकं प्रतिकूलतर्केणोपस्कृत्य निराकृतम् । एवं “दोषाः सन्ति०” इत्येतदपि “गुणाः सन्ति०” इत्यनेन; “दोषाभाव एव गुणः” इति च “गुणाभाव एव दोषः” इत्येतेन; “गुणानामेव संसारेऽसत्त्वम्” इति च “दोषाणामेव सर्वथाऽभावः” इत्यमुना तत्समानतां बिभ्रता, “भावान्तरविनिर्मुक्तः” इति भट्टस्यैवोक्त्यातिशयं पुष्णता च प्रतिपक्षतर्केण प्रतिक्षिप्यमाणम् ।

२ आप्तोक्तस्यापि नत्राऽन्वयः ।

अस्मिंश्च ग्रन्थे स्वतन्त्रदर्शनप्रवर्तकत्वेन तत्समुत्तेजकत्वेन वा प्रसिद्धानमून् प्रबन्धनिबन्धॄन् नामानि ग्राहं निरदिक्षद् ग्रन्थकारः;

( १ ) कपिलः ( सांख्यदर्शनादिपुरुषः ) स्त० ३, श्लो० ४४ ।

( २ ) जैमिनिः ( मीमांसादर्शनाविर्भावकः ) स्त० ८, श्लो० ३३ ।

( ३ ) धर्मकीर्तिः ( न्यायवादितया ख्यातो न्यायवार्तिकादिकर्ता उद्धुरो बौद्धाचार्यः ) स्त० १०, श्लो० २४ ।

( ४ ) बुद्धः ( ताथागतशासनजनकः ) स्त० ६, ५१, ५३; स्त० ११, १८ ।

( ५ ) बृहस्पतिः ( चार्वाकमतप्रवर्तयिता ) स्त० १, श्लो० १११ ।

( ६ ) मनुः ( स्मृतिविशेषकर्ता ऋषिः ) स्त० ३, १६ ।

( ७ ) व्यासः ( अष्टादशपुराणीप्रणायकतया विश्रुतो महर्षिः ) स्त० १, ७५; ११, ४७ ।

ग्रन्थस्यास्य दर्शनविषयत्वात्, तत्रापि च पद्यबद्धसंदर्भत्वाद् निसर्गापतितं काठिन्यम्, इति स्वभ्यस्तवतामप्यपरनिबन्धान् नातिव्युत्पन्नप्रज्ञानां जनानामथ च संक्षेपतस्तदर्थाधिगममाकाङ्क्षतां स्वाभीप्सितनिष्पत्तये स्वल्पमपि सहकारिणमन्तरेण नान्यः कश्चन सरलः पन्था इति विज्ञाय परहितनिरतो ग्रन्थकारस्तदुपकारकरणवासितान्तःकरणः स्वयमेव पदार्थमात्रावबोधिनीं लघीयसीं टीकामपि निर्ममे, या स्तोकेनैव कालेनास्यैव ग्रन्थस्य द्वितीयविभागरूपेण प्रकटीभविष्यन्ती प्रभविष्यति तदवलोकनमनोरथरथस्थितान् कृतार्थयितुमार्थिकान् कृतिनः ।

सत्त्वेऽपि तस्या दिङ्मात्रप्रदर्शनप्रवणत्वात्, मूलग्रन्थस्य पुनरेतस्यैदशासदृशश्लाघनीयपद्धतिप्रतिबद्धत्वेन कर्कशतर्कसंपर्काङ्कितत्वेन चातिसूक्ष्मगभीराशयपरिपूर्णत्वाद् याथार्थ्येन भावार्थमात्मसाच्चिकीर्षन्तोऽपि सन्तो न समर्थीभवन्ति संपादयितुमात्मीयाभिमतमर्थम्, इत्युपचिकीर्षमाणस्तान्

विस्तरतो ग्रन्थाशयमधिगमयितुं व्यररचत् सार्धचतुर्दशश्लोकसहस्रमानां स्याद्वादनिर्बाधसिद्धान्ताप्राप्तपूर्वफलास्वाददायकत्वेन यथार्थनामां स्याद्वादकल्पलताभिधानां महीयसीं टीकां वाचककदम्बकावतंसः **श्रीमान् यशोविजयो महोपाध्यायः**, यस्य शैशवादेव गृहीतजिनपतियतिव्रतस्य निजनिष्प्रतिमप्रतिभाप्राग्भारेण क्रमशो विगाहितागाधपारगागमापारपारावारस्य, द्वादश वर्षाणि वाराणसीमधितष्ठुषः पुनरधीतप्राच्यनव्यप्रणालीकनिःशेषदर्शनसिद्धान्तसंघातस्य स्वीयानवद्यविद्याविभवविस्मितैर्वाराणसेयविबुधविसरैः 'न्यायविशारद'–इत्याद्युपनामभिर्विभूषितं नाम ।

टीकाकृतः सत्तासमयस्तेनैव निजेषु ग्रन्थेषु[1] स्वयमुल्लिखितत्वेन, अन्यैरपि[2] बहुभिः प्रमाणैर्निष्टङ्कितत्वेन च विक्रमात् सप्तदशशताब्दीपश्चाद्भागरूपोऽष्टादश्याश्च तस्याः पूर्वतनो विनिर्णीत एव । न्यायविशारदेनानेन तत्तद्विषयान् हृदयङ्गमशैल्या प्रतिपादयन्तो भूयांसो ग्रन्था विरचया-

---

१ यथा गूर्जरभाषामये वीरस्तवने;—

"इंदलपुरमां रहिय चोमासुं धर्मध्यान सुख पायाजी । संवत् सत्तर तेत्रीशा (१७३३) वर्षे विजय दशमी मन भायाजी ॥"

२ श्रीमानविजयोपाध्यायानां धर्मसंग्रहस्तेन परिशोधितः, यथाहुस्त एव तत्प्रशस्तौ;—

"सत्तर्ककर्कशधियाखिलदर्शनेषु मूर्धन्यतामधिगतास्तपगच्छधुर्याः । काश्यां विजित्य परयूथिकपर्षदोऽग्र्या विस्तारितप्रवरजैनमतप्रभावाः ॥ १० ॥

तर्कप्रमाणनयमुख्यविवेचनेन प्रोद्बोधितादिमुनिश्रुतकेवलित्वाः । चक्रुर्यशोविजयवाचकराजिमुख्या ग्रन्थेऽत्र मय्युपकृतिं परिशोधनाद्यैः ॥ ११ ॥"

धर्मसंग्रहनिर्माणसमयश्च

"वर्षे दिग्गजगुणमुनिचन्द्र (१७३८) प्रमिते च माधवे मासे । शुद्धतृतीयादिवसे यत्नः सफलोऽयमजनिष्ट ॥ १३ ॥"

इति प्रशस्तिपद्ये स्वयं ग्रन्थकृता निरूपितः । एवं

"धत्ते न्याययशा यशोविजयतां श्रीवाचको नामनि साहाय्याद् बुध ऋद्धिनामविमलः संवेगमार्गस्थितः"

इत्यादीनि विबुधविमलसूरिरचितसम्यक्त्वपरीक्षाद्युक्तान्यपि दर्शितटीकाकृत्समयसंवादकप्रमाणानि प्रसिद्धानि, स्थलाभावेन तु नात्र निदर्शितानि ।

श्चक्रिरे, यैर्लोचनगोचरसंचारिभिः कर्तृणां कृत्स्नविषयव्यापकं महत्त्वख्यापकं च पाण्डित्यं स्वयं पर्यचैषुः, परिचिन्वन्ति, परिचेष्यन्ति च तदवगाहनकृतश्रमा इति नात्र बहु वक्तव्यमस्माकम्; येषु सांप्रतमपि मुद्रिताकारेण लिखितादर्शरूपेण वामी उपलभ्यन्ते;—

(१) अध्यात्ममतपरीक्षा सटीका (२) अध्यात्मसारः (३) अध्यात्मोपनिषत् (४) अष्टसहस्रीविवरणम्
(५) आध्यात्मिकमतखण्डनं सटीकम् (६) उपदेशरहस्यं सवृत्ति (७) कर्मप्रकृतिटीका (८) गुरुतत्त्वनिर्णयः सटीकः
(९) जैनतर्कपरिभाषा (१०) ज्ञानबिन्दुः (११) ज्ञानसारः (१२) देवधर्मपरीक्षा
(१३) द्वात्रिंशद्द्वात्रिंशिका (१४) नयप्रदीपः (१५) नयरहस्यम् (१६) सटीको नयोपदेशः
(१७) न्यायखण्डनखण्डखाद्यम् (१८) न्यायालोकः (१९) प्रतिमाशतकं सवृत्तिकम् (२०) भाषारहस्यं टीकासहितम्
(२१) मार्गपरिशुद्धिः (२२) यतिलक्षणसमुच्चयः (२३) वैराग्यकल्पलता (२४) षोडशकवृत्तिः
(२५) सामाचारीप्रकरणम्

अनुपलभ्यमाना अपि सांप्रतम्, अस्यामेव टीकायां स्वकर्तृकत्वेन प्रत्यभिज्ञायमानाः, इतस्ततः श्रूयमाणा वैते;—

(१) अध्यात्मोपदेशः (२) अनेकान्तमतव्यवस्था (३) आत्मख्यातिः (४) चतुर्विंशतिजिनस्तुतिः
(५) छन्दश्चूडामणिटीका (६) ज्ञानसारचूर्णिः (७) ज्ञानार्णवः (८) तत्त्वविवेकः
(९) त्रिसूत्र्यालोकविधिः (१०) पातञ्जलयोगसूत्रचतुर्थपादवृत्तिः (११) प्रमाणरहस्यम् (१२) मङ्गलवादः
(१३) मार्गशुद्धिपूर्वार्धम् (१४-१५) लताद्वयम् (१६) विचारबिन्दुः (१७) विधिवादः
(१८) शठप्रकरणम् (१९) सिद्धान्ततर्कपरिष्कारः (२०) स्याद्वादरहस्यम्

किञ्च, 'रहस्य–पदाङ्कितास्तेन शतमेकं ग्रन्थाः प्राणायिषत इत्यपि श्रूयते । एतच्च यदि

"पूर्वं न्यायविशारदत्वबिरुदं काश्यां प्रदत्तं बुधै-
र्न्यायाचार्यपदं ततः कृतशतग्रन्थस्य यस्यार्पितम् ।
शिष्यप्रार्थनया नयादिविजयप्राज्ञोत्तमानां शिशु-
स्तत्त्वं किञ्चिदिदं यशोविजय इत्याख्याभृदाख्यातवान् ॥"

इति तर्कभाषाया ग्रन्थकृद्वाचमेव संवादरूपामनुभवद् भवेच्चेत् प्रमाणतासंसर्गि, शक्नोति भवितुम् । मा भूद् वा रहस्यपदलाञ्छितानां शतस्य ग्रन्थानामियं संवादः, इतरसहकृतानां तु तेषां ग्रन्थकृत्कृतग्रन्थानां शतत्वं प्रमाणदार्ढ्येन केन निरोद्धुं तीर्यते ? ।

दर्शितनामसु च पुस्तकेषु सर्वाणि गीर्वाणत्राणीमलङ्कृतवन्ति, त्रिचतुराणि तु प्राकृतगाथाबद्धमूलान्यपि प्रायः संस्कृतस्वोपज्ञटीकाभिरन्वितानि । एतदतिरिक्तानि टीकाकाररचितानि गूर्जरभाषायामप्यनेकानि ग्रन्थरत्नानि स्तुति-चरित्र-विचारो-पदेशप्रभृतीन् विविधविषयान् पद्यबहुलेन गद्येन सरसमुपवर्णयमानानि, यानि महात्मनोऽस्य संस्कृतादिभाषानभिज्ञजनोपकारकर्त्रीं करुणां देशभाषानुरागं च निवेदयितुं प्रभूष्णूनि, अद्यत्वेऽप्युपलभामहे ।

यद्यप्येतेषु टीकाकाररचितेषु संस्कृतप्राकृतग्रन्थेषु कतमश्चादिमः, कतमश्चान्तिम इति विभागशः प्रत्येकं पौर्वापर्येण विनिश्चयो न शक्यते

---

१ भाषारहस्यस्वोपज्ञवृत्तौ प्रथमगाथापातनिकास्थम्–"रहस्यपदाङ्कितया **चिकीर्षिताष्टो**त्तरशतग्रन्थान्तर्गतप्रमारहस्य–स्याद्वादरहस्यादिसजातीयं प्रकरणमिदम्" इतीदमुपजीव्य संभवतः परैरुक्तं शतकविधानं श्रुतिकर्म ।

कर्तुम्, सर्वत्र विरचनासमयस्य टीकाकृता प्राचीं पद्धतिमनुसरताऽनुपात्तत्वेन तद्विनिगमकहेतुविरहात्; इतश्चाप्येतद् निर्णेतुमशक्यम्, उक्तवदखिलतद्ग्रन्थानामनासादनेन, उपलब्धव्यानामपि कृत्स्नानां तत्कृतीनां समूलचूलमवलोकनावकाशस्यासंभवात्, संभवेऽपि वा केनचनेदन्तनेन पुरातनेन वा धीधनेनाऽनादृतत्वात्, आदृतत्वेऽपि वा तदनुसंधानोपलब्धेरनुपलब्ध्यादिपराहतत्वात्; यदि हि ग्रन्थग्रन्थितृभिः पूर्वपूर्वप्रणीतप्रबन्धानामभिसंधिप्रसङ्गस्तदुत्तरोत्तररचितग्रन्थेष्ववाप्तः स्यात्, अवाप्तौ च तत्र नाम गृहीत्वान्यथा वोल्लेखेन पूर्वग्रन्थस्यानुसंधिर्विहितः स्यात्, तादृशनैपुण्यपूर्णश्च कश्चिदपि विपश्चित् तदन्वेषणे प्रारब्धावसितपरिश्रमः प्रादुःष्यात्, स्यात् तदा तदाशाऽभीष्टफलशालिनी; एतच्चासंभवरहितमपि न सुसंभवमिति; तथापि यदि प्रकृतटीकाग्रन्थो ग्रन्थकृद्ग्रन्थेष्वन्तिमतमः स्यात्, न प्रायशः किञ्चिद् बाधकमुत्पश्यामः, पश्यामः पुनरिह साधकद्वयम्;—समस्तेऽपि प्रस्तुते मूलग्रन्थे सुगमतममप्येकं काव्यं टीकारहितमनुक्त्वा प्रतिस्तबकप्रान्तं गुर्वादिपरिचायकं जघन्यत एकमप्यनवद्यपद्यमनुक्त्वा च स्थितिमनादधता टीकाग्रन्थमेनं विदधतोपलब्धस्यापि किञ्चिद्रहस्यशालित्वेनावश्यटीकनीयस्याप्यन्त्यवृत्तत्रितयस्य वृत्त्यकरणान्यथानुपपादः, गुर्वादिप्रशस्तेः सततमौचितीमञ्चति ग्रन्थान्तभागे तदनुपादानाविनाभावश्च । साधकसिद्धिश्च प्रभूतेषु प्रत्ननूतनेष्वन्त्यमूलवृत्तत्रितयीविभूषितेष्वादर्शपुस्तकेष्वपि तदनुपलब्धिबलेन संभावितचरीह द्रष्टव्येत्यलं प्रपञ्चेन ।

अस्मिंश्च टीकाप्रकाण्डे क्वापि खण्डनीयत्वेन, क्वचित् संवादित्वेन, कुत्रापि प्रसङ्गदार्ढ्याधायकत्वेन च समुपन्यस्ता इतरे ग्रन्थकर्तारः, महतीं संख्यामाख्यन्तो ग्रन्थाश्च बाढं परिचाययन्ति वाचकमस्तकावतंसकस्य टीकाकारस्यास्य परमवधिमधिगतं विविधविषयविषयकं सावगाहनं प्रतिभासाम्राज्यम्, संसाधयन्ति टीकाया एतस्या विषयकमनीयतां महत्त्वपूर्णत्वं च परिपुष्णन्तो विशेषतो जिज्ञासुभिरादरणीयताम्, द्रढयन्ति च निपुणतरमवलोकिनामैतिह्यप्रियाणां प्रागुपवर्णितग्रन्थप्रणेतृसत्तासमयविनिर्णयम्, इति महोपयोगितामवधारयता नामनिर्देशं निर्दिष्टास्ते द्वितयेऽप्यक्षरा-

नुक्रमेण समुच्चित्य विष्वग्भावेनेहैवान्यत्र प्रकटीकृताः । ये पुनः परा-ऽपरा-ऽन्य-किमादिभिरभिधाभिर्ग्रन्थकृता टीकाकृता च स्मृतिमनायिषत, ते स्पष्टतया विशेषवाच्यमनभिदधाना न तादृशीमावश्यकतामपेक्षांबभूवांस इत्युपेक्षांबभूवानाः ।

एवं च स्याद्वादकल्पलताविभूषितस्यैतस्य शास्त्रवार्तासमुच्चयस्य संशोधनकर्मणि व्याप्रियमाणः सटीकानि यान्यादर्शपुस्तकानि येषां महात्मनामुपालप्सि, तानि, तेषां धन्यवादार्पणपूर्वकं नामानि च कृतज्ञतामुररीकुर्वाणः प्रकाशयामि;—

( १ ) प्रसेधकद्वारा राजनगर ( Ahmedabad ) स्थस्य "डेला"–भाण्डागारस्य संबन्धि, प्राचीनम्, शुद्धप्रायम्, द्वापञ्चाशत्पत्र्यात्मकमपूर्णम्, **क**संज्ञितम् ।

( २ ) मुनिराजश्रीमद्बुद्धिसागराणाम्, पुरातनम्, नातिशुद्धम्, आदितः संपूर्णमपि प्रथमादर्शाप्राप्तस्थाननिवेशेन तत्संज्ञयैव परिभाषितम्। प्रान्तभागे "१५००० सर्वसंख्या लेकनपाटविमो कलाणमस्तु" इत्युल्लेखसमन्वितम् ।

( ३ ) अस्मद्गुरुवर्यशास्त्रविशारदजैनाचार्यश्रीमद्विजयधर्मसूरीश्वराणाम्, नवीनम्, नात्यशुद्धम्, प्रथमतः प्रारभ्य द्विसप्ततिपत्रीरूपम्, **ख**संज्ञितम् ।

( ४ ) पंन्यासश्रीवीरविजयगणीनाम्, न बह्वशुद्धम्, नवीनम्, परिपूर्णमपि तृतीयपुस्तकशेषांशस्थानापन्नतयोपरितनसंज्ञयैव परिगणितम् । "संवत् १९६० रा मिति ज्येष्ठवद ५ शनिवासरे प्रथमपौरे लिपीकृतम्" इत्यन्तभागोपन्यस्ताक्षरम् ।

( ५ ) पंन्यासश्रीसिद्धिविजयगणीनाम्, प्रकाशकद्वारा संप्राप्तम्, नवीनम्, अशुद्धम्, संपूर्णम्, **ग**संज्ञितम् ।

( ६ ) प्रकटयितृद्वारा समासादितम्, नवीनम्, अशुद्धम्, **घ**संज्ञितम्; प्रान्तभाग एतदुल्लेखाङ्कितम्—"संवत् १९६१ ना वर्षे भादरवा सुदि ८ शनिश्चरे शुभं भवतु कल्याणमस्तु" इति ।

(७) प्रकाशकद्वारोपलब्धम्, राजनगरडेलाभाण्डागारस्य प्राचीनम्, अत्यशुद्धम्, ङसंज्ञितम्।

तदेवमिमानि सप्त हस्तादर्शपुस्तकानि, अन्यानि चानुषङ्गापेक्षितानि तान्युपयुज्य, अत्याज्यपाठभेदानुपदर्शितसंज्ञाभिरधः संन्यस्य, प्रसङ्गापादितप्राकृतपाठान् संस्कृतकृत्या परिष्कृत्य, विषमस्थलानि टिप्पण्यादिना विशदीकृत्य, कारिकाश्लोकाक्षरानुक्रमण्या विभूष्य च महीयसा प्रयासेन संपादितेऽस्मिन् सवृत्तिके ग्रन्थे, उररीकुर्वन्तु नयनार्पणायासममानमानसा मनस्विनः, निपुणं व्यापारयन्तु मनांसि सर्वदर्शनतत्त्वमुपलिप्सवो व्युत्पित्सवः, सूक्ष्मेक्षिकया परीक्षन्तां तीर्थमन्तव्यानां याथार्थ्यायाथार्थ्ये व्युत्पन्नाः, अक्षुण्णमुत्क्षिपन्तु युक्तिविरहकलुषितानि तानि क्षपितपक्षपाता विचक्षणाः, सततं निषेवन्तां सन्न्यायपूतं भगवदर्हद्दर्शनसुधासारसौहित्यमक्षतदक्षताः क्षेमाकाङ्क्षिणः प्रेक्षावन्तः, वितन्वन्तां चैवं परिश्रममिमं मामकीनं फलेग्रहिम्।

अन्ते, ईदृशाप्रतीकाशग्रन्थरत्नप्रकाशनतः प्रादुर्भवन्तमभ्रान्तमानन्दसंदोहं प्रकटीकृत्य, तन्निबन्धनतामश्नुवानाय **श्रेष्ठिश्रेष्ठाय श्रीयुतदेवचन्द्राह्वाय** यस्य चलाचलवस्तुतो निश्चलकुशलसंसर्गिफलमासादयतः परमार्थस्वार्थसाधकेनानन्यादृशेन वदान्यतागुणेन परिणतमिदं संपादनं भवदभिमुखीकर्तुं समर्थः समजनिषि, अनेकशो हार्दिकान् धन्यवादान् वितीर्य, सानुनयमभ्यर्थ्य च 'निसर्गदोषसहकृताः स्खलना दुर्निवाराः' इति स्वभावोपनतास्ताः क्षन्तुं प्रकृतिपवित्रचरित्रान् सज्जनान्, समाप्नोति लघीयसीमिमां प्रस्तावनाम्—

शास्त्रविशारदजैनाचार्यश्रीमद्विजयधर्मसूरीश्वरचरणारविन्दभ्रमरायमाणो

न्यायतीर्थ **हरगोविन्दः।**

# शास्त्रवार्तासमुच्चयमूलकारिकाणामकाराद्यनुक्रमेण सूची ।

॥ अर्हम् ॥

श्रीहरिभद्रसूरिविनिर्मितः ।

# शास्त्रवार्तासमुच्चयः ।

न्यायविशारदन्यायाचार्यश्रीयशोविजयोपाध्यायविरचितया

## स्याद्वादकल्पलतावृत्त्या समुल्लसितः ।

ऐन्द्रश्रेणिनताय दोषहुतभुङ्नीराय नीरागताधीराजद्विभवाय जन्मजलधेस्तीराय धीरात्मने ।
गम्भीरागमभाषिणे मुनिमनोमाकन्दकीराय सन्नासीराय शिवाध्वनि स्थितिकृते वीराय नित्यं नमः ॥१॥
प्रणम्य शारदां देवीं गुरूनपि गुणैर्गुरून् । विवृणोमि यथाशक्ति शास्त्रवार्तासमुच्चयम् ॥ २ ॥

१ सत्सु नासीरोऽग्रेसरस्तस्मै ।

हारिभद्रं वचः क्वेदं बहुतर्कपचेलिमम् ? । क्व चाहं शास्त्रलेशज्ञस्तादृक्तन्त्राऽविशारदः ? ॥ ३ ॥
श्रमो ममोचितो भावी तथाप्येष शुभाऽऽयतिः । अर्हन्मतानुरागेण, मेघेनेव कृषिस्थितिः ॥ ४ ॥

इह खलु निखिलं जगदज्ञानध्वान्तनिरस्ताऽऽलोकमवलोकमानस्तदुपाचिकीर्षुर्भगवान् हरिभद्रसूरिः प्रकरणमिदमारब्धवान् । तत्राऽऽदौ प्रारिप्सितग्रन्थस्य निर्विघ्नपरिसमाप्तये मङ्गलमाचरन् प्रेक्षावत्प्रवृत्तयेऽभिधेयमाह—

**प्रणम्य परमात्मानं वक्ष्यामि हितकाम्यया । सत्त्वानामल्पबुद्धीनां शास्त्रवार्तासमुच्चयम् ॥१॥**

प्रणम्येति । अथ समाप्तिमात्रे मङ्गलं न हेतुः, कादम्बरी-नास्तिकानुष्ठितयोरन्वय-व्यतिरेकाभ्यां व्यभिचारात्[1] । न च स्वसमसंख्यविघ्नस्थलीयसमाप्तौ मङ्गलं हेतुः, नास्तिकानुष्ठितस्थले च जन्मान्तरीयमङ्गलादेव च समाप्तिरिति वाच्यम्; विघ्नाधिकसंख्यमङ्गलस्थले समाप्त्यभावप्रसङ्गात् । न च स्वानधिक-न्यूनसंख्यविघ्नस्थलीयत्वं निवेश्यम्; यत्र दश विघ्नाः, पञ्च च प्रायश्चित्तेन नाशिताः, पञ्च च मङ्गलानि, तत्र समाप्त्यभावप्रसङ्गात् । न च प्रायश्चित्ताद्यनाश्यस्वानधिकसंख्यविघ्नस्थलीयत्वं निवेश्यम्; बलवतो विघ्नस्य बहुभिरपि मङ्गलैरनाशात्, बलवता मङ्गलेन बहूनामपि विघ्नानां नाशाच्च । किञ्च, विघ्नः समाप्तौ विशेषणम्, उपलक्षणं वा ? । नाद्यः, विघ्नस्यापि जन्यत्वापत्तेः । नाऽन्त्यः, नियतोपलक्ष्यतावच्छेदकाभावा[2]दिति दिक् । आवश्यकत्वाद् विघ्नध्वंस एव मङ्गलफलम्, समाप्तिस्त्वसति प्रतिबन्धे स्वकारणादेव भवति, कारीरीत इवाऽवग्रहनिवृत्तौ वृष्टिः, 

१ कादम्बर्यां सत्यपि मङ्गले समाप्त्यभावात्, नास्तिकानुष्ठिते च मङ्गलाभावेऽपि समाप्तिदर्शनादित्यर्थः । २ नियतोपलक्ष्यतावच्छेदकत्वादुपलक्षणलक्षणस्येत्यर्थः ।

'निर्विघ्नं परिसमाप्यतां' इति कामनापि "सविशेषणे[1] हि०" इति न्यायाद् विघ्नध्वंसमात्रावगाहिनी; इत्यपि मतं न रमणीयम् , मङ्गलं विनापि विघ्नध्वंसस्य प्रायश्चित्तादितो भावेन व्यभिचारात् । न च प्रायश्चित्ताद्यनाश्यविघ्नध्वंसे मङ्गलं हेतुरतो न दोष इति वाच्यम्; प्रायश्चित्तादीनामपि मङ्गलाद्यनाश्यविघ्नध्वंसं प्रति हेतुत्वेऽन्योन्याश्रयात्[2] । 'विघ्नो मा भूत्' इति कामनया प्रवृत्तेर्विघ्नप्रागभाव एव मङ्गलफलमित्यपि न पेशलं वचनम्, प्रागभावस्यासाध्यत्वात्, स्वत आगन्तुकस्य समयविशेषस्य संबन्धरूपस्य तत्परिपालनस्यापि मङ्गलासाध्यत्वात् । शिष्टाचारपरिपालनं मङ्गलफलमित्यपि वार्तम् , तत्परिपालनस्याऽदृष्टद्वाराऽभीप्सितसिद्धिहेतुत्वे मङ्गलस्यैवादृष्टार्थत्वौचित्यात्, विघ्नमविनाश्य धर्मविशेषस्य[3] समाप्त्यहेतुत्वे विघ्ननाशस्यैवाऽऽवश्यकत्वाच्च । किञ्च, शिष्टाचारेण विधिबोधितकर्तव्यत्वमनुमाय मङ्गले प्रवृत्तिरेव तत्परिपालनम्[4] , न सा[5] तत्फलम्[6] , किन्तु तज्जनिकेति । न चाचारप्राप्तातिलङ्घने प्रत्यवायस्मरणात् प्रत्यवायित्वपर्यवसन्नाशिष्टत्वशङ्कानिरास एवं[7] तत्फलं तत्परिपालनमिति वाच्यम् , तादृशशङ्कायाः शिष्यावधानप्रतिपक्षत्वेऽपि समाप्त्यप्रतिपक्षत्वात् , 'कामनाविशेषनियतकर्तव्यताकस्य मङ्गलस्य तदभावेनाकरणेऽपि[8] न प्रत्यवायः' इति विशेषदर्शनेन तच्छङ्कानिवृत्तेश्च । तस्माद् मङ्गलं निष्फलमिति चेत् ॥ अत्रोच्यते—विघ्नध्वंस एव मङ्गलं[9] हेतुः; न चोक्तव्यभिचारः, प्रायश्चित्तादीनामपि मङ्गलत्वात् ; 'प्रारिप्सितप्रतिबन्धकदुरितनिवृत्त्यसाधारणकारणं मङ्गलम्' इति हि तल्लक्षणं परैर्गीयते, तत्र चाऽस्माभिर्लाघवात् 'प्रारिप्सितप्रतिबन्धक-' इति विशेषणं त्यज्यत इति ।

---

१ "सविशेषणे हि विधि-निषेधौ विशेषणमुपक्रामतो विशेष्याबाधके सति" इत्येवंरूपात् । २ स्वस्मिन्नन्यापेक्षकत्वे सति तस्मिन् स्वापेक्षकत्वमन्योन्याश्रयत्वम् । ३ शिष्टाचारपरिपालनरूपस्य । ४ शिष्टाचारपरिपालनम् । ५ प्रवृत्तिः । ६ मङ्गलफलम् । ७ क. 'व तत्प'। ८ कामनाविशेषाभावेन । ९ क. 'ङ्गलहे' ।

तदिदमुक्तमाकरे– "स्वाध्यायादेरपि मङ्गलत्वाविरोधात्" इति। तथापि नानेन रूपेण हेतुत्वम्, आत्माश्रयात्[1], किन्तु नतित्वादिना प्रातिस्विकरूपेणैव, इति व्यभिचार एवेति चेत्। न, नत्याद्यभिव्यङ्ग्यभावविशेषस्यैव निश्चयतो दुरितक्षयहेतुत्वात्; निकाचितकर्मणश्चाऽनपवर्तनीयत्वाद् न बलवतो विघ्नस्य नाशः; वस्तुतः शब्दाद्यात्मकनत्यादीनामपि स्वाव्यवहितोत्तरविघ्नध्वंसहेतुत्वाद् न कोऽपि दोष इति सर्वमवदातम्॥ परे तु– विघ्नध्वंस-तत्प्रागभावपरिपालन-समाप्तिप्रचयगमन-शिष्टाचारपरिपालनानां सर्वेषामेवाऽविनिगमाद् मङ्गलफलत्वम्, तत्तत्कामनया शिष्टाचारेण तत्तत्फलकत्वोन्नयनात् "अनुमानव्यवस्थानात् तत्संयुक्तं[2] प्रमाणं स्यात्" (जैमि० १।३।१५) इति न्यायेन यथाचारमेव श्रुतिकल्पनात्। न चैकमङ्गलप्रयोगादनेकफलापत्तिः, अनेकफलबोधकश्रुतावुद्देश्यसाहित्याविवक्षणात्; अन्यथा "सर्वेभ्यो दर्श-पूर्णमासौ" इत्यत्रापि तत्प्रसङ्गात्, कादम्बर्यादौ समाप्तिकामनया मङ्गलाचारे मानाभावाद् न दोष इत्याहुः॥ अनेकफलकात् कर्मण उद्देश्या-ऽनुद्देश्य-प्रधाना-ऽप्रधानबहुविधफलदर्शनाद् नैतद् युक्तमित्यपरे॥ स्वतो मङ्गलभूत एव शास्त्रे शिष्यमतिमङ्गलपरिग्रहार्थं[3] मङ्गलाचरणम्, अन्यथा मङ्गलवाक्यस्य शास्त्रबहिर्भावे वाक्यान्तराणामप्यविशेषाच्छास्त्रबहिर्भावप्रसङ्गे शास्त्रस्य चरमवर्णमात्रपर्यवसानप्रसङ्गात्, इति तु भाष्यकाराभिप्रायः। तत्त्वमत्रत्यं मत्कृतमङ्गलवादादवसेयम्। तस्मात् सफलं मङ्गलम्, इति युक्तं तदाचरणं ग्रन्थकारस्येति॥

अथाक्षरार्थ उच्यते– परमः क्षीणघातिकर्मा य आत्मा तं, प्रणम्य भक्ति-श्रद्धातिशयेन नत्वा, अल्पबुद्धीनामसंकलिततत्तच्छास्त्रार्थग्रहणाऽप्रवणमतीनां सत्त्वानां, हितकाम्ययाऽनुग्रहेच्छया, शास्त्राणां बौद्ध-वैशेषिकादिदर्शनानां या वार्ताः सिद्धान्त-

१ स्वस्मिन् स्वापेक्षकत्वमात्माश्रयत्वम्। २ फलसंयुक्तम्। ३ "सीसमइमंगलपरिग्गहत्थमेत्तं तदभिहाणं" (गाथा २०) इत्यादिविशेषावश्यकभाष्यात्।

प्रवादास्तासां समुच्चयमेकत्र संकलनम्, "कृदभिहित०" न्यायाश्रयणात् समुच्चिताः शास्त्रवार्ता इत्यर्थः, ता वक्ष्याम्यभिधास्ये; नाऽतो द्वितीयार्थाऽनन्वयः, द्रव्यपरकृदर्थान्वितस्यैव तदुत्तरपदार्थेऽन्वयात्, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमस्य "तेषां मोहः पापीयान् नामूढस्येतरोत्पत्तेः" (न्यायसू० ४ । १ । ६) इत्यादावेव दूषितत्वात्; "पाणिपादं वादय" इत्यत्र पाणिपादसमाहारस्यैवाऽत्र समुच्चयस्य स्वाश्रयनिरूपितत्वसंबन्धेनाऽन्वयस्त्वनुभवाऽनुपारूढत्वाद् न कल्प्यत इति दिग्। अत्राऽऽद्यपदेन मङ्गलं निबद्धम्, मङ्गलेन स्वशास्त्रसिद्धावपि तन्निबन्धेन श्रोतॄणामनुषङ्गतोऽपि मङ्गलोपपत्तेः। शास्त्रवार्तासंग्रहश्चाभिधेयतयोक्तः ॥ १ ॥

अवान्तरप्रयोजनमप्यत्र यद्यपि सामान्यतोऽल्पबुद्धिहितमुक्तमेव, तथापि विशेषप्रयोजनानुबन्धितया नामग्राहं तन्निर्देष्टुं प्रकृतग्रन्थमभिष्टौति–

**यं श्रुत्वा सर्वशास्त्रेषु प्रायस्तत्त्वविनिश्चयः । जायते द्वेषशमनः स्वर्ग-सिद्धिसुखावहः ॥२॥**

यमिति । यं श्रुत्वा तात्पर्यतः परिज्ञाय, सर्वशास्त्रेषु सकलदर्शनेषु, प्रायो बाहुल्येन, तत्त्वविनिश्चयः प्रामाण्या-ऽप्रामाण्यविवेको जायते । नन्वेवमितरदर्शनेष्वप्रामाण्यज्ञानात् तत्राऽनिष्टसाधनत्वज्ञाने द्वेषोदयात् संसारानुबन्ध्येव बहुशास्त्रज्ञानमापतितम्, इत्यत आह– द्वेषशमन इति । प्रामाण्यनिश्चय उपादेयेऽर्थे निष्कम्पप्रवृत्तिजनकतयैवोपयुज्यते, इतरत्राऽप्रामाण्य

१ "कृदभिहितो भावो द्रव्यवत् प्रकाशते"। २ प्रत्ययार्थः। ३ अनुपादेयेऽर्थे।

निश्चयस्तु तदर्थप्रवृत्तिप्रतिपक्षतयैव, द्वेषस्तु माध्यस्थ्यप्रतिबन्धादेव नोदेति, इति न कोऽपि दोषानुषङ्गः, प्रत्युत दान-संयमादौ शुद्धप्रवृत्त्या स्वर्ग-सिद्धिसुखावह एव सः ॥

अत्र कश्चिदाह– ननु 'स्वर्गे सुखम्' इत्यत्र न विप्रतिपत्तिरस्ति, सिद्धौ तु सुखे न मानमस्ति, सुखत्वावच्छेदे धर्मजन्यत्वावधारणात्। न च विजातीयादृष्टानां विजातीयसुखहेतुत्वात्, तत्तत्कर्मणामेवादृष्टरूपव्यापारसंबन्धेन तद्धेतुत्वाद् वा सामान्यतो हेतुत्वे मानाभाव इति वाच्यम्, तथापि विशेषसामग्रीविरहेण मोक्षसुखानुत्पत्तेः। न च "[२]नित्यं विज्ञानमानन्दं ब्रह्म" इति श्रुतिरेवाऽत्र मानम्। न च नित्यसुखे सिद्धे ब्रह्माभेदबोधनम्, तद्बोधने च नित्यसुखसिद्धिरिति परस्पराश्रय इति वाच्यम्; स्वर्गत्वमुपलक्षणीकृत्य स्वर्गविशेषे यागकारणताबोधवत् सुखत्वमुपलक्षणीकृत्य सुखविशेषे ब्रह्माभेदोपपत्तेः। यद्वा, नित्यं सुखं बोधयित्वा तत्र ब्रह्माभेदो विधिनैव बोध्यते; न च वाक्यभेदः, वाक्यैकवाक्यत्वात्। न च 'आनन्दम्' इत्यत्र नपुंसकलिङ्गत्वानुपपत्तिः, छान्दसत्वात्। न च "आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम्" इति भेदपरषष्ठ्यनुपपत्तिः, 'राहोः शिरः' इतिवदभेदेऽपि षष्ठीदर्शनात्; इति वाच्यम्; आत्मनोऽनुभूयमानत्वेन नित्यसुखस्याऽप्यनुभवप्रसङ्गात्, सुखमात्रस्य स्वगोचरसाक्षात्कारजनकत्वनियमात्। न चात्माऽभिन्नतया सुखमनुभूयत एव, सुखत्वं तु तत्र नाऽनुभूयते, देहात्माऽभेदभ्रमवासनादोषात्, आत्यन्तिकदुःखोच्छेदरूपव्यञ्जकाभावाद् वेति वाच्यम्, आत्मसुखयोरभेदे सुखत्वस्याऽऽत्मत्वतुल्यव्यक्तिकत्वेनाऽऽत्मत्वाऽन्यजातित्वासिद्धेः। किञ्च, एवं सर्वाभेदश्रुत्या दुःखमपि सुखं

१ तत्त्वविनिश्चयः। २ इत आरभ्य विहितविक्षिप्तावान्तरपूर्वपक्षः "षष्ठीदर्शनात्" इत्येतत्पर्यन्तो मुक्तिसुखस्थापनापरः पूर्वपक्षः।

स्यात्, सिद्धार्थत्वेनाऽप्रामाण्यं चोभयत्र तुल्यमिति चेत् ॥ अत्र[1]ोच्यते– प्रेक्षावत्प्रवृत्त्यन्यथानुपपत्तिरेव सिद्धिसुखे मानम् । न च क्षुदादिदुःखनिवृत्त्यर्थमन्नपानादिप्रवृत्तिवदत्र[2]ोपपत्तिः, तत्रापि सुखार्थमेव प्रवृत्तेः, अन्यथाऽस्वादुपरित्याग-स्वादूपादानानुपपत्तेः, अभावे विशेषाभावेन कारणविशेषस्याऽप्रयोजकत्वात् । न च चिकित्सास्थलीयप्रवृत्तिवदुपपत्तिः, तत्रापि दुःखध्वंसनियतागामिसुखार्थितयैव प्रवृत्तेः । न च प्रायश्चित्तवदत्र दुःख-द्वेषयोरनिष्टेरेव प्रवृत्तिरिति वाच्यम्, तत्राप्य[3]भिमताऽऽगामिबोधिहेतुककर्मक्षयार्थितयैव प्रवृत्तेः । किञ्च, दुःखाभावदशायां 'सुखं नास्ति' इति ज्ञाने कथं प्रवृत्तिः, सुखहानेरनिष्टत्वात् ? । न च वैराग्याद् न तदनिष्टत्वप्रतिसंधानम्, विरक्तानामपि प्रशमप्रभवसुखस्येष्टत्वात्, अनुभवसिद्धं खल्वेतत् । किञ्च, दुःखे द्वेषमात्रादेव यदि तन्नाशानुकूलः प्रयत्नः स्यात् तदा मूर्च्छादावपि प्रवृत्तिः स्यात् । जायत एव बहुदुःखग्रस्तानां मरणादावपि प्रवृत्तिरिति चेत् । न, विवेकिप्रवृत्तेरेवाऽत्राऽधिकृतत्वात् । अतः सुष्ठूच्यते–

"दुःखाभावोऽपि नाऽऽवेद्यः पुरुषार्थतयेष्यते । न हि मूर्च्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीः" ॥ १ ॥ इति ।

'दुःखं मा भूत्' इत्युद्दिश्य प्रवृत्तेर्दुःखाभाव एव पुरुषार्थः, तज्ज्ञानं त्वन्यथासिद्धमिति चेत् । सत्यम्, अवेद्यस्य[4] [5]तस्य ज्ञानादिहानिरूपाऽनिष्टानुविद्धतया प्रवृत्त्यनिर्वाहकत्वात् । एतेन 'वर्तमानोऽप्याचिरमनुभूयते' इति निरस्तम्, तथावेद्यताया मूर्च्छाद्यवस्थायामपि संभवात् । यत्तु "अशरीरं वा वसन्तं प्रिया-ऽप्रिये न स्पृशतः" इति श्रुतेर्मुक्तौ सुखाभाव-

---

१ प्रेक्षावत्प्रवृत्तौ । २ क्षुदादेरिति गम्यम् । ३ अभिमतो य आगामी बोधिहेतुकः कर्मक्षयस्तत्प्रयोजनतया, बोधिशब्दश्च समयपरिभाषया तत्त्वार्थश्रद्धानवाचकः । ४ दुःखाभावस्य । ५ दुःखाभावविशेषणम् ।

सिद्धिः, द्वित्वेनोपस्थितयोः प्रिया-ऽप्रिययोः प्रत्येकं निषेधान्वयादिति । तदसत्, प्रिया-ऽप्रियोभयत्वावच्छिन्नाऽभावस्यैवाऽत्र विषयत्वात्, द्वित्वस्याऽऽख्यातार्थाऽन्विताऽभावप्रतियोगिगामितयैवोपपत्तेः, उपपादितं चैतदन्यत्र । न चेदेवम्,

"सुखमात्यन्तिकं यत्र बुद्धिग्राह्यमतीन्द्रियम् । तं वै मोक्षं विजानीयाद् दुष्प्रापमकृतात्मभिः" ॥ १ ॥

इत्यादिवचनाविरोधः । न च शरीरादिकं विना सुखाद्यनुत्पत्तिर्बाधिका, शरीरादेर्जन्यात्मविशेषगुणत्वावच्छिन्नं प्रत्येव हेतुत्वात्, तत्र च जन्यत्वस्य ध्वंसप्रतियोगित्वरूपस्येश्वरज्ञानादेरिव मुक्तिकालीनज्ञानात् सुखादेरपि व्यावृत्तत्वादिति। अधिकं मत्कृतन्यायालोकादवसेयम्, वक्ष्यते चावशिष्टमुपरिष्टात् ॥ २ ॥

वक्तव्ये शास्त्रवार्तासमुच्चये पूर्वं सर्वविप्रतिपत्त्यविषयां शास्त्रवार्तामाह–

**दुःखं पापात्सुखं धर्मात्सर्वशास्त्रेषु संस्थितिः। न कर्तव्यमतः पापं कर्तव्यो धर्मसंचयः ॥३॥**

पापादधर्मात्, दुःखं भवति, धर्मात् सुखं भवति; इयं सर्वशास्त्रेषु समीचीना– अविप्रतिपत्तिविषया स्थितिर्मर्यादा । अतो दुःखहेतुतया पापम्– अशुभकर्महेतु, न कर्तव्यम्, सुखहेतुतया संचितोऽङ्गवैकल्यादिविरहितो धर्मः कर्तव्यः ॥ ३ ॥

शुभा-ऽशुभहेतूनां कर्तव्या-ऽकर्तव्यत्वमुक्तम्, अथ तद्धेतूनेवाह– "पाप-धर्महेतुपरिहारा-ऽऽसेवनाभ्यां तदकरणादि, इति तद्धेतूनाह" इत्यपरे ।

**हिंसानृतादयः पञ्च तत्त्वाश्रद्धानमेव च। क्रोधादयश्च चत्वार इति पापस्य हेतवः ॥४॥** ॥ ४ ॥

१ पापहेतु-धर्महेत्वोः क्रमेण परिहारा-ऽऽसेवनयोरन्वयः । २ तस्य पापहेतोरकरणम्, आदिना धर्मकारणस्य करणम् ।

प्रमादयोगेन प्राणव्यपरोपणं हिंसा, धर्मविरुद्धं वचनमनृतम्; आदिपदाद् धर्मविरोधेन स्वामि-जीवा[1]द्यननुज्ञातपरकीयद्रव्यग्रहणमदत्तादानम्, स्त्री-पुंसव्यतिकरलक्षणमब्रह्म, सर्वभावेषु मूर्च्छालक्षणः परिग्रहश्च परिगृह्यते। अत्र च "आदिशब्दादवरोधेऽप्यनृतग्रहणं प्राधान्यख्यापनार्थम्" इति वदन्ति[2], तत्ख्यापनं च प्रभृति-प्रधानार्थकयोरादिशब्दयोः कृतैकशेषयोर्बलादेवेति प्रतिभाति। "आद्ये परोक्षम्" (तत्त्वार्थ० १-११) इत्यत्रेवोत्तर[3]त्रयापेक्षमत्राऽऽद्यत्वमित्याक्षेपादेवाऽनृतस्य प्राधान्यं लभ्यत इत्यपरे। एते पञ्चाऽविरतिरूपाः। तत्त्वस्य यथास्थितवस्तुनोऽश्रद्धानं यस्मादिति बहुव्रीह्याश्रयणात् तत्त्वाऽश्रद्धानं मिथ्यात्वम्। एवकारः प्रसिद्ध्यर्थः। चः पुनरर्थः। क्रोधादयः– क्रोध-मान-माया-लोभाश्च चत्वारः, इति–एतावन्तः, योगानां साधारण्येनाऽग्रहणात्, विषय-प्रमादा-ऽऽर्त-रौद्रादीनां चात्रैवाऽन्तर्भावात्, इति– एवंप्रकारा वा; पापस्याऽशुभकर्मणः, हेतवः कारणानि ॥ ४ ॥

## विपरीतास्तु धर्मस्य एत एवोदिता बुधैः। एतेषु सततं यत्नः सम्यक् कार्यः सुखैषिणा॥५॥

विपरीतास्तु— अहिंसा-सत्या-ऽस्तेय-ब्रह्मा-ऽपरिग्रह-सम्यग्दर्शन-क्षान्ति-मार्दवा-ऽऽर्जवा-ऽनीहारूपाः, तुर्विशेषणे, एत एव बुधैरर्हद्वचनानुसारिगीतार्थैः, धर्मस्य गुणाः शुभाशयलक्षणस्य हेतव उदिताः। अत एतेषु धर्महेतुषु, सततं निरन्तरं, सुखैषिणा कल्याणकामेन, सम्यग् विधिना, यत्नः कार्यः, सुखोपाये प्रवृत्तेरेव सुखोत्पत्तेः। स्वभावतः सुख[4]-दुःखेच्छा-द्वेषवतामपि प्राणिनां सुखोपाये धर्मेऽनिच्छा, दुःखोपाये चाऽधर्म एवेच्छा खलु मोहमहाराजनिदेशविलसितम्। तदुक्तम्—

---

१ आदिना तीर्थङ्कर-गुर्वोग्रहः। २ हरिभद्रपादाः स्वविवरणे इति शेषः। ३ स्तेया-ऽब्रह्म-परिग्रहाणां त्रयमपेक्षते यत्तत्। ४ सुखेच्छावतां दुःखद्वेषवतां चेत्यर्थः।

" धर्मस्य फलमिच्छन्ति धर्मं नेच्छन्ति मानवाः । फलं नेच्छन्ति पापस्य पापं कुर्वन्ति सादराः " ॥ १ ॥ इति ।

उक्तहेतुषु प्रवृत्त्या च, अहिंसादिनाऽविरतेः, सम्यग्दर्शनेन च मिथ्यात्वस्य, क्षमादिना च क्रोधादीनां निवृत्तेस्तन्मूलकदुःखविरहादनिवारितः सुखावकाशः । 'अहिंसया क्षमया क्रोधस्य, ब्रह्मचर्येण वस्तुविचारेण कामस्य, अस्तेया-ऽपरिग्रहरूपेण संतोषेण लोभस्य, सत्येन यथार्थज्ञानरूपेण विवेकेन मोहस्य, तन्मूलानां[1] च सर्वेषां निवृत्तिः' इति तु पातञ्जलमतानुसारिणः । तत्रेदं विभावनीयम्- अहिंसादिना मूलगुणघातिक्रोधादिनिवृत्तावपि, संज्वलनादिरूपक्रोधादिनिवृत्तिः क्षमाद्युत्तरगुणसाम्राज्यादेव ॥ ५ ॥

अहिंसादिसंपत्तिनिमित्तमेवाऽऽह-

## साधुसेवा सदा भक्त्या मैत्री सत्त्वेषु भावतः । आत्मीयग्रहमोक्षश्च धर्महेतुप्रसाधनम् ॥ ६ ॥

सदा सर्वकालम्, भक्त्या बहुमानेन, साधुसेवा ज्ञानादिगुणवृद्धोपासना, भावतो निश्चयतः, सत्त्वेषु प्राणिषु, मैत्री प्रत्युपकारनिरपेक्षा प्रीतिः । आत्मीयग्रहस्य ममत्वपरिणामस्य मोक्षः परित्यागो यस्माद् बाह्यसङ्गत्याग इत्यर्थः । स च धर्महेतूनामहिंसादीनां प्रकृष्टं फलाऽयोगव्यवच्छिन्नं साधनम्; अत्र 'प्रसाधनम्' इत्येकवचनेन स्वे-तरसकलकारणनियतत्वं व्यज्यते ॥ ६ ॥



१ हिंसादिमूलानाम् । २ व्रत-श्रमणधर्मादयो मूलगुणाः । ३ परीषहाद्युपनिपाते संयमिनमपि सम्-ईषज्ज्वलयन्तीति व्युत्पत्तेर्विशिष्टाः क्रोधादयः संज्वलनशब्देन समये परिभाष्यन्ते ।

साधुसेवाव्यापारमाह-

**उपदेशः शुभो नित्यं दर्शनं धर्मचारिणाम् । स्थाने विनय इत्येतत् साधुसेवाफलं महत् ॥७॥**

नित्यं निरन्तरं, शुभो निःश्रेयसाऽभ्युदयहेतुः, उपदेशो मौनीन्द्रप्रवचनप्रतिपादनरूपः, भवजलधियानपात्रप्रायः खल्वयम्, अस्य श्रवणमात्रादेव समीहितसिद्धेः, सुतरां च तदर्थज्ञानात् । तथा, धर्मचारिणामुद्यतविहारपरायणानां साधूनां, दर्शनं मुखारविन्दविलोकनम्; एतदपि परमबोधिलाभहेतुः, ततः क्लिष्टकर्मविगमात् । तथा, स्थाने शास्त्रोक्तस्थले, विनयः कर-शिरःसंयोगविशेषाद्यभिव्यङ्ग्यो मानसः परिणामविशेषः । इत्येतत् साधुसेवाफलं महद् धर्माङ्गसाधनम्, उपदेशादिना चारित्रप्रतिबन्धककर्मक्षयोपशमादिना चारित्रधर्माऽवाप्तेः ॥ ७ ॥

मैत्रीव्यापारमाह-

**मैत्रीं भावयतो नित्यं शुभो भावः प्रजायते। ततो भावोदकाज्जन्तोर्द्वेषाग्निरुपशाम्यति ॥८॥**

मैत्रीमिति । मैत्रीमुक्तलक्षणां, नित्यं सर्वकालं, भावयतोऽभ्यस्यतः, शुभः प्रशस्तः, भावः साम्यलक्षणो जायते, यमन्ये[1] 'प्रशान्तवाहिता'[2] इत्याचक्षते । ततस्तस्मात्, भावरूपादुदकात्, द्वेषलक्षणोऽग्निः, उपशाम्यति समूलमपयाति । एवं च शुद्धोपयोगलक्षणधर्मे साम्य-द्वेषोपशमद्वारा मैत्र्युपयुज्यत इति फलितम् ॥ ८ ॥

---

१ पातञ्जलमतानुयायिनः । २ योगदर्शने विभूतिपादे दशमे सूत्रे ।

आत्मीयग्रहमोक्षव्यापारमाह-

**अशेषदोषजननी निःशेषगुणघातिनी । आत्मीयग्रहमोक्षेण तृष्णापि विनिवर्तते ॥ ९ ॥**

अशेषाणां दोषाणां हिंसा-ऽनृतादीनां जननीव मातेव, तृष्णायां सत्यां सकलदोषाणामवश्यंभावात्; तदुक्तम्- "लोभमूलानि पापानि" इति । तथा, निःशेषाणां गुणानामुपशमादीनां घातिनी, सतां विनाशात्, असतां चोत्पत्तिप्रतिबन्धात् । आत्मीयग्रहमोक्षेण बाह्यसङ्गत्यागेन, तृष्णापि लोभवासनापि, विनिवर्तते विषयसङ्गरूपोद्बोधकाभावादनुत्थानोपहता सती प्रतिपक्षपरिणामाभ्यासेन क्षीयत इति यावत् ॥ ९ ॥

अतिदेशमाह—

**एवं गुणगणोपेतो विशुद्धात्मा स्थिराशयः। तत्त्वविद्भिः समाख्यातः सम्यग्धर्मस्य साधकः १०**

एवंप्रकारैर्गुणगणैरुपेतः सहितः, विशुद्धात्माऽत्यन्ताऽपायहेतुकुग्रहमलरहितः, स्थिराचित्तो नास्तिक्याऽनुपहतचित्ताध्यवसायः, तत्त्वविद्भिः, सम्यग्-आगमोक्तविधिना, धर्मस्य साधको धर्महेतुनिर्वाहाधिकारी, समाख्यातः । एवंविधस्याऽऽदित एव मार्गानुसारिप्रवृत्त्युपलम्भात्, तदर्थमेवाऽऽदिकर्मविध्युपदेशाच्च । तदुक्तं ललितविस्तरायां ग्रन्थकृतैव- "तत्सिद्ध्यर्थं तु यतितव्यमादिकर्मणि, परिहर्तव्योऽकल्याणमित्रयोगः, सेवितव्यानि कल्याणमित्राणि, न लङ्घनीयोचितस्थितिः, अपेक्षितव्यो लोकमार्गः, माननीया गुरुसंहतिः, भवितव्यमेतत्तन्त्रेण, प्रवर्तितव्यं दानादौ, कर्तव्योदारपूजा भगवताम्, निरूपणीयः

॥ ६ ॥

साधुविशेषः, श्रोतव्यं विधिना धर्मशास्त्रम्, भावनीयं महायत्नेन, प्रवर्तितव्यं विधानतः, अवलम्बनीयं धैर्यम्, पर्यालोचनीयाऽऽयतिः, अवलोकनीयो मृत्युः, भवितव्यं परलोकप्रधानेन, सेवितव्यो गुरुजनः, कर्तव्यं योगपददर्शनम्, स्थापनीयं तद्रूपादि च चेतसि, निरूपयितव्या धारणा, परिहर्तव्यो विक्षेपमार्गः, यतितव्यं योगसिद्धौ, कारयितव्या भगवत्प्रतिमा, लेखनीयं भुवनेश्वरवचनम्, कर्तव्यो मङ्गलजापः, प्रतिपत्तव्यं चतुःशरणम्, गर्हितव्यानि दुष्कृतानि, अनुमोदनीयं कुशलम्, पूजनीया मन्त्रदेवता, श्रोतव्यानि सच्चेष्टितानि, भावनीयमौदार्यम्, वर्तितव्यमुत्तमज्ञानेन" इति । 'नाऽनिवृत्ताऽधिकारायां प्रकृतावेवंभूताः' इति कापिलाः । 'नाऽनवाप्तभवविपाके' इति च सौगताः । 'अपुनर्बन्धकस्त्वेवंभूतः' इत्यार्हताः । न चाऽपुनर्बन्धकस्याऽधिकारिविशेषणस्याऽनिश्चये प्रवृत्त्यनुपपत्तिरिति शङ्कनीयम्, अशाठ्यपूर्वकैतत्प्रयत्नेनैव तन्निश्चयात्; तदुक्तम्– "भग्नोऽप्येतद्यत्नलिङ्गोऽपुनर्बन्धकः" इति; तं प्रत्युपदेशसाफल्यमिति । आदित एतत्प्रयत्न एवाऽस्य कथम्?, इति चेत् । 'अविरुद्धकुलाचारादिपरिपालनाद्यर्थितया' इति गृहाण । अत 'एव सम्यग्दर्शनादिजन्यविवेकाभावादनाभोगतोऽपि "सदन्ध०" न्यायेन मार्गगमनमेवाऽस्य' इति वदन्ति । विभावनीयं चेदं "सुप्त-मण्डितप्रबोध-दर्शन०" न्यायेनेति दिग् ॥ १० ॥

ननु सुखार्थितानियता प्रेक्षावत्प्रवृत्तिर्धर्म एवेति कुतो नियम्यते, स्रक्-चन्दना-ऽङ्गनाभाषादीनामपि सुखोपायत्वात् तत्रापि प्रवृत्तेर्न्यायप्राप्तत्वात्? । अत आह–

**उपादेयश्च संसारे धर्म एव बुधैः सदा । विशुद्धो मुक्तये, सर्वं यतोऽन्यद् दुःखकारणम् ॥ ११ ॥**

१ धर्महेतुनिर्वाहाधिकारिणः । २ जानीहि । ३ क. 'गंग' । ४ सप्तम्यन्तं पदम् । ५ क. 'नादी' । ६ स्रक्–चन्दना–ऽङ्गनाभाषादौ ।

उपादेयश्च ग्राह्यश्च, बुधैर्ज्ञाततत्त्वैः, सदा दुःखदभोगादिकालव्यवच्छेदेन, मुक्तये मोक्षार्थं, विशुद्धो निरतिचारः, धर्म एव; यतोऽन्यद्[1] धर्मभिन्नं, सर्वं स्रक्-चन्दना-ऽङ्गनाऽऽलिङ्गनादिकं, दुःखसाधनं नरकाद्यनुबन्धि । इत्थं च न तत्र प्रवृत्तिर्न्यायप्राप्तेत्यवधारणौचित्यम् । न खल्विष्टसाधनताज्ञानमात्रं प्रवृत्तिहेतुः, मधु-विषसंपृक्ताऽन्नभोजनेऽपि प्रवृत्तिप्रसङ्गात्; किन्तु बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानम्[2], न च तथात्वं शृङ्गारादिविषयाणामिति । नन्[3]वेवमविरतसम्यग्दृशां कथं निषिद्धकर्मणि प्रवृत्तिः ?। रागान्धतया तज्जन्यदुःखे बलवत्त्वाऽप्रतिसन्धानादिति चेत् । न, तत्र बलवत्[4]त्वस्य निषेधविधिनैव बोधात् । न्यूनदुःखजनकत्वज्ञानस्याऽप्यलसप्रवृत्तिप्रतिपन्थित्ववद् बलवद्दुःखानुबन्धित्वज्ञानस्याऽपि रागान्धप्रवृत्तावप्रतिपन्थित्वाद् न दोषः, इत्यपि न सम्यग्, दुःखमात्रभीरोरलसस्य प्रवृत्तिफलेच्छाया एवाऽनुदयादप्रवृत्त्युपपत्तेः, अत्र च रागान्धस्य द्वे[5]षानुदयेऽपि विसामग्रीवशादेव प्रवृत्त्यनुपपत्तेः । अथ प्रवृत्ताविष्टसाधनताज्ञानमेव हेतुः, न तु बलवदनिष्टाननुबन्धित्वज्ञानमपि, फले उत्कटेच्छाविरहविशिष्टदुःखजनकत्वज्ञानं च प्रवृत्तिप्रतिबन्धकम्, इति न मधु-विषसंपृक्तान्नभोजने प्रवृत्तिः; अलसस्य च यदि फलेच्छाऽस्ति तदा दुःखद्वेषादपकृष्टा समा वा, न तूत्कटा, इति प्रतिबन्धकसाम्राज्याद् न तस्य प्रवृत्तिः; रागान्धानां च पारदार्यादिफले उत्कटेच्छासत्त्वात् तत्र प्रवृत्तिरिति चेत् । न, तथापि निषेधविधिसामर्थ्याद् दुःखेत्युत्कटताविज्ञानस्य प्रवृत्तिफले उत्कटेच्छाविघातकतया प्रकृतानुपपत्तेः । एतेन 'प्रवृत्तौ समानविशेष्यतया बलवद्द्वेषस्यैव कार्यसहभावेन

१ ख.ग.घ.च.'न्यत् सर्वं ध'। २ प्रवृत्तिहेतुरित्यन्वयः। ३ अस्याऽभ्यन्तरीकृतान्यपूर्वपक्षोत्तरपक्षस्य मूलपूर्वपक्षस्य "प्रवृत्त्यनुपपत्तेरिति चेत्" इति पर्यन्तेन संबन्धः। ४ ख. 'वदन्वयस्य'। ५ 'इदमनिष्टम्' इत्याकारकस्य द्वेषस्य।

प्रतिबन्धकत्वादलसस्य स्वल्पदुःखजनकेऽपि बलवद्द्वेषाद् न प्रवृत्तिः, रागान्धस्य च बहुदुःखजनकेऽपि तद्विरहात् प्रवृत्तिः' इत्यपास्तम्, निषिद्धे बलवद्द्वेषस्याऽप्यावश्यकत्वात्, अन्यथा विषभक्षणादावपि[1] तदुपपत्तेः[2] इति चेत्। सत्यम्, मोहप्राबल्यदोषमहिम्नैव[3] पारदार्यादिफलेच्छाविघातस्य, तत्र[4] बलवद्द्वेषस्य चाऽनुदयाद् रागान्धप्रवृत्त्युपपत्तेः। तदुक्तम्—

"जाणिज्जइ[5] चिन्तिज्जइ जम्म-जरा-मरणसंभवं दुक्खम्। न य विसएसु विरज्जइ अहो! सुबद्धो कवडगंठी ॥१॥" इति।

शास्त्रबोधितं दुःखबलवत्त्वमेव वा कर्मोदयदोषेणाऽऽरोप्यत इति। अधिकमस्मत्कृताऽध्यात्ममतपरीक्षायाम्। नन्वेवमेतादृशकर्मणः शास्त्रेणाऽनपनयनात् तद्वैफल्यमिति चेत्। न, अनिकाचितस्य तस्य शास्त्राभ्यासनिवर्तनीयत्वादिति दिग् ॥ ११ ॥

यदुक्तम्— अन्यत् सर्वं दुःखकारणमिति, तदेव विवेचयति—

## अनित्यः प्रियसंयोग इहेर्ष्याशोकवत्सलः। अनित्यं यौवनं चापि कुत्सिताचरणास्पदम् ॥१२॥

इह संसारे, ईर्ष्या प्रतिपक्षाभ्युच्चयजनितो मत्सरविशेषः, तदत्ययादिचिन्ताप्रभवो दुःखभेदः शोकः, तौ वत्सलाववश्योपनतकारणौ यत्र तादृशः; प्रियसंयोगो वल्लभसमागमः, अनित्यः स्वप्नसमागतकामिनीविलासवत् पर्यन्तविनश्वरप्रकृतिः। एतेन पूर्वं पश्चाच्च दुःखानुबन्धित्वं प्रियसंयोगस्योक्तम्। यौवनमपि कुसुमशरमित्रं वयोऽपि, कुत्सिताचरणस्य कामक्रीडादिगर्हिताचारस्याऽऽस्पदं मूलभूतम्, अनित्यं च ॥ १२ ॥

---

१ ग. 'पि प्रवृत्त्यनुप'। २ ख. 'तदनुप'। ३ ख. ग. घ. च. 'ल्याद् दो'। ४ अङ्गनासङ्गादिदुःखविषये।

५ ज्ञायते चिन्त्यते जन्म-जरा-मरणसंभवं दुःखम्। न च विषयेषु विरज्यतेऽहो! सुबद्धः कपटग्रन्थिः ॥ १ ॥

तथा—

**अनित्याः संपदस्तीव्रक्लेशवर्गसमुद्भवाः । अनित्यं जीवितं चेह सर्वभावनिबन्धनम् ॥१३॥**

तीव्रो दुःसहो यः क्लेशवर्गो निशितशरप्रवाहपरायणकिराताक्रान्तविकटकान्तारगमन-प्रतिकूलपवनसमुच्छलद्बहल-जलपरिक्षुब्धजलधियानपात्रारोहण-प्रकृतिभीषणराजसेवादिजन्यः, ततः समुद्भव उत्पत्तिर्यासामेतादृश्यः संपदोऽनित्या विद्युद्विलसितवदकस्माद् नश्वराः । तथा, इह जगति, सर्वभावनिबन्धनं सकलव्यवहारकारणम्, जीवितं चाऽनित्यम् । इदमैहिकं दुःखमुक्तम् ॥ १३ ॥

अथाऽऽमुष्मिकं तदाह—

**पुनर्जन्म पुनर्मृत्युर्हीनादिस्थानसंश्रयः । पुनः पुनश्च यदतः सुखमत्र न विद्यते ॥१४॥**

पुनरेतज्जन्मापेक्षयाऽग्रिमं जन्म, बीजरूपस्य जन्मान्तरनिमित्तादृष्टस्य सत्त्वेऽङ्कुररूपस्य जन्मान्तरस्य प्रादुर्भावात् । तथा, पुनर्जन्मनि सति पुनर्मृत्युः, जन्मनो मृत्युनान्तरीयकत्वात् । तथा, प्रागुपात्तनीचैर्गोत्रादिकर्मविपाकात्पुनः पुनश्च वारं वारं च, हीनादिस्थानानामधमा[1]-ऽधमतरा[2]-ऽधमतमादिजातीनां संश्रय आश्रयणं यद् यस्मात् कारणात्, अतो हेतोः, अत्र जगति, सुखं प्रवृत्त्युपयोगि न विद्यते, व्यवहारतः प्रतिभासमानस्याऽपि सांसारिकस्य सुखस्य बहुतरदुःखानुविद्धत्वेन हेयत्वात्, निश्चयतस्तु कर्मोदयजनितत्वात् सुखशब्दवाच्यतामेव नेदमास्कन्दति । तदुक्तं विशेषावश्यके[3]—

१ ग.घ.च. 'मादि' । २ ख.'रादि' । ३ एकादशे गणधरवादे गाथा ३३,३४,३५ ।

" पुण्णफलं दुक्खं चिय कम्मोदयओ फलं व पावस्स । णणु पावफले वि समं पच्चक्खविरोहिया चेवं ॥ १ ॥
जत्तो च्चिय पच्चक्खं सोम्म ! सुहं णत्थि दुक्खमेवेदं । तप्पडियार[2]विभिण्णं तो पुण्णफलं ति दुक्खं ति ॥ २ ॥
विसयसुहं दुक्खं चिय दुक्खपडियारओ तिगिच्छि व्व । तं सुहमुवयाराओ ण य उवयारो विणा तच्चं ॥ ३ ॥ " इति ।
अत एव व्यास-पतञ्जलिप्रभृतिभिरपि संसारे सुखाभाव एवोक्तः । गौतमेनापि चैकविंशतिदुःखमध्य एव सुखं परिगणितमिति । न च वस्तुभूतसुखप्रतिक्षेपाद् विपर्यासः, स्वाभाविकसुख-विकाररूपयोर्द्वयोरेकपक्षानिक्षेपे विपर्यासायोगादिति दिक्॥१४॥

अथ फलितमाह–

[3]प्रकृत्यासुन्दरं ह्येवं संसारे सर्वमेव यत्। अतोऽत्र वद किं युक्ता क्वचिदास्था विवेकिनाम्?

एवमुपदर्शितप्रकारेण, हि निश्चितं, यद् यस्मात् कारणात्, सर्वमेव प्रियसंयोगादिकं, संसारे जगति, प्रकृत्या स्वभावेन, असुन्दरं बलवदनिष्टानुबन्धीष्टसाधनत्वाभाववत् । अतो हेतोः, अत्र संसारे, 'वद' इति शिष्यसंबोधनं व्यामोहादिदोषनिरासेनाऽवधानार्थम्, किं क्वचित् प्रियसंयोगादौ, विवेकिनामिष्टसाधनत्वाद्यंशेऽभ्रान्तानाम्, आस्था प्रवृत्त्यादिरूपा, तत्प्रवर्त-

---

१ पुण्यफलं दुःखमेव कर्मोदयतः, फलमिव पापस्य । ननु पापफलेऽपि समं प्रत्यक्षविरोधिता चैवम् ॥ १ ॥
यत एव प्रत्यक्षं सौम्य ! सुखं नास्ति दुःखमेवेदम् । तत्प्रतीकारविभिन्नं ततः पुण्यफलमिति दुःखमिति ॥ २ ॥
विषयसुखं दुःखमेव दुःखप्रतीकारतश्चिकित्सेव । तत्सुखमुपचाराद् न चोपचारो विना तथ्यम् ॥ ३ ॥

२ विशेषावश्यकपुस्तके 'विभत्तं' इति पाठः । ३ मूलपुस्तके, स्वोपज्ञटीकायां च 'प्रकृत्यसु' इति समस्त एव पाठो दृश्यते ।

कवचनप्रामाण्यप्रतिपत्तिरूपा वा युक्ता ?, न युक्तेति काक्वर्थः ॥ १५ ॥



अपवादमाह—

**मुक्त्वा धर्मं जगद्वन्द्यमकलङ्कं सनातनम् । परार्थसाधकं धीरैः सेवितं शीलशालिभिः॥१६॥**

जगतां वन्द्यमिष्टसाधनत्वेन स्पृहणीयम्, अकलङ्कमैहिका-ऽऽमुष्मिकदोषाननुबन्धिनं, सनातनं प्रवाहापेक्षयाऽनादिनिधनम् । अनेनाऽऽधुनिकत्वशङ्कानिरासः । परः प्रकृष्टो मोक्षः, अर्थो धनम्, उपलक्षणात् कामोऽपि गृह्यते, तत्साधकं तन्निबन्धनम् । अनेन चतुर्वर्गाभ्यर्हितत्वमुक्तम् । तथा, शीलशालिभिः काष्ठाप्राप्तब्रह्मचर्यैस्तीर्थकरादिभिः, सेवितमाचीर्णम् । अनेन सुसंप्रदायायातत्वमुक्तम् । एतादृशं धर्मं मुक्त्वाऽन्यत्राऽऽस्था नोचिता, धर्मे तूचितैव, दोषाभावादिति भावः ॥ १६ ॥

**आह तत्रापि नो युक्ता यदि सम्यग्निरूप्यते । धर्मस्याऽपि शुभो यस्माद्बन्ध एव फलं मतः॥१७॥**

आह पूर्वपक्षी प्रत्यवतिष्ठते— तत्रापि धर्मेऽपि, नो युक्ताऽऽस्था, यदि सम्यग् निरूप्यते सूक्ष्ममीक्ष्यते, यस्माद् हेतोः धर्मस्याऽपि शुभः सातादिहेतुः, बन्ध एवाऽभिनवकर्मपुद्गलपरिग्रह एव, फलं मत इष्टः ॥ १७ ॥

ननु किमेतावता, इष्टसाधनत्वस्याऽनपायात् ?, अत आह—

**न चायसस्य बन्धस्य तथा हेममयस्य च । फले कश्चिद्विशेषोऽस्ति पारतन्त्र्याविशेषतः॥१८॥** ॥ ९ ॥

---

१ "भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते" इति तल्लक्षणात् । २ ख. ग. घ. च. 'र्मे नो' ।

न चाऽऽयसस्य लोहनिगडादेः, हेममयस्य च कनकशृङ्खलादेः, बन्धस्य फले कश्चिदनुकूलत्व-प्रतिकूलत्वकृतः बलवत्त्वाऽबलवत्त्वकृतो वा विशेषोऽस्ति, पारतन्त्र्यस्य स्वेच्छानिरोधदुःखस्याऽविशेषत उभयत्र विशेषाभावात् ॥ १८ ॥

उपसंहरन्नाह–

**तस्माद्धर्मवत्त्याज्यो धर्मोऽप्येवं मुमुक्षुभिः। धर्माधर्मक्षयान्मुक्तिर्मुनिभिर्वर्णिता यतः॥१९॥**

तस्मात् संसारपरिभ्रमणजन्यबलवद्दुःखानुबन्धित्वात्, अधर्मवद् धर्मोऽपि त्याज्यः, मुमुक्षुभिर्मोक्षेच्छावद्भिः, तदितरेषां संसारसुखाविरक्तत्वेन विवेकाभावात् । बलवद्दुःखानुबन्धित्वेन त्याज्यत्वमुक्त्वा, इष्टसाधनीभूताभावप्रतियोगित्वेनापि त्याज्यत्वमाह– मुनिभिः परिणतप्रवचनैः, धर्मा-धर्मयोरुभयोः क्षयाद् मुक्तिर्यतो वर्णिता । अतोऽप्यधर्मवत् त्याज्यो धर्म इति भावः ॥ १९ ॥

**उच्यत एवमेवैतत् किन्तु धर्मो द्विधा मतः। संज्ञानयोग एवैकस्तथान्यः पुण्यलक्षणः॥२०॥**

उच्यते अत्र समाधानं क्रियते– एतत् पूर्वोक्तं धर्मस्य संसारहेतुत्वं मोक्षविरोधित्वं च, एवमेवाऽविप्रतिपत्तिविषय एव । ननु कथमेकस्य मोक्षजनकत्वं, तत्प्रतिबन्धकत्वं च, विरोधात् ?; अत आह– किन्तु धर्मो धर्मपदवाच्यः, द्विधा द्विप्रकार उक्तः । एवं च धर्मपदमक्षादिपदवद् नानार्थकम्, तथा च मोक्षजनक-प्रतिबन्धकयोर्विभेदाद् न विरोधः, इत्यनुपदं ग्रन्थकृता स्पष्टाक्षरैरेव वक्ष्यते । द्वैविध्यमेव स्पष्टयति– एको धर्मः, संज्ञानयोगः– समीचीनमर्हत्प्रवचनानुसारि ज्ञानं गुरुपारतन्त्र्यनिमित्तं संवेदनं

तेन सहितो योगः शुभवीर्योल्लासः । एवकारः प्रसिद्ध्यर्थः । तथा, अन्यो धर्मः, पुण्येन सातादिना कार्येण लक्ष्यत इति पुण्यलक्षणः ॥ २० ॥

अत्र पुण्यलक्षणधर्मस्य सुप्रसिद्धत्वाज्ज्ञानयोगधर्मस्य स्वरूपं फलं चाह—

**ज्ञानयोगस्तपः शुद्धमाशंसादोषवर्जितम्। अभ्यासातिशयादुक्तं तद्धि मुक्तेः प्रसाधकम्॥२१॥**

आशंसादोषेणेह-परलोकादिदुष्टाशंसया वर्जितं तज्जन्येच्छाऽविषयीभूतं, शुद्धं ज्ञान-संयमोपबृंहितं, तपो ज्ञानयोग उच्यते। तदुक्तगुणोपपन्नं तपोऽभ्यासातिशयात् क्षायोपशमिकभावपूर्वकदृढयत्नात्, विमुक्तेः प्रसाधकं मोक्षस्य जनकमुक्तम्; दुष्टाशंसापूर्वकस्य तपसो निषिद्धत्वात्, "[1]नो इहलोगट्ठाए तवमहिट्ठिज्जा, नो परलोगट्ठाए तवमहिट्ठिज्जा" इति वचनात्; केवलस्य च [2]तस्य विशिष्टनिर्जरां प्रत्य[3]जनकत्वात्, समुदितानामेव त्रयाणां प्रकाश-व्यवदाना-ऽनाश्रवरूपव्यापारैर्निःशेषकर्माभावोपपत्तेः, अभ्यासस्य च स्वजनकभाववृद्धिहेतुत्वेन[4] ततोऽशुभवासनाक्षयादविलम्बेन फलोदयाच्च। अङ्गीकृतं च पातञ्जलैरप्येतत्–"अभ्यास-वैराग्याभ्यां तन्निरोधः" (पात० १, १२) ताः प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतिलक्षणाः पञ्च वृत्तयः। तत्र प्रत्यक्षादीनि प्रमाणानि। विपर्ययो मिथ्याज्ञानम्। तदविद्या-ऽस्मिता-राग-द्वेषा-ऽभिनिवेशभेदेन पञ्चविधम्। "अनित्या-ऽशुचि-दुःखा-ऽनात्मसु नित्य-शुचि-सुखा-ऽऽत्मख्यातिरविद्या" (पात०२,५) "[5]दृग्-दर्शनशक्त्योरेकात्मतेवाऽस्मिता" (पात०२,६) "[6]सुखानुशयी रागः"

१ नो इहलोकार्थतया तपोऽधितिष्ठेत्, नो परलोकार्थतया तपोऽधितिष्ठेत्। २ तपसः। ३ क. 'त्यप्रत्यलत्वा'। ४ ख. ग. घ. 'नाऽशु'।
५ दृक्शक्तिः पुरुषः, दर्शनशक्तिश्च बुद्धिस्तयोरित्यर्थः। ६ सुखानुभवात् पश्चाच्चेतसि शेते तच्छीलश्चितवृत्तिविशेषः, अभिलाष इति यावत्।

(पात० २, ७) "दुःखानुशयी द्वेषः" (पात० २, ८) "स्वरसवाही[1] विदुषोऽपि तथारूढोऽभिनिवेशः"। (पात० २, ९) शब्दज्ञानानुपाती वस्तुशून्यः प्रमाभ्रमविलक्षणोऽसदर्थव्यवहारो विकल्पः, शशविषाणम्, असत्पुरुषस्य चैतन्यमित्यादि। "अभावप्रत्ययालम्बना वृत्तिर्निद्रा" (पात० १, १०) चतसृणां वृत्तीनामभावस्य प्रत्ययः कारणं तमोगुणस्तदालम्बना वृत्तिर्निद्रा न तु ज्ञानाद्यभावमात्रमिति भावः। अनुभूतविषयासंप्रमोषप्रत्ययः स्मृतिः, पूर्वानुभवसंस्कारजं ज्ञानमित्यर्थः। तासां[2] निरोधः सवासनानां क्षयः। स चाऽभ्यासेन वैराग्येण च भवति। वैराग्येण चित्तनद्या विषयप्रवाहो निवार्यते, समाध्यभ्यासेन च प्रशान्तवाहिता संपाद्यते, इति द्वारभेदादुभयोः समुच्चयात्, एकद्वारत्वे हि व्रीहि-यववद् विकल्प एव स्यात्, न तु समुच्चय इति। "तत्र स्थितौ यत्नोऽभ्यासः" (पात० १, १३) तत्र द्रष्टरि शुद्धे चित्तस्याऽवृत्तिकस्य प्रशान्तवाहितारूपा निश्चला स्थितिस्तदर्थं[3] यत्नो मानस उत्साहो 'बहिर्मनो निरोत्स्यामि' इत्याकारः, स चाऽऽवर्त्यमानोऽभ्यास उच्यत इति। "स तु दीर्घकाल-नैरन्तर्य-सत्कारासेवितो दृढभूमिः" (पात० १, १४) अनिर्वेदेन दीर्घकालासेवितः, अविच्छेदेन निरन्तरासेवितः, श्रद्धातिशयेन सत्कारासेवितो दृढभूमिर्विषयसुखवासनया चालयितुमशक्यो भवति, अन्यथा तु लय-विक्षेप-कषाय-सुखास्वादापरिहारे व्युत्थानसंस्कारप्राबल्यात् समाधिसंस्काराणां भङ्गुरतयाऽदृढभूमिरेव स्यात्, इति कथं ततो विशिष्टफलसिद्धिः स्यात्?।

वैराग्यं च द्विविधम्—परम्, अपरं च। तत्र यतमानसंज्ञा-व्यतिरेकसंज्ञै-केन्द्रियसंज्ञा-वशीकारसंज्ञाभेदैरपरं[4] चतुर्धा। तत्र किमिह

---

१ पूर्वभवीयमरणदुःखानुभवजन्यो वासनासंघातः स्वरसपदवाच्यः, तेन रूपेण वहनशील इत्यर्थः।

२ पञ्चानां वृत्तीनाम्। ३ मूलसूत्रे निमित्तसप्तम्यङ्गीकारात्। ४ ख. ग. घ. 'द्वारैर्व्यु'।

सारं ?, [1]किं चाऽसारम्?, इति गुरु-शास्त्रपारतन्त्र्येण ज्ञानोद्योगो यतमानम् । विद्यमानस्वचित्तदोषाणां मध्येऽभ्यस्यमानविवेके- नैतावन्तः पक्वाः, एतावन्तश्चावशिष्टाः, इति चिकित्सावद् विवेचनं व्यतिरेकः । दृष्टा-ऽऽनुश्रविकविषयप्रवृत्तेर्दुःखमयत्वबोधेन बहिष्प्रवृत्तिमजनयन्त्या अपि तृष्णाया औत्सुक्यमात्रेण मनस्यवस्थानमेकेन्द्रियम् । तृष्णाविरोधिनी चित्तवृत्तिर्ज्ञान-प्रसादरूपा वशीकारः । तदिदं सूत्रितम्– "दृष्टा-ऽऽनुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्" (पात० १,१५) इति । तदन्तरङ्गं साधनं संप्रज्ञातस्य समाधेः, असंप्रज्ञातस्य तु बहिरङ्गम् । परं तु वैराग्यं संप्रज्ञातसमाधिपाटवेन [2]गुणत्रयात्मकात् [3]प्रधानाद् विविक्तस्य पुरुषस्य साक्षात्कारादगुणशेषगुणत्रयव्यव[4]हारेषु वैतृ[5]ष्ण्यं यत् । "तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्" (पात० १, १६) इति सूत्रम् । तदन्तरङ्गं साधनमसंप्रज्ञातसमाधेः, तत्परिपाकनिमित्ताच्च चित्तोपशमातिशयात् कैवल्यम्, इति यथास्थानं व्यवस्थापनात् ।

अत्रेदमवधेयम्– अभ्यस्तं तपः समुच्छिन्नक्रियाऽनिवृत्तिरूपं *ध्यानमेव, तस्यैव साक्षाद् मोक्षहेतुत्वात् । न च मोक्षहेतु- शुद्धात्मज्ञानेन तस्य व्यवधानम्, समकालभाविनोरपि ज्ञान-ध्यानयोः प्रदीप-प्रकाशयोरिव निश्चयतो हेतुत्वाश्रयणात् । तदिद- मभिप्रेत्योक्तम्–

" मोक्षः कर्मक्षयादेव स चात्मज्ञानतो भवेत् । ध्यानसाध्यं मतं तच्च तद् ध्यानं हितमात्मनः ॥ १ ॥ " इति ।

समाधिरिति च शुक्लध्यानस्यैव नामान्तरं परैः परिभाषितम्; तथाहि– चतुर्विधस्तैः संप्रज्ञातसमाधिरुक्तः– सवितर्कः, निर्वितर्कः, सविचारः, निर्विचारश्चेति । यदा स्थूलं महाभूतेन्द्रियात्मकषोडशविकाररूपं विषयमादाय पूर्वा-परानुसन्धानेन,



१ ख. ग. घ. च. 'किं न्वसा' । २ सत्त्व-रजः-तमोरूपात् । ३ प्रकृतेः । ४ क. 'हारे वै' । ५ क. 'ष्ण्यं तत्' ।

शब्दार्थोल्लेखेन च भावना क्रियते सविकल्पकवृत्तिरूपा, तदा सवितर्कः समाधिः। यदा त्वस्मिन्नेवालम्बने शब्दार्थस्मृतिविलये तच्छून्यत्वेन भावना प्रवर्तते निर्विकल्पकवृत्तिरूपा, तदा निर्वितर्कः समाधिः। यदाऽन्तःकरणं सूक्ष्मविषयमालम्ब्य देश-काल-धर्मावच्छेदेन सविकल्पकवृत्तिरूपा भावना प्रवर्तते, तदा सविचारः समाधिः। यदा चास्मिन्नेव विषये तदवच्छेदं विना निर्विकल्पकवृत्तिरूपा धर्मिमात्रभावना प्रवर्तते, तदा निर्विचारः समाधिरिति। रजस्तमोलेशानुविद्धान्तःकरणसत्त्वस्य भावनात्मको भाव्यमानसत्त्वोद्रेकेण सानन्दः समाधिः, यत्र बद्धधृतयः प्रधान-पुरुषतत्त्वान्तराऽदर्शिनो विदेहशब्देनोच्यन्ते। रजस्तमोलेशानभिभूतशुद्धसत्त्वमालम्ब्य भावनात्मकश्चिच्छक्तेरुद्रेकात् सत्तामात्रावशेषत्वेन सास्मितः समाधिः, यत्र स्थिताः परं पुरुषं पश्यन्ति। तदिदं समाधिद्वयं ग्रहीतृ-ग्रहणयोरपि चित्तवृत्तिविषयतया ग्राह्यकोटावेव निक्षेपाद् नातिरिच्यते। तदिदमुक्तम्- "सूक्ष्मविषयत्वं चालिङ्ग[1]पर्य[2]न्तम्" (पात० १,४५) इति। सूत्रितं च- "चतुर्विधा हि ग्राह्यसमापत्तिः" इत्यादि। "क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृ-ग्रहण-ग्राह्येषु तत्स्थतदञ्जनता समापत्तिः" (पात०१,४१) इति समापत्तिलक्षणम्। तत्स्थता तदेकाग्रता तन्मयता न्यग्भूते चित्ते भाव्यमानोत्कर्षः स्फटिकोपरागस्थानीयः। निर्विचारसमाधेः प्रकृष्टाभ्यासाच्छुद्धसत्त्वोद्रेके क्लेशवासनारहितस्य चित्तस्य भूतार्थविषयः क्रमाननुरोधी स्फुटः प्रज्ञालोकः प्रादुर्भवति। तदुक्तम्- निर्विचारवैशारद्येऽध्यात्मप्रसादः" (पात० १,४७) इति "ऋतम्भरा तत्र प्रज्ञा" (पात० १,४८)। ऋतं सत्यमेव बिभर्ति भ्रान्तिकारणाभावात्, इति ऋतम्भरा, यौगिकीयं संज्ञा, सा चोत्तमो योगः, तथा च भाष्यम्-

१ अलिङ्गे प्रधाने पर्यन्तः परिसमाप्तिर्यस्य तदित्यर्थः। २ पातञ्जलयोगसूत्रे 'पर्यवसानम्' इति पाठः समुपलभ्यते।

"आगमेनाऽनुमानेन ध्यानाभ्यासरसेन च। त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्॥ १॥" इति।

तज्जन्यसंस्काराणां व्युत्थानादिसंस्कारविरोधित्वात्। तत्प्रभवप्रत्ययाभावेऽप्रतिहतप्रसरः समाधिः। ततस्तज्जा प्रज्ञा, ततस्तत्कृताः संस्काराः, इति नवो नवः संस्काराशयो वर्धते, ततश्च प्रज्ञा, ततश्च संस्कार इति। ततो योगिप्रयत्नविशेषेण संप्रज्ञातसमाधेर्व्युत्थानजानां च संस्काराणां निरोधादसंप्रज्ञातसमाधिर्भवति। तदुक्तम्– "तस्यापि निरोधे सर्वनिरोधाद् निर्बीजः समाधिः" (पात०१, ५१) इति। तदा च निरोधचित्तपरिणामप्रवाहः, तज्जन्यसंस्कारप्रवाहश्चावतिष्ठते। तदुक्तम्– "संस्कारशेषोऽन्यः" (पात०१,१८) इति। ततः प्रशान्तवाहिता संस्कारात्। सा ह्यवृत्तिकस्य चित्तस्य निरिन्धनाग्निवत् प्रतिलोमपरिणामेनोपशमः, तत्र पूर्वप्रशमजनितः संस्कार उत्तरोत्तरप्रशमहेतुरिति। ततो निरिन्धनाग्निवच्चित्तक्रमेणोपशाम्यद्व्युत्थानसमाधिनिरोधसंस्कारैः सह स्वस्यां प्रकृतौ लीयत इति। अत्र चतुर्विधोऽपि संप्रज्ञातसमाधिः शुक्लध्यानस्याद्यपादद्वयं प्रायो नातिशेते। षोडशकादित्रिविषयोपवर्णनं च तत्राऽप्रामाणिकस्वप्रक्रियामात्रम्, तत्र मानाभावात्, आत्मविषयकसाक्षात्कारे आत्मविषयकस्यैव ध्यानस्य हेतुत्वाच्च। वितर्कश्चात्र विशिष्टश्रुतसंस्काररूपः, विचारश्च योगान्तरसंक्रमरूपो ग्राह्यः, विशिष्टज्ञाने सविकल्पक-निर्विकल्पकव्यवस्थायोगात्, परिभाषामात्रस्य निरालम्बनत्वात्; पृथक्त्वानभिधानेन चात्र न्यूनत्वम्। प्रज्ञालोकश्च केवलज्ञानादधः सचित्रालोककल्पश्चतुर्ज्ञानप्रकर्षोत्तरकालभावी प्रातिभाऽपरनामा ज्ञानविशेषः। ऋतम्भरा च केवलज्ञानम्। ततः संस्काराशयवृद्धिश्चासंभवदुक्तिका, मतिज्ञानभेदस्य संस्कारस्य तन्मूलभूतज्ञानावरणक्षयेणैव क्षीणत्वात्। अतश्चरमशुक्लध्यानांशस्थानीयोऽसं-



१ "तस्य प्रशान्तवाहिता संस्कारात्" इति पातञ्जलयोगसूत्रम् (३,१०)। २ प्रशान्तवाहिता।

प्रज्ञातसमाधिर्न वृत्तिनिरोधार्थमपेक्षणीयः, किन्तु भवोपग्राहिकर्मक्षयार्थमिति सूक्ष्ममीक्षणीयम्, ज्वरपरवशपुरुषवचनप्रायाणां पर-तन्त्राणां काकतालीयन्यायेनैव क्वचिदर्थाबाधादिति दिग्। तदेवं ध्यानरूपमेवं तपो ज्ञान-क्रियाभ्यामपृथग्भूतमपृथग्भूततत्तद्व्यापार-योगि परमयोगाभिधमपवर्गहेतुरिति निर्व्यूढम्। तत्र च धर्मपदशक्तिराप्तवाक्यादेव, स्वारसिकप्रयोगे लक्षणानवकाशात्, अन्यथा विनिगमनाविरहात्। देवार्चादौ धर्मजनकत्वेनैव धर्मपदप्रयोगो न तु स्वरसत इति चेत्। तथाप्यत्र योगजादृष्टप्रयोजकतया धर्म-पदप्रयोग इति न वैषम्यम् ॥ २१ ॥

गूढाशयः पृच्छति–

**धर्मस्तदपि चेत्सत्यं किं न बन्धफलः स यत्। आशंसावर्जितोऽन्येपि[3] किं नैवं चेन्न यत्तथा॥२२**

तदपि शुद्धतपोऽपि, धर्मो धर्मव्यवहारविषयः। गूढाशय एवोत्तरयति– इति चेत्, सत्यं धर्मपदव्यवहारविषय एवेत्यर्थः। उद्घाटिताशयः पृच्छति– बन्धफलः कर्मबन्धहेतुः, स धर्मः, किं न भवति ?; धर्मव्यवहारविषयत्वं हि शुभबन्धहेतुत्वेन सहचरितमुपलब्धम्, अतो ज्ञानयोगेनाऽपि धर्मेण सता बन्धफलेन भवितव्यमिति परस्याशयः। व्यक्ताशय एव समाधत्ते– यद् यस्माद्धेतोः, स धर्मः, आशंसावर्जितः, प्रसिद्धधर्मव्यापकधर्माभिधानमेतत्; अन्यो हि धर्मो बन्धहेतुः, अन्यश्चानीदृशः, अतो न धर्मव्यवहारविषयत्वेन बन्धहेतुत्वमस्य, सहचारमात्रेण व्याप्त्यग्रहात्, अन्यथा पार्थिवत्व-लोहलेख्य-

१ ख. ग. घ. च. 'णां का'। २ ख.ग.घ.च. 'ततत'। ३ मूल-स्वोपज्ञटीकयोः 'अन्योऽपि' इति पाठः। ४ क. 'र्मव्य'।

त्वयोरपि तद्ग्रहप्रसङ्गादित्याशयः। इदमेव व्यतिरेकाशङ्कानिरासेन द्रढयति– अन्येऽपि पुण्यलक्षणा धर्माः, एवम्– अबन्धफलाः, किं न? इति चेत्। यद् यस्माद्धेतोः, तथा आशंसावर्जिता न, अबन्धहेतुत्वनियतधर्माभावाभिधानमेतत्। नन्विदमयुक्तमुक्तम्, एकस्यैव चारित्रस्य सरागत्व-वीतरागत्वाभ्यां शुभबन्ध-मोक्षोभयहेतुत्वसंभवात्। अत एव पूर्वतपः-पूर्वसंयमयोः स्वर्गहेतुत्वं भगवत्यामुक्तम्। न च बन्ध-मोक्षजनकतावच्छेदकरूपविभेदाद् नोक्तदोष इति वाच्यम्, सरागत्व-वीतरागत्वातिरिक्ततज्जनकतावच्छेदकरूपकल्पने मानाभावात्। कर्मक्षयोपशम-क्षयजन्यतावच्छेदकयोरेव तज्जनकतावच्छेदकत्वमिति चेत्, एवं सति शैलेशीसमयभाविन एव चारित्रस्य मोक्षहेतुत्वपर्यवसाने ऋजुसूत्रनयाश्रयणप्रसङ्गादिति चेत्। सत्यम्, तदुपगृहीतव्यवहाराश्रयणेनैवेत्थमभिधानात्; शुद्धर्जुसूत्रनयेन तु ज्ञान-तपसोरन्यथासिद्धत्वम्, तज्जन्यक्रियाया एव मोक्षोपपत्तेः। यदाह भगवान् भद्रबाहुः– "सद्दुजुसुआणं पुण निव्वाणं संजमो चेव" इति। यद्वा, आशंसासाहित्य-राहित्याभ्यां बन्ध-मोक्षजनकतावच्छेदकरूपभेद एवाऽत्रोपवर्णितः। तथा "अन्यः पुण्यलक्षणः" इत्यत्रान्यपदं च वैधर्म्यार्थकम्, अतो न किञ्चिदनुपपन्नम्। परे तु– 'तपस्त्व-चारित्रत्वाभ्यामेव मोक्षहेतुता, संकोचे मानाभावात्, सरागताकालीनप्रशस्तसङ्गादेव स्वर्गोत्पत्तेर्वस्तुतः सरागतपसः स्वर्गहेतुत्वं "सविशेषणे हि०" इति न्यायेन रागमात्र एव पर्यवस्यति' इत्याहुः। अपरे तु– 'मोक्षोद्देशेन क्रियमाणयोस्तपः-संयमयोर्मोक्षहेतुत्वमेव, स्वर्गस्य चानुद्देश्यत्वाद् न फलत्वम्, कर्मांशप्रतिबन्धाच्च न तदा मोक्षोत्पादः, ततो गत्यन्तरजनकादृष्टा-

१ तच्छब्देन व्याप्तिपरामर्शः, न चेयमनयोर्गृह्यते, वज्रे सत्यपि पार्थिवत्वे लोहलेख्यत्वाभावेनाऽविनाभावाभावादिति भावः। २ इतः प्रभृति 'प्रसङ्गात्' इत्येतत्पर्यन्तः प्रतिविहिताभ्यन्तरपूर्वपक्षकः पूर्वपक्षः। ३ शब्द-ऋजुसूत्रयोः पुनर्निर्वाणं संयम एव। ४ श्लो० २०।

भावादर्थत एव स्वर्गोत्पत्तिः' इत्याहुः । सर्वे एवैते सदादेशाः, भगवदनुमतविचित्रनयाश्रितमहर्षिवचनानुयायित्वात्, इत्यवसेयम् ॥ २२ ॥

उक्तधर्मद्वैविध्यं शब्दान्तरेण तन्त्रान्तरेऽपि संमतमित्याह–

**भोगमुक्तिफलो धर्मः स प्रवृत्तीतरात्मकः।सम्यङ्मिथ्यादिरूपश्च गीतस्तन्त्रान्तरेष्वपि॥२३॥**

भोगफल एको धर्मः, अन्यश्च मुक्तिफल इति शैवाः । प्रवृत्त्यात्मक एकः, निवृत्त्यात्मकश्चान्य इति त्रैविद्यवृद्धाः । सम्यग्रूप एकः, मिथ्यारूपश्चान्य इति शाक्यविशेषाः, आदिपदाद् हेयोपादेया-ऽभ्युदयनिःश्रेयसपरिग्रहः । एवं तन्त्रान्तरेषु जैनातिरिक्तदर्शनेष्वपि, अयं द्विभेद उक्तः ॥ २३ ॥

आगमविप्रतिपन्नं प्रति संज्ञानयोगे कार्यान्यथानुपपत्तिं प्रमाणयति–

**तमन्तरेण तु तयोः क्षयः केन प्रसाध्यते ?। सदा स्यान्न कदाचिद्वा यद्यहेतुक एव सः॥२४॥**

तमन्तरेण तु संज्ञानयोगं विना तु, तयोर्धर्मा-ऽधर्मयोः, क्षयः केन हेतुना, प्रसाध्यते ?, न केनापि । तथाविधहेत्वनुपलम्भादहेतुक एवायमस्तु, सहेतुकविनाशस्य दुःश्रद्धानत्वादिति बौद्धाशङ्कायामाह– यद्यहेतुक एव हेतुरहित एव, स धर्मा-ऽधर्मोभयक्षयः, तदोत्पत्तिस्वभावत्वे सदैव स्यात्, अनुत्पत्तिस्वभावत्वे कदापि वा न स्यात् । कदाचिदुत्पत्तिस्वभावत्वाद् न

 सदैव स्यादिति चेत् । तर्हि कालान्तरेऽप्युत्पत्तिप्रसङ्गः । तदहरेवोत्पत्तिस्वभावत्वाद् नान्यदोत्पत्तिरिति चेत् । तर्हि तत्तद्धेतुस- 
 काशादेवोत्पत्तिस्वभावत्वादायातं सहेतुकत्वम् । आकाशस्य क्वाचित्कत्ववत् कादाचित्कत्वमप्यत्र न हेतुनियम्यमिति चेत् । न, कादाचित्कत्वस्याऽवधिनियतत्वात् । सन्त्ववधयः, न तु तेनाऽपेक्ष्यन्त इति चेत् । न, नियतपूर्ववृत्तित्वस्यैवाऽपेक्षार्थत्वात्, अन्यथा 'गर्दभाद् धूमः' इत्यपि प्रमीयेतेति । अधिकमुपरिष्टाद् वक्ष्यते ॥ २४ ॥

फलितमाह–

**तस्मादवश्यमेष्टव्यः कश्चिद्धेतुस्तयोः क्षये । स एव धर्मो विज्ञेयः शुद्धो मुक्तिफलप्रदः ॥ २५ ॥**

तस्मात् कादाचित्कत्वस्य सहेतुकत्वव्याप्यत्वात्, अवश्यं कश्चित् तयोर्धर्मा-धर्मयोः, क्षये हेतुरेष्टव्योऽङ्गीकर्तव्यः । य एव चात्र हेतुः स एव शुद्धः सर्वाशंसारहितः, मुक्तिलक्षणफलप्रदः, धर्मो धर्मपदवाच्यः, मन्तव्यः श्रद्धेयः ॥ २५ ॥

चोद्यशेषं परिहरति–

**धर्मा-ऽधर्मक्षयाद् मुक्तिर्यच्चोक्तं पुण्यलक्षणम् । हेयं धर्मं तदाश्रित्य न तु संज्ञानयोगकम् ॥ २६ ॥**

यच्च "धर्मा-ऽधर्मक्षयाद् मुक्तिः" इत्युक्तम्, तत् पुण्यलक्षणं हेयं त्याज्यं धर्मम्, आश्रित्य प्रकृतधर्मपदशक्तिग्रहविषयीकृत्य; न तु संज्ञानयोगकं संज्ञायां कप्रत्ययात् संज्ञानयोगसंज्ञं धर्ममाश्रित्य, तेन न बाधः । इति सर्वमवदातम् ॥ २६ ॥ 

पर्यवसितमाह–

**अतस्तत्रैव युक्तास्था यदि सम्यङ् निरूप्यते। संसारे सर्वमेवान्यद्दर्शितं दुःखकारणम् ॥२७॥**

अतः पूर्वपक्षोक्तयुक्तिनिरासात्, तत्रैव धर्म एव, आस्था युक्ता, यदि सम्यग्– आगमोपपत्त्यनुसारेण, निरूप्यते विचार्यते। प्रतिपक्षप्रवृत्तिनिरासायोक्तमेव स्मारयति– संसारे सर्वमेवाऽन्यद् धर्मातिरिक्तं, दुःखकारणं केवलदुःखमयं, दर्शितम्– "अनित्यः प्रियसंयोगः"[1] इत्यादिना। अत्रेदं पतञ्जलिसूत्रम्– "परिणाम-ताप-संस्कार-दुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः" (पात० २, १५) इति। राग एव हि पूर्वमुद्भूतः सन् विषयप्राप्त्या सुखं परिणमते। तस्य च प्रतिक्षणं प्रवर्धमानत्वेन स्वविषयाप्राप्तिनिबन्धनदुःखस्य दुष्परिहरत्वात् परिणामदुःखता। तथा, सुखमनुभवन् दुःखसाधनानि द्वेष्टि, तदपरिहारक्षमश्च मुह्यतीति तापदुःखता। तथा, वर्तमानसुखानुभवः स्वविनाशकाले संस्कारमाधत्ते, स च सुखस्मरणं, तच्च रागं, स च मनः-काय-वचनप्रवृत्तिं, सा च पुण्या-पुण्यकर्माशयौ, तौ च जन्मादीनि[2], इति संस्कारदुःखता॥ एवं कालत्रयेऽपि सुखस्य दुःखानुषङ्गाद् दुःखरूपता सिद्धा, उद्भूतसत्त्वकार्यत्वेऽपि सुखस्याऽनुद्भूतरजस्तमःकार्यत्वात् स्वभावतोऽपि दुःखविषादरूपता। समवृत्तिकानामेव हि गुणानां युगपद्विरोधः, न तु विषमवृत्तिकानाम्, इत्येकदोद्भूता-ऽनुद्भूततया न सुख-दुःख-मोहविरोधः॥ २७॥

तदेवं 'धर्म एव युक्ताऽऽस्था' इति समर्थितम्। तस्माद् मुक्त्युत्पत्तिप्रकारश्चावश्यवक्तव्योऽपि प्रतिबन्धकशिष्यजिज्ञा-

१ श्लोक० १२। २ 'आधत्ते' इत्यनेन संबन्धः।

सासस्वाद् नेदानीं वक्ष्यते । पुरस्तादेव चावसरसंगत्या वक्ष्यत इत्याह-

**तस्माच्च जायते मुक्तिर्यथा मृत्यादिवर्जिता । तथोपरिष्टाद्वक्ष्यामः सम्यक्शास्त्रानुसारतः॥२८॥**

तस्माच्च धर्मात्, यथा येन प्रकारेण, मृतिरायुःक्षयः, आदिना रोग-शोकादिग्रहः, तद्वर्जिता तद्रहिता, मुक्तिर्निर्वृतिः, यथा भवति, तथोपरिष्टादग्रे, सम्यग्- अविरोधेन, शास्त्रानुसारतः शास्त्रतात्पर्यं परिगृहय, वक्ष्यामः ॥ २८ ॥

इदानीं तु प्रसङ्गसंगत्या शास्त्रपरीक्षैव क्रियत इत्याह-

**इदानीं तु समासेन शास्त्रसम्यक्त्वमुच्यते। कुवादियुक्त्यपव्याख्यानिरासेनाऽविरोधतः॥२९॥**

इदानीं तु समासेन संक्षेपेण, विस्तरतस्तत्करणे त्वायुःपर्यवसानात्, शास्त्रस्य सम्यक्त्वं प्रामाण्या-ऽप्रामाण्यविभागः, उच्यते । कथम्? , इत्याह- कुवादिनां चार्वाक-मीमांसकादीनां युक्तयश्चापव्याख्याश्च कुवादियुक्त्यपव्याख्यास्तासां निरासेन बलवत्प्रमाणबाध्यत्व-भ्रान्तिमूलकत्वोपदर्शनेन, अविरोधतस्तदापादितविरोधाशङ्कानिरासादिति भावः ॥ २९ ॥

तत्रादौ चार्वाकयुक्तीर्निराचिकीर्षुस्तन्मतोपन्यासमाह-

**पृथिव्यादिमहाभूतमात्रकार्यमिदं जगत्। न[2] चात्मा, दृष्टसद्भावं मन्यन्ते भूतवादिनः॥३०॥**



१ क. 'रणस्य दुःशकत्वात्, शिष्यहिताहेतुत्वाच्च शा' । २ 'न चात्मा-ऽदृष्टसद्भावं' इति द्वन्द्वसमासगर्भित एव क्रियान्वयी पाठो मूल-स्वोपज्ञटीकयोरङ्गीकृतः ।

इदं प्रत्यक्षोपलभ्यमानं, जगत् चराचरं, पृथिव्यादीनि पृथिवी-अप्-तेजो-वायुलक्षणानि यानि चत्वारि महाभूतानि तन्मात्रकार्यं, मात्रपदेनाऽऽकाशादिव्यवच्छेदः। नन्वात्मन एव न तथात्वम्, इत्यत आह– न चात्मा शरीरातिरिक्तोऽहंप्रत्ययालम्बनमस्ति "चैतन्यविशिष्टः कायः पुरुषः" इति वचनात्। एवं भूतवादिनो लोकायतिकाः, दृष्टसद्भावं प्रत्यक्षवस्तुन एव पारमार्थिकत्वं, मन्यन्ते, नाऽदृष्टस्य, तत्र मानाभावात्। न ह्यनुमानं तत्र मानम्, व्यभिचारिसाधारण्येन तस्याऽप्रमाणत्वात्, वह्न्यादिसंभावनयैव तत्र प्रवृत्त्युपपत्तेः। अगृहीताऽसंसर्गकवह्न्यादिस्मृतिरूपायां संभावनायामसद्विषयिण्यां परमार्थसत्स्वलक्षण[1]विषयाध्यक्षविषयविषयकत्वरूपसंवादोऽपि न संभवतीति चेत्। न, अध्यक्षमूलकविकल्पविषयकत्वरूपसंवादस्य सद्विषयकत्वरूपप्रामाण्यासहचरात् कथं ततस्तदभिमानः?, इति चेत्। सत्यम्, तथाप्यध्यक्षमूलकाध्यक्षान्तरसाधारणस्याऽध्यक्षमूलकविषयविषयकत्वलक्षणसंवादस्योक्तप्रामाण्यसहचारात्। तथापि दृष्टसाधर्म्येणाऽनुमानाप्रामाण्यसाधनमनुमानप्रामाण्यानभ्युपगमे दुःसमाधानमिति चेत्। सत्यम्, साधर्म्यदर्शनस्योद्बोधकविधया, साधारणधर्मदर्शनविधया वाऽगृहीतासंसर्गकार्थस्मृतिरूपायाम्, उत्कटकोटिकसंशयरूपायां वा संभावनायामेवोपयोगात्। संभावनाया एव च बहुशो व्यवहारहेतुत्वात्। अत एव न परकीयसंदेहादिप्रतिसन्धाननिमित्तशब्दप्रयोगाद्यनुपपत्तिः। धूमदर्शनात् प्रागप्यर्थसंशयरूपा संभावनाऽस्त्येव, न तु प्रवृत्तिः, इति व्यभिचार इति चेत्। न, धूमदर्शनप्राक्कालीनस्य तस्य विध्यंशेऽनुत्कटकोटिकत्वेन संभावनाऽनात्मकत्वात्। धूमदर्शनोत्तरकालीनस्याऽपि तस्याविशेषात् कथमुत्कटकोटिकत्वम्?, इति चेत्। तर्हि विशिष्यैव धूमदर्शनादेरुत्कटकोटिकार्थसंशयहेतुत्व-

१ स्वलक्षणशब्दो विशेषपरिभाषकः।

माद्रियताम् ।

अथ 'अनुमानं न प्रमाणम्' इति वाक्यस्य प्रामाण्ये शब्दप्रामाण्यापातः, अप्रामाण्ये चानुमानप्रामाण्यापात इति चेत् । न, एतद्वाक्यस्य प्रमाकरणत्वाभावरूपाप्रामाण्यविषयत्वात्, असत्ख्यातिसत्त्वे विशिष्टज्ञानमात्रस्यैव भ्रमत्वेन भ्रमजनकत्वेऽप्यविरोधाच्च । न च प्रत्यक्षप्रामाण्यमप्यनुमानाधीनग्रहम्, इत्यनुमानोपगम आवश्यकः, स्वतःप्रामाण्यग्रहे तत्संशयायोगादिति वाच्यम्; स्वलक्षणविषयकत्वरूप[1]व्यावर्तकधर्मदर्शनात्, स्वसंवेदनेन तद्व्यक्त्यात्मकसद्विषयै[2]कत्वनिश्चयाच्च, निर्विकल्पके तत्संशयायोगात्, सविकल्पकस्य चानुमानवदप्रमाणत्वात् । निर्विकल्पके सन्मात्रावलम्बनत्व-स्वप्रकाशविषयत्व-प्रामाण्यावगाहित्वानां सिद्धिरप्यनुमानादेवेति चेत् । न, स्वरूपत[3]स्तेषामपि स्वग्राह्यत्वात्, तत्तद्रूपेण तु संभावनाविषयत्वादेव 'निर्विकल्पकं सन्मात्रविषयम्' इति धियः 'अयं घटः' इतिधीतुल्यत्वादिति दिक् ।

अत एव शब्दोऽपि न मानम्, परस्परविरुद्धार्थाभिधायकानामागमानां विनिगन्तुमशक्यत्वात्, शब्दस्य वासनामात्रप्रभवत्वात्, तन्मात्रजनकत्वाच्च; अन्यथाऽसदर्थप्रतिपादकशब्दप्रयोगो दुर्घटः स्यात् । तर्हि तै[4]वागमो निष्प्रयोजनः स्यादिति चेत् । न, परं प्रति दूषणपर्यनुयोगात्, परस्य तदनुत्तरमात्रेण निग्रहे च तत्सार्थक्यात् । अत एव "सर्वत्र पर्यनुयोगपराणि सूत्राणि बृहस्पतेः" इत्यभिहितम् । ततोऽदृष्टे मानाभावाद् नास्त्यात्मा । इति लोकायतिकप्रवादः ॥ ३० ॥

१ क. 'यत्व' । २ स्वसंवेदनग्राह्यत्वम् । ३ सन्मात्रावलम्बनत्व-स्वप्रकाशविषयत्व-प्रामाण्यावगाहित्वानाम् । ४ चार्वाकस्य ।

अत्र परमार्थवादिनामार्हतानां मतमाह—

अचेतनानि भूतानि न तद्धर्मो न तत्फलम्। चेतनास्ति च यस्येयं स एवात्मेति चापरे॥३१॥

भूतानि पृथिव्यादीनि, अचेतनानि चैतन्याभाववत्त्वेन प्रमितानि। अतश्चेतना तद्धर्मो न— भूतस्वभावभूता न। अत एव च तत्फलं न— भूतोपादानकारणजन्या न, मृदो घटस्येव तत्स्वभावस्यैव तदुपादेयत्वात्। अस्ति च चेतना, प्रतिप्राण्यनुभवसिद्धत्वात्। अतो यस्येयं स्वभावभूता, फलभूता च; स एवाऽऽत्मा, परिशेषात्, इति चाऽपरे जैनाः॥ ३१॥

विपक्षे बाधकमाह—

यदीयं भूतधर्मः स्यात् प्रत्येकं तेषु सर्वदा। उपलभ्येत सत्त्वादि-कठिनत्वादयो यथा॥३२॥

यदीयं चेतना, भूतधर्मः स्यात् तदा तेषु भूतेषु, प्रत्येकमसंघातावस्थायां, सर्वदा- इन्द्रियविषयसंप्रयोगकाले, उपलभ्येत, भूतसामान्यधर्मत्वे सत्त्वादिवत्, भूतविशेषधर्मत्वे च कठिनत्वादिवत्, योग्यत्वादिति भावः, मध्यगताऽऽदिपदादयं विभागः प्रतीयते॥ ३२॥

पराभिप्रायमाह—

शक्तिरूपेण सा तेषु सदाऽतो नोपलभ्यते। न च तेनापि रूपेण सत्यसत्येव चेन्न तत्॥३३॥

सा चेतना, तेषु भूतेषु, सदाऽसंघातावस्थायामपि, शक्तिरूपेण वर्तते । अतस्तदा नोपलभ्यते, व्यक्तिरूपाक्रान्तस्यैव योग्यत्वात् । न च तेनापि प्रसिद्धेन शक्त्याख्येनापि रूपेण, सती चेतना, असती; न ह्यनुपलब्धिमात्रादभावः सिद्ध्यति, किन्तु योग्यानुपलब्ध्या, न चात्र साऽस्ति, तत्र तद्रूपावच्छिन्नायास्तस्या अयोग्यत्वादिति । समाधत्ते- इति चेत्, न तत् पूर्वोक्तम् ॥ ३३ ॥

कुतः ?, इत्याह-

**शक्तिचैतन्ययोरैक्यं नानात्वं वाथ सर्वथा । ऐक्ये सा चेतनैवेति नानात्वेऽन्यस्य सा यतः ३४**

शक्ति-चैतन्ययोः सर्वथा भेदासहिष्णुतयैक्यमभेदः, अथेति पक्षान्तरे, सर्वथाऽभेदासहिष्णुतया नानात्वं भेदः । आद्यपक्षे दोषमाह-ऐक्येऽभेदे, सा शक्तिः चेतनैव । ततश्च यदि योग्या सा, तदा प्रागप्युपलब्धिप्रसङ्गः । यदि च न योग्या, तदा पश्चादप्यनुपलब्धिप्रसङ्गः । द्वितीयपक्षे दोषमाह- नानात्वे भेदे, सा चेतना, अन्यस्य स्याद् न भूतानां, तदन्यशक्तिरूपत्वात् तेषाम् । यत एवम्, ततो न तदिति योजना । अथ चेतनायाः स्वाभिन्नव्यक्तिरूपा तज्जनकताख्या शक्तिः स्वरूपतो निर्विकल्पकविषयाऽपि तद्रूपेण सविकल्पकागोचर इति न दोष इति चेत् । न, व्यक्तचेतनाया अप्युत्तरचेतनाजनकतया शक्तिरूपेणाऽयोग्यत्वप्रसङ्गात् । चेतनात्वेनैव सा योग्या, न तु शक्तिरूपेणेति चेत् । प्रत्येकदशायामपि चेतनात्वेन योग्यत्वम्, चेतनात्वशून्या चेतना वा प्रसजेदिति महत् संकटम् ॥ ३४ ॥

१ योग्यानुपलब्धिः । २ संघातावस्थायाः पूर्वमपि । ३ संघातदशोत्तरकालम् । ४ भूतानाम् । ५ पूर्वोक्तम् ।

अनभिव्यक्तत्वाद् नोपलभ्यत इत्याशयं दूषयति–

**अनभिव्यक्तिरप्यस्या न्यायतो नोपपद्यते। आवृतिर्न यदन्येन तत्त्वसंख्याविरोधतः ॥३५॥**

अनभिव्यक्तिरप्यस्याश्चेतनायाः, न्यायतः परमार्थविचारात् , नोपपद्यते नाऽबाधिता भवति, यद् यस्माद्धेतोः, प्रतिबन्धकसमवधानरूपाऽऽवृतिर्[1]त्राऽनभिव्यक्तिरभिमता, नाऽन्या, अनिर्वचनात् । प्रतिबन्धश्चात्र नान्येन भूतातिरिक्तेन, अतिरिक्तप्रतिबन्धकाभ्युपगमे " पृथिव्यादिचतुष्टयमेव तत्त्वम् " इति स्वसिद्धान्तव्याकोपात् ॥ ३५ ॥

भूतानामेव केनचिद् रूपेणाऽऽवारकत्वं भविष्यतीति, अत्राह–

**न चासौ तत्स्वरूपेण तेषामन्यतरेण वा। व्यञ्जकत्वप्रतिज्ञानाद् नावृतिर्व्यञ्जकं यतः॥३६॥**

न चासावावृतिस्तत्स्वरूपेण भूतत्वादिना भूतस्वरूपेण, नवा ते[2]षामन्यतरेण पृथिवीत्वादिना, पृथिवी-जलान्यतरत्वादिना वा। कुतः ?, इत्याह– व्यञ्जकत्वप्रतिज्ञानात्– चैतन्यसाक्षात्कारजनकत्वस्वीकारात् । तत्त्वेऽप्यावृतिजनकत्वमस्तु, अत आह– यतो व्यञ्जकमावृतिरावारकं न भवति, एकस्य चैतन्यसाक्षात्कारजनकत्व-तज्जनकीभूताभावप्रतियोगित्वयोर्विरोधादिति भावः ॥ ३६ ॥

१ भूताऽसमुदितावस्थायाम् । २ भूतानाम् ।

कायाकारपरिणामाभाव एवाऽत्राऽऽवृतिः स्यात्, अत्राह–

**विशिष्टपरिणामाभावेऽपि ह्यत्रावृतिर्न वै। भावताऽऽप्तेस्तथा नाम व्यञ्जकत्वप्रसङ्गतः ॥३७॥**

विशिष्टपरिणामाभावेऽपि, हिः पादपूरणे, वै निश्चितं, अत्र [1]भूतचेतनायां, आवृतिर्न, आवारकत्वस्य भावत्वव्याप्यत्वेन [2]तथात्वे तस्य भावताऽऽप्तेर्भावत्वप्रसङ्गात्। न चाऽऽवारकत्वं न भावत्वव्याप्यम्, [3]अन्धकारे व्यभिचारादिति वाच्यम्; अन्धकारस्य द्रव्यत्वेन व्यवस्थापयिष्यमाणत्वात्। तुच्छत्वादभावस्य नाऽऽवारकत्वमिति [4]तथात्वे भावत्वापत्तिरित्यन्ये। दूषणान्तरमाह– तथा, विशिष्टपरिणामाभावस्य चेतनासाक्षात्कारप्रतिबन्धकत्वे [5]तदभावत्वेन [6]तद्धेतुत्वे गौरवाद् नामाऽस्य विशिष्टपरिणामस्यैव लाघवेन व्यञ्जकत्वप्रसङ्गात् ॥ ३७ ॥

न चेष्टाऽऽपत्तिः, इत्याह–

**न चासौ भूतभिन्नो यत्ततो व्यक्तिः सदा भवेत्। भेदे त्वधिकभावेन तत्त्वसंख्या न युज्यते॥३८॥**

न चासौ विशिष्टपरिणामः, भूतभिन्नो भूतातिरिक्तः, यद् यस्माद्धेतोः; ततः सदा सर्वकालं, व्यक्तिश्चेतनासाक्षात्कारो भवेत्, भूताभिन्नविशिष्टपरिणामस्य यावद्भूतकालभावित्वात्। भेदे तु भूतेभ्यो विशिष्टपरिणामस्याऽभ्युपगम्यमाने,

---

१ भूतजन्यायां चेतनायाम्। २ कायाकारपरिणामवैशिष्ट्ये। ३ अन्धकारस्य सत्यप्यावारकत्वे तेजोऽभावरूपत्वेन भावत्वव्याप्यत्वाभावादिति परस्याभिप्रायः। ४ आवारकत्वे। ५ विशिष्टपरिणमाभावत्वेन। ६ चेतनासाक्षात्कारप्रतिबन्धहेतुत्वे।

अधिकभावेन चतुष्टयबहिर्भावेन, तत्त्वसंख्या न युज्यते– "चत्वार्येव तत्त्वानि" इति विभागव्याघातः स्यात् ॥ ३८ ॥

अत्र पराभिप्रायमाशङ्क्य परिहारमाह–

**स्वकालेऽभिन्न इत्येतत्कालाभावे न संगतम्। लोकसिद्धाश्रये त्वात्मा हन्त! नाश्रीयते कथम्?॥**

स्वकाले परिणामकाले, अभिन्नः पदार्थः; ततो न तत्त्वसंख्याव्याघातः। न चाऽन्यदा चैतन्यव्यक्तिप्रसङ्गः, तत्काले भूतस्य विशिष्टपरिणामभिन्नत्वेन व्यञ्जकाभावात्। न चैकत्र भेदा-ऽभेदोभयविरोधः, कालभेदेनैकत्रोभयसमावेशात्; कथमन्यथा पक्वतादशायां घटादौ 'अयं न श्यामः' इत्यादिधीः?। न च तत्र विशेषणसंसर्गाभाव एव विषयः, अनुयोगिनि सप्तमीं विना तदनुपपत्तेरिति दिक्। इति– एतत्प्रकारम्, एतत् प्रकृतवचनम्, कालाभावे न संगतम्– अलीकम्; न हि कालो नाम तत्त्वान्तरमिष्यते परैः।

अथ शब्द-तदुपजीविप्रमाणयोरेवाऽनादरश्चार्वाकाणाम्, तन्मूलभूताऽऽप्ताऽनाश्वासात्। अनुभवसिद्धस्त्वर्थो नापह्नोतुं शक्यः। अत एव तान्त्रिकलक्षणलक्षितमेवाऽनुमानं प्रतिक्षिप्यते, तादृशप्रत्यक्षवत्, न तु बाल-गोपालसाधारणानलादिप्रतिपत्तिरूपम्, अन्यथा व्यवहारानिर्वाहात्; न हि धूमपरामर्शात् 'पर्वतो वह्निमान्' इति ज्ञानं जायमानं संशयरूपं, स्मृतिरूपं वा संभवति 'संदेह्मि, स्मरामि' इत्यननुसंधानात्। किञ्च, परामर्शस्य निश्चयसामग्रीत्वाद् न संशयहेतुत्वम्, 'पर्वतो वह्निमान्'

१ क. ग. घ. च. 'लिंब का' मूलपुस्तकेऽप्ययमेव पाठः। २ तान्त्रिकलक्षणलक्षितप्रत्यक्षवत्।

इति पूर्वमननुभवाच्च न तादृशी' स्मृतिः । अथ 'यो धूमवान् सोऽग्निमान्' इति व्याप्तिज्ञानं धूमवत्त्वावच्छेदेन वह्निप्रकारकं तथैव स्मृतिमनुमितिस्थानीयां जनयति; पर्वतत्वांशे उद्बुद्धसंस्कारसहकृताद् वा ततः 'पर्वतो वह्निमान्' इति स्मृतिः, यथा बुद्धिविषयतावच्छेदकावच्छिन्नशक्तादपि तत्पदाद् निरुक्तशक्तिग्रहाऽऽहितसंस्कारेण तत्तद्धर्मावच्छिन्नशक्त्यंशे उद्बुद्धेन सहकृतात् पर्वतत्वादिविशिष्टोपस्थितिरिति चेत् । न, विशिष्योद्बोधकहेतुत्वे गौरवात्, हेत्वाभासादिवैफल्यप्रसङ्गाच्च । तथाप्यनुमित्यभ्युपगमे प्रमाणान्तरप्रसङ्ग इति चेत् । न, अनुमितित्वस्य मानसत्वव्याप्यत्वाद् 'वह्निं न साक्षात्करोमि' इति प्रतीतेर्गुरुत्वादाविव लौकिकविषयताभावादेवोपपत्तेः, युक्तं चैतत्, अनुमितित्वावच्छिन्नं प्रति चाक्षुषादिसामग्रीप्रतिबन्धकत्वाऽकल्पने लाघवादिति । तथाच 'इदानीं घटः' इत्यादिप्रतीतौ संबन्धघटकतया, परत्वादिलिङ्गेन वा कालसिद्धिरिति नव्यचार्वाकाशय इति चेत् ।

अत्राह– लोकसिद्धस्य कालस्याऽऽश्रयेऽङ्गीकारे तु, 'हन्त' इति खेदे, आत्मा कथं नाऽऽश्रीयते श्रद्धीयते? । 'लोकसिद्धत्वाविशेषेऽपि सकलप्रयोजनहेतोरनन्यसाधारणगुणस्याऽऽत्मनोऽनङ्गीकारः, तत्तद्वस्तुपरिणामान्यथासिद्धस्य कालस्य चाङ्गीकारः, इति पुरः परिस्फुरतोर्मणि-पाषाणयोर्मध्ये मणिपरित्याग-पाषाणग्रहणवदतिशोचनीयं विलसितमिदं देवानांप्रियस्य, इति 'हन्त' इत्यनेन सूच्यते ॥ ३९ ॥

लोकसिद्धत्वमेवाऽऽत्मनः स्पष्टयति–

**नात्मापि लोके नो सिद्धो जातिस्मरणसंश्रयात् । सर्वेषां तदभावश्च चित्रकर्मविपाकतः ॥** ॥ १९ ॥

१ तादृशानुभवपूर्वकत्वात् तादृश्याः स्मृतेः । २ अनुभवात् । ३ मूर्खस्य चार्वाकस्य ।

आत्मा लोकेऽपि शब्द-तदुपजीविप्रमाणातिरिक्तप्रमाणानुसारिण्यपि, अपि भिन्नक्रमोऽत्रे संबध्यते, नो सिद्ध इति न, किन्तु सिद्ध एव, नञ्द्वयादवधारणं प्रतीयते । कुतः ?, इत्याह– जातिस्मरणस्य भवान्तरानुभूतार्थविषयस्य मतिज्ञानविशेषस्य संश्रयात्– लोकेनाऽङ्गीकरणात्; न हि भवान्तरानुभूतार्थस्मरणमन्वय्यात्मद्रव्यं विनोपपद्यते, शरीरस्य भवान्तराननुयायित्वात् । भवान्तरादागमनाऽविशेषे केषाञ्चिदेव जातिस्मरणं न सर्वेषामिति कथं विशेषः ?, इति तटस्थशङ्कायामाह– सर्वेषामभिमतव्यतिरिक्तानां, तदभावश्च जातिस्मरणाभावश्च, चित्रस्य बहुविधशक्तिकस्य कर्मणस्तदावरणस्य विपाकः फलप्रदानाभिमुख्यकालस्तस्मात् ॥ ४० ॥

अत्रैव दृष्टान्तमाह–

**लोकेऽपि नैकतः स्थानादागतानां तथेक्ष्यते । अविशेषेण सर्वेषामनुभूतार्थसंस्मृतिः ॥ ४१ ॥**

लोकेऽपि– इहलोकेऽपि, एकतो विवक्षितात् स्थानात्, आगतानां सर्वेषाम्, अनुभूतार्थसंस्मृतिरविशेषेण नेक्ष्यते, कस्यचिदनुभूतयावदर्थस्मृतिः, कस्यचित् कतिपयार्थस्मृतिः, कस्यचिच्चार्थमात्राऽस्मृतिरिति विशेषदर्शनात् । एवं चात्र दृष्टविशेषस्य चित्रकर्मविपाकप्रयोज्यत्वात्, जात्यस्मरणमपि तत्प्रयोज्यमिति सिद्धम् । अथ तत्र यदंशे संस्कारोद्बोधस्तदंशे स्मरणम्, नष्टचित्तस्य च संस्काराभावाद् न स्मरणम्, इत्युद्बोधकसंस्काराभावेनाऽस्मरणोपपत्तौ, किं तत्प्रतिबन्धकादृष्टकल्पनेन ?, इति

---

१ सप्तमी, लोकविशेषणम् । २ लोके । ३ जातिस्मरणरूपमतिज्ञानावरणस्य । ४ चित्रकर्मविपाकप्रयोज्यम् ।

चेत्। सत्यम्, उद्बोधकानामपि स्मृत्यावरणक्षयोपशमाऽऽधायकतयैवोपयोगात् तस्यैव स्मृत्यन्तरङ्गहेतुत्वात्; विनाऽप्युद्बोधकं क्षयोपशमपाटवात् झटिति स्मृतिदर्शनात्। संस्कारश्चोत्कर्षतः षट्षष्टिसागरोपमस्थितिकमतिज्ञानभेदान्तःपाती समतिक्रान्तसंख्यातभवावगमस्वरूपमतिज्ञानविशेषजातिस्मरणार्थं न प्राग्भवीय उपयुज्यते, किन्तु स्मृतिसामान्येऽनुभवव्यापाररक्षार्थं जातिस्मरणनियतेहादिचतुष्टयान्तर्भूत एव, तथाविधक्रमानुविद्धस्यैव च्छद्मस्थोपयोगस्य साधनात्, क्वचिदपायमात्रस्य क्वचन धारणामात्रस्य च स्फुटत्वेऽपि दोषादन्यानुपलक्षणात्। यदाह भगवान् जिनभद्रगणिक्षमाश्रमणः—

"उप्पलदलसयवेहे व्व दुव्विहावत्तणेण पडिहाइ। समयं व सुक्कसक्कुलिदसणे विसयाणमुवलद्धी[3] ॥१॥" इति।

तत्त्वमत्रत्यं मत्कृतज्ञानार्णवादवसेयम्। 'बालस्य स्तन्यपानप्रवृत्तिरिष्टसाधनताधीसाध्या। सा चानुमितिरूपा। सा च व्याप्त्यादिस्मृतिजन्या। व्याप्त्यादिस्मृतिश्च प्राग्भवीयानुभवसाध्याः इति "वीतरागजन्मादर्शन०" न्यायाद् भवान्तरानुगाम्यात्मसिद्धिः' इत्यपरे वर्णयन्ति। वस्तुतः स्मरणान्तरान्यथानुपपत्त्याऽपि लोकसिद्ध एवाऽऽत्मा, शरीरस्य चैतन्ये बाल्येऽनुभूतस्य तारुण्येऽस्मरणप्रसङ्गात्, चैत्रेणाऽनुभूतस्येव मैत्रेण; बाल-युवशरीरयोर्भेदात् परिणामभेदे द्रव्यभेदावश्यकत्वात्। न चोपादानेनाऽनुभूतस्योपादेयेन स्मरणादुपपत्तिः, छिन्नकरादेरनुपादानत्वेन च्छिन्नकरादेः पूर्वानुभूतास्मरणप्रसङ्गात्। न च करेण यदनुभूतं तत् खण्डशरीरोपादानापरकिञ्चिदवयवेनाऽप्यनुभूतम्; इति तद्गतवासनासंक्रमाद् नानुपपत्तिरिति वाच्यम्; प्रत्यवयवगत-

१ स्मृत्यावरणक्षयोपशमस्य। २ उत्पलदलशतवेध इव दुर्विभावत्वेन प्रतिभाति। समकं वा शुष्कशष्कुलीदशने विषयाणामुपलब्धिः ॥ १ ॥
३ विशेषावश्यकभाष्ये गाथेयं २९९। ४ इष्टसाधनताधीः। ५ अनुमितिः।

विज्ञानबहुत्वेऽनेकपरामर्शप्रसङ्गात्; यावदवयवेषु व्यासज्यवृत्तित्वे च चैतन्यस्य यत्किञ्चिदाश्रयविनाशे बहुत्वसंख्याया इव विनाशप्रसङ्गात्; पूर्वचैतन्यविरहे उत्तरचैतन्यानुत्पादात्, परमाणुगतत्वे तद्गतरूपादिवच्चैतन्याऽतीन्द्रियत्वप्रसङ्गाच्च। रूपस्कन्धवद् विज्ञानस्कन्धैक्योपगमाद् न दोष इति चेत्। न, तथापि 'योऽहमनुभवामि, सोऽहं स्मरामि' इत्यभेदाऽवमर्शानुपपत्तेः। सादृश्येन वैसदृश्यतिरस्कारात् तथाऽवमर्शः, एवं च क्षणभङ्गे स्मृतिकुर्वद्रूपपरमाणुपुञ्जानामेव स्मृतिनियामकत्वाद् न कोऽपि दोष इति चेत्। न, स्थैर्य-प्रत्यभिज्ञाप्रामाण्ययोरुपपादयिष्यमाणत्वादिति दिक्॥ ४१ ॥

प्रकारान्तरेण लोकसिद्धत्वमाह—

**दिव्यदर्शनतश्चैव तच्छिष्टाव्यभिचारतः। पितृकर्मादिसिद्धेश्च हन्त! नात्माऽप्यलौकिकः ॥**

दिव्यदर्शनतश्चैव, पात्रावतारादौ विशिष्टरूपस्य पुंसः स्पष्टमवेक्षणाच्चैव, 'हन्त' इति खेदे, आत्माऽप्यलौकिको लोकाऽगम्यो न। न हि भूतविशेषस्य मन्त्रविशेषाकृष्टस्याऽऽगमनं संभवति, जडत्वात्[1] न वा तत्र विशिष्टशक्तिः संभवति; तथा, तेन दिव्यदर्शनविषयेण यच्छिष्टं कथितं तस्याऽव्यभिचारादविसंवादिप्रवृत्तिजनकत्वादपि[2]; तथा, तन्निर्वाहकातिशयितज्ञानहेत्वतिशयस्य विनाऽऽत्मानमसंभवात्; पितृकर्म वरप्रदानादिफलकं[3]परलोकगतपितृप्रीत्यनुकूलाचारविशेषः, आदिना विष-

१ साकल्यवृत्तित्वे। २ 'आत्मसिद्धेः' इत्युत्तरपदेन संबन्धः। ३ बहुव्रीह्यन्तस्याऽस्याऽऽचारविशेषेऽन्वयः।

वालनादिपरिग्रहः, [1]तत्सिद्धेस्तत्फलान्यथानुपपत्तेरपि ; तथा, तत्फलनिर्वाहकातिशयाऽऽश्रयतयाऽप्यात्मसिद्धेः । अत्र यद्यपि हेतुत्रयेणाऽप्यदृष्टसाधनादेवाऽऽत्मसिद्धिः, अदृष्टं चालौकिकम् , इति लोकसिद्धत्वं व्याहतम् ; तथाऽप्यनायत्याऽदृष्टकल्पनात् तत्र शब्दस्याऽनपेक्षणाल्लोकप्रसिद्धकार्येण लोकप्रसिद्धत्वमित्यभिमानः । न चातिशयस्य भोग्यनिष्ठतयैवोपपत्तिः, भोगनिर्वाहार्थं भोगसमानाधिकरणस्यैव तस्य कल्पयितुं युक्तत्वात् । अभिहितं चेदं "[2]संस्कारः पुंस एवेष्टः प्रोक्षणा-ऽभ्युक्षणादिभिः" इत्यादिना कुसुमाञ्जलौ उदयनेनाऽपि ।

इदमभ्युपगम्योक्तम् , वस्तुतः प्रागुक्तरीत्या लोकसिद्धाश्रयणमपि चार्वाकस्य न युक्तम् , तथाहि– यत् तावदुक्तम्– अनुभवसिद्धोऽर्थो नापह्नोतुं शक्यत इति । तदभ्युपगमबाधितम् , अनुभवसिद्धस्य जात्यादिवैशिष्ट्यस्याऽनभ्युपगमात् । परीक्ष्यमाणस्य [3]तस्याऽनुपपत्तेर्[4]स्तदनुभवबाध इति चेत् । तर्ह्यनुगताकारविषयत्वेन विशिष्टज्ञानमात्र एव प्रामाण्याभावनिश्चयाद् दुरुद्धरो व्यवहारबाधः । [5]तस्य [6]तद्व्याप्यत्वानिश्चयदशायां संदेहसाम्राज्यात् , कोट्यस्मरणदशायां [7]तस्याऽप्यभावाद् वा न [8]तद्बाध इति चेत् । [9]तथापि विशेषदर्शिनस्[10]तत्र प्रवृत्तिशून्यत्वापातः । धर्मिमात्रविषयकाद् निर्विकल्पकाद् धर्मिमात्रविषयिण्या एव प्रवृत्तेरभ्युपगमाद् न दोष इति चेत् । तर्हि यदुक्तमग्रे– 'तान्त्रिकलक्षणलक्षितमेवाऽनुमानं प्रतिक्षिप्यते, न तु स्वप्रतिपत्तिरूपं व्यवहार-

१ पितृकर्म-विषवालनादिसिद्धेः । २ कुसुमाञ्जलौ प्रथमस्तबके कारिका ११ । ३ जात्यादिवैशिष्ट्यस्य । ४ जात्यादिवैशिष्ट्यानुभवबाधः । ५ अनुगताकारविषयकविशिष्टज्ञानमात्रस्य । ६ प्रामाण्याभावव्याप्यत्वानिश्चयदशायाम् । ७ संदेहस्याऽपि, उभयकोटिविषयत्वात् तस्य, एकस्या अप्यस्मरणेऽभावादित्यर्थः । ८ व्यवहारबाधः । ९ तद्बाधाभावेऽपि । १० चार्वाकस्य ।

चतुरम् इति, तत्किं विस्मृतम् ? । कथं च सविकल्पकव्यवहितस्य निर्विकल्पस्य प्रवृत्त्युपयोगित्वम् ?, इति सूक्ष्ममीक्ष्यताम् ।

अथ विशिष्टज्ञानस्याऽपि धर्म्यंशे, स्वप्रकाशत्वांशे च प्रामाण्यमेव, अतो धर्म्यंशेऽप्रामाण्यज्ञानाभावात् तदंशे ततः प्रवृत्त्युपपत्तिः, शुक्त्यादाविदं रजतमित्यादिज्ञानानां च विशिष्टवासनोपनीतरजताद्यलीकधर्म्यवगाहित्वाद् व्यवहारबाधः "सर्वं ज्ञानं धर्मिण्यभ्रान्तम्" इति प्रवादश्चानुपपन्न इति चेत् । न, विशिष्टवासनासामर्थ्याऽविशेषे विशिष्टज्ञानमात्रस्यैव विशिष्टालीकधर्मिविषयसंभवात्, सम्यग्-मिथ्याज्ञानविभागार्थमेतादृशकुसृष्ट्यादरे चैकत्र धर्मिणि प्रकारीभूतधर्मसत्त्वम्, अन्यत्र च तदसत्त्वम्, इत्येतावन्मात्रस्यैव लाघवेनाऽऽश्रयणीयत्वात् । 'इदं रजतं' इत्यत्र पुरोवर्ति रजतमनुभूयते, अतस्तद्देशेऽलीकं रजतं कल्पते, सत्यस्थले तु नैवम्, सत्यस्यैव पुरोवृत्तित्वात्, इति विशेषाद् नोक्तानुपपत्तिरिति चेत् । न, 'इदम्' इति विषयतायाः क्षयोपशमविशेषनियम्यतया तदनुरोधेनाऽतिरिक्ताऽकल्पनात्, अन्यथाऽनन्तालीकरजताद्युत्पत्ति-विनाश-तद्धेत्वादिकल्पने गौरवात्, अज्ञातधर्मिणि प्रवृत्त्यनुपपत्तेश्चेति । अधिकं प्रमारहस्ये ।

यच्चाप्युक्तम्- अनुमितित्वस्य मानसत्वव्याप्यत्वाभ्युपगमाद् न प्रमाणान्तरप्रसङ्ग इति । तदप्यसत्, तदानीं वह्निमानसस्वीकारे लिङ्गादीनामपि मानसापत्तेः । न चाचार्यमत इव तत्र[1] तद्ज्ञानमात्र[2] इष्टापत्तिः, एवमप्युच्छृङ्खलोपस्थितानां घटादीनां तत्र भानापत्तेः । न च परामर्शादिरूपविशेषसामग्रीविरहाद् न तदापत्तिरिति[3] वाच्यम्, सामान्यसामग्रीवशात् तदापत्तेः । न च घटमानसत्वस्य परामर्शप्रतिबध्यतावच्छेदकत्वाद् न तदापत्तिः[3], पटमानसत्वादीनामपि तथात्वेनाऽनन्तप्रतिबध्य-प्रतिबन्धकभाव-

---

१ वह्निमानसज्ञाने । २ लिङ्गादिभानमात्रे । ३ घटभानापत्तिः ।

कल्पने गौरवात्, वह्नि-घटोभयानुमितिजनकपरामर्शस्थले[1] व्यभिचारात्, तत्तत्परामर्शाभावविशिष्टतत्तत्परामर्शत्वेन प्रतिबन्धकत्वे च सुतरां[2] तथात्वात्, सामान्यतो मानसत्वेनैव तेव[3] तत्प्रतिबद्ध्यत्वावच्छेदकत्वौचित्यात्। न चैवमनुमितिसामग्र्यां सत्यां भोगोऽपि कथं भवेत्?, इति वाच्यम्, भोगान्यज्ञानप्रतिबन्धकतावच्छेदकतया समानीतजातिविशेषवतां सुख-दुःखानामुत्तेजकत्वादिति। अधिकं मत्कृतन्यायालोक-स्याद्वादरहस्ययोरवसेयम् ॥ उक्तः शक्तिपक्षः ॥ ४२ ॥

अथ कार्यपक्षमधिकृत्याह–

**काठिन्याबोधरूपाणि भूतान्यध्यक्षसिद्धितः। चेतना तु न तद्रूपा सा कथं तत्फलं भवेत्? ॥**

काठिन्यं कठिनः स्पर्शः पृथिवीमात्रवृत्तिः, इदमुपलक्षणं रसादीनाम्, अबोधोऽचैतन्यं, तद्रूपाणि तद्धर्मनिरूपितधर्मिताश्रयाणि, भूतानि पृथिव्यादीनि। कुतः?, इत्याह– अध्यक्षसिद्धितः 'कठिना पृथिवी, अचेतना पृथिवी' इत्यादिसत्यप्रत्यक्षविषयत्वात्। चैतन्यस्याऽचाक्षुषत्वात् तेदभावो[4] यद्यपि न चाक्षुषः, तथाप्युपनयजन्यं[5] मानसं तदध्यक्षं[6] ग्राह्यम्। चेतना तु तद्रूपा न– काठिन्या-ऽबोधसामानाधिकरण्येन प्रमीयमाणा न, अतः सा चेतना, तत्फलं भूतोपादेया, कथं भवेत्?– न क-



१ अनन्तप्रतिबध्य-प्रतिबन्धककल्पनया गौरवात्। २ चार्वाकस्य। ३ परामर्शनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेकत्वाङ्गीकारस्योचितत्वात्। ४ तदा चैतन्यमनुकृष्यते। ५ चेष्टाजन्यम्। ६ चैतन्य भावविषयकं प्रत्यक्षम्।

थश्चिदित्यर्थः । तथात्वे हि 'कठिनोऽहं, जडोऽहम्' इत्यादिप्रतीत्यापत्तिः । अथ जायत एव 'स्थूलोऽहं, गौरोऽहं' इतिवत् 'कठिनोऽहम्' इत्यपि प्रतीतिः, प्रतीयत एव च जाड्यमपि, 'मामहं न जानामि' इत्यादिना, इति किमापादितम् ?, इति चेत् । न, 'कठिनोऽहम्' इत्यादिप्रतीतेर्भ्रमत्वात्, इदंत्वसामानाधिकरण्येनाऽनुभूयमानस्य काठिन्यादेरहंत्वसामानाधिकरण्यायोगाच्च, इत्युपरिष्टाद् विवेचयिष्यते । 'मामहं न जानामि' इति प्रतीतिश्च विशेषज्ञानाभावविषया, न तु ज्ञानसामान्याभावविषया, भावरूपाज्ञानविषया वा, ज्ञाना-ऽज्ञानयोर्विरोधात्, भावरूपाज्ञानस्याऽन्यत्र निरस्तत्वाच्चेति दिग् ॥ ४३ ॥

भूतकार्यत्वे, उत्पत्तेः प्राक् सत्त्वा-सत्त्वपक्षयोर्दोषमाह–

**प्रत्येकमसती तेषु न च स्याद् रेणुतैलवत्। सती चेदुपलभ्येत भिन्नरूपेषु सर्वदा ॥ ४४ ॥**

प्रत्येकमसंहतावस्थायां, तेषु भूतेषु, असती– अविद्यमाना चेतना, नच– नैव स्यात् । किंवत् ?, इत्याह– रेणुतैलवद् रेणौ तैलवदित्यर्थः । यथा तिलेषु प्राग् विद्यमानमेव तिलसंघातात् तैलमुत्पद्यते, रेणुषु तु प्रागविद्यमानं तत्संघातादपि नोत्पद्यते; तथा भूतेषु प्रागविद्यमाना चेतना तत्संघातादपि नोत्पद्येत, तत्संघातजन्यत्वस्य तत्राऽस्तित्वव्याप्यत्वादिति भावः । चेद् यदि, भिन्नरूपेषु– असंहतेषु भूतेषु, सती विद्यमाना चेतना; तदा सर्वदोपलभ्येत, तदुपलम्भप्रतिबन्धकनिराकरणात्, आपादकसाम्राज्यादिति भावः ॥ ४४ ॥

---

[1] चेतनाया भूतोपादेयत्वे । [2] एतस्य हेतुद्वयस्य यथाक्रमं ज्ञानसामान्याभाव-भावरूपाज्ञानप्रतिषेधसाधकत्वम् । [3] चेतनाया इति वाक्यशेषः ।

उक्तनियमे व्यभिचारमाशङ्कते—

॥ २३ ॥ **असत्स्थूलत्वमण्वादौ घटादौ दृश्यते यथा । तथाऽसत्येव भूतेषु चेतनाऽपीति चेन्मतिः ॥**

असदविद्यमानं, स्थूलत्वं महत्त्वम्, अण्वादौ परमाण्वादौ, आदिना द्व्यणुकग्रहः, घटादौ— घटस्य परम्परया कारणीभूते त्र्यणुके, यथा दृश्यते चाक्षुषविषयीक्रियते; तथा भूतेष्वसंहतभूतेषु[1], असत्येवाऽविद्यमानैव, चेतनाऽपि भवति, सामग्र्येव हि कार्योत्पत्तिव्याप्या, न तु तत्र[2] तदुत्पत्तौ[3] तत्र[4] तदस्तित्वमपि तन्त्रम्, [5]देशानियमस्यापि प्रागभावेन, विशिष्टपरिणामेन वाऽन्यथासिद्धेः, इति चेद् मतिः परिकल्पना, तव[6] ॥ ४५ ॥

तत्रोच्यते—

**नाऽसत्स्थूलत्वमण्वादौ तेभ्य एव तदुद्भवात् । असतस्तत्समुत्पादो न युक्तोऽतिप्रसङ्गतः ॥**

अण्वादौ परमाणु-द्व्यणुकयोः, स्थूलत्वं महत्त्वम्, असदविद्यमानं, न । कुतः?, इत्याह— तेभ्य एव त्र्यणुककारणत्वेन प्रसिद्धेभ्य एवाऽणुभ्यः, तदुद्भवात् स्थूलत्वोत्पादात् । विपक्षे बाधकमाह— असतोऽणुष्वविद्यमानस्य स्थूलत्वस्य, तत्समुत्पादः— तेभ्योऽणुभ्य उद्भवः, अतिप्रसङ्गतो न युक्तः ॥ ४६ ॥

१ संहतावस्थापन्नेषु भूतेषु । २ चेतनोत्पत्तौ । ३ असंहते भूते । ४ चेतनास्तित्वम् । ५ तत्संघातजन्यत्वं तत्रास्तित्वव्याप्यमिति नियमस्य । ६ चार्वाकस्य ।

अतिप्रसङ्गमेव स्पष्टयति–

**पञ्चमस्यापि भूतस्य तेभ्योऽसत्त्वाविशेषतः । भवेदुत्पत्तिरेवं च तत्त्वसंख्या न युज्यते ॥४७॥**

यदि तत्र[1]ाऽसदपि तत्रोत्पद्यते, तदाऽसत्त्वाविशेषतः पञ्चमस्याऽपि भूतस्योत्पत्तिर्भवेत् । न चेष्टाऽऽपत्तिरित्याह– एवं च पञ्चमभूतोत्पत्त्यभ्युपगमे च, तत्त्वसंख्या "चत्वार्येव तत्त्वानि" इतिविभागवचनोक्ता, न युज्यते । एवं च देशनियमार्थमुक्त-नियमाऽकल्पनेऽप्यसदनुत्पत्तिनिर्वाहाय त[2]न्नियमकल्पनमावश्यकमिति भावः । कारणाभावादेव पञ्चमभूतानुत्पत्तिः, न त्वसत्त्वा-दिति चेत् । सो[3]ऽपि कुतः ?। असत्त्वादिति चेत् । त[4]दपि कुतः ?। कारणाभावादिति चेत् । अन्योन्याश्रयः । अस्तीतिधीविषयत्वा-भावात्[5], इति चेत् । न, प्रध्वंसादौ व्यभिचारात्[6] । विधि-निषेधव्यवहाराविषयत्वात्[7], इति चेत् । न, 'पञ्चमं भूतं नास्ति' इतिनिषेध-व्यवहारस्य जागरूकत्वात् । भूते पञ्चमत्वं नास्तीति चेत् । न, विकल्पविषयस्याऽखण्डस्यैव पञ्चमभूतस्य प्रतियोगित्वोल्लेखाभ्युप-गमात्, अन्यथा 'इह पञ्चमं भूतं नास्ति' इत्यस्याऽनुपपत्तेः, तदभ्युपगमविरोधाच्च । नन्वेवं सत्कार्यवादसाम्राज्यापत्तिः, तथाच कार्यात् प्रागपि त[8]दुपलब्धिप्रसङ्गः । अनाविर्भावाद् न तत्प्रसङ्ग इति चेत् । न, अनाविर्भावस्य निर्वक्तुमशक्यत्वात्, उपलम्भा-भावरूपत्वे[8] तस्याऽऽत्माश्रयात्, व्यञ्जकाद्यभावरूपत्वे च व्यञ्जकादीनां प्राक्सत्त्वे त[9]दभावाऽयोगात्, असत्त्वे च त[10]दनुत्पत्तेः । किंच,

---

१ भूतसंघाते । २ भूतसंघातजन्यत्वमसंहततत्प्रत्येकास्तित्वव्याप्यमित्येवंरूपस्य नियमस्य कल्पनम् । ३ कारणाभावः । ४ असत्त्वम् । ५ असत्त्वमिति वाक्यशेषः । ६ प्रध्वंसस्य 'प्रध्वंसोऽस्ति' इत्यस्तिधीविषयत्वसत्त्वेऽपि सत्त्वाभावात् । ७ सत्त्वोपलम्भप्रसक्तिः । ८ ख.ग.घ.च. 'त्वेन त' । ९ व्यञ्जकाद्यभा-वायोगात्, सदसत्त्वयोर्विरोधात् । १० व्यञ्जकाद्यनुत्पत्तेः, नाऽसत् सद् भवतीति सिद्धान्ताश्रयणात् ।

एवमुत्पत्तिपदार्थ एव विलीयेत, कार्यस्य प्रागपि सत्त्वेनाऽऽद्यक्षणसंबन्धरूपतदभावात्, इत्युभयतः पाशा रज्जुः, इति चेत्। न, कथञ्चित् सद-सत्कार्यवादे दोषाभावात्, द्रव्यरूपेण प्राक्सतः पर्यायस्य द्रव्यरूपेण प्रागप्युपलम्भात्, पर्यायरूपेणाऽऽद्यक्षणसंबन्धरूपपर्यायोत्पत्तेः सुघटत्वाच्च। न चेदेवम्[2], उपादानकारणत्वमेव दुर्घटं स्यात्, समवायनिरासेन स्वसमवेतकार्यकारित्वलक्षणत[3]दसिद्धेः; उपादाने कार्यप्रागभावोऽपि न सिद्ध्येत्, प्रतियोगित्व-विशेषणतयोः स्व[4]रूपानतिरेकात्, इत्यन्यत्र विस्तरः। अत एव शा[5]क्यो-लूकानां सत्कार्यवादे, सांख्यानां चाऽसत्कार्यवादे पर्यनुयोगा [6]एकान्तपक्षनिवृत्त्यंशे फलवन्त एव तान्त्रि[7]कैरुक्ताः। तथाच संमतौ[9] बभाण वादी सिद्धसेनः–

"जं[8] संतवायदोसे सक्को-लूआ भणन्ति संखाणं। संखा य असव्वाए तेसिं, सव्वे वि ते सच्चा ॥१॥" इति ॥४७॥

पराभिप्रायमाशङ्क्य निराकुरुते–

## तज्जननस्वभावा नेत्यत्र मानं न विद्यते। स्थूलत्वोत्पाद इष्टश्चेत्तत्सद्भावेऽप्यसौ समः ॥४८॥

अण्वादयस्तज्जननस्वभावा न– असदुत्पादकस्वभावा न, ततो न [10]तेभ्योऽसदुत्पत्तिः। न चैतादृशस्वाभाव्येऽपि पर्यनुयोगावकाशः, 'वह्निर्दहति, नाकाशम्' इत्यादिवत् स्वभावस्याऽपर्यनुयोज्यत्वादिति भावः। इति– उपदर्शितायां, अत्र

---

१ तस्या उत्पत्तेः। २ कथञ्चित्सदसत्कार्यवादाङ्गीकारः। ३ तत्– उपादानकारणम्। ४ स्वरूपाभिन्नत्वात्। ५ बौद्ध-वैशेषिकाणाम्। ६ एकान्तस्यैव दुर्नयत्वेन प्रातिक्षेप्तुं जैनानामिष्टेः। ७ सैद्धान्तिकैः। ८ यान् सद्वाददोषान् शाक्यो-लूका भणन्ति सांख्यानाम्। सांख्याश्चासद्वादे तेषां, सर्वेऽपि ते सत्याः ॥१॥ ९ सम्मतिसूत्रे गाथा १४७। १० अणुभ्यः।

प्रकृतोपपत्तौ च, मानं प्रमाणं, न विद्यते, निर्विकल्पकेन तदग्रहणात्, [1]तद्विषयत्वस्य निश्चयैकोन्नेयत्वादिति भावः । स्थूलत्वोत्पाद इष्टोऽभिमतः; अतस्[2]तदन्यथानुपपत्तिरेवाऽतिप्रसङ्गभङ्गायाऽसदजननस्वभावत्वेनोपादानस्योपेयहेतुत्वे मानमिति चेत् । असौ स्थूलत्वोत्पादः, तत्सद्भावेऽपि तेष्वणुषु कथञ्चित्सत्त्वेऽपि, समस्तुल्यनिर्वाहः । तथाच लाघवात् सज्जननस्वभावत्वेनैवोपादानस्योपेयहेतुता, न त्वसदजननस्वभावत्वेन ॥ इति सत्कार्यसिद्धिः ॥ ४८ ॥

अत्र कार्यस्य सत्त्वं पूर्वोत्तरकालयोः पर्यायार्थिकनयानुसारिणः पर्यायद्वारेणैवाऽऽदिशन्ति, द्रव्यस्य निष्पन्नत्वेनाऽदलत्वात्, द्रव्यार्थिकनयानुसारिणस्तु तेन रूपेण द्रव्यस्याऽनुत्पन्नत्वाद् द्रव्यद्वारेणैवाऽऽदिशन्ति[3] । तदिदमुभयाभिप्रायेणोक्तं सम्मतौ–"[4]पच्चुप्पन्नं भावं विगय-भविस्सेहिं जं समण्णेइ, एयं पडुच्च वयणं[5]" इति । अत्र चाऽऽद्या[6]भिप्रायेण टीकाकृतोक्तम्–"न चात्मादिद्रव्यं विज्ञानादिपर्यायोत्पत्तौ दलं, तस्य निष्पन्नत्वात्" इति । [7]अन्त्याभिप्रायेण चोपचयमाह ग्रन्थकारः प्रकृते–

## न च मूर्ताणुसंघातभिन्नं स्थूलत्वमित्यदः । तेषामेव तथाभावो न्याय्यं मानाविरोधतः ॥४९॥

न च मूर्तानां रूपवतामणूनां परमाणूनां संघातात् परिणामविशेषाद् भिन्नं स्थूलत्वं, मूर्तपदं चाक्षुषयोग्यत्वनिर्वाहाय । इति हेतोः, अदः स्थूलत्वं, तेषामेव परमाणूनामेव, तथाभावः कथञ्चिदेकत्वपरिणामः, न्याय्यं घटमानकम्, मानाविरोधतः

---

१ निर्विकल्पकविषयत्वस्य । २ स्थूलत्वोत्पादाविनाभावः । ३ पूर्वोत्तरकालयोः कार्यस्य सत्त्वमिति संबध्यते । ४ प्रत्युत्पन्नं भावं विगत-भविष्यद्भ्यां यत् समन्वेति, एतत् प्रतीत्य वचनम् । ५ सम्मतिसूत्रे गाथा १०० । ६ आद्योऽत्र पर्यायार्थिकनयः । ७ अन्त्यो द्रव्यार्थिकनयः ।

प्रमाणाविरोधात्, तदन्यभेदेन तत्त्वसाधनाद् न हेतु-साध्ययोरविशेषः । एवं च स्थूलत्वस्य प्रागपि द्रव्यरूपेण सत्त्वं सिद्धम् ।

अत्रेयं प्रक्रिया– अणूनामेवैकत्वसंख्या-संयोग-महत्त्वा-ऽपरत्वादिपर्यायैरुत्पत्तिः, बहुत्वसंख्या-विभागा-ऽणुपरिणाम-परत्वादिपर्यायैश्चाऽनुत्पत्तिः । न च विशिष्टाऽण्वतिरिक्तमवयवि द्रव्यमस्ति । न चैवं विभक्तस्येव संहतस्याऽप्यणोरचाक्षुषत्वं स्यादिति वाच्यम्, 'नानास्वभावत्वेन तस्य[1] तदा[2] चाक्षुषजननस्वभावत्वात्, विप्रकृष्ट-सन्निकृष्टेषु रेण्वादिषु तथास्वाभाव्यदर्शनात्[3], प्रतिपत्ति-पत्तारं च प्रति नियमेनाऽनतिप्रसङ्गात्' इति बहवः । 'त्र्यणुकत्वादिघटकसंयोगानां पिशाचत्वादिघटकसंयोगभिन्नानां वैजात्येन द्रव्यसाक्षात्कारत्वावच्छिन्नं प्रति हेतुत्वात्' इत्यन्यतन्त्रानुसृताः । तथापि तन्त्वादिपरिणतानामणूनां कथं पटादिपरिणामः, द्रव्यस्थानीयस्य परिणामस्य द्रव्यान्तरस्थानीयपरिणामप्रतिबन्धकत्वात्, अन्यथाऽन्त्यावयविनि द्रव्यान्तरोत्पत्तिप्रसङ्गात्? इति चेत् । न, अन्त्यावयविन्यपि पटादौ खण्डपट-महापटाद्युत्पत्तिदर्शनात्, पटत्वेन पटाऽनाधारत्वाच्च, 'पटे पटः' इत्यप्रत्ययात् । [4]अथ द्रव्याऽसमवायिकारणीभूतसंयोगनाशेन पूर्वपटनाशोत्तरमेवोत्तरपटोत्पादः । न चैकैकतन्तुसंयोगे द्वितन्तुकादेर्नाशे त्रितन्तुकाद्युत्पत्तिः, पुनरेकैकतन्तुवियोगे त्रितन्तुकादिनाशे द्वितन्तुकाद्युत्पत्तिरिति कल्पनागौरवाद् द्वितन्तुकपटादेरेव तन्त्वन्तरसंयोगेन त्रितन्तुकादिपटोत्पादकत्वमिति वाच्यम्; द्वितन्तुकादिक्रमेणोत्पन्नचतुरादितन्तुकपटस्य द्वितन्तुकाऽसमवायिकारणसंयोगनाशाद् द्वितन्तुकादिनाशक्रमेण नाशः, अन्तरा पुनर्द्वितन्तुकादिक्रमेणोत्पत्तिरिति कल्पनागौरवसाम्यात्; पटादिजनकविजातीयसंयोगं प्रति तन्तुत्वादिना हेतुत्वाच्च; इति चेत् । न, विजातीयसंयोगस्य द्रव्यहेतुत्वासिद्धेः, तत्रापि हेत्वन्तरापेक्षायामवश्याऽऽश्रयणीयेन

१ अण्वादेः । २ संहतावस्थायाम् । ३ चाक्षुषप्रत्यक्षाजनन-जननस्वभावत्वविभावनात् । ४ इतो 'हेतुत्वाच्च' इत्यन्तः पूर्वपक्षः ।

स्वभावापरनाम्ना परमाणुगतातिशयेनैव द्रव्योत्पत्तिसंभवात्; स चातिशयः शक्तिः, अन्यो वा, इत्यन्यदेतत् । एवं च दशतन्तुकादेश्चरमतन्तुसंयोग-वियोगक्रमेणेव प्रथमतन्तुसंयोग-वियोगक्रमेणाऽपि नवतन्तुकोपलब्धिर्निराबाधा, नवपर्यन्तैरिव द्वितीयादिभिरपि नवतन्तुभिरतिशयितैर्नवतन्तुकाऽऽरम्भात् । न चैवं प्रतिलोमक्रमेणाऽनन्तपटकल्पनाऽऽपत्तिः,द्वितीयमादाय नवतन्तुकस्येव, तृतीयमादायाऽष्टतन्तुकस्याऽपि स्वीकर्तव्यत्वादिति वाच्यम्; इष्टत्वात्, एकानेकस्वभावाविरोधात्, एकतन्तुसंयोगविगमाभिव्यञ्जकाभावादेवाऽष्टतन्तुकाद्यनुपलब्धेः; अत एव महति पटे 'एकः पटः' इति प्रतीतिर्नाऽनुपपन्ना, अङ्गुलीभूतलसंयोगावच्छेदेन पाण्याद्यनन्तसंयोगानुपलब्ध्यादिवद् वा पटान्तरानुपलब्धेरिति दिग् ।

ननु तथापि पूर्वावस्थानाशेनैवोत्तरावस्थाभ्युपगमात् तन्त्वादिपरिणामनाशेनैव पटादिपरिणामोत्पत्तेः पटकाले तन्तुप्रतीतिर्न स्यात्, नष्टस्याऽतीतवदग्रहणादिति चेत् । न, द्विविधो हि विनाशः- प्रायोगिकः[1], वैस्रसिकश्च[2] । आद्यः समुदयजनित एव, अन्त्यस्तु द्विविधः- समुदयजनितः, ऐकत्विकश्च । अन्त्यो धर्मादीनां गत्याधारत्वादिपर्यायोत्पादस्य तदनाधारत्वध्वंसपूर्वकत्वेनाऽन्ततः क्षणध्वंसे तद्विशिष्टध्वंसनियमाच्चोपेयः । समुदयजनितश्च द्विभेदः - समुदयविभागलक्षणः, अर्थान्तरगमनलक्षणश्च । तत्राऽऽद्यस्य प्रतियोगिप्रतिपत्तिविरोधित्वेऽपि, अन्त्यस्याऽतथात्वाद[3]नुपपत्तिविरहा[4]दिति दिक् ॥ ४९ ॥

ननु न स्थूलत्वं परमाण्वभिन्नम्, गुण-गुणिनोर्भेदात्, कारणबहुत्व-कारणमहत्त्व-प्रचयक्रमेणोत्पन्नस्य तस्या[5]ऽवयविनिष्ठत्वाच्च । न चाऽवयविनि मानाभावः, विलक्षणसंस्थानावच्छेदेन संनिकर्षाद् यद्द्रव्यगतघटत्वादिग्रहस्तत्तद्व्यक्तेरुत्पाद-विनाश-

---

१ प्रयोगजन्यः । २ स्वाभाविकः । ३ प्रतियोगिप्रतिपत्त्यविरोधित्वात् । ४ पटकाले तन्तुप्रतीतेरुपपत्तेः । ५ स्थूलत्वस्य ।

भेदादिप्रत्ययान्यथाऽनुपपत्त्या पृथगवयविसिद्धेः । न चाऽऽवृतत्वा-ऽनावृतत्वाभ्यां तद्भेदः, अवच्छेदकभेदेनाऽविरोधात् । न चाऽर्धावृतेऽप्यवयविनीन्द्रियसंनिकर्षसत्त्वे परिणामादिग्रहप्रसङ्गः, इष्टत्वात्, तद्गतहस्तत्वादिजातिग्रहे तु यावदवयवावच्छेदेन संनिकर्षस्य हेतुत्वात्। न च 'पाणौ शरीरं सकम्पं, निष्कम्पं च चरणे' इतिप्रतीतेः सकम्पत्व-निष्कम्पत्वाभ्यां भेदः, तत्र पाणावेव कम्पस्वीकारात् 'पाणौ शरीरं चलति' इतिप्रत्ययस्य परम्परासंबन्धेन पाणिवृत्तिकम्पावगाहित्वात्। न च कम्पाभावधीरेव परम्परासंबन्धेन चरणनिष्ठकम्पाभावमवगाहतामिति वाच्यम्, पाणिकर्मणैव प्रत्ययाद्युपपत्तावतिरिक्तशरीरकर्मकल्पनायां गौरवात्। न चैवं कर्मणस्त्रुटिमात्रगतत्वापत्तिः, सर्वावच्छेदेनोपलभ्यमानकर्मवति शरीरादौ कर्माभावोपलम्भप्रसङ्गात्। एतेन 'शरीर एवाऽस्तु क्रिया, नानावयवे तत्कल्पने गौरवात्' इत्यपास्तम्, पाण्यादौ कर्माभावोपलम्भापत्तेः। न च परम्परासंबन्धस्य दोषत्वम्, चरणादावपि तदनापत्तेः, दोषत्वकल्पने गौरवाच्च; इत्याशङ्कायामाह–

**भेदे तददलं यस्मात्कथं सद्भावमश्नुते?। तदभावेऽपि तद्भावे सदा सर्वत्र वा भवेत्॥५०॥**

भेदे स्थूलत्वस्याणुभ्यः सर्वथा पृथग्भावे, अदलं सत् तत् स्थूलत्वं, यस्मात् कथं सद्भावमश्नुते– सत्ताव्यवहारं कथं प्राप्नुयात्?, सर्वथा द्रव्यपृथग्भूतत्वे शशशृङ्गवदसत्त्वप्रसङ्गात्। किञ्च, तदभावेऽपि दलाभावेऽपि, तद्भावे स्थूलत्वोत्पादे 'अभ्युप-

१ अवयविभेदः, आवृतत्वाऽनावृतत्वयोर्विरुद्धधर्मत्वात्, विरुद्धधर्माध्यासस्य च भेदनिबन्धनत्वात्, "विरुद्धधर्माध्यासः, कारणभेदश्च भेदहेतुः, स चेन्न भेदको विश्वमेकं स्यात्" इति बौद्धाम्नायादिति भावः। २ तस्य कर्माभावोपलम्भस्याऽनापत्तेः। ३ उपादानाभावेऽपि।

गम्यमाने' इति शेषः, कालनियमहेत्वभावात् सदा, देशनियमहेत्वभावाच्च सर्वत्र वा, भवेत् 'तत्'[1] इति योज्यते । अथ त्र्यणुकादेरेव महत्त्वोपादानत्वाद् नाऽदलत्वम्, अन्यादृशमदलत्वं चाऽप्रयोजकम्, समवायेन जन्यसत्त्वावच्छिन्नं प्रति तादात्म्येन द्रव्यस्य हेतुत्वाच्च नातिप्रसङ्ग इति चेत् । न, समवायनिरासात्, ध्वंससाधारण्येनाऽपृथग्भावेन जन्यत्वावच्छिन्नं प्रत्येव द्रव्यहेतुत्वौचित्याच्च, इत्यन्यत्र विस्तरः । पृथगवयविन्यपि च न मानमस्ति, अनन्तावयव्यादिकल्पने गौरवात् । किञ्च, आवृता-ऽनावृतत्वाभ्यामपि भिद्यत एवा-ऽवयवी, ज्ञानप्रतिबन्धकसंयोग-तदभाव[2]रूपयोरावृता-ऽनावृतत्वयोर्भिन्नावच्छेदेन संभवेऽपि चाक्षुषविषयता-तदभाव[3]रूपयोस्तयो[4]-र्विना भेदमसंभवात्, स्वरूपाबहिर्भूताया विषयताया अव्याप्यवृत्तित्वायोगात्; सकम्पत्व-निष्कम्पत्वाभ्यामपि तथाशरीरस्य निष्कम्पत्वे 'पाणौ न चलति' इत्यस्याऽपि प्रसङ्गात् । शरीरत्वादेरिव पाणेः कर्माऽभावानवच्छेदकत्वादयमदोष इति चेत् । न, चरणे कम्पदशायामपि 'पाणौ न चलति' इत्यनापत्तेः । न च दोषात् 'पाणौ न चलति' इति न प्रतीयत इति वाच्यम्, तादृशदोषकल्पने गौरवात् । किञ्च, एवमुक्तयुक्त्याऽग्रादिनिष्ठसंयोगादेरेव वृक्षादौ प्रतीत्युपपत्तौ संयोगादेरपि व्याप्यवृत्तित्वं स्यात् । अपि च, एवं शतमाषकेभ्यः शतमाषकाऽऽरब्धावयविनि गुरुत्वाधिक्यादवनतिविशेषः स्यात् । न चावयविन्यत्यन्तापकृष्टगुरुत्वस्वीकाराद् गुरुतरद्रव्ययोः समयोरुत्तोलने एकत्र संलग्नतृणादिगुरुत्वाधिक्यादवनतिवदुपपत्तिः, तत्तदन्त्यावयवित्वेनाऽत्यन्तापकृष्टगुरुत्वहेतुत्वे, उत्कृष्टगुरुत्वप्रतिबन्धकत्वे च गौरवात्, इत्यन्यत्र विस्तरः । तस्मात् कथञ्चित् परमाण्वात्मकमेव स्थूलत्वं परमाणुषु सदैवोत्पद्यते, इत्युपचयेन सिद्धम् ॥ ५० ॥

---

१ स्थूलत्वम् । २ तदा ज्ञानप्रतिबन्धकसंयोगः । ३ तच्छब्देन चाक्षुषविषयता गृह्यते । ४ आवृतत्वा-ऽनावृतत्वयोः ।

न चैवं द्रव्यरूपेणाऽणुषु स्थूलत्वस्येव प्रत्येकावस्थायां भूतेषु [1] तथाचैतन्यस्य सत्त्वेऽप्यनुपपत्तिविरहात् सिद्धं नः समीहितम्, इत्यत्राह–

**न चैवं भूतसंघातमात्रं चैतन्यमिष्यते । अविशेषेण सर्वत्र तद्वत् तद्भावसंगतेः ॥ ५१ ॥**

न चैवं– स्थूलत्वं यथाऽणुसंघातमात्रं तथा, भूतसंघातमात्रं चैतन्यमिष्यते चार्वाकैः । तथेष्टौ को दोषः ?, इति तटस्थाशङ्कायामाह– अविशेषेण संघातातिरिक्तविशेषानभ्युपगमेन, सर्वत्र जीवच्छरीरवदन्यत्राऽपि, तद्वद् भूतसंघातवत्, तद्भावसंगतेर्व्यक्तचैतन्यसद्भावप्रसङ्गात् ॥ ५१ ॥

ततः किम् ?, इत्याह–

**एवं सति घटादीनां व्यक्तचैतन्यभावतः। पुरुषाद्यविशेषः स्यात् स च प्रत्यक्षबाधितः॥५२॥**

एवमुपदर्शितप्रकारेण, व्यक्तचैतन्यभावतः, तसः सप्तम्यर्थत्वाद् व्यक्तचैतन्यभावे 'सति' इति योजनीयम्। 'एवं सति' इत्यनेनोक्तार्थपरामर्शे तु सर्वपदस्य घटादिरेवाऽर्थ इति पौनरुक्त्यं स्यात् । घटादीनां पुरुषात्– जीवच्छरीरात्, न विशेषः स्यात् । न चायमपीष्टः, इत्याह– स च घटादीनां पुरुषाविशेषश्च, प्रत्यक्षबाधितः, घटादीनामचेतनत्वेन प्रतीतेः ॥ ५२ ॥



१ व्यक्तचैतन्यस्य। २ चार्वाकाणाम्। ३ घटादौ। ४ घटादीनाम्। ५ पूर्वश्लोकस्थसर्वत्रपदघटकस्य।

ननु स्थूलत्वमपि नाऽणुसंघातमात्रम्, द्व्यणुकादावभावात्, किन्तु [1]संघातविशेष एव; एवं च चैतन्यमपि घटादिव्यावृत्तभूतसंघातविशेष एवेति नानुपपत्तिः, इति शङ्कते–

**अथ भिन्नस्वभावानि भूतान्येव यतस्ततः। तत्संघातेषु चैतन्यं न सर्वेष्वेतदप्यसत्॥५३॥**

अथ यतो भूतान्येव शरीरारम्भकाण्येव, भिन्नस्वभावानि घटाद्यारम्भकस्वभावविलक्षणस्वभावानि। ततस्तत्संघातेषु शरीरेषु, चैतन्यं; न सर्वेषु घटादिषु; एवं च संहन्यमानविशेषकृतः संघातविशेष इति भावः। अत्राह– एतदप्यसत् ॥ ५३ ॥

**स्वभावो भूतमात्रत्वे सति न्यायाद् न भिद्यते। विशेषणं विना यस्माद् न तुल्यानां विशिष्टता ॥**

यतो भूतमात्रत्वे सति भूतातिरिक्तभेदकाभावे सति, न्यायाद् युक्तितः, स्वभावो न भिद्यते। कुतः?, इत्याह– यस्मात् कारणात्, तुल्यानां भूतत्वेन समानानां घट-शरीराद्यारम्भकाणां, विशेषणं विना विशिष्टता न भवति; भूतस्य भूतान्तरभेदो हि न वास्तवः, किन्तु विभिन्नधर्मप्रकारकबुद्धिविषयत्वलक्षणो भाक्त एव, विशेषणावच्छिन्नविशेष्यभेदात्मको वा, न च विभिन्नधर्मं विना [2]तद्घटित[3]तत्संभव इति भावः। अत एव भूतान्तरनिष्ठकार्यजनकातिशयाऽन्याऽतिशयशालित्वलक्षणवैधर्म्यरूपो भेदोऽपि निरस्तः, [4]तादृशातिशयस्य भूतातिरिक्तत्वे [5]तत्त्वान्तरप्रसङ्गात्, [6]तदनतिरिक्तत्वे च स्वभावाभेदादिति दिग् ॥ ५४ ॥

---

१ द्व्यणुकादिविशिष्टसंघातः। २ तेन विभिन्नधर्मेण। ३ तस्य विशेष्यभेदस्य। ४ भूतान्तरनिष्ठकार्यजनकातिशयाऽन्यातिशयस्य।
५ तथा च "चत्वार्येव तत्त्वानि" इति सिद्धान्तव्याघात इत्यर्थः। ६ तदा भूतानि।

स्वरूपत एव [1]भेदो भविष्यति, इत्यत्राह—

**स्वरूपमात्रभेदे च भेदो भूतेतरात्मकः । अन्यभेदकभावे तु स एवाऽऽत्मा प्रसज्यते ॥ ५५ ॥**

स्वरूपमात्रभेदे चाऽविशिष्टस्वभावावच्छिन्नभेदे चाभ्युपगम्यमाने, भूतेतरात्मकः– भूतमितरयति यस्तादृश आत्मा स्वरूपं यस्यैतादृशो भेदः स्याद् भूतान्यत्वं स्यात् 'नेदं भूतं' इति प्रतीतिसाक्षिकत्वाद् भूतस्वरूपभेदस्येत्यर्थः । एवं च भूतान्यत्वेन परिशेषादात्मसिद्धिरिति भावः । अस्तु तर्हि अनायत्या भेदकान्तरम्, इत्यत्राह– अन्यभेदकभावे तु भूतातिरिक्तभेदकसत्त्वे तु, स एव भेदकत्वेनाऽभिमत एव, आत्मा प्रसज्यते, समानशुक्लपटेषु रागादिरिव; घटादितुल्येषु शरीरादिषु सात्मकत्वेनैव विशेषात् । न च सात्मकत्वसमनियतधर्माणामेव भेदकत्वम्, प्रत्येकं विनिगमनाविरहप्रसङ्गात् । न च सात्मकत्वेनाऽपि समं [2]तत्प्रसङ्गः, अक्लृप्तेन समं तदभावात् । न च तादृशविशिष्टशरीरत्वेनैव चैतन्योपादानत्वम्, धर्मिग्राहकमानेन विशेषणस्यैव चैतन्योपादानतया सिद्धेः, तत्त्वेन परचैतन्यनिमित्तत्वादिति निष्कर्षः; तथाच न विशेषणकृतोऽपि संघातविशेष इति भावः । वस्तुतः शरीरपरिणामिनामेव भूतानां नात्मोपग्रहं विना वैचित्र्यम्, तदुपग्रहश्च तत्सहकारित्वम्, तच्चाऽदृष्टद्वारा । तथाच शरीरं भोगसमानाधिकरणगुणसाध्यम्, भोगसाधनत्वात्, स्रगादिवत्, इत्यत्र तात्पर्यम् ॥ ५५ ॥

कार्यभेदादेव स्वभावभेदो भविष्यति, इत्याशङ्कते—

---

१ घटारम्भक-शरीरारम्भकाणां भूतानामिति शेषः । २ विनिगमनाविरहस्तदाऽनुकृष्यते ।

हवि-गुड-कणिक्कादिद्रव्यसंघातजान्यपि। यथा भिन्नस्वभावानि खाद्यकानि तथेति चेत्॥

हविर्घृतम्, आदिशब्दाच्चातुर्जातकादिपरिग्रहः, तत्संघातजान्यपि खाद्यकानि यथा रस-वीर्यविपाककार्यभेदाद् हविरादिभिन्नस्वभावानि, तथा भूतसंघातजान्यपि शरीराणि चैतन्यकार्यभेदाद् घटादिभ्यो भिन्नस्वभावान्युपपत्स्यन्ते । अत्र कार्यभेदे स्वभावभेदः, स्वभावभेदे च कार्यभेद इत्यन्योन्याश्रय इति दोषे सत्येव कार्यभेदासिद्धिं दोषान्तरमाह । इति चेत् 'नैतदेवम्' इति शेषः ॥ ५६ ॥

व्यक्तिमात्रत एवैषां ननु भिन्नस्वभावता । रस-वीर्यविपाकादिकार्यभेदो न विद्यते ॥५७॥

यत एषां खाद्यकानां, 'ननु' इत्याक्षेपे, भिन्नस्वभावता व्यक्तिमात्रत एव व्यक्तिभेदमात्राधीनैव । मात्रपदप्रयोजनमाह– रस-वीर्य-विपाकादिकार्यभेदो– हविर्गुडादिकार्यरस-वीर्यविपाकादिविलक्षणहेतुत्वं न विद्यते । अयं भावः– कारणोत्कर्षात् कार्योत्कर्षेऽपि कार्यवैजात्यस्य कारणवैजात्याधीनत्वात् खाद्यकदृष्टान्तेनाऽसंहतभूतकार्यात् संहतभूतकार्योत्कर्षेऽपि चैतन्यलक्षणं विलक्षणं कार्यं विलक्षणमात्मानमेव हेतुमाक्षिपतीति ॥ ५७ ॥

शङ्कते–

तदात्मकत्वमात्रत्वे संस्थानादिविलक्षणा। यथेयमस्ति भूतानां तथा सापि कथं न चेत्?॥

तदात्मकत्वमात्रत्वे हवि-र्गुड-कणिक्कादिद्रव्यसंघातात्मकत्वमात्रत्वे सति, संस्थानादिना, आदिशब्दात् परिमाणादिग्रहः, विलक्षणा विभिन्नसंवित्तिसंवेद्या, यथेयं खाद्यकानां भिन्नस्वभावताऽस्ति; तथा भूतानां भूतकार्याणां देह-घटादिव्यक्तीनां, साऽपि चैतन्योपादानत्व-तदनुपादानत्वलक्षणा[1] विभिन्नस्वभावताऽपि कथं न ?। अत्रोत्तरम्- इति चेत्। नैतद् वाच्यम्, व्यक्तिमात्रत इत्यस्य हि स्वरूपभेदाऽप्रयोज्यत्वमर्थः, तत्स्वभावाऽऽक्रान्तव्यक्तिस्तु कर्तृव्यापारादिकारणविशेषसमुत्पाद्यैव, अतो नाऽऽकस्मिकत्वम्, अविशेषो वा; तेव[2] त्वभिमतव्यक्तिविशेषस्याऽनुत्पत्तिरेव ॥ ५८ ॥

कुतः ?, इति चेत्।

**कर्त्रभावात्तथा देश-कालभेदाद्ययोगतः। न चासिद्धमदो भूतमात्रत्वे तदसंभवात्॥ ५९॥**

कर्त्रभावात्- खाद्यकानामिव शरीरस्याऽतिरिक्तकर्त्रभावात्, तथा, देश-कालभेदादीनाम्, आदिनाऽदृष्टादिपरिग्रहः, अयोगतोऽभावात्। न चासिद्धमद उक्तवचनं, भूतमात्रत्वे विश्वस्य भूतैकस्वभावत्वे, तदसंभवात् कर्त्राद्यसंभवात् ॥ ५९ ॥

फलितमाह-

**तथाच भूतमात्रत्वे न तत्संघात-भेदयोः। भेदकाभावतो भेदो युक्तः, सम्यग् विचिन्त्यताम् ६०**

१ तच्चैतन्यम्। २ तव चार्वाकस्य।

तथाच कर्त्राद्यभावे च, भूतमात्रत्वे– विश्वस्य भूतैकस्वरूपत्वे, तेषां भूतानां संघातभेदयोः शरीर-घटादिभेदयोः, भेदकाभावतो भेदो न युक्तः, इति सम्यगुक्तनीत्या परमार्थविचारेण, विचिन्त्यतां परामृश्यताम् ॥ ६० ॥

**एकस्तथाऽपरो नेति तन्मात्रत्वे तथाविधः। यतस्तदपि नो भिन्नं ततस्तुल्यं च तत्तयोः॥६१॥**

यतो यस्मादापाततः प्रतीयमानाद् निमित्तात्, एको भूतसंघातो देहादिरूपः, तथा देहादिरूपत्वेन, अपरो घटादि-रूपः, तन्मात्रत्वे भूतसंघातमात्रत्वे, अपिर्गम्यते, तन्मात्रत्वेऽपीत्यर्थः, तथाविधो देहादिरूपो न, इति– एतादृशो विभागः 'उच्यते' इति शेषः; तदपि निमित्तं, नो भिन्नं भूतातिरिक्तं, तत्त्वान्तरप्रसङ्गात्। ततस्तस्माद्धेतोः, तयोर्देह-घटादिरूपयोर्भूत-संघातयोः, तच्च भूतमात्रत्वं च, तुल्यम्; अतः शरीरस्य नाऽऽत्मत्वमिति भावः ॥ ६१ ॥

अनभिज्ञः सन् पुनः शङ्कते—

**स्यादेतद् भूतजत्वेऽपि ग्रावादीनां विचित्रता। लोकसिद्धेति सिद्धैव न सा तन्मात्रजा न तु॥६२**

स्यादेतद् भूतजत्वेऽपि ग्रावादीनां पाषाणादीनां, विचित्रता घटादिभ्यो विलक्षणवर्ण-स्पर्शादिरूपा, लोकसिद्धेति, न हि सा नास्तीति वक्तुं शक्यते, प्रत्यक्षसिद्धस्याऽर्थस्य प्रतिक्षेपाऽयोगात्, तथा शरीरविचित्रताऽप्युपपत्स्यत इत्याशयः। अत्राह– सिद्धैव सा– न सा प्रतिक्षिप्यते, तु पुनः, तन्मात्रजा न– भूतमात्रजा न ॥ ६२ ॥

कुतः ?, इत्याह–

**अदृष्टाकाश-कालादिसामग्रीतः समुद्भवात् । तथैव लोकसंवित्तेरन्यथा तदभावतः ॥६३॥**

अदृष्टा-ऽऽकाश-कालादिसामग्रीतः समुद्भवात् तदुत्पादाभ्युपगमात् । तथा लोकेन न प्रतीयते, इत्यत्राह– तथैव– उक्तवदेव, लोकसंवित्तेर्व्युत्पन्नलोकप्रतीतेः । अन्यथा– एवमनभ्युपगमे, तदभावतो विचित्रताऽभावप्रसङ्गात् ॥ ६३ ॥

सर्वैर्लोकैस्तथा न प्रतीयत इति चेत् । अत्राह–

**न चेह लौकिको मार्गः स्थितोऽस्माभिर्विचार्यते।किन्त्वयं युज्यते क्वेति त्वन्नीतौ चोक्तवन्न सः**

न चेह तत्त्वपरीक्षायां, लौकिकोऽव्युत्पन्नलोकमात्राश्रितः, स्थितो मार्गः– 'किमयमित्थं स्थितः ?' इतिसंशयोपारूढोऽर्थः, अस्माभिर्विचार्यते– गतानुगतिकतया तद्वदेव संदिह्यते। किन्तु 'अयमित्थंभूतोऽर्थः क्व युज्यते ?' इत्यादिजिज्ञासाक्रमेण परीक्ष्यते । परीक्ष्यमाणश्चोक्तवद्– उक्तरीत्या, त्वन्नीतौ त्वदभ्युपगमे, स यथास्थितोऽर्थो न घटते ॥ ६४ ॥

अत्र नव्यनास्तिकाः– अवच्छेदकतया ज्ञानादिकं प्रति तादात्म्येन कल्प्यकारणताकस्य शरीरस्यैव समवायेन ज्ञानादिकं प्रति हेतुत्वकल्पनमुचितम् । न चैवमात्मत्वं जातिर्न स्यात् , पृथिवीत्वादिना साङ्कर्यादिति वाच्यम् , उपाधिसाङ्कर्यस्येव जातिसाङ्कर्यस्याऽप्यदोषत्वात् । न च तथापि भूतचतुष्कप्रकृतित्वेन शरीरमतिरिच्येत, स्वाश्रयसमवेतत्वसंबन्धेन गन्धाद्यभा-

वस्य गन्धादिकप्रतिबन्धकत्वेन तस्य भूतचतुष्कप्रकृतित्वायोगात्, पार्थिवादिशरीरे जलादिधर्मस्यौपाधिकत्वात् । न चैवं परात्मरूप-स्पर्शादीनामिव तत्समवेतज्ञानादीनामपि चाक्षुष-स्पार्शनप्रसङ्गः, रूपादिषु जातिविशेषमभ्युपगम्य रूपाऽन्यतद्वत्त्वेन चाक्षुषं प्रति, स्पर्शान्यतद्वत्त्वेन च स्पार्शनं प्रति प्रतिबन्धकत्वकल्पनात्, इत्थमेव रसादीनामचाक्षुष-स्पार्शनत्वनिर्वाहात् । न चोक्तस्मरणानुपपत्तिः, पूर्वघटनाशानन्तरं खण्डघटे कारणगुणक्रमेण तद्गुणसंक्रमवत् पूर्वशरीरनाशोत्तरमुत्तरशरीरे पूर्वशरीर-गुणसंक्रमात् । न चैवमवयविज्ञानादाववयवज्ञानादिहेतुताकल्पने गौरवं, फलमुखत्वात् । माऽस्तु वाऽवयवी, विजातीयसंयोगेनैव तदन्यथासिद्धेः । तथाच शरीरान्तरोत्पादेऽपि शरीरत्वघटकविजातीयसंयोगविशिष्टाऽणुवृत्तिसंस्कारात् तादृशस्मरणोपपत्तिः । न च परात्मनोऽपि योग्यत्वात् स्वात्मन इव प्रत्यक्षत्वप्रसङ्गः, तत्तदात्ममानसे तत्तदात्मत्वेन हेतुत्वात्; परेषां तु तत्तदात्मप्रत्य-क्षत्वावच्छिन्नं प्रति हेतुत्वे विनिगमनाविरहः । किञ्च, एवं संयोगस्य पृथक्प्रत्यासत्तित्वाऽकल्पने लाघवम् । न च त्र्यणुक-परमा-णुरूपाद्यप्रत्यक्षत्वाय चक्षुःसंयुक्त-मह-दुद्भूतरूपवत्समवायत्वादिना प्रत्यासत्तित्वे त्रुटिग्रहार्थं संयोगस्य पृथक्प्रत्यासत्तित्वकल्पनमा-वश्यकमिति वाच्यम्; द्रव्य-तत्समवेतप्रत्यक्षे उद्भूतरूप-महत्त्वयोः समवाय-सामानाधिकरण्याभ्यां स्वातन्त्र्येण हेतुत्वे दोषाभावात्। अपि च, एवमुद्भूतरूपकार्यतावच्छेदकं द्रव्यप्रत्यक्षत्वमेव, न त्वात्मेतरत्वमपि तत्र निविशत इति लाघवमित्याहुः ।

तत्रोच्यते—



१ ख.ग.घ.च. 'रणाद्युप' । २ ख.ग.घ.च. 'प्रत्यपि हे' ।

मृतदेहे च चैतन्यमुपलभ्येत सर्वथा। देहधर्मादिभावेन, तद् न धर्मादि नान्यथा ॥ ६५ ॥



मृतदेहे च सर्वथा जीवशरीरकालीनप्रकारेण, देहधर्मादिभावेन देहधर्मत्व-देहकार्यत्वाभ्यां, चैतन्यमुपलभ्येत, देहत्व-देहरूपादिवदिति भावः; अन्यथा योग्यानुपलम्भेन तदभाव एव स्यात्। तथाच तच्चैतन्यं, तद्धर्मादि न- तद्धर्मभूतं, तत्कार्यभूतं च न, तद्भावेऽपि तदभावात्, घटत्व-घटरूपादिवदिति भावः ॥ ६५ ॥

यद् यद्धर्मादिकं न, तत् तद्भावे न भवति, इत्यत्र व्यभिचारमाशङ्क्य समाधत्ते-

न च लावण्य-कार्कश्य-श्यामत्वैर्व्यभिचारिता। मृतदेहेऽपि सद्भावादध्यक्षेणैव संगतेः॥६६॥

न च लावण्य-कार्कश्य-श्यामत्वैः शरीरधर्म-कार्यैः, मृतदेहसत्त्वेऽपि तदभावाद् व्यभिचारितेति वाच्यम्, अध्यक्षेणैव संगतेः परिच्छेदात्, मृतदेहेऽपि सद्भावात् तेषां, विना विषयं प्रत्यक्षायोगात् ॥ ६६ ॥

ननु रूपमात्रं तत्रोपलभ्यते, न तु बलवद्धातूपग्रहजन्यं लावण्यादि। किञ्च, उक्तनियमोऽप्यसिद्धः, पाकजरूपादिना व्यभिचारात्, तद्देशत्व-तत्संख्या-तत्परिमाणोपर्यवस्थापितकर्पराद्यपात्प्रत्यक्षोपलभ्यत्वाद्यापत्तिभिया तत्र परमाणुपर्यन्तनाशानभ्युपगमात्। अत आह-



१ तच्छब्देन देहः। २ देहभावेऽपि। ३ चैतन्याभावात्। ४ लावण्यादीनामभावात्। ५ लावण्यादीनाम्।

**न चेल्लावण्यसद्भावो न स तन्मात्रहेतुकः। अत एवान्यसद्भावादस्त्यात्मेति व्यवस्थितम् ६७**

चेद् यदि, मृतदेहे लावण्यसद्भावो न, तदा स लावण्यसद्भावः, तन्मात्रहेतुको न– देहमात्रप्रयोज्यो न, [1]तन्मात्रहेतुकत्वे [2]तद्रूपादीनामिव [1]तत्सत्त्वेऽनाशप्रसङ्गात्। तन्मात्रहेतुकत्वमत्र तत्सामग्रीसमनियतसामग्रीकत्वम्, अतो न तद्रूपादावपि हेत्वन्तरसत्त्वादनुपपत्तिः। अस्तु तर्हि [2]तत्र [3]तदा गत्वरं हेत्वन्तरम्, अत्राह— अत एव– [3]तदा लावण्याभाववच्चैतन्याभावस्याऽप्यन्याभावप्रयोज्यत्वादेव, तादृशाऽन्यपदार्थसद्भावात्, अस्त्यात्मा शरीरातिरिक्तं चैतन्योपादानम्, इति व्यवस्थितं सिद्धम् ॥ ६७ ॥

पर आह–

**न प्राणादिरसौ मानं किं तद्भावेऽपि तुल्यता। तदभावादभावश्चेदात्माभावे न का प्रमा? ॥६८॥**

असौ चैतन्याभावप्रयोजकाभावप्रतियोगी, प्राणादिर्न किन्त्वात्मा, अत्र किं मानम्?। उत्तरवाद्याह प्रतिबन्द्या– 'प्राणाद्यभावस्यैव' इति शेषः, तद्भावेऽपि चैतन्याभावप्रयोजकाभावप्रतियोगित्वेऽपि, तुल्यता– किं मानम्? इत्यर्थः। तदभावात् प्राणाद्यभावात्, अभावः 'चैतन्यस्य' इति शेषः, तथा चा[4]ऽन्यथाऽनुपपत्तिरेव मानमिति चेत्। तर्हि आत्माभावे न चैतन्याभावः, 'इत्यत्र च' इति शेषः, का प्रमा किं प्रमाणं? न किञ्चित्, अन्यथाऽनुपपत्तेरेकत्र पक्षपातायोगादिति भावः ॥६८॥

पर आह–

---

१ तच्छब्देन देहः। २ देहे। ३ मृतावस्थायाम्। ४ प्राणादिसद्भावं विना चैतन्यस्यानुपपत्तिः।

**तेन तद्भावभावित्वं न भूयो नलिकादिना। संपादितेऽप्यतत्सिद्धेः सोऽन्य एवेति चेन्न तत् ६९**

तेन सह प्राणादिना सह, तौ भावौ- अन्वय-व्यतिरेकौ तद्भावित्वं तत्प्रतियोगित्वं 'तत्र मानम्' इति शेषः, हेतुत्वेन क्लृप्तस्य तस्यैव कार्याभावप्रयोजकाभावप्रतियोगित्वकल्पनौचित्यादिति भावः। अत्रोत्तरम्- न, अन्वय-व्यतिरेकप्रतियोगित्वमेव प्राणादेरसिद्धमित्यर्थः। कुतः?, इत्याह- भूयो मरणोत्तरं, नलिकादिना, आदिशब्दाद् बस्त्यादिग्रहः, संपादितेऽपि- अन्तःसंचारितेऽपि 'वायौ' इति शेषः, अतत्सिद्धेश्चैतन्यानुत्पत्तेरन्वयव्यभिचारादिति[3] भावः। पर आह- स नलिकादिना संपादितो वायुः, अन्य एव न प्राणः, इति न व्यभिचारः। उत्तरवाद्याह- इति चेत्, न तद् यदुक्तमेतत् ॥ ६९ ॥

कुतः?, इत्याह-

**वायुसामान्यसंसिद्धेस्तत्स्वभावः स नेति चेत्। अत्रापि न प्रमाणं वश्चैतन्योत्पत्तिरेव चेत् ७०**

वायुसामान्यसंसिद्धेः- कोष्ठान्तःसंचारिवायुत्वं हि प्राणत्वम्, ततः कोष्ठान्तःसंचार-वायुत्वयोस्तत्र सिद्धेः कथं न प्राणत्वम्? इति भावः। पर आह- स चैतन्यजननस्वभावो न, अतो न प्राणः। अत्राह- इति चेत्, अत्रापि चैतन्यजननस्वभावत्वेऽपि, वो युष्माकं, न प्रमाणम्, अप्रत्यक्षत्वात् तस्य। चैतन्योत्पत्तिरेवाऽन्यथानुपपद्यमाना प्रमाणमिति चेत् ॥ ७० ॥

---

१ प्राणाद्यभावस्यैव। २ कार्यमत्र चैतन्यम्। ३ मृतदेहे नलिकादिना संपादितस्य प्राणवायोः सत्त्वेऽपि चैतन्यस्याऽसत्त्वेन 'तत्सत्त्वे सत्त्वं' इति लक्षणस्याऽन्वयस्याऽभावादित्यर्थः। ४ मृतदेहे। ५ नलिकादिना संपादितो वायुः। ६ चैतन्यजननस्वभावत्वस्य। ७ पूर्वपक्षवचनम्। ८ प्राणादि विना।

## न, तस्यामेव संदेहात्तवाऽयं केन नेति चेत् । तत्तत्स्वरूपभावेन तदभावः कथं नु चेत् ॥

न, तस्यामेव चैतन्योत्पत्तावेव, 'किमियं प्राणप्रयोज्या, उताऽऽत्मप्रयोज्या' इति संदेहात्; तथाचाऽन्यथासिद्धत्वशङ्कया न तत्र[1] कारणत्वनिश्चय[2] इति भावः । आत्मन्यप्ययं संदेहः, केन मानेन न, येन[3] तत्र[4] कारणत्वनिश्चयः स्यात् ?, इति चेत् । तस्य चैतन्यस्य तत्स्वरूपभावेनाऽऽत्मधर्मानुविधायित्वेन, तथा चाऽऽत्मनि चैतन्यधर्मानुविधायकत्वेन विशेषदर्शनादन्यथासिद्धत्वशङ्कानिरास इति भावः । नन्वेवं[5] प्राणस्य चैतन्योपादानत्वं माऽस्तु, निमित्तत्वं त्वविरुद्धमेव, तन्नाशादेव[6] च चैतन्यनाशः, आत्माभ्युपगमेऽपि नित्यत्वेन तस्य[7] नाशाऽयोगात् । न च तच्छरीर आत्मसंयोगनाशाच्चैतन्याभावः, विभुत्वेन[8] तत्संयोगस्याऽपि सार्वत्रिकत्वात्, चैतन्योपादानं च प्रागुक्तरीत्या शरीरमेव, इति नव्यनास्तिकस्य न दूषणम्; इति चेत् । न, प्राणनाशं विनाऽपि सुषुप्त्यादौ ज्ञानादिनाशाद् तन्नाशस्य[9] तन्नाशाहेतुत्वात्[10] । एतेन 'विजातीयमनःसंयोगस्य नाशस्येव स्वप्रतियोगिजन्यत्वसंबन्धेन प्रतियोगितया ज्ञानादिनाशे हेतुत्वमस्तु' इत्यपास्तम्, सुषुप्तौ श्वास-प्रश्वासादिसंतानानुरोधेन विजातीयमनःसंयोगसत्त्वस्याऽप्यावश्यकत्वात् । अथ जीवनयत्नसत्त्वादेव तदा श्वास-प्रश्वासादिसंतानः, तन्नाशश्च प्रारब्धादृष्टनाशादेव, इति तदन्यनाशे विजातीयमनःसंयोगनाशो हेतुरिति चेत् । न, एवं सत्यावश्यकत्वात् सर्वत्राऽदृष्टनाशादेव ज्ञानादिनाशाभ्युपगमौचित्यात् ।

---

१ प्राणे । २ संशयस्य निश्चयप्रतिबन्धकत्वादित्यर्थः । ३ संदेहाभावेन । ४ आत्मनि । ५ इतो 'न दूषणम्' इति पर्यन्तः पूर्वपक्षः । ६ तच्छब्देन प्राणः । ७ चैतन्यस्य । ८ व्यापकत्वेन । ९ प्राणनाशस्य । १० चैतन्यनाशाहेतुत्वात् ।

अत एव विजातीयमनःसंयोगेऽपि न मानमस्ति, अदृष्टविशेषपरिपाकवशादेव सुषुप्त्यादिकाले ज्ञानानुत्पादात्, परेणाऽपि मनसो निरिन्द्रियप्रदेशगमने तस्य शरणीकरणीयत्वात् । अदृष्टं च धर्मिग्राहकमानेन प्रत्यगात्मनिष्ठमेव सिद्धमिति नास्तिकः । न च विशिष्टाणुवृत्तित्वमेव तस्य न्याय्यम्, अनेकाश्रयकल्पनात एकाश्रयकल्पने लाघवात्, शरीरत्वघटकसंयोगस्यैवाऽऽत्मत्वघटकत्वेनाऽऽत्मत्व-शरीरत्वयोस्तुल्यवित्तिवेद्यत्वप्रसङ्गाच्च । आत्मत्वघटकसंयोगस्य भिन्नत्वे त्वात्मन एव भिन्नत्वं किमिति हन्त ! न रोचयेः ? इति किमतिविस्तरेण ? । परः शङ्कते– ननु चैतन्ये तदभावः प्राणधर्मानुविधायित्वाभावः, कथम् ? । 'नु' इति वितर्के । 'अहमशनीयावान्, अहं पिपासावान्' इत्यशनीया-पिपासयोः प्राणधर्मयोरहंत्वसामानाधिकरण्येनाऽनुभवात् "अन्योऽन्तरात्मा प्राणमयश्च" इति श्रुतेश्च प्राणस्य चैतन्यानभ्युपगमे महान् वितर्कावसर इति भावः ॥ अत्रोच्यते– इति चेत् ॥७१॥

**तद्वैलक्षण्यसंवित्तेर्मातृचैतन्यजे ह्ययम् । सुते तस्मिन्न दोषः स्यान्न न भावेऽस्य मातरि ॥७२॥**

तद्वैलक्षण्यसंवित्तेः प्राणधर्मसामानाधिकरण्येनाऽप्रमीयमाणत्वाद् नैवमित्युपस्कारः; न हि प्राणधर्मः स्पर्शविशेषादिरहंत्वसामानाधिकरण्येनाऽनुभूयते, तथाऽनुभूयमाने पुनरशनीया-पिपासे इच्छात्मकत्वादात्मधर्मावेव, न तु प्राणधर्मौ, इति न प्राण एवाऽऽत्मा । अस्तु तर्हि 'कायाकारपरिणतं भूतमात्मा' इति मौलमेव मतम् 'अहं स्थूलः' इत्यादितद्धर्मसामानाधिकरण्येनाऽनुभवात्; इति विस्मृतप्रागुक्तदोषः शङ्कते– अयम्– उक्तो दोषः, हि निश्चितं, मातृचैतन्यजे सुते पुत्रशरीरे, तस्मिन् ॥ ३३ ॥

१ पूर्वपक्षवादिना । २ विजातीयमनःसंयोगस्य । ३ अदृष्टस्य । ४ अशनीया बुभुक्षा । ५ तदा भूतानि परामृश्यन्ते ।

चैतन्येऽभ्युपगम्यमाने न स्यात्; न हि सुतचैतन्यहेतोश्चैतन्यस्याऽभावोऽस्ति, येनाऽनुगतहेतुतयाऽऽत्मसिद्धिः स्यात्, मातृचैतन्यस्यैव तद्धेतुत्वात्, व्यवधानेनाऽपि सुषुप्तिप्राक्कालीनविकल्पस्य जागरविकल्पहेतुत्वदर्शनात्। न च मातृचैतन्य-सुत-चैतन्ययोर्वैलक्षण्याद् न हेतु-हेतुमद्भाव इति सांप्रतम्, वृश्चिकादिव गोमयादपि वृश्चिकप्रादुर्भावदर्शनाच्चैतन्येऽपि माता-पितृ-शुक्र-शोणिता-ऽभ्यास-रसायनादिनानाहेतुकत्वाविराधादिति। अत्राह[1]— अस्य चैतन्यहेतुचैतन्यस्य, मातरि मातृशरीरेऽभ्युपगम्यमाने, दोषो न इति न, किन्तु दोष एव, मातृनिष्ठस्य चैतन्यस्य सुतनिष्ठचैतन्यहेतुत्वे गर्भस्थेन भ्रूणेन मात्रनुभूतस्मरणप्रसङ्गात्। किञ्च, गोमय-वृश्चिकजन्यवृश्चिकयोर्वैजात्यस्याऽनुभवसिद्धत्वेन तदवच्छिन्नयोर्गोमय-वृश्चिकयोर्हेतुत्वेऽपि, चैतन्ये विशेषादर्शनात् तत्र[3] चैतन्यमेव हेतुः, न तु मातृशरीरादिकम्। प्रज्ञा-मेधादिविशेषेऽप्यन्तरङ्गतया समानजातीयपूर्वाभ्यासस्यैव हेतुत्वम्, अन्यथा समानेऽपि रसायनाद्युपयोगे यमजयोः[4] कस्यचित् क्वचिदेव प्रज्ञा-मेधादिकमिति प्रतिनियमो न स्यात्, रसायनाद्युपयोगस्य साधारणत्वात्। इति न मातृचैतन्यात् सुतचैतन्यम्। न चेन्द्रियसंनिकर्षादिनैव ज्ञानोत्पत्तौ सामान्यतो ज्ञानं प्रति ज्ञानहेतुत्वे मानाभावः, सुषुप्तौ ज्ञानानुत्पत्तिनिर्वाहायोपयोगस्य ज्ञानहेतुत्वसिद्धेः[5], इत्यन्यत्र विस्तरः ॥ ७२ ॥

दोषान्तरमप्याह–

---

१ 'उत्तरम्' इति शेषः। २ वैजात्यावच्छिन्नयोः। ३ चैतन्ये। ४ युगपज्जातयोः। ५ सुषुप्तावपि मनसः शरीरव्यापित्वेन कक्षीकृतस्य स्पर्शनादीन्द्रियेण, स्पर्शनादेश्च तूलिकादिना संनिकर्षसद्भावात् साकल्येनेन्द्रियसंनिकर्षादेः कारणस्य सत्त्वेऽप्यनुपजायमाना ज्ञानोत्पत्तिस्तदतिरिक्तमर्थग्रहणव्यापाररूपं ज्ञानापरनामानमुपयोगरूपं हेतुमाक्षिपतीति हृदयम्। मनसः शरीरव्यापित्वं च रत्नाकरे स्पष्टम्।

**न च संस्वेदजाद्येषु मात्रभावेन तद् भवेत्। प्रदीपज्ञातमप्यत्र निमित्तत्वान्न बाधकम् ॥७३॥**

न च संस्वेदजाद्येषु यूकादिषु, मात्रभावेन [1]स्वजनकस्त्रीशरीराभावेन, तच्चैतन्यमनुभवसिद्धमपि भवेत्। एवं च व्यभिचाराद् निमित्तकारणत्वमपि मातृशरीरस्य नास्तीत्याशयः। अत एवाह– प्रदीपज्ञातमपि– यथा दीपाद् दीपान्तरमुत्पद्यते तथा मातृचैतन्यात् सुतचैतन्यमिति निदर्शनमपि, प्रदीपस्य निमित्तकारणत्वात्, [2]प्रकृते च [3]तत्त्वस्याऽप्यभावाद् न बाधकं न पृथगात्मसिद्धिप्रतिकूलम्। वस्तुतः शरीरविशेष इव चैतन्यविशेषे मातृशरीरस्य निमित्तकारणत्वसंभवेऽप्युपादानत्वस्य सामान्यत एव कल्पनाद् मातृशरीरस्य सुतचैतन्योपादानत्वं नास्तीति ॥ ७३ ॥

फलितमाह–

**इत्थं न तदुपादानं युज्यते तत् कथञ्चन। अन्योपादानभावे च तदेवात्मा प्रसज्यते ॥ ७४ ॥**

इत्थमुक्तन्यायेन, तद् मातृशरीरं, कथञ्चन केनापि प्रकारेण, तदुपादानं सुतचैतन्योपादानं, न युज्यते। अन्योपादानभावे च मातृशरीरातिरिक्तसुतचैतन्यसद्भावे च, स एव भूतातिरिक्त आत्मा, [4]तैव प्रसज्यते। शरीरवृद्धि-विकारयोश्चैतन्यवृद्धि-विकारोपलम्भस्तु न [5]तदुपादानत्वसाधकः, अजगर-सात्त्विकादौ व्यभिचारात्, शरीरस्य सहकारित्वेऽपीन्द्रियपाटवा-ऽपाटवाभ्यां

१ स्वशब्देन यूकादि। २ यूकादौ। ३ निमित्तकारणत्वस्य। ४ चार्वाकस्य। ५ तच्छरीरमुपादानं यस्य चैतन्यस्य तत् तथा तद्भावस्तस्य साधकः।

शरीरवृद्धि-विकारयोश्चैतन्यवृद्धि-विकारसंभवाच्च । इन्द्रियाण्येवाऽऽत्माऽस्तु, इति चेत् । न, मिलितानां [1]तेषां ज्ञानाद्याश्रयत्वे चक्षुरादिशून्यस्याऽपि [2]त्वाचाद्यप्रसङ्गात् । चक्षुश्चाक्षुषस्येव, त्वगादि च [2]त्वाचादेरेवाऽऽश्रयः, इति चेत् । तर्हि 'योऽहं स्पृशामि सोऽहं पश्यामि' इतिप्रतीत्यनुपपत्तिः, चक्षुषा दृष्टस्य वस्तुनश्चक्षुर्नाशेऽन्येन स्मरणानुपपत्तिश्च । 'चक्षुरादिजन्यनानाज्ञानाधिष्ठानमेकमेव नित्यमिन्द्रियम्' इत्यभ्युपगमे तु संज्ञामात्र एव विवाद[3] इति दिग् ॥ ७४ ॥

नन्वनुपादानं चैतन्यमस्तु, किमात्मना ?, इत्यत आह—

## न तथाभाविनं हेतुमन्तरेणोपजायते । किञ्चिद् नश्यति चैकान्ताद् यथाह व्यासमहर्षिः ॥७५॥

तथाभाविनं कार्यरूपतया भवनशीलं, हेतुं विना किमपि न जायते, [4]तत्परिणामकृतद्रव्यावस्थाविशेषरूपत्वात् [4]तत्परिणामोत्पादस्य । न चैकान्ताद् द्रव्यपृथग्भावेन किञ्चिद् नश्यति, [4]तत्परिणामोत्तरद्रव्यावस्थारूपत्वात् [4]तद्विनाशस्य । न चैवं द्रव्यमेव स्यात्, न तूत्पाद-विनाशौ, कथञ्चिद्भिन्नत्वस्याऽपीष्टत्वात् । तदिदमुक्तं सम्मतौ—

"[5]तिण्णि वि उप्पायाई अभिन्नकाला य भिन्नकाला य । अत्थंतरं अणत्थंतरं च दवियाहि णायव्वा[6] ॥ १ ॥"

अत्रैकप्रतियोगिनिरूपितत्वेन, तद्विशिष्टद्रव्यनिरूपितत्वेन वोत्पाद-स्थिति-विगमानां भिन्नकालता, यथा घटोत्पाद-

---

१ इन्द्रियाणाम् । २ त्वाचं स्पार्शनम् । ३ तादृशाधिष्ठानस्यैवाऽऽर्हतमते आत्मपदार्थत्वादिति भावः । ४ तच्छब्देनोपादानम् ।
५ त्रयोऽप्युत्पादादयोऽभिन्नकालाश्च भिन्नकालाश्च । अर्थान्तरमनर्थान्तरं च द्रव्येभ्यो ज्ञातव्याः ॥ १ ॥ ६ सम्मतिसूत्रे गाथा १३२ ।

समये, घटविशिष्टमृदुत्पादसमये वा न तद्विनाशः, अनुत्पत्तिप्रसक्तेः । नापि [1]तद्विनाशसमये [1]तदुत्पत्तिः, अविनाशप्रसक्तेः । न च [1]तत्प्रादुर्भावसमय एव [1]तत्स्थितिः, तद्रूपेणाऽवस्थितस्याऽनवस्थाप्रसक्त्या प्रादुर्भावायोगात् । अतो द्रव्यादर्थान्तरभूतास्[2]ते, अनेकरूपाणामेकद्रव्यरूपत्वायोगात् । भिन्नप्रतियोगिनिरूपितत्वेन, [3]तद्विशिष्टद्रव्यनिरूपितत्वेन वाऽभिन्नकालता; यथा– कुशूलतद्विशिष्टमृन्नाश-घटतद्विशिष्टमृदुत्पाद-मृत्स्थितीनाम् । अत ऐकरूप्येण द्रव्यादनर्थान्तरभूतत्वम्; इति संप्रदायः ।

अत्रेदं विविच्यते– उत्पादादय आधारत्वादिवदतिरिक्ता अपि, न त्वाद्यक्षणसंबन्धादिरूपा एव, क्षण एवाऽभावात् । [4]तेषां च घटत्वादिना प्रतियोगित्वम्, मृत्त्वादिना चाऽनुयोगित्वम्, इति 'मृदि घट उत्पन्नः' इत्यादिधीः । द्रव्ये तु पर्यायोपहितरूपेण प्रतियोगित्वं, तत्र चाऽनुयोगितायाः प्रतियोगिन्येव समावेशाद् द्रव्यस्य नाऽनुयोगित्वम्, यथा— 'घटविशिष्टं मृद्द्रव्यमुत्पन्नम्' इति। न चात्र विशेषणस्यैवोत्पादो विषयः, विशिष्टस्यैव प्रतियोगित्वानुभवात्; इतरत्रान्वितस्य घटस्योत्पादेऽन्वयायोगाच्च । न च विशिष्टहेतुकल्पने गौरवम्, घटहेतूनामेव घटविशिष्टहेतुत्वात् । [5]अत एव क्षणहेतूनामेव क्षणविशिष्टहेतुत्वात् सर्वत्राविशिष्टवै[6]स्रसिकोत्पादसिद्धिः । न चैवं[7] 'ज्ञानमुत्पन्नम्' इतिवत् 'आत्मोत्पन्नः' इति व्यवहारः स्यात्, आत्मत्वेनोत्पादाप्रतियोगित्वे तु 'कम्बुग्रीवादिमानुत्पन्नः' इत्यपि न स्यात्, इति वाच्यम्; गुरुरूपस्याऽपि प्रकारताद्यवच्छेदकत्ववदुत्पादादिप्रतियोगितावच्छेदकत्वात् । अत एव नित्या-ऽनित्यत्वव्यवहारयोरप्यसांकर्यम् । [8]नन्वेवं 'परमाणुर्नित्यः' इति व्यवहारोऽपि भ्रान्तः

१ तस्य घटस्य । २ ते उत्पाद-स्थिति-विगमाः । ३ तदा भिन्नप्रतियोगी । ४ उत्पादादीनाम् । ५ विशिष्टहेतुकल्पनादेव ।
६ वैस्रसिकः स्वाभाविकः । ७ विशिष्टहेतुकल्पने । ८ इतः प्रभृति 'प्रसङ्गात्' इति पर्यन्तः पूर्वपक्षः ।

स्यात्, परमाणोः परमाणुभावेन नाशस्याऽप्यभ्युपगमात्; अत एवावयवविभागोत्तरं तथोत्पादप्रतिपादनात्, तदुक्तम्—

"[1]दव्वंतरसंजोगाहि केई दवियस्स बेंति उप्पायं। उप्पायत्थाऽकुसला विभागजायं ण इच्छंति ॥ १ ॥

अणु-दुअणुएहिं दव्वे आरद्धे तिअणुअं ति ववएसो। तत्तो अ पुण विभत्तो अणु त्ति जाओ अणू होइ[2] ॥२॥" इति।

(अ)युक्तं चैतत्, प्राक् परमाणुतासत्त्वे स्थूलकार्याभावप्रसङ्गात्; इति चेत्। न, व्यावहारिकनित्यतालक्षणे समुदयविभागरूपस्यैव व्ययस्य प्रवेश्यत्वादिति। अधिकं त्रिसूत्र्यालोके। उक्तेऽर्थे व्याससंमतिमाह– यथाऽऽह व्यासमहर्षिः, छन्दःप्रतिलोमताऽत्राऽऽर्षत्वाद् न दोषाय ॥ ७५ ॥

**नासतो विद्यते भावो नाभावो विद्यते सतः। उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः॥७६॥**

नाऽसतः खरविषाणादेः, विद्यते, भाव उत्पादः, असत्त्वव्याघातप्रसङ्गात्। सतश्च पृथिव्यादेः, अभावोऽपि नास्ति, शशशृङ्गवदसत्त्वप्रसङ्गात्। उभयोरप्यनयोरर्थयोः, तत्त्वदर्शिभिः परमार्थग्राहिभिः, अन्तो नियमः, दृष्टः प्रमितः, यद् यत्रोत्पद्यते तत् तत्र सत्, यच्च यत्र सत् तत् तन्निष्ठाभावाप्रतियोगीति ॥ ७६ ॥

---

१ द्रव्यान्तरसंयोगेभ्यः केचिद् द्रव्यस्य ब्रुवन्त्युत्पादम्। उत्पादार्थाऽकुशला विभागजातं नेच्छन्ति ॥ १ ॥
अणु-द्व्यणुकैर्द्रव्ये आरब्धे त्र्यणुकमिति व्यपदेशः। ततश्च पुनर्विभक्तोऽणुरिति जातोऽणुर्भवति ॥ २ ॥ २ सम्मतिसूत्रे गाथा १३५, १३६।

इदमेवाऽपरेऽपि वदन्ति-

**नाभावो भावमाप्नोति शशशृङ्गे तथाऽगतेः। भावो नाभावमेतीह, दीपश्चेन्न स सर्वथा ॥७७॥**

नाऽभावस्तुच्छो भावमाप्नोति- पारमार्थिकत्वं प्रतिपद्यते, शशशृङ्गे तथाऽगतेः- भावत्वेनाऽपरिच्छेदात् । भावोऽपि पारमार्थिकः, इह जगति, अभावं तुच्छस्वभावं, नैति । ननु दीपो भावरूपः, स चाऽऽलोकाभावात्मकान्धकारस्वरूपतां प्रतिपद्यत इति चेत् । स दीपस्यान्धकारपरिणामः, सर्वथाऽभावरूपो न, भास्वरपरिणामपरित्यागेऽपि द्रव्यत्वापरित्यागात् ।

तेजसोऽतिविनिर्वृत्तिरूपता[1] स्वीकृता तमसि या कणाशिना[2] । द्रव्यतां वयममी समीक्षिणस्तत्र पत्रमवलम्ब्य चक्ष्महे ॥ १ ॥

तमो द्रव्यं, रूपवत्त्वात्, घटवत् । न च हेत्वसिद्धिः, 'तमो नीलम्' इति प्रतीतेः सार्वजनीनत्वात् । न चासौ भ्रमः, बाधकाभावात् । न[3] चोद्भूतरूपमुद्भूतस्पर्शव्याप्यम्, इत्युद्भूतरूपवत्त्वे उद्भूतस्पर्शापत्तिर्बाधिका, इन्द्रनीलप्रभासहचरितनीलभागस्तु स्मर्यमाणारोपेणैव तत्प्रभायां नीलधीनिर्वाहाद् गौरवादेव न कल्प्यत इति तत्र न व्यभिचारः, कुङ्कुमादिपूरितस्फटिकभाण्डे बहिरारोप्यमाणपीताश्रयेऽपि न व्यभिचारः, तत्रापि स्मर्यमाणारोपेणैव पीतधीनिर्वाहाद् बहिष्पीतद्रव्याकल्पनात्, बहिर्गन्धोपलब्धेस्तु वाय्वाकृष्टानुद्भूतरूपभागान्तरेणैवोपपत्तेरिति वाच्यम्; मानाभावात्, प्रभायां व्यभिचाराच्च । न चोद्भूतनीलरूपवत्त्वमेवोद्भूतस्पर्शव्याप्यम्, न च धूमे व्यभिचारः, तत्रा[4]ऽप्युद्भूतस्पर्शवत्त्वात्, अत एव तत्संबन्धाच्चक्षुषो जलनिपात

१ विनिवृत्तिरभावः । २ कणादेन । ३ अस्य 'इति वाच्यं' इति पर्यन्ते संबन्धः । ४ तत्र धूमे ।

इति वाच्यम् ; चक्षु-धूमसंयोगत्वेनैवाऽश्रुपातजनकत्वाद् धूमे उद्भूतस्पर्शासिद्धेः, नीलित्रसरेणौ व्यभिचाराच्च । न च पाटितपटसूक्ष्मावयव इव तत्रा[1]ऽप्युद्भूतस्पर्शवत्त्वानुमानम्, अनुद्भूतरूपस्योद्भूतरूपजनकताया इवाऽनुद्भूतस्पर्शस्याऽपि निमित्तभेदसंसर्गेणोद्भूतस्पर्शजनकतासंभवाद् दृष्टान्ताऽसंप्रतिपत्तेः । अपि च, त्रसरेणोरुद्भूतस्पर्शवत्त्वे तत्स्पर्शस्पार्शनप्रसङ्गः । महत्त्वविशेषाभावाद् न[2], इति चेत् । न, एकत्वविशेषाभावेन विनिगमनाविरहात्, आश्रयत्वाचाभावस्य द्रव्यान्यसत्त्वा(च)च्च । प्रतिबन्धकत्वाद् न[2], इति चेत् । न, उद्भूतस्पर्शाभावस्यैव तत्प्रतिबन्धकत्वेन तत्रानुद्भूतत्वकल्पनौचित्यात् । वस्तुतः प्रभा-घटसंयोगादौ पराभिमतजातिस्थानीयत्वगग्राह्यतास्वभावादेव न त्वाचत्वम्, इति नैतादृशप्रतिबन्धकत्वकल्पनमपि ।

'तमसि पवनाभिव्यज्यमानः शीतस्पर्शोऽप्यनुभूयत एव, अत उद्भूतस्पर्शवत्त्वमपि तत्र[3]' इति सांप्रदायिकाः[4] । अथ नीलरूपवत्त्वे तमसः पृथिवीत्वापत्तिः, नीलत्वा[5]वच्छिन्नं प्रति पृथिवीत्वेन हेतुत्वादिति चेत् । न, मम[6] स्वभावविशेषस्यैव विशिष्टनीलनियामकत्वात्, तवा[7]ऽप्यवयवनीलादिनैवाऽवयविनि नीलाद्युपपत्तौ पृथिवीत्वेन तत्समवायिकारणताभावात्, जन्यसन्मात्रसमवायिकारणतावच्छेदकीभूतद्रव्यत्वाभावादेव नीलादौ नीलाद्यनुत्पत्तिनिर्वाहात् । अथ नीलजनकविजातीयतेजःसंयोगस्य जलादावपि संभवात् तत्र नीलानुत्पत्तये नीलत्वावच्छिन्नं प्रति पृथिवीत्वेन हेतुत्वं कल्प्यत इति चेत् । न, तथाप्युपस्थितविजातीयनीलत्वावच्छिन्नं प्रत्येव तद्धेतुत्वौचित्यात् ; व्यापकधर्मस्य व्याप्यधर्मेणाऽन्यथासिद्धेः ।

---

१ नीलित्रसरेणौ । २ 'तत्स्पर्शस्पार्शनप्रसङ्गः' इति संबध्यते । ३ तमसि । ४ श्रीरत्नप्रभाचार्यादयो रत्नाकरावतारिकादाविस्यर्थः । ५ क. 'लरूपत्वा' । ६ जैनस्य । ७ कणादमतानुयायिनः ।

अथ तमसो जन्यत्वे स्पर्शवदवयवारभ्यत्वं स्यादिति चेत् । न, तमसः स्पर्शवदवयवत्वस्येष्टत्वात् , शक्त्याख्यस्याऽतिशयस्यैव द्रव्यजनकत्वाच्च। [1]त्वयाऽपि च न स्पर्शवत्त्वेन जनकत्वं कल्पयितुं शक्यम् , अन्त्यावयविनि व्यभिचारात् । न चाऽनन्त्यावयवित्वमपि निवेशनीयम्, तस्य द्रव्यसमवायिकारणत्वपर्यवसितत्वात् । न च जन्यद्रव्यत्वावच्छिन्नं प्रति द्रव्यत्वेन प्रतिबन्धकत्वादन्त्यावयविनि द्रव्यानुत्पत्तेर्न दोष इति वाच्यम्; तथापि नव्यैश्चक्षुरादिष्वनुद्भूतस्पर्शानभ्युपगमात्, तथाऽहेतुत्वात् । न च द्रव्यारम्भकत्वान्यथानुपपत्त्यैव तत्राऽनुद्भूतस्पर्शाङ्गीकार इति वाच्यम्; अनन्तानुद्भूतस्पर्शकल्पनामपेक्ष्य लघुभूतैकजातिकल्पनाया एवोचितत्वात् । न च मूर्तत्वेन [2]तथात्वम् , मनसि व्यभिचारात् । न च [3]तत्र विजातीयसंयोगरूपहेत्वन्तराभावादेव द्रव्यानुत्पत्तिरिति वाच्यम्; यत्क्रियया घटे आरम्भको मनसि चानारम्भकः संयोगो जनितस्तत्क्रियाजन्यतावच्छेदाय तत्रोक्तवैजात्याऽऽवश्यकत्वात् । न च मनोऽन्यमूर्तत्वेन तथात्वम् , गौरवात् । एवं च तादृशजातिकल्पने, विजातीयसंयोगकल्पने, नोदनात्वादीनां तद्वैजात्यव्याप्यत्वकल्पने, तदवच्छिन्नकारणकल्पने च गौरवाद् वरमतिशय एवाऽनतिप्रसक्तो द्रव्यजनकः कल्प्यते, इति सूक्ष्मं विभावनीयम् ।

अथ तमसो द्रव्यत्वे आलोकनिरपेक्षचक्षुर्ग्राह्यत्वं न स्यात्, द्रव्यचाक्षुषत्वावच्छिन्नं प्रत्यालोकसंयोगत्वेन हेतुत्वात् । न चाऽऽलोकचाक्षुषे व्यभिचारः, तत्राऽप्यालोक-गगनसंयोगस्य सत्त्वात् । न चैवं[4] बहलतमे तमसि सुवर्णसाक्षात्कारापत्तिः[5], मह-

१ वैशेषिकेण । २जनकत्वं कल्पयितुं शक्यम् । ३ मनसि । ४ द्रव्यचाक्षुषत्वावच्छिन्नं प्रत्यालोकसंयोगत्वेन हेतुत्वे । ५ सुवर्णस्य तैजसत्वेन वैशेषिकैरङ्गीकारादिति भावः ।

दुद्भूता-ऽनभिभूतरूपवदालोकसंयोगत्वेन त[1]द्धेतुत्वात्। न चैकावच्छेदेनाऽऽलोकसंयोगवत्यपरावच्छेदेन चक्षुःसंयोगाच्चाक्षुषापत्तिः, चक्षुःसंयोगावच्छेदकावच्छिन्नालोकसंयोगत्वेन त[1]द्धेतुत्वात्। न च चक्षुःसंयोगावच्छेदकावच्छिन्नालोकसंयोगत्वेन, आलोकसंयोगावच्छेदकावच्छिन्नचक्षुःसंयोगत्वेन वा हेतुत्वमिति विनिगमनाविरहः, उद्द्योतस्थपुरुषस्यान्धकारस्थवस्तुसाक्षात्काराऽनुदयस्य विनिगमकत्वात्। आलोकसंयोगानवच्छेदकानवच्छिन्नचक्षुःसंयोगत्वेनापि न हेतुत्वम्, गौरवात्, अन्धकारस्थस्योद्द्योतस्थवस्त्वग्रहणप्रसङ्गाच्च। अत एव समवायेनाऽऽलोकाभावाऽन्यलौकिकचाक्षुषं प्रति स्वावच्छेदकावच्छिन्नसंयोगवच्चक्षुःसंयुक्तमनःप्रतियोगिकविजातीयसंयोगसंबन्धेनाऽऽलोकसंयोगस्य हेतुत्वमपि न निरवद्यम्, संबन्धगौरवात्, किञ्चिदवयवावच्छेदेनाऽऽलोकसंयुक्तेनैव चक्षुषाऽन्धकारवद्भित्तिसंयोगेऽन्धकारेऽपि वस्तुग्र[2]हणप्रसङ्गाच्च; इति चेत्।

न, आलोकं विनापि घूकादीनां द्रव्यचाक्षुषोदयाद् व्यभिचारात्। न च चैत्रादिचाक्षुष ए[3]व त[4]द्धेतुत्वाद् न व्यभिचार इति वाच्यम्; तथाऽप्यञ्जनादिसंस्कृतचक्षुषां तस्करादीनां चाक्षुषे व्यभिचारात्। न चाऽञ्जनाद्यसंस्कृतचैत्रादिचक्षुर्जन्यचाक्षुषे त[4]द्धेतुत्वम्, अञ्जनादीनामपि च स्वातन्त्र्येण चाक्षुषहेतुत्वमिति वाच्यम्; अननुगमात्, आलोकाद्युद्बोध्यक्षयोपशमरूपयोग्यताया एवाऽनुगतत्वेन हेतुत्वौचित्यात्। किञ्च, एवं चक्षुषोऽवच्छेदकत्वेनाऽहेतुत्वापत्तिः। अपि च, चक्षुःसंयोगावच्छिन्नसंयोगसंबन्धेनैवाऽऽलोकत्वेन हेतुता वाच्या, लाघवात्; न च तेन संबन्धेनाऽऽलोकस्याऽऽलोकवृत्तित्वम्, इत्यालोक एव व्यभिचारः, इति

---

१ तच्छब्दश्चाक्षुषपरामर्शकः। २ क. 'हप्र'। ३ क. 'एवैत'। ४ तत्पदमालोकानुकर्षकम्।

सुवर्णभिन्नं यत् तेजस्तद्भिन्नद्रव्यचाक्षुषे [1]तथा हेतुता वाच्या; तथा च लाघवात् तमोऽन्यद्रव्यचाक्षुषं प्रति तमसः प्रतिबन्धकत्वमेव न्याय्यम्, मह-दुद्भूता-ऽनभिभूतरूपवदालोकत्वापेक्षया तमोऽभावत्वेन हेतुत्वे लाघवाच्च ।

किञ्च, एवं तमसोऽभावत्वे तेजोज्ञानं विना ज्ञानं न स्यात्, अभावज्ञाने प्रतियोगिज्ञानस्याऽन्वय-व्यतिरेकाभ्यां हेतुत्वावधारणात् । अथाऽत्रेष्टापत्तिः, आलोकं जानतामेव तमःप्रत्यक्षस्वीकारात्; तदाहुराचार्याः– "गिरिदरीविवरवर्तिनो यदि योगिनो न ते तिमिरावलोकिनः, तिमिरावलोकिनश्चेद् नूनं स्मृताऽऽलोकाः" इति, इति चेत् । न, तेजसोऽप्रतिसंधानेऽपि तमोऽनुभवस्य प्रत्यक्षसिद्धत्वात् ।

[3]अथाभावस्य ज्ञानमात्रे प्रत्यक्षमात्रे वा न प्रतियोगिज्ञानं हेतुः, प्रमेयत्वादिनाऽभावग्रहे, अभावत्वसामान्यलक्षणाधीनतत्प्रत्यक्षे च व्यभिचारात् । नापि तदभावलौकिकप्रत्यक्षे तज्ज्ञानं हेतुः, प्राचां घटात्यन्ताभावादे[4]र्घटादि-तत्प्रागभाव-तत्प्रध्वंसप्रतियोगित्वात्[5], तत्त्रयाग्रहेऽप्येकग्रहे प्रत्यक्षात्; नव्यमते समनियतैकत्वपरिमाणाद्यभावस्यैकमात्रग्रहे प्रत्यक्षाच्च । अथ तदभावलौकिकप्रत्यक्षे तदभावयत्किञ्चित्प्रतियोगिज्ञानत्वेन हेतुत्वाद् न व्यभिचार इति चेत् । न, तथाहेतुत्वे मानाभावात्, वह्न्यादिज्ञानशून्यस्याऽपि संनिकृष्टे ह्रदादावन्तत इदंत्वादिनाऽपि वह्न्याद्यविशेषिततदभावलौकिकप्रत्यक्षस्येष्टत्वात्, वह्न्यादिविशेषिततत्प्रत्यक्षं तु विशेषणतावच्छेदकवह्नित्वादिज्ञानप्रकारकज्ञानसाध्यम्, इति तेजोज्ञानं विनाऽपि तमःप्रत्यक्षे न दोष इति चेत् । न, प्रतियोगि-

१ चक्षुःसंयोगावच्छिन्नसंयोगसंबन्धेनाऽऽलोकत्वेनेत्यर्थः । २ अतः 'न दोषः' इतिपर्यन्तः पूर्वपक्षः । ३ ख.ग.घ.च. 'त् त्रया' । ४ क. 'दिना ज्ञा' ।
५ ख.ग.घ.च.'दिप्र' ।

ज्ञानस्याऽभावप्रत्यक्षाहेतुत्वे विना प्रतियोगिज्ञानं 'न' इत्याकारकप्रत्ययापत्तेः। न चाऽभावत्वस्यापीदंत्वेन ग्रहादापादकाभावः, प्रथममभावा-ऽभावत्वयोर्निर्विकल्पके 'अभाव-' इत्याकारकप्रत्यक्षापत्तेर्दुर्वारत्वात्। न चाभावत्वमात्रेण प्रत्यक्षस्येष्टत्वम्, 'शून्यमिदं दृश्यते' इत्यादिप्रत्ययात्, इत्थमेवाऽभावत्वस्य भावभेदस्य पिशाचादिभेदवद् योग्यस्य 'घटो नास्ति' इत्यादौ स्वरूपतो भानमपि प्राचां संभवदुक्तिकम्, नञुल्लेखस्तु प्रतियोगिवाचकपदनियतो न सार्वत्रिक इति वाच्यम्; अन्धकार इव ह्रदादावपि 'शून्यमिदम्' इति वह्न्यभावादौ प्रत्ययापत्तेः। 'अभावत्वप्रत्यक्षे योग्यधर्मावच्छिन्नज्ञानत्वेन हेतुत्वाद् नाऽयं दोषः' इत्यतिमन्दम्, योग्यधर्माणामननुगतत्वात्; घटत्वाद्यन्यतमत्वेनानुगमे गौरवात्, पिशाचत्वाद्ययोग्यधर्मावच्छिन्नस्य ग्रहेऽपि 'पिशाचो नाऽयम्' इत्यादिप्रतीतेश्च।

अथ 'न' इत्याकारकप्रत्यक्षवारणायेन्द्रियसंबद्धविशेषणताया एव प्रतियोगिविशेषितप्रत्यक्षहेतुत्वम्। न चेन्द्रियस्य चक्षु-स्त्वगादिभेदभिन्नत्वेनेन्द्रियसंबद्धविशेषणतायाः प्रतियोगिविशेषितप्रत्यक्षहेतुत्वे गौरवात् पृथक् प्रतियोगिधीहेतुतैव युक्ता। न च तद्धेतुत्वेऽपि 'न' इत्याकारकप्रत्यक्षापत्तिः, उपस्थितस्य प्रतियोगिनोऽभावे वैशिष्ट्यभाने बाधकाभावात्। न च 'अभावो न घटीयः' इत्यादिबाधधीदशायां तदापत्तिः, अभावत्वावच्छेदेनाऽभावे तादृशबाधधिय आहार्यत्वात्; अभावत्वसामानाधिकरण्येन च तद्दशायामपि प्रतियोगिवैशिष्ट्यभानसंभवात्। न[1] च प्रतियोगितासंबन्धावच्छिन्नप्रतियोगितयाऽभावे घटवैशिष्ट्यविषयकत्वात्, प्रतियोगितासामान्येन घटबाधग्रहाभावेऽपि संयोगादिसंबन्धावच्छिन्नप्रतियोगितया 'न घटीयः' इति

१ 'इति वाच्यम्' इत्यत्र संबन्धः।

बाधधीकाले संयोगादिना घटाभावादेः 'न' इत्याकारकप्रत्यक्षापत्तिः, तदापि प्रतियोगितासंबन्धावच्छिन्नप्रतियोगितया घटस्य प्रकारतया भाने बाधकाभावात्, घटत्वाद्यवच्छिन्नप्रकारत्वा-ऽन्यप्रकारत्वानिरूपिताऽभावविषयताकप्रत्यक्षे घटादिधियो हेतुत्वाच्च; अन्यथा घटाद्यभावस्य पटाद्यभावत्वादिना ग्रहे व्यभिचारापत्तेः; इत्थं चाभावांशे निर्विकल्पकं, 'अभावः' इत्याकारकप्रत्यक्षं च न जायते, निखिलप्रतियोगिज्ञानकार्यतावच्छेदकाक्रान्तेदृशप्रत्यक्षस्य यत्किञ्चित्प्रतियोगिज्ञानेऽसंभवात्, यावत्प्रतियोगिज्ञानस्य चाऽसंभवात्; अभावत्वांशे निर्विकल्पकं त्वभावांशे यत्किञ्चित्प्रतियोगिविशिष्टविषयत्वात् यत्किञ्चित्प्रतियोगिधीसाध्यमेवेति नानुपपत्तिः, इदंत्वेन तमःप्रत्यक्षं त्वनुपपन्नम्, अभावांशे निर्विकल्पकवद् यावत्प्रतियोगिधीकार्यतावच्छेदकाक्रान्तत्वात्, इति वाच्यम्; केवलाभावत्वनिर्विकल्पकापत्तेः, अभावस्याऽखण्डत्वात्; अन्यथाऽभावविशिष्टबुद्धावपि तन्निर्विकल्पकायोगात्। किञ्च, 'घट-पटौ न' इत्यादिप्रत्यक्षं घटज्ञान-पटज्ञानादिकार्यतावच्छेदकानाक्रान्ततया तद्विरहेऽपि स्यात्, तत्र घटत्व-पटत्व-द्वित्वानां प्रकारतावच्छेदकत्वेऽपि नीलघटाद्यभावप्रत्यक्षे व्यभिचारवारणाय 'घटत्वाद्यवच्छिन्न-' इत्यस्य घटत्वादिपर्याप्तावच्छेदकताकत्वार्थत्वेनैतद्दोषानुद्धारात्। तस्माद् घटत्वादिप्रकारकप्रत्यक्षस्य लाघवात्, घटत्वाद्यवच्छिन्नप्रकारतानिरूपितविषयताकप्रत्यक्षत्वमेव कार्यतावच्छेदकम्, शुद्धाभावप्रत्यक्षं तु प्रतियोगितासंबन्धावच्छिन्नप्रकारतानिरूपिताऽभावविषयताकप्रत्यक्ष एव विशेषणताया हेतुत्वाद् न भवतीति युक्तम्, कोटिप्रतियोगिज्ञानहेतुत्वाऽकल्पने लाघवात्। न च 'अभावो न घटीयः' इति प्रत्यक्षे व्यभिचारः, तत्रापि प्रतियोगितासंबन्धावच्छिन्न(प्रतियोगितासंबन्धावच्छिन्न)प्रकारतानिरूपिताभावविषयताकत्वस्याऽक्षतत्वात्। यदि चैवमपि प्रतियोगितामात्रेण 'द्रव्यं नास्ति, मेयं नास्ति' इत्यादेरापत्तिः, तदा प्रकारीभूतकिञ्चिद्ध-

र्मावच्छिन्नत्वेन प्रतियोगिताया विशेषणाद् न दोषः, अभावत्वनिर्विकल्पकं चाऽङ्गीक्रियत एव, निरवच्छिन्नप्रकारताकबुद्धौ निरवच्छिन्नविषयताकबुद्धेर्हेतुत्वादिति चेत् ।

न, एवमपि घटाभाव-पटाभावयोरुभयोः संनिकर्षे घटाभावांशे प्रतियोगिविशेषितस्य, पटाभावांशे च तदविशेषितस्य समूहालम्बनस्य प्रसङ्गात् । किञ्च, एवमिदंत्वादिनाऽभावप्रत्यक्षं न स्यात्, न स्याच्च 'अभावप्रतियोगी घटः, इत्यादि; तादृश-प्रत्यक्षेष्वपि पृथक्कारणत्वकल्पने चातिगौरवम् । अथाभावत्वप्रकारकघटाद्यभावत्वविषयकप्रत्यक्षे घटत्वादिना घटादिज्ञानस्य हेतुत्वम्, पटाभावत्वेन च भूतले न घटाभावादिज्ञानम्, तत्र पटाभावस्यैवाऽऽरोपात्, इत्यालोकज्ञानं विनापीदंत्वेन तमःप्रत्यक्षं नानुपपन्नमिति चेत् । न, 'घटवद् भूतलम्' इति ज्ञानोत्तरं 'अभाववद् भूतलम्' इति ज्ञानप्रसङ्गात्, तादृशाऽसंसर्गाऽग्रहस्याऽऽपादकस्य सत्त्वात् । किञ्च, एवमभावप्रत्यक्षे प्रतियोगिज्ञानापेक्षायां विना प्रतियोगिज्ञानं, जायमानं तमस्त्वप्रकारकं तमः-प्रत्यक्षं तमसो भावत्वमेव साधयतीति प्रतिकूलाभिधानमिदं देवानांप्रियस्य ।

एवं चाऽभावलौकिकप्रत्यक्षस्य घटत्वाद्यन्यतमत्वविशिष्टविषयकत्वनियमाद् विशेषसामग्रीं विना सामान्यसामग्रीमात्रात् कार्यानुत्पत्तेर्नाऽभावनिर्विकल्पकं, 'न' इत्याकारकप्रत्यक्षं वा, विशेषणादिज्ञानरूपविशेषसामग्र्यभावात् । न चाऽभाव-लौकिकप्रत्यक्षत्व-घटत्वादिविशिष्टविषयकप्रत्यक्षत्वयोर्व्याप्य-व्यापकभावाऽभावात् कथं विशेषसामग्रीत्वम्? इति वाच्यम्; कार्य-तावच्छेदकीभूततद्धर्माश्रययत्किञ्चिद्व्यक्तिनिष्ठकार्यतानिरूपितकारणतावच्छेदकं यावत्प्रत्येकं तत्तदवच्छिन्नसत्त्वेऽवश्यं तद्धर्माव-च्छिन्नोत्पत्तिरित्येवं नियमात्; 'तद्धर्मव्याप्यधर्मावच्छिन्नयत्किञ्चिद्व्यक्तिनिष्ठकार्यतानिरूपित-' इत्याद्युक्तौ व्याप्तिज्ञान-परा-

मर्शयोः सत्त्वे बाधधीसत्त्वेऽप्यनुमित्यापत्तेः, तद्धर्म(तद्धर्म)व्याप्यव्यापकधर्मावच्छिन्नयत्किञ्चिद्व्यक्तिनिष्ठकार्यतानिरूपित-' इत्याद्युक्तौ गौरवात्, 'घटत्वादिविशिष्टवैशिष्ट्यविषयकप्रत्यक्षत्वस्याऽभावलौकिकप्रत्यक्षत्वव्याप्यतत्तदभावलौकिकप्रत्यक्षत्वव्यापकत्वात् प्रकृतसिद्धेश्च-' इत्युक्तावपि न साध्यसिद्धिः ; न वा घटत्वाद्यवच्छिन्नप्रकारत्वा-ऽतिरिक्तप्रकारत्वानवच्छिन्नाऽभावत्वलौकिकविषयतावच्छिन्नाऽभावलौकिकविषयताकप्रत्यक्षे, घटत्वातिरिक्तधर्मावच्छिन्नप्रतियोगितासंबन्धावच्छिन्नप्रकारत्वानिरूपितत्वे सत्यऽभावत्वविषयत्वावच्छिन्नाऽभावलौकिकविषयताकप्रत्यक्षे वा घटत्वाद्यवच्छिन्नप्रकारताकज्ञानहेतुत्वेऽपि निर्वाहः, तमोविषयतायास्तमस्त्वविषयताऽवच्छिन्नत्वेऽभावत्वविषयतावच्छिन्नत्वानियमात्, तमस्त्वस्य तेजोऽभावत्वानतिरिक्तत्वात्, अभावत्वविषयतावच्छिन्ननिवेशे गौरवात् तमसो द्रव्यत्वस्यैव युक्तत्वादिति दिक् ।

किञ्च, नाऽऽलोकप्रतियोगिकाभावमात्रं तमोव्यवहारविषयः, एकालोकवत्यप्यालोकान्तराभावात् ; न वाऽऽलोकसामान्याभावः[1], आलोकवत्यपि संबन्धान्तरेण तदभावात् ; न च संयोगसंबन्धावच्छिन्नतदभावः[1], आलोकेऽपि तत्सत्त्वात्, नाऽप्यालोकान्यवृत्तित्वविशिष्टतदभावः[1], अन्धकारेऽन्धकारापत्तेः; न चाऽऽलोकान्यद्रव्यवृत्तित्वविशिष्टः सः[2] तथा[3], त्वदात्मन्यपि तत्प्रसङ्गात् ; न च कदाचिदालोकसंसर्गाऽत्वद्वृत्तित्वविशिष्टः सः[2] तथा[3], कदाप्यालोकसंसर्गो यत्र नास्ति तत्रापि घोरनरकादौ तच्छ्रवणात्, अवतमसे यावदालोकाभावाच्च। किञ्च, एतावद्घटकाऽप्रतिसंधानेऽपि तमस्त्वप्रतिसंधानाद् घटत्ववज्जातिरूपमेव तद्

१ 'तमोव्यवहारविषयः' इति संबध्यते । २ आलोकाभावः । ३ तमोव्यवहारविषयः ।

न्याय्यम्। एतेन 'यावदालोकसत्त्वेनान्धकारव्यवहारस्तावन्निष्ठबहुत्वविशेषावच्छिन्नप्रतियोगिताकाभावस्तमः' इत्यप्यपास्तम्, बहुत्वस्य बुद्धिविशेषादिना विनिगमनाविरहाच्च 'अखण्डाभाव एव तमः, अखण्डं वा तमस्त्वम्' इति कल्पयतस्त्वतिरिक्ततमोद्रव्यकल्पने किं क्षूयते ?।

अपिच, तमसोऽभावत्वे उत्कर्षा-ऽपकर्षाऽसंभवादन्धतमसा-ऽवतमसादिविशेषोऽपि न स्यात्। न च मह-दुद्भूता-ऽनभिभूतरूपवद्यावत्तेजोऽभावोऽन्धतमसम्, कतिपयतदभावश्चावतमसम्, इत्यादिविभागो न्याय्यः, दिवा प्रकृष्टालोकेऽपि तत्सत्त्वात्। न च च्छायायामतिव्याप्तिवारणाय 'स्वन्यूनसंख्यबाह्यालोकसंवलने सति' इति विशेषणदानाऽऽवश्यकत्वात्, तदानीं च बाह्यालोकस्य स्वाधिकसंख्यत्वाद् न दोष इति वाच्यम्; तद्दिनातिरिक्ताऽनन्तदिनवृत्तिबाह्यालोकाभावानामेवाऽधिकत्वात्, तादृशरूपाप्रतिसन्धानेऽप्यन्धतमसत्वाद्यनुभवाच्च। एतेन 'रूपत्वग्राहकतेजःसंवलितस्तदवान्तरविशेषग्राहकयावत्तेजःसंसर्गाभावोऽवतमसम्, रूपत्वावान्तरजातिग्राहकतेजःसंवलितः प्रौढप्रकाशकयावत्तेजःसंसर्गाभावश्छाया, यावदालोकाभावश्चान्धतमसम्' इति निरस्तम्, ज्ञानगर्भतयाऽवतमसादीनामचाक्षुषत्वप्रसङ्गात्, तादृशजात्यसिद्ध्या तत्तज्ज्ञानविशेषपरिचायितजातिविशेषविशिष्टालोकनिवेशासंभवाच्चेति दिग्।

किञ्च, अत्यन्ताभावत्वे तमस उत्पत्ति-नाशादिप्रतीतीनां भ्रमत्वं स्यात्। न च 'आलोकसंसर्गाभावसमुदाय एवाऽन्ध-

१ क. 'इति वि'।

कारः, तत्र राशिष्विव किञ्चित्समुदायिव्यतिरेकप्रयुक्त एव विनाशः, एवमुत्पत्तिप्रत्ययोऽप्यूह्यः' इति शशधरशर्मणो वचनं रमणीयम्, राशिषु बहुत्वविशेषनाशो-त्पादाभ्यां तदाश्रयनाशो-त्पादप्रतीत्युपपत्तावपि प्रकृते तदयोगात्, समूहविलक्षणमहदेको-त्पादाद्यनुभवाच्च। अपिच, एवं 'इदं नीलं' इत्यादिधियां भ्रमत्वं, तत्र 'नेदं नीलं' इत्यादिसाक्षात्कारे वस्तुस्वरूपस्याऽदृष्टवि-शेषस्य वा दोषस्य[1] वा प्रतिबन्धकत्वम्, तत्राऽप्यप्रामाण्यग्रहाभावविशिष्टतेजोऽभावत्वप्रकारकज्ञानादीनामुत्तेजकत्वं कल्पनीयम्, इत्यतिगौरवम्।

यत्तु 'तमसो द्रव्यत्वे प्रौढालोकमध्ये सर्वतो घनतरावरणे तमो न स्यात्, तेजोऽवयवेन तत्र तमोऽवयवानां प्रागन-वस्थानात्, सर्वतस्तेजःसंकुले वाऽन्यतोऽप्यागमनासंभवात्' इति वर्धमानेनोक्तम्; तदसत्, 'यद् द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयम्' इति व्याप्तेस्तेजोऽणुभिरेव तत्रान्धकारारम्भस्वीकारात्। न च 'तेजसस्तेजस एवाऽऽरम्भकत्वादयुक्तमे[2]-तत्' इति वाच्यम्, नियताऽऽरम्भनिरासादिति दिग्।

एवं तमसोऽभावत्वे गतिमत्त्व-परत्वा-ऽपरत्व-विभागादिप्रत्ययानामप्यनुपपत्तिः। न च स्वाभाविकगतेराश्रयगत्यनुवि-धाननियमानुपपत्तिः, पद्मरागप्रभायां तथादर्शनात्; कुड्याद्यावरणभङ्गे तन्नियमभङ्गस्य च प्रभायामिव च्छायादावपि तुल्य-त्वात्। तदिदमुक्तम्–

१ क. 'स्य प्र'। २ तेजोऽणुभिरन्धकारारम्भस्वीकरणम्।

" तमः खलु चलं नीलं, परा-ऽपरविभागवत् । इतरद्रव्यवैधर्म्याद् नवभ्यो भेत्तुमर्हति ॥ १ ॥" इति ।

'तमो द्रव्यं, घनतर-निकर-लहरीप्रभृतिशब्दैर्व्यपदिश्यमानत्वात्, किरणादिवत्' इत्यपि वदन्ति[1]। 'नाऽत्राऽऽलोकः किन्त्वन्धकारः' इति व्यवहारादप्यालोकाभावाद् भिन्नं तमः, 'नाऽत्र घटः किन्तु तदभावः' इतिवद् विवरणपरतां विनाऽपि स्वारसिकप्रयोगदर्शनात्, अपकृष्टाऽऽलोकसत्त्वेऽप्यन्धकारव्यवहाराच्च । अत एवोत्कृष्टालोकाभावोऽन्धकार इति चेत् । न, तदुत्कर्षप्रतियोग्यपकर्षशालितयैव तमसि द्रव्यत्वसिद्धेः । 'तमःप्रतियोगिकाभावेनैव तेजोव्यवहारः, तत्र तत्तेजोज्ञानं प्रतिबन्धकम्' इति शेषानन्तवचनं त्वत्यनादरणीयम्, स्पष्टगौरवात्, व्यवहर्तव्यज्ञाने सति, सत्यां चेच्छायां व्यवहारेऽधिकानपेक्षणाच्चेति दिग् ।

प्राभाकरास्तु– तेजोज्ञानाभाव एव तमः, नीलं तम इति धीस्तु स्मृतनीलिम्ना सममालोकज्ञानाभावस्यासंसर्गाग्रहात् । अत एवाऽऽलोकवद् गर्भगृहं प्रविशतः प्रथममालोकाग्रहे 'नीलं तमः' इति धीः, तदुक्तम्– " अप्रतीतावेव प्रतीतिभ्रमो मन्दानाम्" इत्याहुः । तदप्यसत्, 'तमः पश्यामि' इति प्रतीत्या तमसश्चाक्षुषत्वात्; ज्ञानाभावस्य चाऽतथात्वात् । निमीलितनयनस्य च न तमःप्रतीतिरस्ति, किन्त्वर्थान्तरप्रतीतिरेव, अन्यथा 'गेहे तमोऽस्ति, नवा ?' इति संशयानुपपत्तेः; गर्भगृहे च तमःप्रत्ययो भ्रम एव, आलोकज्ञानप्रतिबन्धकदोषस्य तत्र स्वीकारावश्यकत्वादिति दिग् ।

---

१ 'रत्नाकरावतारिकायां द्वितीयपरिच्छेदे तमोवादे श्रीरत्नप्रभसूरयः' इति शेषः ।

कन्दलीकारस्तु– 'आरोपितं नीलं रूपं तमः' इत्याह । तन्न, नीलीद्रव्योपरक्तेषु वस्त्र-चर्मादिषु तमोव्यवहारप्रसङ्गात्, "गुणे शुक्लादयः पुंसि" (अम०को० १,५,१७) इत्यनुशासनेन शुक्लादिपदजन्यशुक्लत्वाद्यवच्छिन्नमुख्यविशेष्यताकशाब्दबोधे पुंलिङ्गकशुक्लादिपदशक्तिज्ञानजन्योपस्थितेर्हेतुत्वेन 'नीलस्तमः' इति प्रयोगप्रसङ्गाच्च । न चाऽत्र नीलस्य तमोविशेषणत्वमेव, अनुक्तलिङ्गविशेषणपदानां च विशेष्यलिङ्गताया औत्सर्गिकत्वाद् नीलपदे क्लीबत्वमिति वाच्यम्; नीलस्य सामान्यतया विशेष्यत्वात्, विशेषणविशेष्यभावे कामचाराभिधानस्य परस्परव्यभिचारितदुभयविषयत्वादिति दिग् ।

'नीलारोपविशिष्टस्तेजःसंसर्गाभावस्तमः' इति शिवादित्यः । तदपि न, नीलारोपाद्यग्रहेऽपि तमस्त्वग्रहात्, तादृशतमस्त्वावच्छिन्नधर्मिकनीलारोपायोगाच्चेति । अधिकं वादमालायाम् ।

इमां गिरं समाकर्ण्य सकर्णा जाङ्गुलीमिव । उद्वमन्तु सुखं ध्वान्ते (ना)ऽत्राभावत्वभ्रमं विषम् ॥ १ ॥
तस्माद् न जायते किञ्चिदेकान्ताद् न च नश्यति । प्रसिद्धं निखिलार्थानां त्रैलक्षण्यं हि लक्षणम् ॥ २ ॥ ७७ ॥

उपसंहरन्नाह–

## एवं चैतन्यवानात्मा सिद्धः सततभावतः । परलोक्यपि विज्ञेयो युक्तमार्गानुसारिभिः ।७८।

एवमुक्तयुक्त्या, चैतन्यवान् ज्ञानोपादानम्, आत्मा शरीरभिन्नः, सिद्धः । स च सततभावतः– अनादिनिधनत्वात्, परलोक्यपि युक्तमार्गानुसारिभिः– उपपत्तिसहिताऽऽगमानुगृहीतमतिभिः, विज्ञेयः; आद्यचैत्रशरीरधर्माणामव्यवहितपूर्ववर्तिचैत्र-

शरीरधर्मानुविधायित्वात्, युवशरीरे तथादर्शनात्, अनुगतकार्मणशरीरसिद्ध्या तज्जन्यभोगाश्रयस्य परलोकित्वसिद्धेः । न च घटे घटजन्यत्वस्येव शरीरे शरीरजन्यत्वस्याऽपि न नियम इति वाच्यम्, आत्मनः क्रियावत्त्वेन चेष्टारूपतात्क्रियानियामकशरीरत्वस्याऽऽद्यशरीरहेतुकर्मणि स्वीकारादिति ॥ ७८ ॥

अत्राह परः–

## सतोऽस्य किं घटस्येव प्रत्यक्षेण न दर्शनम्?। अस्त्येव दर्शनं स्पष्टमहंप्रत्ययवेदनात्॥७९॥

सतो भावरूपस्याऽऽत्मनः सतः, घटस्येव प्रत्यक्षेण दर्शनं किं न भवति ?, तथा चाऽनुपलब्ध्याऽभाव एव तस्येत्याशयः । तत्राऽनुपलब्धिरेव नास्तीति समाधत्ते– स्पष्टं साक्षात्, अहंप्रत्ययस्य वेदनात्– अनुभवसिद्धत्वात्, अस्त्येव दर्शनम् । न चेदं न प्रत्यक्षमिति वाच्यम्, व्याप्त्यादिप्रतिसंधानविरहेऽपि जायमानत्वात्, आत्मत्वविशिष्टस्याऽयोग्यत्वे साध्याऽप्रसिद्ध्याऽनुमानासंभवाच्च । एतेन 'तत्राऽऽत्मा तावत् प्रत्यक्षतो न गृह्यते' इति न्यायभाष्योक्तमप्यपास्तम् । ननु यद्येवमात्मा प्रत्यक्षः, कथं तर्हि तत्र शरीराभेदबुद्धिः, धर्मिस्वरूपस्य शरीरभेदस्याऽपि ग्रहात् ?, इति चेत् । न धर्म्यम्, तद्भावेन तद्ग्रहेऽपि शरीरभेदप्रकारकग्रहाभावात् तदभेदबुद्ध्युपपत्तेः; इति नानुपलब्ध्याऽऽत्माभावनिश्चयः । न च चक्षुराद्यनुपलब्ध्या तदभावः, वाय्वादेरप्यभावप्रसङ्गात् । न चाऽनुपलब्धिमात्रस्याऽर्थाभावसाधकत्वम्, अन्यथा स्वगृहाद् निर्गतो वराकश्चार्वाको न गृहमासादयेत्, पुत्रादिभिस्तदद्दृष्ट्या तदभावसिद्धेः, प्रत्युत पुत्र-धनाद्यभावावधारणाच्छोकविकलो बहु विक्रोशेत्; तदा पुत्रादिसत्त्वे चाऽनुपलब्धे-

र्व्यभिचाराद् नार्थाभावसाधकत्वम् । अथ संनिकृष्टेऽधिकरणे पुत्राद्यत्यन्ताभावग्रहेऽपि तद्ध्वंसाग्रहाद् न शोक इति चेत् । तथापि पुत्राद्युपलम्भहेतुचक्षुराद्यनुपलम्भेन तदभावात् पुत्राद्यनुपलम्भेन परावृत्तस्य तस्य मूढता स्यात्; तदिदमुक्तम्- "स्वगृहाद् निर्गतो भूयो न तदाऽऽगन्तुमर्हति" इति । अथ चक्षुरादिसंभावनाद् न तदनुपलब्ध्या तदभावसिद्धिरिति चेत् । तर्ह्यात्मनोऽपि संभावनासत्त्वाद् न तदनुपलब्ध्या तदभावसिद्धिरिति परिभावनीयम् ॥ ७९ ॥

उक्तप्रत्ययो न प्रमा, इत्याशङ्कते—

**भ्रान्तोऽहं गुरुरित्येष सत्यमन्यस्त्वसौ मतः। व्यभिचारित्वतो नास्य गमकत्वमथोच्यते॥८०॥**

'अहं गुरुः' इत्येष प्रत्ययो भ्रान्तः, गुरुत्वानाश्रयेऽहंत्ववत्यात्मनि गुरुत्वावगाहनात् । यद्यपि घटस्येव कदाचिद् भ्रमविषयत्वेऽप्यात्मनो नानुपपत्तिः, तथापि तत्[2]प्रत्ययाभावे प्रमाणाग्राह्यत्वादसत्ख्यातिग्राह्यत्वेनालीकत्वमस्येत्यभिमानः । तत्रोच्यते- सत्यम्, उक्तप्रत्ययो भ्रान्त एव[3]; तु पुनः, असौ प्रमा[4]रूपोऽहंप्रत्ययः, अन्यः- 'अहं गुरुः' इत्याद्यतिरिक्तः 'अहं जाने, अहं सुखी' इत्यादिरूपः, मतोऽङ्गीकृतः । अथाऽस्य- अहंप्रत्ययजनकोपयोगस्य, व्यभिचारित्वतो भ्रमजनकत्वात्, गमकत्वं प्रमाणत्वं नेति । उच्यते ॥ ८० ॥

**प्रत्यक्षस्यापि तत्त्याज्यं तत्सद्भावाविशेषतः। प्रत्यक्षाभासमन्यच्चेद्व्यभिचारि न साधु तत्॥८१॥**

१ क. 'नासत्त्वाद्' । २ क. 'प्रमाभा' । ३ ख. ग. घ. 'व पु' । ४ ख. ग. घ. च. 'माणरू' ।

तर्हि प्रत्यक्षस्यापि चक्षुरादेरपि, तत्सद्भावाऽविशेषतो भ्रमजनकत्वाविशेषात्, तत् प्रमाणत्वं त्याज्यम्। अथ प्रत्यक्षाभासं द्विचन्द्रादिप्रत्यक्षं, व्यभिचारि विसंवादिव्यवहारजनकम्, अन्यत् सत्यघटादिप्रत्यक्षभिन्नं, तत् साधु प्रमारूपं[1], न। तथा च न भ्रमाजनकत्वलक्षणं प्रामाण्यमभिमतं, किन्तु प्रमाजनकत्वम्; तच्च घटादिप्रमाजननादक्षतमित्याशय इति चेत् ॥ ८१ ॥

**अहंप्रत्ययपक्षेऽपि ननु सर्वमिदं समम्। अतस्तद्वदसौ मुख्यः सम्यक्प्रत्यक्षमिष्यताम् ॥८२॥**

'ननु' इत्याक्षेपे, इदं सर्वं– प्राक्प्रकटितमाकूतम्, अहंप्रत्ययपक्षेऽपि समम्, असत्याहंप्रत्ययपरित्यागेन सत्याहंप्रत्ययमादाय प्रमाणत्वाविरोधात्, दुष्टा-ऽदुष्टकारणजन्यत्वेन प्रत्ययद्वैविध्यात्। अतः प्रमाणग्राह्यत्वाद् नाऽलीकत्वमात्मनः, किन्तु पारमार्थिकत्वमिति व्यञ्जयति। अत उक्तसाम्यात्, तद्वत् सत्यघटप्रत्ययवत्, असौ– 'अहं जाने' इत्यादिप्रत्ययः, मुख्यः सद्व्यवहारजनकः, सम्यक्प्रत्यक्षं प्रत्यक्षप्रमाणरूपः[2], इष्यताम्– अङ्गीक्रियताम् ॥ ८२ ॥

ननु 'अहं जाने' इत्यादिप्रत्ययस्य न भ्रान्तत्वम्, 'अहं गुरुः' इति प्रत्ययस्य च भ्रान्तत्वम्, इत्यत्र किं विनिगमकम्?, इत्यत आह—

**गुर्वी मे तनुरित्यादौ भेदप्रत्ययदर्शनात्। भ्रान्तताभिमतस्यैवास्य[3] युक्ता नेतरस्य तु ॥ ८३॥**

---

१ ख. ग. घ. च. 'माणरू'। २ क. 'मारू'। ३ मूलपुस्तके 'स्यैव सा यु' इति पाठः।

॥ ४४ ॥ गुर्वी गुरुत्ववती, मे मम तनुः, इत्यादौ प्रयोगे भेदप्रत्ययदर्शनात्, अभिमतस्यैव त्वया बाधकत्वेनाऽङ्गीकृतस्यैव, अस्य 'अहं गुरुः' इति प्रत्ययस्य, भ्रान्तता युक्ता, तु पुनः, नेतरस्य– 'अहं जाने' इत्यादिप्रत्ययस्य, तत्र बाधकाऽनवतारात्। अत्र 'षष्ठ्या यद्यपि संबन्धमात्रमर्थः, तथापि तस्या भेदनियतत्वेन शरीरेऽहंत्ववद् भेदस्य शाब्दबोधोत्तरमाक्षेपलभ्यत्वेन गुरुत्वे मद्भिन्नवृत्तित्वेनोक्तप्रत्ययेऽहंत्वव्यधिकरणप्रकारकत्वलक्षणभ्रमत्वग्रहः' इति वदन्ति। 'भेदविशिष्टः संबन्ध एव षष्ठ्यर्थः, राहोः शिर इत्यादौ तु बाधाद् भेदांशस्त्यज्यते' इत्यन्ये। यद्यपि 'ममाऽऽत्मा' इत्यादावपि षष्ठीप्रयोगो दृश्यते, तथापि गुरुत्वादावेवाऽहंत्वव्यधिकरणत्वम्, अन्यत्र क्लृप्तत्वात्, इदंत्वसंवलितत्वाच्च; न तु ज्ञानादावित्यत्र तात्पर्यम्॥ ८३॥

नन्वयमहंप्रत्ययो न प्रत्यक्षरूपः, इन्द्रियत्वेनेन्द्रियजन्यज्ञानस्यैव प्रत्यक्षत्वात्, अत एवाऽऽत्मापि कथं प्रत्यक्षव्यपदेशभाग्, प्रत्यक्षज्ञानविषयतयैव विषयस्य प्रत्यक्षत्वव्यपदेशात्?। स्वातिरिक्तज्ञानं विनाऽप्यपरोक्षत्वेन प्रतिभासनात् प्रत्यक्ष आत्मेति चेत्। किं तत्?, स्वप्रतीतौ व्यापारो वा, चिद्रूपस्य सत्ता वा?। नाऽऽद्यः, कर्मणीव स्वात्मनि व्यापारानुपलम्भात्। न द्वितीयः, स्वतः प्रकाशाऽयोगात्। अत एव न स्वसंविदितज्ञानविषयत्वेनापि तथात्वम्, तदसिद्धेः[1]; सिद्धौ वा प्रमाणान्तरप्रसङ्गात्[2]। अथ सर्वज्ञानानां 'घटमहं जानामि' इत्याद्याकारत्वात् प्रत्यक्षेणैव स्वविषयत्वासिद्धिरिति चेत्। न, तत्र ज्ञाने घटविषयत्वग्रहेऽपि स्वस्य ज्ञानविषयत्वाग्रहात्, स्वस्य स्वाविषयत्वेन स्वविषयत्वाऽविषयत्वात्, अन्यथा 'घटज्ञानज्ञानवान्' इत्याकारप्रसङ्गात्। ॥ ४४ ॥

१ तत्– स्वसंविदितज्ञानं, तस्य। २ 'स्वसंविदितज्ञानस्य' इति शेषः।

किञ्च, 'घटमहं जानामि' इति ज्ञाने क्रियायाः कृतेर्वा समवायित्वलक्षणमात्मनः कर्तृत्वम्, परसमवेतक्रियाफलशालित्वं करणव्यापारविषयत्वं वा विषयस्य कर्मत्वम्, धात्वर्थत्वं कृतिजन्यत्वं वा ज्ञानस्य क्रियात्वमयोग्यत्वाद् न भासत इति न [1]तादृशत्रिपुटीप्रत्यक्षात् स्वसंविदितत्वसिद्धिः, अन्यथा 'घटं चक्षुषा पश्यामि' इति व्यवहारात् करणविषयत्वमपि सिध्येत् । किञ्च, अर्थविषयकत्वेनैव ज्ञानस्य प्रवर्तकत्वम्, न तु स्वविषयत्वेनापि, गौरवात्; तथा च 'अर्थमात्रविषयक एव व्यवसायः' इत्यभ्युपगमः श्रेयान् ।

अपि च, 'अहमिदं जानामि' इत्यत्रेदंत्वविशिष्टज्ञानवैशिष्ट्यमात्मनि भासते । न च स्वप्रकाशे तदुपपत्तिः, ज्ञानस्य पूर्वमज्ञातत्वेन प्रकारत्वानुपपत्तेः । न चाऽभावत्वाभानेऽप्यभावत्वविशिष्टबोधात् तत्र व्यभिचारवारणाय समानवि[2]त्तिवेद्यभिन्नविशेषणज्ञानत्वेन विशिष्टबुद्धौ हेतुत्वाद् न दोष इति वाच्यम्; यद्धि येन विना न भासते तत् तत्समानवित्तिवेद्यम्– तद्ग्रहसामग्रीनियतग्रहसामग्रीकमित्यर्थः । न च ज्ञानाभाने आत्माभानमित्यस्ति, तदभानेऽपि 'अहं सुखी' इति भानस्य सर्वसिद्धत्वात् ।

अपिच, प्रत्यक्षविषयतायामिन्द्रियसंनिकर्षस्य नियामकत्वात् कथं तदनाश्रयस्य स्वस्य प्रत्यक्षत्वम्?, कथं वा प्रत्यक्षाजनकस्य प्रत्यक्षविषयत्वम्, प्रत्यक्षविषयतायास्त[3]ज्जनकत्वव्याप्तत्वात्? । न च संस्कार-स्मृत्याद्युपनीततत्तादौ व्यभिचारः, अनागतगोचरसाक्षात्कारजनकप्रत्यासत्त्यजन्यप्रत्यक्षविषयतायास्त[4]थात्वात्; वस्तुतो लौकिकप्रत्यक्षविषयतायाः प्रत्यक्षजनकत्वव्याप्तत्वात्, तदजनके स्वस्मिँल्लौकिकसाक्षात्कारविषयता न स्यादिति द्रष्टव्यम् । तेनाऽनुपदोक्तनियमे 'विद्यमानत्वसामा-

---

१ तादृशी कर्तृत्व-कर्मत्व-क्रियात्वरूपा त्रिपुटी । २ वित्तिर्ज्ञानम् । ३ तच्छब्दः प्रत्यक्षानुकर्षकः । ४ प्रत्यक्षजनकत्वव्याप्तत्वात् ।

न्यजन्यप्रत्यक्षविषये व्यभिचारवारणायाऽनागतत्वस्थानेऽजनकत्वस्य निवेशावश्यकत्वे प्रत्यासत्त्यादिभागमपहायाऽजनकविषयसाक्षात्कारान्यप्रत्यक्षविषयताया एव प्रत्यक्षजनकत्वव्याप्यत्वकल्पने स्वस्याजनकत्वेन स्वविषयतायां जनकत्वस्याऽनियामकत्वेन स्वविषयता न बाधिता' इत्युक्तावपि न क्षतिः। किञ्च, लौकिकविषयत्वेन लाघवादिन्द्रिययोग्यत्वाज्ज्ञानस्य परिशेषाद् मनोग्राह्यत्वसिद्धौ न स्वप्रकाशत्वम्। किञ्च, एवमनुमित्यादौ सांकर्यात् प्रत्यक्षत्वं जातिर्न स्यात्। न च स्वविषयत्वे ज्ञानानपेक्षत्वं [1]तत्त्वम्, न तु जातिरिति वाच्यम्; एकत्र ज्ञानापेक्षा-ऽनपेक्षयोर्विरोधात्। न च भ्रमे धर्मविषयकत्व-धर्मिविषयकत्वावच्छेदभेदेन दोषापेक्षा-ऽनपेक्षावदनुमित्यादावपि वह्न्यादिविषयकत्व-स्वविषयकत्वावच्छेदभेदेन ज्ञानापेक्षा-ऽनपेक्षोपपत्तिरिति वाच्यम्; दोषापेक्षे भ्रमे [2]तदनपेक्षाऽनभ्युपगमात्, धर्म्यंशे स्वभावादेवाऽभ्रमत्वात्।

किञ्च, ज्ञानजन्यतानवच्छेदकं यत्किञ्चिज्जन्यतावच्छेदकं यद्विषयत्वं, तदवच्छेदेन तस्य प्रत्यक्षत्वम्, इति स्वविषयत्वांशे न तथात्वम्, ज्ञानसामग्र्या ज्ञानत्वस्यैव जन्यतावच्छेदकत्वात्, विशेषसामग्र्यां च तस्याऽतिप्रसक्ततयैवाऽनवच्छेदकत्वात्। न च वित्तेरवश्यवेद्यत्वात् स्वप्रकाशत्वम्, नो चेत्, या वित्तिर्न वेद्यते तदधीनसत्त्वस्य विषयपर्यन्तस्याऽसत्त्वं स्यादिति वाच्यम्; सर्वासां वित्तीनां ज्ञानज्ञानत्वेनाऽवश्यवेद्यत्वात्। परप्रकाशेऽनवस्थानात् स्वप्रकाशसिद्धिरित्यपि न युक्तम्, स्वप्रकाशत्वस्याऽपि परिशेषानुमेयतया तदनुमितिस्वप्रकाशताया अप्यनुमानान्तरलभ्यतयाऽनवस्थासाम्यात्, विषयान्तरसंचारादिना प्रतिबन्धेन [3]तद्भङ्गस्याऽप्युभयत्र साम्यात्। इत्यत आह–

१ प्रत्यक्षत्वम्। २ तस्य दोषस्य। ३ क, 'तद्वन्धस्या'।

आत्मनात्मग्रहोऽप्यत्र तथानुभवसिद्धितः। तस्यैव तत्स्वभावत्वान्न च युक्त्या न युज्यते ॥८४॥

आत्मनाऽऽत्मग्रहोऽपि कर्तृ-कर्म-क्रियागोचरत्वमपि, अत्र प्रकृताहंप्रत्यये, तथानुभवसिद्धितः स्वसंविदितत्वानुभवसिद्ध्या, तस्यैव– आत्मन एव, तत्स्वभावत्वात्– कर्तृत्वादिकिर्मीरितशक्तियोगित्वात्; न च युक्त्या तर्केण, न युज्यते न साध्यते– अपितु साध्यत एवेत्यर्थः।

यथा कथायां प्रविशन् परस्य नैयायिकः कारयति प्रतीक्षाम्।
तथा यथार्थाऽऽगमबद्धबुद्धिर्दास्यामि नाऽस्यापि किमेष शिक्षाम्?॥ १॥

तथाहि– 'जानामि' इति सार्वलौकिकं ज्ञानमेव पूर्वापरज्ञानकल्पनागौरवसहकृतं कर्तृ-कर्म-क्रियावगाहि सत् स्वविषयत्वे प्रमाणम्, 'ज्ञानस्येदं जानामि, इदं ज्ञानं जानामि' इत्युभयाकारत्वात्। एतेन 'स्वविषयत्वे सिद्धे गौरवसहकृतं ज्ञानगोचरताया ग्राहकं प्रत्यक्षं स्वप्रकाशतायां प्रमाणम्, तेन च मानेन तस्य स्वविषयतासिद्धिः, इत्यन्योन्याश्रयः' इत्यपास्तम्; ज्ञानविषयत्वेनाऽनुभूयमानस्य लाघवात् प्राच्यज्ञानैक्यसिद्धौ स्वप्रकाशतासिद्धेः, कालभेदेनोभयानुभवस्य शपथप्रत्यायनीयत्वात्। नन्वेवं घटज्ञानज्ञानाद्यनन्ताकारत्वं स्यादिति चेत्। न, घटज्ञानज्ञानादिविषयताया अपि वस्तुतो घटज्ञानविषयताऽनतिरेकात्, अभिलापभेदस्य विवक्षाधीनत्वात्। तत्र चाश्रयत्वरूपं कर्तृत्वं, विषयत्वरूपं कर्मत्वं, विशेषणत्वरूपं क्रियात्वं च

---

१ किर्मीरितं शबलितम्। २ अस्य नैयायिकस्य, 'स्वसंवेदनवादे' इति शेषः।

योग्यत्वाद् भासते, करणाद्यंशे त्वयोग्यत्वाद् न साक्षात्त्वमिति किमनुपपन्नम् ? । परप्रकाशे च ज्ञानस्य प्रत्यक्षानुपपत्तिः, अनुव्यवसायक्षणे व्यवसायाभावात् । न च ज्ञानत्वनिर्विकल्पकजन्यज्ञानक्षणे व्यवसायस्याऽभावेऽपि पूर्वं तत्सत्त्वात् तदा तत्प्रत्यक्षं, ततो विशेषणज्ञानादात्मनि ज्ञानविशिष्टधीः, विशेषणं च न विशिष्टप्रत्ययहेतुः, तत्तां विनापि तद्बुद्धेः प्रत्यभिज्ञादर्शनादिति वाच्यम्, प्रत्यक्षे विषयस्य स्वसमयवृत्तित्वेनैव हेतुत्वात्, अन्यथा विनश्यदवस्थघट-चक्षुःसंनिकर्षाद् घटनाशक्षणे घटप्रत्यक्षप्रसङ्गात्, ज्ञानस्यातीतत्वेन 'जानामि' इति वर्तमानत्वज्ञानानुपपत्तेश्च । न च वर्तमानत्वेन स्थूल उपाधिर्भासते न तु क्षणः, तस्याऽतीन्द्रियत्वादिति वाच्यम्, संसर्गशब्दादितः क्षणस्याऽपि सुज्ञानत्वात् ।

किञ्च, 'अहं घटज्ञानवान्' इतिवद् 'मयि घटज्ञानम्' इत्यप्यनुभवो नेच्छामात्रेणापह्नोतुं शक्यते; तत्र च व्यवसायस्य विशेष्यस्याऽसत्त्वात् कथं तत्प्रत्यक्षम् ? । एतेन 'ज्ञानत्वनिर्विकल्पकजन्यज्ञाने घटस्याप्युपनीतस्य भानात् तत्र वर्तमानत्वभानं सूपपदम्' इत्युक्तावपि न निस्तारः, व्यवसायप्रत्यक्षानुपपादनात् 'घटं पश्यामि' इति प्रयोगानुपपत्तेश्च । एतेन 'यदि च जात्यतिरिक्तस्य किञ्चिद्धर्मप्रकारेण भाननियमाज्ज्ञानविशिष्टबुद्धौ ज्ञानविशेष्यकज्ञानमेव हेतुः, तदा निर्विकल्पकोत्तरमपि ज्ञानम्, इति ज्ञानग्रहे 'जानामि' इति ज्ञानांशेऽलौकिके प्रत्यक्षं सूपपदम्' इत्यपास्तम्; घटचाक्षुषांशेऽलौकिकात् ततः 'पश्यामि' इत्यप्रयोगात्; 'पश्यामि' इति विलक्षणविषयतयाऽनुव्यवसायविलक्षणविषयतया चाक्षुषस्य नियामकत्वेन तदभावे तदनुपपत्तेः । न च चाक्षुषत्वांशभ्रमजनकदोषाद् निद्रायाम् 'आकाशं पश्यामि' इत्यादाविवोपपत्तिः, 'घटं पश्यामि' इत्यत्र सर्वांशप्रमाया एवाऽनुभवात् । तदिदमुक्तं स्याद्वादरत्नाकरे– 'किञ्च, इन्द्रियजं प्रत्यक्षं संनिकृष्टे विषये प्रवर्तते, अतीतक्षणवर्तिनश्च

ज्ञानस्य मनोलक्षणेन्द्रियसंनिकर्षो न युज्यते, ततः कथं प्राचीनज्ञाने मानसप्रत्यक्षवार्तापि ?' इति । 'व्यवसायनाशक्षणोत्पन्न-व्यवसायान्तरे ज्ञानत्वविशिष्टबुद्धिः' इत्यप्यत एव निरस्तम्, तद्धेतोश्चक्षुःसंनिकर्षादेस्तदानीं नियतसंनिधिकत्वाभावात्, अनुमित्युत्तरज्ञानत्वनिर्विकल्पोत्तरमनुमित्ययोगात्, अन्यत्रानुमितित्वाभावात् 'अनुमिनोमि' इत्यनुपपत्तेः, पूर्वव्यवसायविशेष्यकज्ञानस्य कथमप्यनुपपत्तेश्च । एतेन 'ज्ञानं ज्ञानत्वं च निर्विकल्पके भासते, ततो ज्ञानत्ववैशिष्ट्यं ज्ञाने, ज्ञानवैशिष्ट्यं चात्मनि भासते, इति विशेष्ये विशेषणं, तत्र च विशेषणम्, इति रीत्या ज्ञानप्रत्यक्षत्वम्' इति निरस्तम्; 'ज्ञानं घटीयं नवा ?' इति संदेहेऽपि तद्बुद्धिप्रसङ्गाच्च ।

यत्तु 'ज्ञानं ज्ञानत्वं च विशिष्टज्ञानविषय एव, अनुव्यवसायस्य विषयरूपविशेषणविषयकव्यवसायसाध्यत्वेन विशिष्टज्ञानसामग्रीसत्त्वाज्ज्ञानत्वमपि तत्र भासते, सामग्रीसत्त्वादंशे तत् सप्रकारकं निष्प्रकारकं चेति नरसिंहाकारं तत्रैव विशिष्टं ज्ञानत्ववैशिष्ट्यं च भासते, अनुमित्यादौ च न तथाऽनुव्यवसाये, अनुमितित्वाभावात्' इति, 'वस्तुतस्तु-' इति कृत्वा चिन्तामणिकृतोक्तम्; तदसत्, सार्वत्रिकप्रकारं विना क्वाचित्कप्रकाराभिधानस्य प्रयासमात्रत्वात्, अभावप्रत्यक्षस्य घटत्वाद्यन्यतमविशिष्टविषयकत्वनियमवज्ज्ञानप्रत्यक्षे तन्नियमाभावात्, 'अहं सुखी' इतिवत् 'अहं ज्ञानवान्' इति विषयविनिर्मुक्तप्रतीतेः सार्वजनीनत्वात्, संनिकर्षकार्यतायां विषयान्तर्भावे गौरवात्, ज्ञाने नृसिंहाकारतोपगमे विषयेऽपि तदभ्युपगमौचित्येन स्याद्वादाऽऽपाताच्च ।

नृसिंहाकारज्ञाने ज्ञानत्व-घटत्वप्रकारत्वोभयाश्रयज्ञानवैशिष्ट्याधीनं स्यात्, इति प्रसञ्जनं तु समाहितं मिश्रेण– 'विष-

यनिरूप्यं हि ज्ञानं, न तु विषयपरम्परानिरूप्यम्' इत्यादिना । अधिकाविषयकत्वेऽपि च व्यवसायस्य प्रवृत्तिजनकत्वमविरुद्धम्, इष्टतावच्छेदकप्रवृत्तिविषयवैशिष्ट्यावगाहित्वेन प्रवृत्तिहेतुत्वात् । न चात्र 'प्रमेयम्' इति ज्ञानात् प्रवृत्त्यापत्तिः, इष्टतावच्छेदके तद्भिन्ननिष्ठधर्माऽप्रकारकत्वविशेषणात् । न चेष्टतावच्छेदकप्रकारकज्ञानस्य मुख्यविशेष्यतया प्रवृत्तिहेतुत्वम्; 'तद् रजतम्, इदं द्रव्यम्' इति ज्ञानात् प्रवृत्तिवारणाय प्रवृत्तिविषयविशेष्यकत्वावच्छेदेनेष्टतावच्छेदकप्रकारकत्वस्य वाच्यत्वे इष्टतावच्छेदकविशेष्यकत्वावच्छेदेन प्रवृत्तिविषयप्रकारकत्वेनापि हेतुतायां विनिगमनाविरहात्, उभयबुद्ध्योरुक्तैनैकरूपेण हेतुत्वौचित्यात् ।

यत्तु 'वह्निव्याप्यधूमवत्पर्वतवान् देशः' इति परामर्शात् 'पर्वतो वह्निमान्' इत्यनुमितेरनुदयाद् वह्निव्याप्यधूमत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नमुख्यविशेष्यताकनिश्चयत्वेनाऽनुमितिहेतुत्वात्, स्वप्रकाशनये तु पर्वतस्य ज्ञानविशेष्यत्वात् तदतिरिक्ताविशेष्यतानिरूपितप्रकारतानात्मकत्व-मुख्यत्वनिवेशे गौरवम्' इति । तन्न, स्वप्रकाश्यस्य व्यवसाया-ऽनुव्यवसायोभयाकारत्वेऽप्यविरोधात्, तव ज्ञानमानसादौ वह्नयनुमितिसामग्र्यादिप्रतिबन्धकत्वकल्पने महागौरवात्, घटचाक्षुषे सति चाक्षुषसामग्र्यां सत्यां तदनुव्यवसायानुपपत्तेश्च; तदानीं चक्षुर्मनोयोगादिविषमकल्पनायां मानाभावात्, घटदर्शनोत्तरमाहत्यैव पटदर्शनात्, तदा चक्षुर्मनोयोगान्तरादिकल्पनयाऽतिगौरवात् । न च ममापि स्वविषयकत्वनियामकहेतुकल्पने गौरवम्, आलोकस्य प्रत्यक्षे आलोकान्तरानपेक्षत्ववत् स्वभावत एव ज्ञानस्य स्वसंविदितत्वात् । अस्तु वा स्व-परप्रकाशनशक्तिभेदः, तथापि न गौरवम्, फलमुखत्वात् । ॥ ४७ ॥

१ नैयायिकस्य । २ स्याद्वादवादिनः ।

यच्चोक्तम्– 'ज्ञानस्य पूर्वमनुपस्थितत्वात् कथं प्रकारत्वम्?' इति। तन्न, तस्याऽऽत्मवित्तिवेद्यत्वात्, 'अहं सुखी' इत्यस्यापि 'सुखं साक्षात्करोमि' इत्याकारत्वात्, अनभ्यासादिदोषेण तथाऽनभिलापात्। यदपि 'प्रत्यक्षविषयतायामिन्द्रियसंनिकर्ष एव नियामकः' इत्युक्तम्; तदपि न, अलौकिकप्रत्यक्षविषयतायां व्यभिचारात्। न च लौकिकत्वं विषयताविशेषणम्, दोषविशेषप्रभवप्रत्यक्षविषयतायां व्यभिचारात्, ज्ञाने पराभिमतलौकिकविषयताभावस्येष्टत्वाच्च। 'साक्षात् करोमि' इतिधीनियामकस्पष्टताख्यविषयतायां च संबन्धविशेषेण विषयनिष्ठस्य प्रत्यक्षप्रतिबन्धकज्ञानावरणापगमस्य, शक्तिविशेषस्य वा नियामकत्वमिति न किञ्चिदनुपपन्नम्। अभेदे कथं विषयत्वम्?, इति चेत्। यथा घटाभावे घटाभावविशेषणत्वम्। किं तत्?, इति चेत्। स्वभावविशेष एव। अनिर्वचनात्[1] तदसिद्धिरिति चेत्। न, तस्याऽऽख्यातुमशक्यत्वेऽपि प्रत्याख्यातुमशक्यत्वात्[2][3]।

यत्तु 'स्वव्यवहारशक्तत्वमेव स्वविषयत्वम्' इति। तन्न, आत्मन्यतिप्रसङ्गात्; ज्ञानपददाने चेच्छाद्यनुपसंग्रहात्; शक्तेः पदार्थान्तरत्वेनाऽऽत्माश्रयः, द्वारेऽपि तस्या[4] अनन्यथासिद्धनियतपूर्ववृत्तित्वज्ञानव्यङ्ग्यत्वेनाऽन्योन्याश्रयाच्चेति विभावनीयम्। यदपि 'प्रत्यक्षाजनकस्य प्रत्यक्षाविषयत्वं स्यात्' इत्युक्तम्; तदपीश्वरादिप्रत्यक्षविषये गगनादौ व्यभिचारग्रस्तम्। 'लौकिकविषयत्वेनेन्द्रियग्राह्यत्वाज्ज्ञानस्य न स्वप्रकाशत्वम्' इत्यपि रिक्तमुक्तम्[5], शक्तिविशेषेणैवेन्द्रियग्राह्यत्वात्, लौकिकविषयत्वेनाऽतत्त्वात्[6], तत्त्वस्यैवाऽतीन्द्रिय आपाद्यत्वात्; शक्तिविशेषस्यैव तन्नियामकत्वे तेन रूपेणाऽन्यथासिद्धेश्च। एतेन 'ज्ञानमानसाऽन-

१ तदा स्वभावविशेषपरामर्शः। २ खण्डयितुम्। ३ कार्याद्यन्यथानुपपत्तेस्तत्सिद्धयै सिद्धहस्तत्वादिति भावः। ४ शक्तेः। ५ रिक्तं तुच्छम्। ६ तच्छब्द इन्द्रियग्राह्यानुकर्षकः।

भ्युपगमे धर्मादीनामिव तस्याऽयोग्यत्वाय मानससाक्षात्कारप्रतिबन्धकत्वकल्पने गौरवम्' इति नव्यमतं निरस्तम्। 'अयोग्यत्वस्य प्रतिबन्धकत्वेऽविश्रामात् स्वरूपायोग्यतयैव तत्त्वात्' इति यौक्तिकाः।

यत्तु 'अनुमित्यादौ सांकर्यात् प्रत्यक्षत्वं जातिर्न स्यात्' इत्युक्तम्; तत् तथैव, ज्ञानजन्यतानवच्छेदकतद्विषयकत्वस्यैव प्रत्यक्षत्वात्। तत्त्वं[1] च स्वावच्छिन्नजनकताश्रयज्ञानोपहितवृत्तित्वविशिष्टज्ञानजन्यतावच्छेदकभिन्नत्वम्, अतो न किञ्चिदंशेऽलौकिके वह्निलौकिकप्रत्यक्षे वह्न्यंशेऽप्रत्यक्षत्वम्, वह्निविषयत्वस्य धूमपरामर्शजन्यतावच्छेदकत्वादिति बोध्यम्। ज्ञानजन्यतावच्छेदकत्वोपलक्षितोद्देश्यताविधेयताद्यात्मकतद्विषयतान्यत्वं वा तदर्थः, तेन 'नाऽपूर्वचैत्रत्वादिविशिष्टप्रत्यक्षे तद्विषयताकत्वावच्छिन्नजनकताश्रयज्ञानाप्रसिद्ध्या 'अहमेतत्क्षणवर्तिज्ञानवान्, तत्सामग्रीतः' इत्यनुमितावहंविषयकत्वादिनापि ज्ञानजन्यत्वाच्च तदंशेऽप्रत्यक्षत्वम्' इति वदन्ति। वस्तुतः स्पष्टताख्यविषयतैव प्रत्यक्षत्वम्, अत एव 'पर्वतो वह्निमान्' इत्यत्र पर्वतांशेऽपि स्पष्टतया प्रत्यक्षत्वम्, इति 'वह्निं न साक्षात्करोमि' इतिवत् 'पर्वतं न साक्षात्करोमि' इति न धीः। अत एव च "स्पष्टं प्रत्यक्षम्" (प्रमाणनय० २,१) इति प्रत्यक्षलक्षणं सूत्रितम्, विवेचितं चेदं ज्ञानार्णवे। अतश्च[2] स्वसंविदितस्य प्रमाणान्तरत्वप्रसङ्गोऽप्यपास्तः[3]। न चैवं प्रत्यभिज्ञायास्तत्तांशे, स्मृतिरूपत्वेनेदंतांशे च प्रत्यक्षत्वेनोपपत्तौ स्मृतिपार्थक्येन परोक्षमध्ये परिगणनं विरुध्येतेति वाच्यम्, विलक्षणक्षयोपशमजन्यत्वेन तस्याः[4] पृथक्परिगणनादिति युक्तमुत्पश्यामः। अधिकं न्यायालोके।

१ तदा ज्ञानजन्यतानवच्छेदकतद्विषयकत्वम्। २ स्पष्टत्वस्य प्रत्यक्षलक्षणत्वात्। ३ प्रत्यक्ष एव स्वसंवेदनस्याऽन्तर्भावादित्यर्थः। ४ स्मृतेः।

बोधः स्वार्थावबोधक्षम इह निहताऽज्ञानदोषेण दृष्ट-
स्तस्मादस्माकमन्तर्विरचयति चमत्कारसारं विलासम् ।
येषामेषाऽपि वाणी मनसि न रमते स्वाऽऽग्रहग्रस्ततत्त्वा-
ऽऽलोका लोकास्त एते प्रकृतिशठधियो हन्त ! हन्ताऽनुकम्प्याः ॥ १ ॥ ८४ ॥

नन्वयमहंप्रत्ययो नाऽऽत्मनि साक्षी, नीलादेरिवाऽहंकारस्याऽपि बुद्धिविशेषाकारत्वात्, नीलादि-संविदोर्विवेकादर्शनेन भेदासिद्धेः; कर्मतया भानस्य पूर्वपूर्वभ्रान्तिनिमित्तकत्वात्, बाह्यार्थं विनापि तदाकारस्य रजतादिभ्रम एव दर्शनात् प्रागनुपलम्भेनाऽर्थाभावसिद्धेः, परोपलम्भे मानाभावात्; भावेऽपि स्व-परदृष्टनीलयोः स्व-परसुखादिवदेकत्वासिद्धेः; क्वचिदेव किञ्चिदाकारनियमस्य च स्वप्नावस्थायामिव जागरावस्थायामपि नियतवासनाप्रबोधेन संवेदननियमादुपपत्तेः, इत्याशङ्कायामाह–

न च बुद्धिविशेषोऽयमहंकारः प्रकल्प्यते। दानादिबुद्धिकालेऽपि तथाहंकारवेदनात् ॥८५॥

न चायं– प्रकृतबुद्धिविषयोऽहङ्कारः, बुद्धिविशेषः– अर्थविनिर्मुक्तताहग्बुद्ध्याकाररूपः प्रकल्प्यते । कुतः ?, इत्याह– दानादिबुद्धिकालेऽपि तथा– 'अहं ददामि' इत्यादिप्रतिनियतोल्लेखेन, अहङ्कारवेदनात्– 'अहम्' इत्यनुभवात्; वासनाप्रभवत्वेऽन्यवासनाया अन्याकाराऽजनकत्वेन दानादिवासनाया अहंकारबुद्ध्यनुपपत्तेरित्याशयः । ननु युगपदुभयवासनाप्रबोधादुभ-

१ ख. ग. घ. च. 'स्य जनादि' । २ ख. ग. घ. च. 'पः परिक' ।

याकारोपपत्तिरिति चेत्। कथं तर्ह्यहंकारवासना दानादिवासनाप्रबोधनियतकालीनप्रबोधा, न तु नीलादिवासना? इति वाच्यम्। स्वभावादिति चेत्। न, तथा सति तेन वासनाया अप्यन्यथासिद्धेः। तत्कालस्य नीलादिवासनाऽनुद्बोधकत्वादिति चेत्। न, तत्काल एवाऽन्येषां तदुद्बोधात्। तदीयतद्वासनोद्बोधे तत्कालो न हेतुरिति चेत्। गतं तर्हि वासनया, तत्कालेनैव तदाकारप्रतिनियमात्। तस्मात् तत्तदर्थसंनिधानेनैव क्षयोपशमरूपा तत्तज्ज्ञानजननी वासना प्रबोध्यते; इत्यहङ्कारस्यार्थविषयत्वमकामेनापि प्रतिपत्तव्यम्। एतेन 'अहंत्वाद्याकारस्याऽप्यलीकत्वमेव, एकस्य विज्ञानस्य नानाकारभेदायोगात्; तदुक्तम्–

"किं स्यात् सा चित्रतैकस्यां न स्यात् तस्यां मतावपि। यदीयं[3] स्वयमर्थानां रोचते तत्र के वयम्? ॥१॥"

इति माध्यमिकोक्तमप्यपास्तम्, स्वरूपानुभवलक्षणाऽर्थक्रियया ज्ञानस्येव तदाकारस्य, अर्थचित्रताधीनाया ज्ञानचित्रतायाश्च सिद्धेरिति। अधिकमग्रे विवेचयिष्यते ॥ ८५ ॥

ननु यद्येवं स्वतः प्रकाश एवाऽऽत्मा, तदा सदा किं न कर्तृ-क्रियाभावेन प्रकाशते?, इत्यत आह–

**आत्मनात्मग्रहे तस्य तत्स्वभावत्वयोगतः। सदैवाग्रहणं ह्येवं विज्ञेयं कर्मदोषतः॥ ८६॥**

आत्मना– ज्ञानेन, आत्मनो ज्ञातुर्ग्रहणे– ज्ञप्तिक्रियायां, तस्य– आत्मनः, तत्स्वभावत्वयोगतः– तादृशज्ञानजननशक्तिसमन्वि- ॥ ४९ ॥

---

१ स्वभावाङ्गीकारे। २ गतं सृतम्, अलमिति यावत्। ३ ख. ग. च. 'दीदं स्व'।

तत्वात्, 'उपपाद्यमानायाम्' इति शेषः, हि निश्चितम्, एवम्- 'अहं जाने' इत्याद्युल्लेखेन, सदैव सुषुप्त्यादावपि, अग्रहणम्-अप्रतिसंधानम्, कर्मदोषतः- तथाप्रतिबन्धकज्ञानावरणसाम्राज्यात्, ज्ञेयम्।

नन्वेवं त्यज्यतां स्वप्रकाशाऽऽग्रहः, इन्द्रियाद्यभावादेव तदाऽग्रहणोपपत्तेः। न च सुषुप्त्यनुकूलमनःक्रिययाऽऽत्म-मनःसंयोगनाशकाले उत्पन्नेन सुषुप्तिसमकालोत्पत्तिकमनोयोगसहकृतेन परामर्शेन सुषुप्तिद्वितीयक्षणेऽनुमित्युत्पत्तिरिति वाच्यम्; तत्काले परामर्शोत्पत्तौ मानाभावात्, तत्सामग्रीभूतव्याप्तिस्मृत्यादेः फलैककल्प्यत्वात्। अथ तत्काले आत्मादिमानसोत्पत्तिः। न च विशेषगुणोपधानेनैवाऽऽत्मनो भानमिति वाच्यम्; सविषयकप्रकारकात्ममानसत्वस्य मनोयोगादिजन्यतावच्छेदकत्वे गौरवात्। न च त्वङ्-मनोयोगा[1]भावात् तदनापत्तिः, [2]तस्य जन्यज्ञानत्वावच्छिन्नेऽहेतुत्वात्, अन्यथा रासनाद्युत्पत्तिकाले त्वाचोत्पत्तेः। मानसत्वावच्छिन्नं प्रति तद्धेतुत्वे च त्वाचत्वावच्छिन्नं प्रति पृथक्कारणत्वे गौरवादिति चेत्। न, सुषुप्तौ जीवनयोनियत्नानभ्युपगमेन विजातीयमनःसंयोगस्यैवाऽभावात्। न च त्वक्क्रियया त्वङ्-मनःसंयोगनाशे पुरीतत्क्रियया पुरीतद्-मनःसंयोगरूपसुषुप्त्युत्पत्तौ प्राक्तनाऽऽत्म-मनःसंयोगनाशाभावात् तदा ज्ञानोत्पत्त्यापत्तिरिति वाच्यम्; सर्वत्र मनःक्रिययैव सुषुप्तिस्वीकारात्। तदुक्तम्-'यदा मनस्त्वचं परिहृत्य' इत्यादि; इति चेत्। न, चेष्टाहेतुजीवनयोनियत्नस्य तदाऽवश्यं सत्त्वात्, नाड्यादिक्रिययाऽपि सुषुप्तिसंभवात् 'यदा मनः' इत्याद्यभिधानस्य प्रायिकत्वात्, मनोयोगनिष्ठवैजात्यावच्छिन्नहेतोरदृष्टातिरिक्तस्याऽदर्शनात्, रसना-मनःसंयोगदशायां त्वङ्-मनःसंयोगस्याऽप्यावश्यकत्वात्। तदा त्वाचप्रतिबन्धकस्याऽदृष्टस्य स्वीकारे चाक्षुषादिसामग्रीकाले मान-

१ ख. ग. घ. च. 'गात् तदभावाना'। २ त्वङ्-मनोयोगस्य।

सानुत्पत्त्यर्थमप्येतत्प्रतिबन्धकादृष्टकल्पनात् सुषुप्तौ तेनैव ज्ञानानुत्पत्तिप्रतिबन्धोपगमौचित्याच्च । किञ्च, ज्ञानज्ञानादौ विषयान्तरसंचारस्य प्रतिबन्धकत्वकल्पने गौरवात्, ज्ञानस्येन्द्रियाऽग्राह्यत्वकल्पनात्, स्वसंविदित-तत्प्रतिबन्धकदोषकल्पनागौरवमपि फलमुखत्वाद् न बाधकमिति दिग् ॥ ८६ ॥

उपसंहरन्नाह–

**अतः प्रत्यक्षसंसिद्धः सर्वप्राणभृतामयम् । स्वयंज्योतिः सदैवात्मा तथा वेदेऽपि पठ्यते ॥८७॥**

अतः– अहंप्रत्ययस्याऽभ्रान्तत्वात्, अयम्– आत्मा, सर्वप्राणभृतां प्रत्यक्षसंसिद्धः– प्रत्यक्षप्रमाणविषयः । न केवलमिदमनुभवगर्भया युक्त्यैव ब्रूमः, किन्तु परेषामागमोऽप्यत्रार्थे साक्षी; इत्याह– तथा– अनुभवानुसारेण, वेदेऽपि आत्मा सदैव स्वयंज्योतिः– स्वसंविदितज्ञानाभिन्नः, पठयते– "आत्मज्योतिरेवाऽयं पुरुषः" इति। एतेन वेदप्रामाण्याभ्युपगन्तॄणां ज्ञानपरोक्षत्ववादिनां मीमांसकानां मतमपहस्तितम्, अपरोक्षत्वे ज्ञानस्यैवाऽसिद्धेः । न च ज्ञाततालिङ्गेन तदनुमानम्[1], तस्या[2] एवाऽसिद्धेः । न च घटादेः कर्मत्वान्यथानुपपत्त्या तत्सिद्धिः, क्रियाजन्यफलशालित्वं हि तत्[3], न च घटे ज्ञानजन्यमन्यत् फलमस्तीति वाच्यम्, एवं सति 'इष्टो घटः, कृतो घटः' इत्यादिप्रतीतेरिष्टता-कृततादेरपि सिद्धिप्रसङ्गात् ।

किञ्च, 'अतीतो घटो ज्ञातः' इत्यादौ तदसंभवः; न ह्यतीते घटे ज्ञाततोत्पत्तिसंभवः, समवायि कारणं विना भावका-

१ तच्छब्देन ज्ञानं गृह्यते । २ तस्या ज्ञाततायाः । ३ तत्– कर्मत्वम् ।

र्यानुत्पत्तेः । न च तत्र[1] ज्ञातताभ्रम एव, बाधकाभावात् । तत्र[1] स्वरूपसंबन्ध एव ज्ञाततेति चेत् । विद्यमाने[2]ऽपि स[3] एवाऽस्तु । त्वया[4]ऽपि ज्ञानेन ज्ञातत्तानियमार्थमवश्यं तस्य[3] स्वीकर्तव्यत्वात्, समवायेन ज्ञाततायां विषयतया ज्ञानस्य हेतुत्वात्; कर्मत्वमपि विद्यमाने घटेऽतीतघट इव गौणमेवेति ।

अस्तु वा ज्ञातता, तथापि न तया ज्ञानानुमानसंभवः, ज्ञातताया विषयनिष्ठत्वात्, ज्ञानस्य चाऽऽत्मनिष्ठत्वात् । अथ समवायेन घटप्रत्यक्षं संबन्धविशेषेण घटप्राकट्यं स्वसमानाधिकरणं जनयति, इति तेन तदनुमानम्[5]; अत एव तदीयप्राकट्यस्य नाऽन्येन ज्ञानम्, विषयतया तदीयप्राकट्यप्रत्यक्षे तादात्म्येन तदीयप्राकट्यस्य हेतुत्वादिति चेत् । न, तथाऽप्यनुमित्यादेरसिद्ध्यापत्तेः, परोक्षज्ञानेऽप्राकट्यस्यापि पदार्थान्तरस्य स्वीकारापत्तेश्च । न च प्रवृत्त्यादिना तदनुमानम्[5], लिङ्गाऽननुगमस्याऽदोषत्वादिति वाच्यम्, प्रवृत्त्यादेरिव ज्ञानस्य प्रत्यक्षत्वे बाधकाभावात्; बाह्यार्थवत् कर्मत्वानवभासस्य क्रियात्वेनाऽनुवेधादुपपत्तेः; इति किमप्रस्तुतेन ? ।

आत्मसिद्धेः परं शोकाल्लोकाः ! लोकायताऽऽननम् ।
समालोकामहे म्लानं तत्र नो कारणं वयम् ॥ १ ॥ ८७ ॥

॥ इति चार्वाकमतनिरासः ॥

---

१ तत्र-- अतीते घटे । २ घटविशेषणमिदम् । ३ तदा स्वरूपसंबन्धः । ४ मीमांसकेन । ५ ज्ञानानुमानम् ।

॥ ५१ ॥

अत्रैव प्रसङ्गेन वार्तान्तरमाह—

अत्रापि वर्णयन्त्येके सौगताः कृतबुद्धयः । क्लिष्टं मनोऽस्ति यन्नित्यं तद्यथोक्तात्मलक्षणम् ८८

अत्रापि– आत्मसिद्धावपि, कृतबुद्धयः– चार्वाकापेक्षया परिष्कृतधियः, एके सौगता वर्णयन्ति । किम् ?, इत्याह– क्लिष्टं– क्लेशविशिष्टं न तु बाह्याकारं, यद् नित्यं मनोऽस्ति, तद् यथोक्ताऽऽत्मलक्षणम्– अहंप्रत्ययालम्बनाऽऽत्मव्यपदेशभाक् ॥८८॥

अत्र नित्यत्वं तद्भावेनाऽव्ययत्वम्, क्षणविशरारुपरिणामप्रवाहपतितत्वं वा; इति विकल्प्य दूषयति–

यदि नित्यं तदात्मैव संज्ञाभेदोऽत्र केवलम् । अथानित्यं ततश्चेदं न यथोक्तात्मलक्षणम् ॥८९॥

यदि त्वदभ्युपेतं मनो नित्यं– तद्भावेनाऽव्ययम्, तदाऽऽत्मैव तत्; अत्र– अस्मिन् वादे, केवलं संज्ञाभेदः– न त्वर्थभेदः । अथाऽनित्यम्– द्रव्यतयाऽपि नश्वरम्, 'तदा' इति प्राक्तनमनुषज्यते, ततश्च– अनित्यत्वाच्च, इदं मनः, न यथोक्तात्मलक्षणम्– युक्त्या-ऽऽगमाभ्यां यादृशमात्मनो लक्षणं सिद्धं तद्वद् नेत्यर्थः ॥ ८९ ॥

आत्मलक्षणमेवाह–

यः कर्ता कर्मभेदानां भोक्ता कर्मफलस्य च । संसर्ता परिनिर्वाता स ह्यात्मा नान्यलक्षणः ॥९०॥ ॥ ५१ ॥

१ विशृणाति तच्छीलो विशरारुर्विनाशीत्यर्थः । २ त्वच्छब्दस्तथागततनयावाचकः ।

यः कर्मभेदानां ज्ञानावरणादीनां, कर्ता; कर्मफलस्य सुख-दुःखादेश्च, भोक्ता; तथा, संसर्ता– स्वकृतकर्मानुरूपनरकादिगतिगामी; तथा, परिनिर्वाता– कर्मक्षयकारी; हि– निश्चितम्, स आत्मा; नाऽन्यलक्षणः– पराभिमतकूटस्थादिरूपः। कर्तृत्वादिकं च नानित्यस्योपपद्यते, कार्यसमये नश्यतो हेतोः कार्याजनकत्वात्; अन्यथा कालान्तरेऽपि कार्योत्पत्तेः प्रसङ्गात्, इति न त्वदुक्तं[1] मन एवाऽऽत्मा, किन्त्वन्य एव विज्ञानघनः शाश्वत इति सिद्धम् ॥ ९० ॥

नित्यत्वे कथमस्य वैचित्र्यम् ?, इत्यत आह–

**आत्मत्वेनाविशिष्टस्य वैचित्र्यं तस्य यद्वशात्। नरादिरूपं तच्चित्रमदृष्टं कर्मसंज्ञितम्॥९१॥**

आत्मत्वेनाऽविशिष्टस्य– एकजातीयस्य, तस्य– आत्मनः, नरादिरूपं वैचित्र्यं वैलक्षण्यम्, यद्वशात्– यस्माद्धेतोः, तच्चित्रं कार्यवैचित्र्यानिर्वाहकविचित्रशक्तिकलितम्, कर्मसंज्ञितं– कर्मापरनामकम्, अदृष्टं सिध्यति। न च नरत्वादिवैचित्र्यं नरगत्याद्यर्जकक्रिययैव प्राग्भवीययोपपाद्यताम्, किमन्तर्गडुनाऽदृष्टेन ? इति वाच्यम्; व्यवहितहेतोः फलपर्यन्तव्यापारव्याप्यत्वावधारणात्। तदिदमुक्तं न्यायाचार्यैरपि– "चिरध्वस्तं फलायाऽलं न कर्माऽतिशयं विना[2]" इति। अथ नरादिशरीरवैचित्र्यं तदुपादानवैचित्र्यादेव, भोगवैचित्र्यं च शरीरवैचित्र्यात्, शरीरसंयोगश्चाकाशादाविवाऽऽत्मन्यपि, इत्यदृष्टं क्वोपयुज्यताम् ?, इति चेत्।

---

१ सौगतोक्तम्। २ कुसुमाञ्जलौ प्रथमस्तबके कारिका ९।

न, शरीरसंयोगस्याऽऽकाशादावपि सत्त्वेन तत्रापि भोगापत्तेः । उपष्टम्भकसंयोगेन शरीरस्य भोगानियामकत्वे तु तादृशसंयोग-प्रयोजकतयैवाऽदृष्टसिद्धेः ॥ ९१ ॥ 

अपरथाऽपि कार्यवैचित्र्यमाह—

**तथा तुल्येऽपि चारम्भे सदुपायेऽपि यो नृणाम् । फलभेदः, स युक्तो न युक्त्या हेत्वन्तरं विना ।**

तथा, तुल्येऽपि च– समानेऽपि च, आरम्भे– कृष्यादिप्रयत्ने, सदुपायेऽपि– अकुण्ठितशक्तिकतदितरयावत्कारणसहितेऽपि, नृणां– चैत्र-मैत्रादीनाम् , फलभेदः धान्यसंपत्ति-असंपत्तिरूपः, स्वल्प-बहुधान्यसंपत्तिरूपो वा यः, स युक्त्या 'विचार्यमाणः' इति शेषः, हेत्वन्तरम्– क्लृप्तकारणाऽतिरिक्तकारणं, विना न युक्तः । अथाऽऽद्यप्रवृत्तावविषम्येऽप्युत्तरकालं सामग्रीवैषम्यादेव कार्यवैषम्यमिति चेत् । न, सामग्रीवैषम्यस्यापि हेत्वन्तराधीनत्वात् ।

अथवा, समानेऽप्यारम्भे– एकजातीयदुग्धपानादौ, यः फलभेदः– पुरुषभेदेन सुख-दुःखादितारतम्यलक्षणः, स हेत्वन्तरं विना– अतिरिक्तहेतुतारतम्यं विना, न युक्त इत्यर्थः । न चाऽत्रापि क्वचिद् दुग्धादेः कर्कट्यादिवत् पित्तादिरसोद्बोधादुपपत्तिः, सर्वत्र तदापत्तेः । न च भेजषवत् तथा, ततः साक्षात् सुखादितौल्यात् , धातुवैषम्यादेरुत्तरकालत्वात्; पित्तादिरसोद्बोध्यधातुवैषम्यादिविरहितदुग्धपानत्वादिना सुखादिहेतुत्वे गौरवात् , अदृष्टप्रयोज्यजातिव्याप्यजात्यवच्छिन्नं प्रत्येव दुग्धपानादेर्हेतुत्वौचित्याच्चेति दिग् ॥ ९२ ॥ 

इदमेवाऽभिप्रेत्याह—

तस्मादवश्यमेष्टव्यमत्र हेत्वन्तरं परैः । तदेवादृष्टमित्याहुरन्ये शास्त्रकृतश्रमाः ॥ ९३ ॥

तस्मात्- तुल्येऽप्यारम्भे फलभेददर्शनात्, अत्र फलभेदनिमित्तं, परैश्चार्वाकैः, हेत्वन्तरमवश्यमेष्टव्यम्- अनायत्या नियमेनाऽङ्गीकार्यम् । तदेव हेत्वन्तरम्, शास्त्रकृतश्रमाः- अध्ययन-भावनाभ्यां गृहीतशास्त्रतात्पर्याः, अन्ये- आस्तिकाः, अदृष्ट-माहुः । तथा चाह भगवान् भाष्यकारः-

"[1]जो तुल्लसाहणाणं फले विसेसो, न सो विणा हेउं । कज्जत्तणओ गोयम ! घडो व्व, हेऊ अ से कम्मं[2] ॥१॥" इति ॥९३॥

पराकृतमाशङ्क्य निराकुरुते—

भूतानां तत्स्वभावत्वादयमित्यप्यनुत्तरम् । न भूतात्मक एवात्मेत्येतदत्र निदर्शितम्॥९४॥

भूतानां राजादिपरिणतभूतानाम्, तत्स्वभावत्वात्- विचित्रभोगहेतुस्वभावत्वात्, अयं- फलभेदः, इत्यपि- चार्वाकोक्तम्, अनुत्तरम्- उत्तराभासः । कुतः ?, इत्याह- 'यतः' इति शेषः, 'भूतात्मक एवात्मा न' इत्येतत्, अत्र- पूर्वप्रघट्टके, निदर्शितं- व्यवस्थापितम्; आत्मस्वभावभेदश्चाऽदृष्टाधीन इति भावः ॥ ९४ ॥

---

१ यस्तुल्यसाधनानां फले विशेषः, न स विना हेतुम् । कार्यत्वतो गौतम ! घट इव हेतुश्च तस्य कर्म ॥ १ ॥

२ विशेषावश्यकभाष्ये द्वितीयस्मिन् गणधरवादे गाथा ८ ।

भूतपदस्याऽगृहीतविशेषस्योपादाने उत्तरमेव वैतत्, इति स्वाभिप्रायादाह—

**कर्मणो भौतिकत्वेन यद्वैतदपि सांप्रतम्। आत्मनो व्यतिरिक्तं तच्चित्रभावं यतो मतम्॥९५॥**

कर्मणः– अदृष्टस्य, भौतिकत्वेन– पौद्गलिकत्वेन, एतदपि– 'भूतानां तत्स्वभावत्वात् फलभेदः' इत्युत्तरमपि, 'यद्वा' इति प्रकारान्तरे, सांप्रतं– समीचीनम्।

नन्विदमसंगताभिधानम्, 'भोगनिर्वाहकस्याऽऽत्मधर्मस्यैवाऽदृष्टस्य कल्पनात्, तदुक्तम्– "संभोगो निर्विशेषाणां न भूतैः संस्कृतैरपि[1]" इति। तथा, चित्रस्वभावत्वमप्यदृष्टस्याऽनुपपन्नम्, तद्वैजात्ये मानाभावात्; तत्सत्त्वे कर्मणां विशिष्याऽदृष्टहेतुत्वे गौरवाच्च। न च कीर्तननाश्यतावच्छेदकतया तत्सिद्धिः, तत्र दृष्टत्वस्य स्वाश्रयजन्यताविशेषसंबन्धेनाऽश्वमेधत्वादिघटितस्य वा तथात्वात्; अन्यथा 'मयाऽश्वमेध-वाजपेयौ कृतौ, मया वाजपेय-ज्योतिष्टोमौ कृतौ' इत्यादिकीर्तननाश्यतावच्छेदकजातिसिद्धौ सांकर्यस्यापि संभवात्। अस्तु वा तत्कीर्तनाभावविशिष्टतत्तत्कर्मत्वेन हेतुत्वम्, अतो न समूहालम्बनहरिगङ्गास्मरणजन्याऽपूर्वस्य गङ्गास्मृतिकीर्तनाद् नाशे हरिस्मृतेरपि फलानापत्तिः, तज्जन्यापूर्वयोरेकस्य नाशेऽप्यपरस्य सत्त्वे गङ्गास्मृतेरपि वा फलापत्तिः' इति नैयायिकमतसाम्राज्यात्; इत्यत आह–

यद्– यस्माद्धेतोः, तत्– कर्म, आत्मनो व्यतिरिक्तं– भिन्नद्रव्यतया व्यवस्थितम्; तथा, चित्रभावं– फलवैचित्र्यनिर्वा-



1 कुसुमाञ्जलौ प्रथमस्तबके कारिका ९।

हकवैचित्र्यशालि, मतम्– अङ्गीकृतम्, 'पारगतागमवेदिभिः[1]' इति शेषः। 'तत्र पौद्गलिकत्वे इदमनुमानम्– अदृष्टं पौद्गलिकम्, आत्मानुग्रहो-पघातनिमित्तत्वात्, शरीरवत्। न चाऽप्रयोजकत्वम्, 'कार्यैकार्थप्रत्यासत्त्या तस्य सुखादिहेतुत्वे त्वन्नीत्या[2]ऽसमवायिकारणत्वप्रसङ्गात्' इति वदन्ति। वस्तुतो धर्मा-ऽधर्मयोर्मानसप्रतिबन्धकत्वादिकल्पनापेक्षया नात्मधर्मत्वमेव कल्पनीयम्, इत्यादिकं ज्ञानार्णवेऽनुसंधेयम्। तद्वैचित्र्यमपि बन्धहेतुत्ववैचित्र्येऽपि संक्रमकरणादिकृतं परिणतप्रवचनानां सुज्ञानमेव। परेषामपि कीर्तनादिनाश्यतावच्छेदकं वैजात्यमावश्यकमेव, अश्वमेध[3]-वाजपेयादिघटितस्य गुरुत्वात्, सुखवैजात्यघटितेनाऽविनिगमाच्च; समूहालम्बनकीर्तनाच्चोभयोरेव वैजात्यावच्छिन्नयोर्नाशः; अन्यथा प्रत्येकनाश्य[4]नाशप्रसङ्गात्, तत्र किञ्चित्प्रतिबन्धकादिकल्पने गौरवाच्च। इति किमिहाऽप्रकृतपरगृहविचारप्रपञ्चेन ? ॥ ९५ ॥

अत्रैवाऽन्येषां वार्तान्तरमाह—

**शक्तिरूपं तदन्ये तु सूरयः संप्रचक्षते। अन्ये तु वासनारूपं विचित्रफलदं तथा ॥ ९६ ॥**

तत्– अदृष्टम्, अन्ये तु सूरयः शक्तिरूपं– कर्तुः शक्त्यात्मकम्, संप्रचक्षते– व्यावर्णयन्ति। तु– पुनः, तेभ्योऽप्यन्ये वासनारूपं तत्, विचित्रफलदं– नानाविधफलजनकं, तथा– उक्तवत्, संप्रचक्षते ॥ ९६ ॥

तत्र प्राच्यपक्षदूषणप्रकारं वृद्धप्रवादेनाह—

---

१ पारगतो भगवानर्हन्। २ क. 'त्वभीत्या'। ३ क. ख. ग. 'मेधादि'। ४ ख. 'नाश'।

अन्ये त्वभिदधत्यत्र स्वरूपनियतस्य वै। कर्तुर्विनान्यसंबन्धं शक्तिराकस्मिकी कुतः?॥९७॥

अन्ये तु—प्रावचनिकाः, अत्र विचारे, एवमभिदधति। किम्?, इत्याह— वै— निश्चितम्, स्वरूपेणाऽऽत्मत्वेन नियतस्याविशिष्टस्य कर्तुः, अन्यसंबन्धम्— आत्मातिरिक्तहेतुसंबन्धं विना, शक्तिराकस्मिकी— अकस्मादुत्पत्तिका सती, कुतः—कथं भवेत्?— न कथञ्चिदित्यर्थः। 'शक्तिर्यद्यात्ममात्राऽजन्यत्वे सति तदतिरिक्ताऽसाधारणकारणजन्या न स्यात्, जन्या न स्यात्' इत्यापादनं बोध्यम्॥ ९७॥

अत्र विशेषासिद्धिमाक्षिप्य परिहरति—

तत्क्रियायोगतः सा चेत्तदपुष्टौ न युज्यते। तदन्ययोगाभावे च पुष्टिरस्य कथं भवेत्?९८

तस्याऽऽत्मनः क्रिया सुपात्रदानादिका तस्या योगतः संबन्धात्, सा शक्तिः; तथा चात्मातिरिक्ताऽसाधारणकारणजन्यत्वमेव, इति चेत्। तस्याऽऽत्मनोऽपुष्टौ सत्यनुपचये सति, न युज्यते 'क्रियाजन्या शक्तिः' इति शेषः, यथा मृदः पुष्टावेव घटादिजनिका शक्तिर्भवति, तथाऽऽत्मनोऽपि पुष्टावेव सुखादिजनिका शक्तिः स्यात्, न त्वन्यथेति भावः। अस्तु तर्हि पुष्टिः, इत्यत आह— तया क्रिययाऽन्येषां कर्माणूनां योगाभावे बन्धविरहे, अस्य— आत्मनः, पुष्टिः— उपष्टम्भकाणुसंवेधरूपा, कथं भवेत्?। एवं च पुष्टिहेतुतया कर्मसिद्धिरावश्यकीत्याशयः। यद्यपि पुष्टिरन्यत्र स्थौल्य एवोपयुज्यते, तथापि क्रियया न हेतुशक्त्याधानम्, हेतुमात्रे तत्प्रसङ्गात्; आत्मन्येव तदाधाने तु कर्मण एव नामान्तरं तदित्यभिप्रायः॥ ९८॥

अस्तु तर्हि अजन्यैवाऽदृष्टरूपा शक्तिः, इत्यनूद्याह—

**अस्त्येव सा सदा किन्तु क्रियया व्यज्यते परम्। आत्ममात्रस्थितताया न तस्या व्यक्तिः कदाचन**

सा– अदृष्टरूपा शक्तिः, सदाऽस्त्येव; किन्तु परं– केवलम्, क्रियया–सुपात्रदानादिकया, व्यज्यते– फलप्रदानयोग्या क्रियते, 'न तु जन्यते' इति 'परम्' इत्यनेन स्पष्टीक्रियते। नैवं वाच्यम्, यत आत्ममात्रस्थिततायाः– अनावृतैकस्वरूपव्यवस्थिततायाः, तस्याः शक्तेः, न- नैव, व्यक्तिः– आवरणनिवृत्तिरूपा, कदाचन जातुचित् ॥ ९९ ॥

कथम्?, इत्याह—

**तदन्यावरणाभावाद् भावे वास्यैव कर्मता। तन्निराकरणाद् व्यक्तिरिति तद्भेदसंस्थितिः १००**

तस्याः शक्तेरन्यस्याऽऽवरणस्याभावात्– अनावृतायाः शक्तेरावरणमेव नास्ति, किं तर्हि क्रियया तत्र निवर्तनीयम्, सतो नित्यनिवृत्तत्वात्?। तथा च का नामाऽऽवरणनिवृत्तिरूपा व्यक्तिस्तत्र क्रियया क्रियताम्? इत्याशयः। अथ यदि शाश्वत्यास्तस्याः शक्तेः कार्यान्तरं प्रत्यनावृतत्वेऽपि प्रकृतफलप्रदानाभिमुख्याभावात् तत्राऽऽवृतत्वम्, इत्यर्धजरतीयं स्वीक्रियते। तदाप्याह– भावे वा– तदन्यावरणाङ्गीकारे वा, अस्यैव– आवरणत्वेनाऽङ्गीकृतस्यैव, कर्मता; यतस्तस्याऽऽवरणस्य निराकरणात्, व्यक्तिः शक्तेः, इति तयोः शक्त्या ऽऽत्मनोः सकाशाद् भेदसंस्थितिः– भेदमर्यादा 'अस्ति' इत्यनुषज्यते। एवं चान्य आत्मा,

---

१ क. 'तेऽपीति'।

यत्र सा शक्तिः; अन्या च शक्तिः, या क्रिययाऽभिव्यज्यते; अन्यच्च कर्म, यदावरणरूपं तदा नश्यति ; इति त्रयसिद्धावपि कर्मणो नाऽसिद्धिरित्यभ्युच्चयः; शाश्वतशक्तेरात्माऽनतिरेकाच्च द्वयमेव वा पर्यवस्यति । वस्तुतः सा शक्तिर्यदि तदैव क्रियया-ऽभिव्यज्यते, तदा तदैव स्वर्गोत्पत्तिः स्यात्; यदि च क्रियाजन्यावरणध्वंससहकृता कालन्तर एव सा फलजननी स्वीक्रियते, तदा किमेतावत्कुसृष्ट्या, तज्जन्यधर्मस्यैव स्वविपाककाले फलजनकत्वौचित्यात् ? इति स्मर्तव्यम् ॥ १०० ॥

इदमेवाह—

**पापं तद्भिन्नमेवास्तु क्रियान्तरनिबन्धनम् । एवमिष्टक्रियाजन्यं पुण्यं किमिति नेष्यते? ॥ १०१ ॥**

तत्- आवारकत्वेनाऽभिमतं क्रियान्तरजन्यमशुभक्रियानिमित्तकं, पापं, भिन्नमेव- शक्त्यतिरिक्तमेव, अस्तु । इति चेत् । एवम्- अशुभक्रियाजन्यपापवत् , इष्टक्रियाजन्यं विहितक्रियानिमित्तकं, पुण्यं, किमिति- कुतो हेतोः, नेष्यते, एकैका-भावेनैकान्यथासिद्धावविनिगमात् ? इति भावः ॥ १०१ ॥

'वासनैवाऽदृष्टम्' इति द्वितीयपक्षं निराकर्तुमाह-

**वासनाऽप्यन्यसंबन्धं विना नैवोपपद्यते । पुष्पादिगन्धवैकल्ये तिलादौ नेष्यते[2] यतः ॥ १०२ ॥**

---

१ आत्म-शक्ति-क्रियारूपं त्रयम् । २ 'नेक्ष्यते' इति मौलपुस्तकः पाठः, ज्यायांश्च ।

वासनाऽप्यन्यसंबन्धं विना– वास्यातिरिक्तयोगं विना, नैवोपपद्यते । कुतः ?, इत्याह– पुष्पादिगन्धवैकल्ये यतस्तिलादौ वासना नेष्यते । एवं च वासना वास्यातिरिक्तसंबन्धजन्येति नियमः सिद्धः ॥ १०२ ॥

ततः किम् ?, इत्याह—

**बोधमात्रातिरिक्तं तद्वासकं किञ्चिदिष्यताम् । मुख्यं तदेव वः कर्म न युक्ता वासनान्यथा ॥ १०३ ॥**

बोधमात्रातिरिक्तम्– वास्यज्ञानभिन्नम्, तत् तस्मात्, नियमात् किञ्चिद् वासकमिष्यताम्, तदेव– इष्यमाणम्, वः– युष्माकं, मुख्यं– वस्तुसत्, कर्माऽस्तु । अन्यथा– परमार्थसदतिरिक्तकर्माऽस्वीकारे, वासना न युक्ता । न ह्यसत्ख्यात्युपनीतादृष्टभेदाग्रहाज्ज्ञानवासनेत्यभ्युपगमः प्रामाणिकः, तैलादिगन्धेषु पुष्पादिगन्धभेदाग्रहेऽपि तद्वासनापत्तेः । न च तैलादिवासनाविलक्षणैव ज्ञानवासनोक्तस्वरूपा, अतो नानुपपत्तिरिति वाच्यम्; तथापि ज्ञानेऽदृष्टभेदग्रहाद् वासनानिवृत्त्येदानीं मुक्तिप्रसङ्गात् । औत्तरकालिकभेदाग्रहप्रयोजकदोषसत्त्वाद् नेदानीं तन्निवृत्तिरिति चेत् । तर्हि दोषाभावविशिष्टभेदग्रहाभावो वासनेति फलितम्, दोषश्च तत्र वासनैवेत्यात्माश्रयः । किञ्च, एतादृशवासनापेक्षयाऽवश्यकल्पनीयाऽदृष्ट एवाप्रामाणिकत्वकल्पनापेक्षया प्रामाणिकत्वकल्पनमुचितमिति परिभावनीयम् ॥ १०३ ॥

इदमेवाभिप्रेत्याह—

**बोधमात्रस्य तद्भावे नास्ति ज्ञानमवासितम् । ततो मुक्तिः सदैव स्याद्वैशिष्ट्यं केवलस्य न ॥**

बोधमात्रस्य- अविशिष्टज्ञानस्य, तद्भावे- वासनात्वे 'अङ्गीक्रियमाणे' इति शेषः, ज्ञानमवासितं नास्ति, सर्वस्यैव ज्ञानस्य वासनारूपत्वात् । ततः सदैवावासितज्ञानसद्भावाद् मुक्तिः स्यात् । अथ विशिष्टं ज्ञानं वासना स्वीकरिष्यते, इत्यत्राह- केवलस्य- अविशेषितज्ञानस्य, वैशिष्ट्यं नः विशेषकस्वीकारे चोक्तवत् तदेवाऽदृष्टमिति भावः । अथ क्षणिकतत्तज्ज्ञान१प्रवाहरूपा वासना, अतो नानुपपत्तिरिति चेत् । न, त्वदीयज्ञानेन बुद्धस्यापि वासनापत्तेः । एकसंतानगामित्वेन विशेषाद् नानुपपत्तिरिति चेत् । न, क्षणपरम्परातिरिक्तसंतानस्वीकारे द्रव्याभ्युपगमप्रसङ्गात्, अन्यथा चातिप्रसङ्गापरिहारादिति स्फुटीभविष्यत्यग्रे ॥ १०४ ॥

उपसंहरन्नाह—

**एवं शक्त्यादिपक्षोऽयं घटते नोपपत्तितः। बन्धाद् न्यूनातिरिक्तत्वे तद्भावानुपपत्तितः॥ १०५॥**

एवं- उक्तदिशा, अयं प्रागुपन्यस्तः, शक्त्यादिपक्षः- शक्ति-वासनयोरदृष्टप्रवादः, उपपत्तितः- युक्तेः, न घटते । उपपत्तिश्च प्रतिस्वं प्रागुक्तैव । तामेव साधारणीकृत्याह- बन्धात् सकाशात्, न्यूनत्वे- किञ्चिद्बन्धवदवृत्तित्वे, अतिरिक्तत्वे च- बन्धाभाववद्वृत्तित्वे सति, तद्भावानुपपत्तितः- अप्रसङ्गा-ऽतिप्रसङ्गाभ्यां बध्य-बन्धनीयभावाऽव्यवस्थाप्रसङ्गाद्धेतोः । शब्दभङ्ग्या प्रागुक्तदोषस्मारणमात्रमेतदिति ध्येयम् ॥ १०५ ॥

ततः किम् ?, इत्याह—



१ त्वदीयं सुगतशिष्यसंबन्धि । २ सुगतस्य ।

तस्मात् तदात्मनो भिन्नं सच्चित्रं चात्मयोगि च। अदृष्टमवगन्तव्यं तस्य शक्त्यादिसाधकम्॥

तस्मात्– उक्तहेतोः, तत्– नरादिवैचित्र्यप्रयोजकम्, आत्मनः सकाशात्, भिन्नं– पृथग् द्रव्यभूतं न त्वात्मगुणरूपम्, सत्– पारमार्थिकं न तु कल्पनोपारूढम्, चित्रं– नानास्वभावं न त्वेकजातीयम्, आत्मयोगि– आत्मप्रदेशेषु क्षीर-नीरन्यायेनाऽनुप्रविष्टं, न त्वात्मनः कूटस्थात् पृथगेव विवर्तमानम्, सर्पकञ्चुकवदुपर्येव वा वर्तमानम्। चः समुच्चये। तेन प्रवाहतोऽनादित्वादि समुच्चीयते। तस्य आत्मनः, शक्त्यादेः पराभिमतशक्त्यादिपक्षस्य साधकं निर्वाहकम्, अदृष्टं– कर्म, अवगन्तव्यं– सूक्ष्मदृशा पर्यालोचनीयम्।

अत्रोच्छृङ्खला नैयायिकाः– 'अस्तु तत्तत्क्रियाध्वंस एव व्यापारः, किमपूर्वेण?। न चैवं क्रियायाः प्रतिबन्धकत्वव्यवहारापत्तिः, संसर्गाभावत्वादिना कारणीभूताऽभावप्रतियोगित्वेनैव तद्व्यवहारात्। न चैवं संस्कारोऽप्युच्छिद्येत, अनुभवध्वंसेनैवोपपत्तेः, उद्बोधकानां विशिष्य स्मृतिहेतुत्वेनाऽनतिप्रसङ्गादिति वाच्यम्; इष्टत्वात्। न चैवं प्रायश्चित्तितादिकर्मणोऽपि फलापत्तिः, प्रायश्चित्ताद्यभाववत्कर्मत्वेन कारणत्वात्। न चैवं दत्तादत्तफलोद्देश्यकप्रायश्चित्ते कृते प्रतियोगिनि तत्प्रायश्चित्तस्य निवेशे दत्तफलादपि फलं न स्यात्, अनिवेशे चादत्तफलादपि फलं स्यादिति वाच्यम्; अदत्तफलनिष्ठोद्देश्यतया तद्भावस्य वाच्यत्वात्। एतेन '[1]प्रायश्चित्तं न नरकादिप्रतिबन्धकम्, आशुविनाशित्वेन तदुत्पत्त्यवारकत्वात्। नापि तद्ध्वंसः, प्रायश्चित्तान-

१ तदा नरकादिपरामर्शः।

न्तरकृतगोवधादितोऽपि नरकानुत्पत्त्यापत्तेः । न च तत्तत्प्रायश्चित्तप्राग्वर्तिगोवधादिजन्यनरके तत्तत्प्रायश्चित्तध्वंसः, तथा प्राग्जन्मकृतगोवधादितोऽपि नरकानुत्पत्त्यापत्तेः । 'तज्जन्मकृत-'इतिप्राग्वर्तिगोवधविशेषणे त्वप्रसिद्धिः' इत्यपास्तम् । न चाऽपूर्वाऽस्वीकारेऽङ्गप्रधानव्यवस्थानुपपत्तिः, प्रधानकथंताप्रवृत्तिविधिविधेयत्वादिनाऽङ्गत्वस्य सुवचत्वात्' इत्याहुः ।

तदसत् , तत्क्रियोद्देशेनाऽन्यप्रायश्चित्ते कृतेऽपि फलानापत्तेः । तत्तत्प्रायश्चित्ताभावनिवेशात् तत्तत्प्रायश्चित्तविशिष्टाऽदत्तफलध्वंसातिरिक्तध्वंसस्य व्यापारत्वाद् वा नानुपपत्तिरिति चेत् । तथापि तत्त्वज्ञानिक्रियया भोगापत्तिः । तद्ध्वंसातिरिक्तत्वमपि निवेशनीयमिति चेत् । तथापि ध्वंसस्याऽनन्तत्वेन भोगानन्तत्वापत्तिः । चरमभोगानन्तरं व्यापारसत्त्वेऽपि प्रागभावाभावादेव न फलोत्पत्तिरिति चेत् । तर्हि प्रायश्चित्तस्थलेऽपि प्रागभावाभावादेव भोगानुत्पत्तिरिति किं तदभावादिनिवेशेन ?। प्रायश्चित्तविधिसामर्थ्ये तु विजातीयप्रायश्चित्तानां विजातीयाऽदृष्टनाशकत्वमेवोचितम् , आगमाऽसंकोचात् , लाघवाच्च । एतेन चरमभोगप्रागभावविशिष्टोक्तध्वंसाधारतासंबन्धेन क्रियाहेतुत्वमप्यपास्तम् , विशेष्यविशेषणभावे विनिगमनाविरहाच्च । किञ्च, तत्क्रियाणां तत्तत्प्रायश्चित्तोद्देश्यत्वमपि तत्तत्क्रियाजन्यकर्मनाशेच्छाविषयतयैव सुष्ठु निर्वहति, नान्यथा, इत्यतोऽप्यदृष्टसिद्धिः ।

किञ्च, प्राग्जन्मकृतानां नानाकर्मणां न योगोद्देश्यत्वमस्ति, न च ततस्तज्जन्यफलम् , इति योगरूपप्रायश्चित्तस्याऽदृष्टनाशकत्वं विना न निर्वाहः । न च योगात् कार्यव्यूहद्वारा भोग एवेति सांप्रतम् , नानाविधानन्तशरीराणामेकदाऽसंभवादिति । स्पष्टं न्यायालोके । न च योगस्य प्रायश्चित्तत्वस्वीकारे भवतामपसिद्धान्त इति वाच्यम् ; "[२]सव्वा वि य



१ क. 'त्वसि' । २ सर्वाऽपि च प्रव्रज्या प्रायश्चित्तं भवान्तरकृतानां पापानाम् , कर्मणाम् ।

पव्वज्जा पायच्छित्तं भवंतरकडाणं, पावाणं कम्माणं" इति ग्रन्थकृतैवाऽन्यत्रोक्तत्वात् । अपि च, कर्मक्षयार्थितयैव मोक्षोपाये प्रवृत्तिर्न्याय्या, न तु दुःखध्वंसार्थितया, दुःखध्वंसस्य पुरुषप्रयत्नं विनैव भावात् । इत्यपि विवेचितं न्यायालोके । इत्यतोऽपि कर्मसिद्धिः । अपि च, लोकस्थितिरपि कर्माधीनैव, अन्यथा ज्योतिश्चक्रादेर्गुरुत्वादिना पातादिप्रसङ्गात् । न चेश्वराधीनैव, तस्य निरस्यत्वात् । इति किमतिविस्तरेण ? ।

मरीचिरुच्चैः समुदञ्चतीयं जैनोक्तभानोर्यदद्दष्टसिद्धिः ।
निमील्य नेत्रे तदसौ वराकश्चार्वाकघूकः श्रयतां दिगन्तम् ॥ १ ॥ १०६ ॥

॥ इत्थं सिद्धमदृष्टम् ॥

अथास्यैव दर्शनपरिभाषाजनितान् व्यञ्जनपर्यायानाह—

**अदृष्टं कर्म संस्कारः[2] पुण्यापुण्ये शुभाशुभे[3]। धर्माधर्मौ तथा पाशः[4] पर्यायास्तस्य कीर्तिताः१०७**

'अदृष्टम्' इति वैशेषिकाः । 'कर्म' इति जैनाः । 'संस्कारः' इति सौगताः । 'पुण्या-ऽपुण्ये' इति वेदवादिनः । 'शुभा-ऽशुभे' इति गणकाः । 'धर्मा-ऽधर्मौ' इति सांख्याः । 'पाशः' इति शैवाः । एवमेते तस्य– अदृष्टस्य, पर्यायाः– व्यञ्जनपर्यायाः,

१ क. 'पज्जत्ता पा' । २ क.ख.ग.घ.च 'स्काराः पु' । ३ क,ख.ग.घ.च 'शुभौ' । ४ क,ख.ग,घ.च 'पाशाः प' ।

कीर्तिताः । समानप्रवृत्तिनिमित्तकत्वघटितपर्यायत्वं तु न सर्वत्रेति बोध्यम् ॥ १०७ ॥

कथमनेनाऽऽत्मा संयुज्यते ?, इत्याह—

**हेतवोऽस्य समाख्याताः पूर्वं हिंसानृतादयः । तद्वान् संयुज्यते तेन विचित्रफलदायिना ॥ १०८ ॥**

अस्य- कर्मणः, पूर्वं- "[1]हिंसानृतादयः पञ्च" इत्यादिनिरूपणकाले, हिंसा-ऽनृतादयो हेतवः समाख्याताः; तद्वान् तत्क्रियाध्यवसायपरिणतः, विचित्रफलदायिना तेन- कर्मणा, संयुज्यते- अन्योन्यसंबन्धेन बध्यते ॥ १०८ ॥

उक्तेषु वादेषु कः श्रेयान् ?, इति विवेचयति—

**नैवं दृष्टेष्टबाधा यत्सिद्धिश्चास्याऽनिवारिता । तदेनमेव विद्वांसस्तत्त्ववादं प्रचक्षते ॥ १०९ ॥**

एवम्- आत्मनः कर्मसंयोगे स्वीक्रियमाणे, न दृष्टेष्टबाधा- अमूर्तस्यापि मूर्तेन सहाऽऽकाशादौ संयोगस्य दर्शनात्, अमूर्तस्यापि ज्ञानस्य ब्राह्मी-घृतोपभोग-मद्यपानादिनाऽनुग्रहो-पघातयोरिष्टत्वाच्च; सिद्धिश्चाऽस्य- कर्मणः, उक्तदिशाऽनिवारिता- प्रतितर्काऽबाधितप्रसरा । तत्- तस्मात् कारणात्, एनमेव- प्रकृतवादमेव, विद्वांसः- मध्यस्थगीतार्थाः, तत्त्ववादं- प्रामाणिकाभ्युपगमं, प्रचक्षते ॥ १०९ ॥



[1] प्रकृतस्तबके श्लो० ४ ।

एवकारफलमेवाह—

**लोकायतमतं प्राज्ञैर्ज्ञेयं पापौघकारणम् । इत्थं तत्त्वविलोमं यत्तद् न ज्ञानविवर्धनम् ॥११०॥**

लोकायतमतं– नास्तिकदर्शनम्, प्राज्ञैः– सूक्ष्मेक्षिभिः, पापौघस्य क्लिष्टकर्मसमूहस्य, कारणं ज्ञेयम् । कुतः ?, इत्याह– यत्– यस्माद्धेतोः, इत्थम्– उक्तप्रकारेण, तत्त्वविलोमं– यथार्थपदार्थज्ञानप्रतिकूलम्, तथा, अज्ञानविवर्धनम्– क्लिष्टवासनासंततिहेतुः ॥ ११० ॥

अत्र द्रव्यासत्यत्वमपि नास्ति, इति परोक्तैतदुत्पत्तिप्रकारदूषणच्छलेनाह—

**इन्द्रप्रतारणायेदं चक्रे किल बृहस्पतिः । अदोऽपि युक्तिशून्यं यन्नेत्थमिन्द्रः प्रतार्यते ॥१११॥**

इन्द्रप्रतारणाय– वृत्रदानवव्यापादनार्थं हिंसादिभीतस्येन्द्रस्य धर्माद्यभावभ्रममाधाय लोकसुखार्थं प्रेरणाय, इदं– लोकायतमतम्, 'किल' इति सत्ये, बृहस्पतिः– सुरगुरुः, चक्रे । अदोऽपि– एतदपि वचनम्, युक्तिशून्यम्– अविचारितरमणीयम् । कुतः ?, इत्याह– यत्– यस्मात्, इत्थम्– अनेन बृहस्पत्युक्तप्रकारेण, इन्द्रो न प्रतार्यते, दिव्यदृष्टित्वात् तस्येति भावः ॥ १११ ॥

उपसंहरन्नाह–

तस्माद्दुष्टाशयकरं क्लिष्टसत्त्वविचिन्तितम्। पापश्रुतं सदा धीरैर्वर्ज्यं नास्तिकदर्शनम्॥११२॥



तस्मात्– सर्वथैवाऽसत्यत्वात्, दुष्टाशयकरं– परलोकाद्यभावसाधनेन विषयेच्छामात्रपर्यवसायिचित्ताध्यवसायनिबन्धनम्; तथा, क्लिष्टसत्त्वैरचिन्तिताऽऽमुष्मिकाऽपायैरैहिकसुख एवाऽत्यन्तं गृद्धैर्विचिन्तितम्– स्वेच्छया प्रकटीकृतम्। अत एव पापश्रुतम्– श्रूयमाणमप्यनुषङ्गतः पापनिबन्धनं, धीरैः– ज्ञानवृद्धैः, नास्तिकदर्शनं सदा वर्ज्यं– ज्ञात्वा परिहरणीयम्; न त्वत्राग्रे वक्ष्यमाणेषु वार्तान्तरेष्विव द्रव्यासत्यत्वाशङ्कापि विधेया, अन्यथा तामेव च्छलमुपलभ्य प्रकृतिदुष्टा विषयपिपासापिशाची छलयेदिति भावः॥ ११२॥

युक्तिर्मुक्तिप्रसरहरणी नास्ति का नास्तिकानां
सर्वा गर्वात् किमु न दलिता सा नयैरास्तिकानाम्?।
ध्वस्तालोका किमु न जगति ध्वान्तधारा बत स्यात्
किं नोच्छेत्री रविकरततिर्दुःसहोदेति तस्याः?॥ १॥

वार्तामिमामत्र निशम्य सम्यक् त्यक्त्वा रसं नास्तिकदर्शनेषु।
ऐकान्तिका-ऽऽत्यन्तिकशर्महेतुं श्रयन्तु वादं परमार्हतानाम्॥ २॥

१ अपायो दुःखम्। २ द्रव्यासत्यत्वाशङ्काम्।

इति पण्डितश्रीपद्मविजयसोदरन्यायविशारदपण्डितयशोविजयविरचितायां स्याद्वादकल्पलताभिधानायां शास्त्रवार्तासमुच्चयटीकायां प्रथमः स्तबकः ।

अभिप्रायः सूरेरिह हि गहनो दर्शनतति-
निरस्या दुर्धर्षा निजमतसमाधानविधिना ।
तथाप्यन्तः श्रीमन्नयविजयविज्ञाङ्घ्रिभजने
न भग्ना चेद् भक्तिर्न नियतमसाध्यं किमपि मे ॥ १ ॥
यस्याऽऽसन् गुरवोऽत्र जीतविजयप्राज्ञाः प्रकृष्टाशया
भ्राजन्ते सनया नयादिविजयप्राज्ञाश्च विद्याप्रदाः ।
प्रेम्णां यस्य च सद्म पद्मविजयो जातः सुधीः सोदर-
स्तेन न्यायविशारदेन रचिते ग्रन्थे मतीर्दीयताम् ॥ २ ॥

१ क. 'तानाम्न्यां शा' ।

॥ अर्हम् ॥

# अथ द्वितीयः स्तबकः ।

अ[1]प्रतीपाय दीपाय सतामान्तरचक्षुषे । नमः स्याद्वादितन्त्राय स्वतन्त्राय [2]विवस्वते ॥ १ ॥

वार्तान्तरमाह—

**हिंसादिभ्योऽशुभं कर्म तदन्येभ्यश्च तच्छुभम् । जायते नियमो मानात् कुतोऽयमिति चापरे ॥ १ ॥**

हिंसादिभ्यः– अविरत्यादिहेतुभ्यः, अशुभं– पापं, कर्म भवति । तदन्येभ्यश्च– विरत्यादिहेतुभ्यः, शुभं– पुण्यं, तत्– कर्म, भवति । अयं नियमः– प्रतिनियतहेतु-हेतुमद्भावनिश्चयः, कुतः– कस्मात्, मानात्– प्रमाणात् ?; इति चाऽपरे संदिहाना वादिनः प्राहुः । अव्युत्पन्नानां चेयमाशङ्का धर्मा-ऽधर्मपदवाच्यत्वावच्छिन्नधर्मिताका, अन्यथा धर्मिग्राहकमानेनोक्तनियमोपरक्त-योरेव धर्मा-धर्मयोः सिद्धावीदृशशङ्काऽनुदयादिति ध्येयम् ॥ १ ॥

---

१ क. 'तीताय' । २ भास्वते ।

इदमेवाभिप्रेत्य व्युत्पत्तिपुरस्कारेणैव समाधानवार्तामाह—

**आगमाख्यात्तदन्ये तु तच्च दृष्टाद्यबाधितम् । सर्वार्थविषयं नित्यं व्यक्तार्थं परमात्मना ॥२॥**

तदन्ये तु– असंदिहानास्तत्त्ववादिनः, आगमाख्याद् मानात्, 'नियमं ब्रुवते' इति वाक्यशेषः । कथमेतदत्र मानम् ?, इत्यत आह– तच्च– आगमाख्यं, दृष्टाद्यबाधितं– दृष्टे-ष्टाभ्यामविरुद्धम्; एतेन 'पयसा सिञ्चति' इत्यादेरिव बाधितत्वनिरासः । तथापि स्वाविषये प्रकृतनियमे कथं तद् मानम् ?, इत्यत आह– सर्वार्थविषयं– यावदभिलाप्यभावविषयम्; प्रज्ञापनीयभावानामनन्तभागस्य श्रुतनिबद्धत्वेऽपि तदभ्यन्तरभूतया मत्याऽनिबद्धानामपि तेषां ग्रहणश्रवणाद् नानुपपन्नमेतत् । कृत्रिमत्वात् कथमीदृशमेतत् ?, इत्यत आह– नित्यं– प्रवाहापेक्षयाऽनादि-निधनम्, भरतादौ विच्छेदकालेऽपि महाविदेहेऽविच्छेदात् । तथाप्यनाप्तोक्तत्वादनीदृशमेतत्, इत्याह– परमात्मना– क्षीणदोषेण भगवता, व्यक्तार्थं– प्रतिपादितार्थम् ॥ २ ॥

नन्विदं स्वगृहवार्तामात्रम्, अप्रत्यक्षे पापादौ तत्प्रामाण्यग्राहकमानाभावात्; इत्याशङ्कायामाह—

**चन्द्रसूर्योपरागादेस्ततः संवाददर्शनात् । तस्याप्रत्यक्षेऽपि पापादौ न प्रामाण्यं न युज्यते॥३॥**

ततः– तद्बोधितात्, चन्द्र-सूर्योपरागादेरर्थात्– तमाश्रित्य, इति ल्यब्लोपे पञ्चमी; संवाददर्शनात्– अविसंवादिप्रवृत्तिजनकत्वनिश्चयात्, तस्य– शब्दस्य, अप्रत्यक्षेऽपि– श्रोत्रऽप्रत्यक्षेऽपि, पापादौ, प्रामाण्यं– तद्वद्विशेष्यकत्वे सति तत्प्रकारकज्ञानजनकत्वम्, न युज्यत इति न– न निश्चीयत इति न, किन्तु निश्चीयत एवेत्यर्थः ॥ ३ ॥

पराभिप्रायमाह—

**यदि नाम क्वचिद् दृष्टः संवादोऽन्यत्र वस्तुनि। तद्भावस्तस्य तत्त्वं वा कथं समवसीयते?॥४॥**

यदि नाम क्वचित्– चन्द्रोपरागादावर्थे, संवादो दृष्टः; तदा तदभिधायकवाक्यस्य[1] प्रामाण्यं सिध्यतु। अन्यत्र– पापादौ वस्तुनि, तद्भावः– संवादभावः, तस्य पापाद्यभिधायकवाक्यस्य, तत्त्वं वा– प्रमाणत्वं वा, कथं समवसीयते ?। प्रामाण्यव्याप्यसंवादित्वग्रहाभावात् पापाद्यभिधायकवाक्ये प्रामाण्यनिश्चयो दुर्घट इति समुदायार्थः॥ ४॥

अत्र समाधानमाह—

**आगमैकत्वतस्तच्च वाक्यादेस्तुल्यतादिना। सुवृद्धसंप्रदायेन तथा पापक्षयेण च॥ ५॥**

आगमैकत्वतः– दृष्टा-ऽदृष्टसंवाद्यागमयोरेकत्वात्, 'तस्य[2] तथात्वं[3] समवसीयते' इति योजना; संवादित्ववत् संवादिजातीयत्वस्यापि प्रामाण्यव्याप्यत्वात्। अत एव जलादिज्ञाने दृष्टसंवादजातीयत्वेन[4] प्रागेव प्रामाण्यनिश्चयाद् निष्कम्पा प्रवृत्तिर्घटत इति भावः। आगमैकत्वमेव कथम् ?, इत्याह– तच्च– आगमैकत्वं च, वाक्यादेः– वाक्य-पदगाम्भीर्यादेः, तुल्यतादिना समवसीयते। नन्विदमयुक्तम्, आगमानुकारेण पठ्यमानेऽन्यत्रापि तत्तुल्यतासत्त्वात्; अनन्तार्थत्वादेश्च दुर्ग्रहत्वात्; इत्यत

१ ख. ग. घ. च. 'क्यप्रा'। २ पापाद्यभिधायकवाक्यस्य। ३ तथात्वं– प्रमाणत्वम्। ४ ख. ग. घ. च. 'न प्रामा'।

आह— सुवृद्धसंप्रदायेन— ज्ञान-चरणसंपन्नगुरुपरम्परया । नन्वियमपि मिथोविवादाक्रान्ता, सुवृद्धत्वप्रमापकहेत्वन्तरानुसरणे च तदेवाऽऽगमैकत्वग्राहकमस्तु; इत्यत आह— तथा पापक्षयेण च— सम्यक्त्वप्रतिबन्धककर्मक्षयोपशमेन च । 'अयं हि सर्वत्र यथावस्थिततत्वग्रहे मुख्यो हेतुः, लब्धीन्द्रियरूपतदभिव्यञ्जकतयैवाऽन्योपयोगात्, तदभिव्यक्तिव्यापारकतयैव 'तथा' इत्यनेन हेत्वन्तरसमुच्चयात्' इति वदन्ति ॥ ५ ॥

विपर्यये बाधकमाह—

**अन्यथा वस्तुतत्त्वस्य परीक्षैव न युज्यते । आशङ्का सर्वगा यस्माच्छद्मस्थस्योपजायते॥६॥**

अन्यथा— उक्तरीत्या संशयाविच्छेदे, वस्तुतत्त्वस्य परीक्षैव— सदसद्विचार एव, न युज्यते; यस्माद् हेतोः, छद्मस्थस्य— अक्षीणज्ञानावरणीयस्य, सर्वगा— सर्वार्थविषयिणी, आशङ्का जायते ॥ ६ ॥

अस्तु तर्ह्यपरीक्षैव, इत्यत आह—

**अपरीक्षापि नो युक्ता गुण-दोषाविवेकतः । महत्संकटमायातमाशङ्के न्यायवादिनः ॥७॥**

अपरीक्षापि— अविचारोऽपि, नो—नैव, युक्ता । कस्मात्?, इत्याह— गुण-दोषाविवेकतः—निष्कम्पप्रवृत्ति-निवृत्तिप्रयोजकानिश्चयात् । तस्मात् परीक्षा-ऽपरीक्षोभयायोगात्, न्यायवादिनः तार्किकस्य, महत् संकटमायातमित्याशङ्के । एतेन 'वक्त्रधी-



१ सुवृद्धत्वप्रमापकहेत्वन्तरम् ।

नत्वाच्छाब्दस्याऽप्रामाण्यम्' इत्यपि निरस्तम्, गुणवद्वक्तृकत्वेन तस्य प्रामाण्यव्यवस्थितेः । अत एव 'अनुमानादस्य विशेषः, शाब्दप्रमायां वक्तृयथार्थवाक्यार्थज्ञानस्य गुणत्वात्, इति गुणवद्वक्तृप्रयुक्तशब्दप्रभवत्वादेव शाब्दमनुमानज्ञानाद् विशिष्यते' इति वदतां सम्मतिटीकाकृतामाशयः ।

अत्रेदमवधेयम्– एते पदार्थास्तात्पर्यविषयमिथःसंसर्गवन्तः, आकाङ्क्षादिमत्पदस्मारितत्वात् 'दण्डेन गामभ्याज' इति पदस्मारितपदार्थवत्, इति न शाब्दस्थलीयानुमानशरीरम्, अनाप्तोक्तपदस्मारिते व्यभिचारात् । आप्तोक्तत्वेन विशेषणीयो हेतुरिति चेत् । न, आप्तत्वस्य पूर्वं दुर्ग्रहत्वात् । अत एव योग्यताया हेतुप्रवेशेऽपि न निर्वाहः, एकपदार्थेऽपरपदार्थवत्त्वरूपाया-स्तस्याः प्रागनिश्चयात् । निश्चये वा सिद्धसाधनात् । आकाङ्क्षापि समभिव्याहृतपदस्मारितार्थजिज्ञासारूपा स्वरूपसत्येव हेतुः, न तु ज्ञाता । योग्यतासहिताऽऽसत्तिरपि न नियामिका, 'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम्' इत्यत्र 'राज्ञः पुरुषः' इति भागे व्यभिचारात् । एतेन 'एतानि पदानि तात्पर्यविषयस्मारितपदार्थसंसर्गप्रमापूर्वकाणि, आकाङ्क्षादिमत्पदत्वात्, इत्यनुमानशरीरे उक्तयोग्यताया हेतुविशेषणेऽपि न सिद्धसाधनम्' इत्युक्तावपि न निस्तारः ।

अथ तात्पर्यरूपाऽऽकाङ्क्षा हेतुप्रविष्टेति न व्यभिचारः । न च कर्मत्वादौ घटादिसंसर्गसिद्धावपि कर्मत्वादौ निरूपित-त्वसंबन्धेन घटादिप्रकारकबोधो न जात इति वाच्यम्, कर्मत्वादिकं घटादिमत्, घटाकाङ्क्षादिमत्पदस्मारितत्वात्,

१ अतः प्रभृति 'संभवात्' इति पर्यन्तः पूर्वपक्षः ।

इत्यनुमानस्याऽपि संभवात्; इति चेत्। न, अनुमानाद् नियतबोधानुपपत्तेः। शाब्दात्मकविलक्षणानुमितौ व्युत्पत्तेरपि तन्त्रत्वाद् न दोष इति चेत्। न, व्युत्पत्तेः पदस्य शाब्दहेतुत्वगर्भत्वात्।

किञ्च, एवं प्रत्यक्षादिना सिद्धावपि विनैवेच्छां शाब्दबोधानुदयः स्यात्। न च पक्षताया लिङ्गभेदभिन्नत्वेन तत्तल्लिङ्गकानुमितौ तदहेतुत्वादेव नानुपपत्तिरिति वाच्यम्; तथाप्यन्विता-ऽन्वयवारणाय तल्लिङ्गकतदनुमितौ तल्लिङ्गकतदनुमित्यभावस्य हेतुत्वापेक्षया घटपदजन्यशाब्दबोधे घटपदजन्यशाब्दबोधस्यैव प्रतिबन्धकत्वे लाघवात्, अतिरिक्तशाब्दासिद्धेः। एवं पदजन्यविशिष्टवैशिष्ट्यबोधे पदजन्यविशेषणतावच्छेदकप्रकारकज्ञानहेतुत्वादिनापि तत्सिद्धिः।

अपि च, घटात् पृथगित्यन्वये शाब्दसमानाकाराऽनुमितिर्दुर्घटा, पृथक्त्वपक्षकानुमितावतद्वतोऽभानापत्तेः, तद्वतः पक्षत्वे च तत्रैव पञ्चम्यर्थभानापत्तेः। वस्तुतः 'नानुमिनोमि, किन्तु शाब्दयामि' इति विषयताविशेषसिद्ध्या शाब्दस्यातिरेकः। न च शाब्दा-ऽनुमितिसामग्रीसमाहारे युगपदुभयोत्पत्तिवारणायैकसामग्र्याऽपरत्र प्रतिबन्धकत्वकल्पने गौरवम्; वह्न्यादेरशाब्दानुमितेः, अपरस्य शाब्दानुमितेश्चैकदोत्पत्तिवारणाय तवापि शाब्दानुमितेः शाब्देतरानुमितिप्रतिबन्धकत्वकल्पनावश्यकत्वात्; इत्यन्यत्र विस्तरः ॥ ७ ॥

निगमयन्नाह—

**तस्माद्यथोदितात्सम्यगागमाख्यात्प्रमाणतः। हिंसादिभ्योऽशुभादीनि नियमोऽयं व्यवस्थितः** ॥ ६३ ॥

तस्मात्– उक्तोपपत्तेः, यथोदितात्– पृथक् प्रमाणत्वेन व्यवस्थापितात्, सम्यगागमाख्यात्– आप्तोक्तशब्दाभिधानात्, प्रमाणतः, हिंसादिभ्यः– हिंसा-ऽहिंसादिभ्यः, शुभादीनि– पाप-पुण्यादीनि, बहुवचनाद् दुःख-सुखादिसंग्रहः; अयं नियमः– नियतहेतु-हेतुमद्भावः, व्यवस्थितः– सिद्धः ॥ ८ ॥

एतदेव भावयन्नाह—

**क्लिष्टाद्धिंसाद्यनुष्ठानात्प्राप्तिः क्लिष्टस्य कर्मणः। यथाऽपथ्यभुजो व्याधेरक्लिष्टस्य विपर्ययात्॥**

क्लिष्टात्– संक्लेशबहुलात्, हिंसाद्यनुष्ठानात्, क्लिष्टस्य– ज्ञानावरणादिप्रकृतिकस्य, कर्मणः प्राप्तिर्भवति; यथा– अपथ्य-भुजः– विरुद्धभोजिनो रोगिणः, व्याधेः– रोगस्य प्राप्तिः। तथा, विपर्ययात्– अक्लिष्टाऽहिंसाद्यनुष्ठानात्, अक्लिष्टस्य– सात-वेदनीयादिशुभप्रकृतिकस्य कर्मणः, प्राप्तिर्भवति; यथा– पथ्यभोजिनो व्याधिविगमात् सुखस्य प्राप्तिरिति ॥ ९ ॥

आगमाद् नियममुक्त्वा स्वभावात् तं व्यवस्थापयितुमाह—

**स्वभाव एष जीवस्य यत्तथापरिणामभाक्। बध्यते पुण्य-पापाभ्यां माध्यस्थ्यात्तु विमुच्यते॥१०॥**

एष जीवस्य– चेतनस्य, स्वभावो यत् तथापरिणामभाक्– हिंसादिपरिणतः, पुण्य-पापाभ्यां बध्यते; माध्यस्थ्यात्तु– वैराग्यात्तु, विमुच्यते– क्षीणकर्मा भवति। इत्थं चैतदप्यवश्यमङ्गीकर्तव्यम्, अन्यथा 'दण्डादेरेव घटादिजनकत्वम्, न वेमादेः' इति कुतः?' इति प्रश्ने किमुत्तरमभिधानीयमायुष्मता?। न च प्रश्नस्यैवानुपपत्तिः, 'पर्वते वह्निः कुतः?' इत्यत्रेव ज्ञापकहेतु-

जिज्ञासया तदुपपत्तेः। न चैवं स्वभावेऽपि प्रश्नापत्तिः, तत्र व्याघातेन शङ्काया एवाऽनुदयादिति ॥ १० ॥

उक्तमेवाऽङ्गीकारयति—

**सुदूरमपि गत्वेह विहितासूपपत्तिषु। कः स्वभावागमावन्ते शरणं न प्रपद्यते? ॥११॥**

इह– शास्त्रे, सुदूरमपि गत्वा– बह्वन्यपि प्रमाणानि परिगृह्य, उपपत्तिषु– सूक्ष्मयुक्तिषु, विहितासु– प्रकटीकृतासु, को वादी, अन्ते– बाधकतर्कोपस्थितौ, स्वभावा-ऽऽगमौ शरणं न प्रपद्यते?– स्वपक्षसाधनार्थं बलवत्त्वेन नाङ्गीकुरुते?– सर्व एव तथा प्रपद्यत इत्यर्थः। बौद्धेनाऽहेतुकस्य कार्यस्य स्वभावेन कादाचित्कत्वसमर्थनात्, मीमांसकेन च यागीयहिंसायामधर्मजनकत्वाभावे 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिवेदवाक्यस्यैव प्रमाणत्वेनाऽऽश्रयणादिति ॥ ११ ॥

परः पर्यनुयुङ्क्ते—

**प्रतिपक्षस्वभावेन प्रतिपक्षागमेन च। बाधितत्वात्कथं ह्येतौ शरणं युक्तिवादिनाम्? ॥१२॥**

प्रतिपक्षस्वभावेन– उक्तविपरीतस्वभावेन, प्रतिपक्षागमेन– उक्तविपरीतागमेन च बाधितत्वात्, हि– निश्चितम्, एतौ– उक्तस्वभावा-ऽऽगमौ, युक्तिवादिनां– युक्तिप्रधानवादिनाम्, न तु श्रद्धामात्रवताम्; कथं शरणम्?– कथमर्थसिद्धिक्षमौ?– न कथञ्चिदित्यर्थः ॥ १२ ॥

समाधत्ते—

**प्रतीत्या बाध्यते यो यत्स्वभावो न स युज्यते। वस्तुनः कल्प्यमानोऽपि वह्न्यादेः शीततादिवत्॥**

यद्– यस्मात् कारणात्, यः स्वभावः, प्रतीत्या– प्रमाणेन, बाध्यते; स कल्प्यमानोऽपि– तत्स्वभावत्वेन वह्न्यादेः शीततादिवज्जात्याऽऽपाद्यमानोऽपि, वस्तुनः स्वभावो न युज्यते– न सत्तर्कविषयो भवति। तथाच 'वह्न्यादेर्यद्युष्णत्वादिस्वभावः स्यात्, शीतत्वाद्यपि स्यात्' इतिवत् 'हिंसादेर्यद्यधर्मजनकत्वादिस्वभावः स्यात्, धर्मजनकत्वाद्यपि स्यात्' इति न बाधकमिति भावः॥ १३॥

पर आह—

**वह्नेः शीतत्वमस्त्येव, तत्कार्यं किं न दृश्यते?। दृश्यते हि हिमासन्ने, कथमित्थं स्वभावतः॥१४॥**

वह्नेः शीतत्वमस्त्येव– स्वाभाविकमेव मृगतृष्णिकादिवत्। तत्राह– यदि भ्रमादुपलभ्यमानमपि शीतत्वं वह्निस्वभावः, तदा तत्कार्यं– तत्सङ्गेन रोमाञ्चाविर्भावादि, किं न दृश्यते?। पर आह– हि– निश्चितम्, हिमासन्ने वह्नौ, शीतकार्यं रोमाञ्चादि दृश्यते। तत्राचार्य आह– इत्थं कथम्?– 'हिमासन्न एव वह्निः शीतकार्यं जनयति, नान्यदा' इति कथम्?। पर आह– स्वभावतः, यथा दण्डादेश्चक्रादिसंयुक्तस्यैव कार्यजनकत्वस्वभावः, तथा वह्नेर्हिमासन्नस्यैव रोमाञ्चजनकत्वस्वभाव इत्यर्थः॥१४॥

एतदेव दृष्टान्तेन द्रढयति-

हिमस्यापि स्वभावोऽयं नियमाद्वह्निसंनिधौ। करोति दाहमित्येवं वह्न्यादेः शीतता न किम्?॥

हिमस्याऽप्ययं स्वभावो यद् नियमात्- अवश्यं, वह्निसंनिधौ- वह्निसमीप एव, दाहं करोति, सामीप्य एवाऽयस्कान्तवत्, नागदमनीवद् वा कार्यकारित्वात्। इति हेतोः, एवम्- हिमस्य दाहजनकत्ववत्, वह्न्यादेः शीतता न किं? किं न स्वभावः?॥ १५॥

अत्रोत्तरमाह-

व्यवस्थाऽभावतो ह्येवं या त्वद्बुद्धिरिहेदृशी। सा लोष्टादस्य यत्कार्यं तत्त्वत्तस्तत्स्वभावतः॥

एवम्- उक्तरीत्या, व्यवस्थाऽभावतः- सम्यग्नियामकाभावात्, हि- निश्चितम्, या इह विचारे, ईदृशी- स्वभावान्यथात्वप्रकल्पनात्मिका, त्वद्बुद्धिः, सा लोष्टात्- पाषाणात्, त्वत्समीपस्थे तत्र त्वत्स्वभावसंक्रमात्। तथा, अस्य-- लोष्टस्य, यत्कार्यम्- अभिघातादिकम्, तत्, त्वत्तः सकाशात्, लोष्टसमीपस्थस्य तव तत्स्वभावतः-- लोष्टस्वभावात्॥ १६॥

ततः किम्?, इत्याह—

एवं सुबुद्धिशून्यत्वं भवतोऽपि प्रसज्यते। अस्तु चेत्को विवादो नो बुद्धिशून्येन सर्वथा॥१७॥

एवम्-- लोष्टस्वभावत्वे, भवतोऽपि लोष्टवत् सुबुद्धिशून्यत्वम्- सम्यग्बुद्धिरहितत्वम्, प्रसज्यते; अपिना लोष्टस्याऽपि बुद्धियुक्तत्वं स्यादिति प्रागुक्तं स्मार्यते। इष्टापत्तावाह- अस्तु- न्यायानुगतं तथास्वभावत्वम्, इति चेत्। तदा सर्वथा बुद्धिशून्येन भवता सह, नः- अस्माकम्, को विवादः ? । एवं चावश्यक्लृप्तनियतपूर्ववर्तिनो हिमादेरेव रोमाञ्चादिकार्यसंभवे तत्सहभूतस्य वह्नेरन्यथासिद्धत्वाद् न तज्जनकत्वम्, न वा तदनुरोधेन शीतस्वभावत्वमिति। प्रकृतेऽप्येवं व्यवस्था भावनीया। अथैवं कारणत्वस्य स्वाभाविकत्वे नीलादिवत् साधारणं स्यादिति चेत्। स्यादेव, सर्वैस्तत्त्वेन प्रतीयमानत्वरूपमन्यग्रहानधीनग्रहविषयत्वरूपमपि तद्धेतुशक्तावस्त्येव, व्यञ्जकस्वभावे त्वन्यघटितत्वादेव नास्ति। न च परापेक्षत्वादलीकत्वापत्तिः, तथानियमाभावात्। अभ्यधिष्महि च भाषारहस्ये-

"[1]ते होंति परावेक्खा वंजयमुहदंसिणो त्ति ण य तुच्छा। दिट्ठमिणं वेचित्तं सराव-कप्पूरगंधाणं[2] ॥ १ ॥" इति। अधिकं तद्विवरणादवसेयम् ॥ १७ ॥

एवं प्रतिपक्षस्वभावो निराकृतः। ततः प्रतिपक्षाऽऽगमनिराकरणे प्राप्तेऽप्यागमशरणार्थं प्रसङ्गाद् वार्तान्तरमुत्थापयति—

## अन्यस्त्वाहेह सिद्धेऽपि हिंसादिभ्योऽशुभादिके। शुभादेरेव सौख्यादि केन मानेन गम्यते ?१८

---

१ ते भवन्ति परापेक्षा व्यञ्जकमुखदर्शिन इति न च तुच्छाः। दृष्टमिदं वैचित्र्यं शराव-कर्पूरगन्धयोः ॥ १ ॥ २ भाषारहस्ये गाथेयं ३० ।

अन्यस्तु वादी, आह-- इह -न्याये लोके च, हिंसादिभ्य एवाऽशुभादिके सिद्धेऽपि, शुभादेरेव-पुण्यकर्मादेरेव, सौख्यादि भवति, न पापादेः, इति केन मानेन गम्यते ? ॥ १८ ॥

अत्र केषांचित् समाधानवार्तामाह—

**अत्रापि ब्रुवते केचित् सर्वथा युक्तिवादिनः। प्रतीतिगर्भया युक्त्या किलैतदवसीयते॥१९॥**

अत्रापि- उक्तपूर्वपक्षेऽपि, केचित् सर्वथा युक्तिवादिनः- आगमनिरपेक्षयुक्तिप्रणयिनः, ब्रुवते । किं ब्रुवते ?, इत्याह- प्रतीतिगर्भया- अनुभवसहकृतया, युक्त्या- तर्केण, 'किल' इति सत्ये, एतत्- प्राक् पर्यनुयुक्तम्, अवसीयते- निश्चीयते ॥१९॥

तन्मतमेवाह—

**तयाहुर्नाशुभात्सौख्यं तद्बाहुल्यप्रसङ्गतः। बहवः पापकर्माणो विरलाः शुभकारिणः॥२०॥**

ते वादिन आहुर्यत्- अशुभात्- पापकर्मणः, सौख्यं न भवति । कुतः ?, इत्याह-- तद्बाहुल्यप्रसङ्गतः- सुखभूयस्त्वप्रसङ्गात् । इदमपि कुतः ?, इत्याह- पापकर्माणो हिंसादिकारिणः, बहवो व्याधादयः, शुभकारिणः-- हिंसादिनिवृत्ताः साधुप्रभृतयः, विरलाः- स्तोकाः । एवं च सुखं यदि पापजन्यं स्यात्, यावत्पापकर्तृवृत्ति स्यात्; दुःखं च यदि पुण्यजन्यं स्यात्, पुण्याऽसामानाधिकरणं न स्यात्, इति तर्कशरीरं बोध्यम् ॥ २० ॥

अत्राऽऽपाद्यविपर्ययप्रदर्शनेन शुद्धत्वमाह—

न चैतद् दृश्यते लोके दुःखबाहुल्यदर्शनात्। शुभात्सौख्यं ततः सिद्धमतोऽन्यच्चाप्यतोऽन्यतः॥

न चैतत्– आपाद्यमानम् , लोके– जगति, दृश्यते । कुतः ?, इत्याह– दुःखबाहुल्यदर्शनात्– दुःखस्य पुण्याऽसमानाधिकरणत्वदर्शनात् । इदमुपलक्षणं सुखे यावत्पापकर्तृवृत्तित्वाभावस्य। ततः शुभात्– पुण्यात् , सौख्यम् ; अतः– सौख्यात् , अन्यद् दुःखं चापि, अतः–पुण्यात्, अन्यतः– पापात् , सिद्धम् ॥ २१ ॥

नेदं स्वतन्त्रसाधनम् , किन्त्वापाततः प्रसङ्गाऽऽपादनम् , तच्च न साधकम् , इत्यन्येषां वार्तान्तरमाह—

अन्ये पुनरिदं श्राद्धा ब्रुवत आगमेन वै। शुभादेरेव सौख्यादि गम्यते नान्यतः क्वचित्॥२२॥

अन्ये पुनः श्राद्धाः– आगमे श्रद्धावन्तः, इदं– वक्ष्यमाणम् , ब्रुवते । किम् ?, इत्याह– वै– निश्चितम् , शुभादेरेव– पुण्यादेरेव, सौख्यादि फलम् , इत्यागमेन गम्यते ; क्वचित्– कुत्रापि, अन्यतः– अन्येन मानेन, न गम्यते ॥ २२ ॥

कुतः ?, इत्याह—

अतीन्द्रियेषु भावेषु प्राय एवंविधेषु यत् । छद्मस्थस्याविसंवादि मानमन्यद् न विद्यते॥२३॥

प्रायः– बाहुल्येन, एवंविधेषु– उक्तजातीयेषु, अतीन्द्रियेषु– ऐन्द्रियकक्षयोपशमाऽग्राह्येषु, भावेषु, यत्– यस्मात् कारणात् ,

छद्मस्थस्य-- अक्षीणघातिकर्मणः, अविसंवादि- अप्रामाण्यशङ्कादिविरहितम्, अन्यत्- शब्दातिरिक्तम्, मानं- प्रमाणं, न विद्यते । प्रातिभादिना योगिभिस्तद्ग्रहणात् प्रायोग्रहणम् । अत्र च यद्यप्यतीन्द्रियार्थे पूर्वमागमस्य प्रमाणान्तरानवगतवस्तुप्रतिपादकत्वेनाहेतुवादत्वम्, तथाप्यग्रे तदुपजीव्य प्रमाणप्रवृत्तौ हेतुवादत्वेऽपि न व्यवस्थानुपपत्तिः, आद्यदशापेक्षयैव व्यवस्थाभिधानात् । अतो यदन्यत्रोक्तम्- 'आगमश्चोपपत्तिश्च' इत्यादि, तद् नानेन सह विरुध्यते, अपूर्वत्वं चादृष्टस्योपपद्यत इति ध्येयम् ॥ २३ ॥

उक्ततर्के बाधकमुक्त्वा प्रकृतोपपत्तिमाह—

**यच्चोक्तं दुःखबाहुल्यदर्शनं तन्न साधकम् । क्वचित्तथोपलम्भेऽपि सर्वत्रादर्शनादिति ॥२४॥**

यच्च दुःखबाहुल्यदर्शनमुक्तं तर्कघटकत्वेन, तत् साधकम्- आपादकमपि न । कुतः?, इत्याह-- क्वचिद् भरतादौ, तथोपलम्भेऽपि- दुःखबाहुल्यदर्शनेऽपि, सर्वत्र महाविदेहादौ, अदर्शनात्-- दुःखबाहुल्यानुपलम्भात् । इति हेतुसमाप्त्यर्थः ॥२४॥

**सर्वत्र दर्शनं यस्य तद्वाक्यात्किं न साधनम्?। साधनं तद्भवत्येवमागमात्तु न भिद्यते॥२५॥**

अथ यस्य सर्वत्र- सर्वक्षेत्रेषु, दर्शनं- दुःखबाहुल्यज्ञानम्, तद्वाक्याद् दुःखबाहुल्यं ज्ञात्वा साधनम्- उक्तप्रसङ्गसाधनम्, किं न भवेत्, आपाद्यव्यतिरेकनिश्चयसाम्राज्यात्?; इति चेत् । तत् साधनं भवत्येव, तु- पुनः, एवम्- उक्तप्रकारेण,

आगमाद् न भिद्यते, श्रुतानुसारिमतेः श्रुतान्तर्भूतत्वात् । अत एव भव्या-ऽभव्यादिभावानां पूर्वम्, "तत्थ[1] य अहेउवाओ भविया-ऽभवियादओ भावा[2]" इति गाथाप्रतीकेनाऽहेतुवादविषयत्वमुक्त्वाऽपि

" भविओ[3] सम्मदंसण-नाण-चरित्त-पडिवत्तिसंपण्णो । णियमा दुक्खंतकडो त्ति लक्खणं हेउवायस्सं[4] ॥ १ ॥ "

इति गाथयाऽनन्तरमागमोपगृहीतहेतुप्रवृत्त्या हेतुवादविषयत्वमुक्तं भगवता सम्मतिकृता, इत्यवधेयम् ॥ २५ ॥

नन्वागमेनापि कथमयं नियमो बोधनीयः, पापादपि सुखदर्शनेन व्यभिचारनिश्चयात् ?, इत्यत आह–

## अशुभादप्यनुष्ठानात्सौख्यप्राप्तिश्च या क्वचित् । फलं विपाकविरसा सा तथाविधकर्मणः २६॥

अशुभादप्यनुष्ठानात्– क्षुद्रदेवताविशेषोद्देशेन भूतवधाद्याचारादपि, या क्वचित् सौख्यप्राप्तिः पुत्रप्राप्त्यादिजन्या, सा विपाकविरसा– आयत्यहितानुबन्धिनी, तथाविधकर्मणः– प्राचीनपापानुबन्धिपुण्यस्य, फलम् । न चैवं तत्कर्माऽनपेक्षा स्यात्, पापजनकव्यापारमपेक्ष्यैव तस्योद्देश्यफलजनकत्वात्, तद्विपाकजनकतया तदपेक्षणात् । अत एव 'क्वचित्' इत्यनेन व्यभिचारसूचनात् तत्कर्मणस्तत्फलजनकत्वमपास्तम् । न चैहिकतत्तत्फलोद्देशेन तत्तत्कर्मविधानादङ्गादिवैकल्यप्रयुक्तो व्यभिचार इति न दोष इति वाच्यम्; साङ्गादपि पुत्रेष्ट्यादेः क्वचित् पुत्राद्यनुत्पाददर्शनात् । एतेन 'प्रतिबन्धकादृष्टध्वंस एव पुत्रेष्ट्यादि-

---

१ तत्र चाहेतुवादो भव्या-ऽभव्यादयो भावाः । २ सम्मतिसूत्रे गाथा १४० ।

३ भव्यः सम्यग्दर्शन-ज्ञान-चारित्र-प्रतिपत्तिसंपन्नः । नियमात् कृतदुःखान्त इति लक्षणं हेतुवादस्य ॥ १ ॥ ४ सम्मतिसूत्रे गाथा १४१ ।

फलम्, प्रतिबन्धकाभावसहकृतदृष्टकारणसमाजाच्च पुत्राद्युत्पत्तिरिति न दोषः' इति निरस्तम्; प्रतिकूलकर्माभाववदनुकूलकर्मणोऽप्यवश्यमपेक्षणात्, तद्विपाकार्थमेव तत्कर्मान्यथासिद्धेः ॥ २६ ॥

इदमेव दृष्टान्तेन द्रढयति—

**ब्रह्महत्यानिदेशानुष्ठानाद् ग्रामादिलाभवत् । न पुनस्तत एवैतदागमादेव गम्यते ॥२७॥**

ब्रह्महत्याया निदेशः– 'त्वं ब्राह्मणं व्यापादय, ततोऽहं तव ग्रामादि दास्यामि' इति राजाऽऽज्ञा, ततोऽनुष्ठानम्– ब्रह्महत्याकरणम्, ततो ग्रामादिलाभवत्– स ग्रामादिलाभो यथा प्राचीनपापानुबन्धिपुण्यादेव, न पुनस्तत एव– ब्रह्महत्याया एव; तथा प्रकृतमपीति भावः। ननु ब्रह्महत्यायास्तत्फलबोधको न विधिः, इतरत्र तु तादृशविधिश्रवणाद् वैषम्यम्, इत्यत आह– एतत्– उपपादितम्, आगमादेव गम्यते– आगम एव हि हिंसासामान्ये दुःखजनकत्वं बोधयति, तत् कथं स एव हिंसाविशेषस्य सुखजनकत्वं बोधयेत्? इति भावः। अधिकमग्रे विवेचयिष्यामः। इत्थं चैतदवश्यमुपेयम्, अन्यथा श्रोत्रियेणापि म्लेच्छादिकृतकर्मविशेषात् फलविशेषदर्शनात् किं तत्र समाधानं विधेयम्? ॥ २७ ॥

नन्वागमोऽपि प्रतिपक्षागमबाधित एवेत्युक्तमेव, इत्यतस्तेषां निर्बलत्वेनाऽप्रतिपक्षत्वमवसरसंगत्याह—

**प्रतिपक्षागमानां च दृष्टेष्टाभ्यां विरोधतः । तथाऽनाप्तप्रणीतत्वादागमत्वं न युज्यते ॥२८॥**

प्रतिपक्षागमानां– जैनातिरिक्तदर्शनानाम्, दृष्टे-ष्टाभ्यां विरोधतः– अबाधितप्रत्यक्षादिस्वाभ्युपगमविरुद्धार्थाभिधायकत्वात्, 'तथा' इति हेत्वन्तरसमुच्चये, अनाप्तप्रणीतत्वात्– यथार्थवाक्यार्थशून्यवक्तृकत्वात्, आगमत्वं– प्रमाणशब्दत्वम्, न युज्यते ॥ २८ ॥

अत्रोभयहेत्वभिधानेऽपि द्वितीयहेतुग्रहेऽपि प्रथम एव हेतुः, इत्युपजीव्यत्वात् तस्यैवाश्रयणं युक्तमित्युपदर्शयन्, तदुपदर्शनमेव प्रतिजानीते—

**दृष्टे-ष्टाभ्यां विरोधाच्च तेषां नाप्तप्रणीतता। नियमाद् गम्यते यस्मात्तदसावेव दर्श्यते ॥२९॥**

तेषां– विप्रतिपन्नागमानाम्, दृष्टे-ष्टाभ्यां विरोधाच्च नाऽऽप्तप्रणीतता, नाप्तपदस्य नाकादिमध्यनिवेशाश्रयणादनाप्तप्रणीततेत्यर्थः; 'आप्तप्रणीतता' इत्युत्तरं नञो योजनात् तत्र क्रियान्वये तात्पर्यादाप्तप्रणीतत्वाभाव इति वाऽर्थः; नियमात्– व्याप्तिबलात्, गम्यते– अनुमीयते यस्मात्, तत्– तस्माद्धेतोः, असावेव– दृष्टे-ष्टाभ्यां विरोध एव, प्रदर्श्यते– शब्देन श्रोतॄणां बोध्यते ॥ २९ ॥

तत्रादौ मण्डलतन्त्रादिवादिमते तं प्रदर्शयति—

**अगम्यगमनादीनां धर्मसाधनता क्वचित्। उक्ता लोकप्रसिद्धेन प्रत्यक्षेण विरुध्यते ॥३०॥**

अगम्यगमनादीनां लोक-शास्त्रनिषिद्धभगिन्यादिगमन-मांसभक्षणप्रभृतीनाम्, क्वचित्– मण्डलतन्त्रादिग्रन्थे, धर्मसाधनता उक्ता, सा लोकप्रसिद्धेन– अविद्वदङ्गनादिसिद्धेन 'भगिन्यादिगमनादिकं न धर्मजनकम्' इत्याकारेण श्रुतनिश्रितादिमति-

ज्ञानरूपेण प्रत्यक्षेण बाध्यते । न चोक्तागमस्यैव किं नैतद् बाधकत्वम् ?, इति वाच्यम् ; बहुसिद्धत्वेनाऽस्यैव बलवत्त्वात् । न च 'शतमप्यन्धानां न पश्यति' इति न्यायाद् बहुसिद्धत्वमप्रयोजकम्, उपजीव्यजातीयत्वात्, अनुकूलतर्कसहकृतत्वाच्चेत्यवसेयम् । उक्तो लोकदृष्टिविरोधः ॥ ३० ॥

अथेष्टविरोधमाह—

**स्वधर्मोत्कर्षादेव तथा मुक्तिरपीष्यते । हेत्वभावेन तद्भावो-नित्य इष्टेन बाध्यते ॥ ३१ ॥**

तथा, तैर्वादिभिः स्वधर्मोत्कर्षादेव– स्वाभिमताऽगम्यगमनादिधर्मप्रकर्षादेव, मुक्तिरपीष्यते, तथा च हेत्वभावेन– सर्वागम्यगमनादीनां दुःशकतया तदुत्कर्षरूपचरमहेत्वसंभवेन, तद्भावः– मुक्त्युत्पादः, नित्यः– हेतुनिरपेक्षः, स्यात्, नञ्प्रश्लेषेण अनित्यः– अभवनशीलः स्यादिति वा ; स चेष्टेन– उक्तरीत्या सहेतुकत्वाभ्युपगमेन, बाध्यते । 'तद्भावः–मुक्तिसद्भावः, नित्यः स्यात्, हेत्वभावेन मुक्तानां मुक्तताक्षतेः, तथा चेष्टबाधः' इति ग्रन्थकृदाशयस्तु हिंसाध्यवसायविशेषरूपहिंसोत्कर्षेण प्राक्कर्मक्षयसंभवेऽप्यग्रे तदभावेन क्षणिकत्वद्वाराऽसंभवादुपपाद्यः ॥ ३१ ॥

पराभिप्रायमाह—

**माध्यस्थ्यमेव तद्धेतुरगम्यगमनादिना । साध्यते तत्परं येन तेन दोषो न कश्चन ॥ ३२ ॥**

१ स्वोपज्ञटीकायां स्थित इति शेषः ।

माध्यस्थ्यमेव– अरक्त-द्विष्टत्वमेव, तद्धेतुः– मुक्तिहेतुः, तत्परं– प्रकृष्टम्, क्लेशवासनयाऽक्षोभ्यमिति यावत्, येन कारणेन, अगम्यगमनादिना, साध्यते, गम्यागमनादिषु तुल्यतया प्रवृत्तेः; तेन कारणेन, कश्चन न दोषः । माध्यस्थ्योत्कर्षेण मुक्तेः, तत्साधनतया चागम्यगमनाद्युपयोगस्य समर्थनादिति भावः ॥ ३२ ॥

अत्रोत्तरम्—

**एतदप्युक्तिमात्रं यदगम्यगमनादिषु । तथाप्रवृत्तितो युक्त्या माध्यस्थ्यं नोपपद्यते ॥३३॥**

एतदपि- अनन्तरोदितमपि, उक्तिमात्रम्- युक्तिशून्यम्, यत्- यस्मात् कारणात्, अगम्यगमनादिषु तथाप्रवृत्तितः अगम्यगमनादितुल्यप्रवृत्तेः, युक्त्या विचार्यमाणम्, माध्यस्थ्यं नोपपद्यते ॥ ३३ ॥

कुतस्तर्ह्युपपद्यते ?, इत्याह—

**अप्रवृत्त्यैव सर्वत्र यथासामर्थ्यभावतः । विशुद्धभावनाभ्यासात्तन्माध्यस्थ्यं परं यतः ॥३४॥**

सर्वत्र- गम्यागमनादौ, यथासामर्थ्यभावतः- स्वपरिहारसामर्थ्यमनतिक्रम्य, अप्रवृत्त्यैव- तन्निबन्धनविषयद्वेषात् तदनिच्छया, निर्ममत्वमासाद्य विशुद्धानां मैत्र्याद्युपबृंहितानां भावनानामनित्यत्वाद्यनुप्रेक्षाणामभ्यासाद् दृढमानसोत्साहात्, परमनिर्ममत्वप्राप्तेः, विषयद्वेषस्यापि वह्नेर्दाह्यं विनाश्याऽनुविनाशवद् विषयेच्छां विनाश्य तत्कालं विनाशात्; तत्– प्रागुक्तम्, परम्- उत्कृष्टम्, माध्यस्थ्यं भवति यतः, अतोऽन्यथा नोपपद्यत इति भावः । तदिदमुक्तं वशिष्ठेनापि—

"मानसीर्वासनाः पूर्वं त्यक्त्वा विषयवासनाः। मैत्र्यादिवासना राम! गृहाणाऽमलवासनाः ॥ १ ॥"

तत्र वासनालक्षणमिदम्—

"दृढभावनया त्यक्तपूर्वापरविचारणम्। यदादानं पदार्थस्य वासना सा प्रकीर्तिता ॥ २ ॥"

सा च द्विविधा- मलिना, शुद्धा च। तत्र शुद्धा योगशास्त्रसंस्कारप्राबल्यात् तत्त्वज्ञानसाधनत्वेनैकरूपाऽपि मैत्र्यादिशब्दैर्विभक्ता। मलिना तु त्रिविधा- लोकवासना, शास्त्रवासना, देहवासना चेति। सर्वे जना यथा न निन्दन्ति तथैवाऽऽचरिष्यामि' इत्यशक्यार्थाभिनिवेशो लोकवासना। अस्याश्चाशक्यार्थत्व-पुमर्थानुपयोगित्वाभ्यां मलिनत्वम्। शास्त्रवासना त्रिविधा- पाठव्यसनम्, बहुशास्त्रव्यसनम्, अनुष्ठानव्यसनं चेति। मलिनत्वं चास्याः क्लेशावहत्व-पुमर्थानुपयोगित्व-दर्पहेतुत्वैः। देहवासना च त्रिविधा- आत्मत्वभ्रान्तिः, गुणाधानभ्रान्तिः, दोषापनयनभ्रान्तिश्च। गुणाधानं द्विविधम्- लौकिकं, शास्त्रीयं च। आद्यं सम्यक्शब्दादिविषयसंपादनम्, अन्त्यं गङ्गास्नानादिसंपादनम्। दोषापनयनमप्येवं द्विविधम्[1]। आद्यमौषधेन व्याध्याद्यपनयनम्, अन्त्यं स्नानादिना शौचाद्यपनयनम्। एतन्मालिन्यं चाऽप्रामाणिकत्वात्, अशक्यत्वात्, पुमर्थानुपयोगित्वात्, पुनर्जन्महेतुत्वाच्च। शुद्धवासनया चेयं मलिनवासना क्षीयते, तथाहि- सुखिषु मैत्रीं भावयतस्तदीयं सुखं मदीयमेवेति कृत्वा 'सर्वं सुखजातीयं मे भूयात्' इति चिन्तात्मिका रागवासना निवर्तते, दुःखिषु करुणां भावयतश्च वैर्यादिनिवृत्त्या द्वेषवासना

१ लौकिक-शास्त्रीयरूपभेदेन।

निवर्तते, तथा, पुण्यवत्सु मुदिताभावनात् पुण्याऽकारणानुशयनिवृत्तेस्तद्वासना निवर्तते, तथा, पापेषूपेक्षां भावयतस्तत्करण-निमित्तकानुशयनिवृत्तेस्तद्वासना निवर्तत इति। ततोऽशुक्ला-ऽकृष्ण-पुण्यप्रवृत्ति-चित्तप्रसादाभ्यां परं माध्यस्थ्यम्। इति पातञ्जलानां प्रक्रिया ॥ ३४ ॥

पराभिप्रायमाह—

**यावदेवंविधं नैतत्प्रवृत्तिस्तावदेव या। साऽविशेषेण साध्वीति तस्योत्कर्षप्रसाधनात्॥३५॥**

यावदेवंविधं— सर्वत्राऽप्रवृत्तिरूपम्, एतद्— माध्यस्थ्यम्, न भवति; तावदेव या प्रवृत्तिः, साऽविशेषेण— गम्या-ऽगम्यादितुल्यतयैव, साध्वी न्याय्या, तस्य— माध्यस्थ्यस्य, 'उत्कर्षप्रसाधनात्' इति हेतोर्गम्यगमनादौ प्रवृत्तिर्न्याय्येति निगर्वः॥३५॥

अत्रोत्तरमाह—

**नाप्रवृत्तेरियं हेतुः कुताश्चिदनिवर्तनात्। सर्वत्र भावाविच्छेदादन्यथाऽगम्यसंस्थितिः ॥३६॥**

इयम्— अविशेषेण प्रवृत्तिः, अप्रवृत्तेर्हेतुर्न। कुतः?, इत्याह— कुतश्चित्— क्वाप्यर्थे, अनिवर्तनात्— निवृत्तिप्रयत्नाभावात्, यथालाभं सर्वत्रैव प्रवृत्तेः। इदमपि कुतः?, इत्याह— सर्वत्र विषये, भावाविच्छेदात्— इच्छानिवृत्त्यभावात्, अन्यथा— क्वचिदिच्छानिवृत्त्यङ्गीकारे, अगम्यसंस्थितिः— अगम्यव्यवस्था; यदितरस्मिन् प्रवृत्तिस्तस्यैवाऽगम्यत्वादिति भावः ॥ ३६ ॥

एतदुपचयार्थमेवाह—

**तच्चास्तु लोकशास्त्रोक्तं तत्रौदासीन्ययोगतः । संभाव्यते परं ह्येतद्भावशुद्धेर्महात्मनः३७**

तच्च-- अगम्यम् , लोकशास्त्रोक्तं-- भगिन्याद्येव, अस्तु, यादृच्छिककल्पनाया अप्रामाणिकत्वात् । तत्र- अगम्ये, औदासीन्ययोगतः- अरक्ता-ऽद्विष्टभावेन प्रवृत्तेः, महात्मनः- दृढप्रतिज्ञस्य, भावशुद्धेः-- एकान्तविहितानुष्ठानसंपत्तेः, हि-- निश्चितम् , परमेतद्- माध्यस्थ्यम्, संभाव्यते, देशविरतिपरिणामेनाऽनिकाचितस्य चारित्रमोहनीयस्याऽचिरादेव क्षयसंभवात् ।

स्यादेतत् , इच्छानिरोधाद् न तन्निवृत्तिः, किन्तु यथेच्छं प्रवृत्त्या सिद्धत्वज्ञानादेव । ततो योगार्थं यथेच्छं प्रवृत्तिरेवोचिता, का तत्र गम्या-ऽगम्यव्यवस्था ? । मैवम् , यावत्सुखसिद्धत्वधियं विना विशेषदर्शिनः सामान्येच्छाया अविच्छेदात् ; विशिष्य सिद्धत्वधियस्तु विशेषेच्छाया अनिवर्तकत्वात् ; अन्यथा प्रोषितस्याऽज्ञातकान्तामरणस्य तत्कान्तावलोकनेच्छाऽभावप्रसङ्गात् , असिद्धविषये इच्छाया अनिरोधाच्च । तस्मात् सामान्येच्छाविच्छेदः सिद्धत्वज्ञानकृतो नास्ति विरक्तानाम्, किन्तु शुभादृष्टकृत एव । तच्च शुभादृष्टं विषयाऽप्रवृत्त्यैव भवति, तत्प्रवृत्त्या तु तत्प्रतिकूलाऽदृष्टार्जनादुत्कटेच्छैव विषये जायते । तदुक्तं पतञ्जलि- नापि-- "भोगाभ्यासमनुवर्धन्ते रागाः, कौशलं चेन्द्रियाणाम्" इति । गीतास्वप्युक्तम्—

---

१ 'महात्मनाम्' इति मूलपुस्तके पाठः । २ क. 'थेष्टं प्र' ।

"न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवोपवर्धते ॥ १ ॥" इति ।

इत्थं चैतदवश्यमङ्गीकर्तव्यम्, पिपासाया इव विषयेच्छायाः क्लिष्टकर्मोदयजनितत्वेन तदुपशमेनैव तदुपशमात् । तदुपशमार्थमेव च पिपासोपशमार्थं जलपानस्येव मौनीन्द्रप्रवचनवचनामृतपानस्य न्याय्यत्वादिति । अधिकमध्यात्ममतपरीक्षायाम् ॥३७॥

॥ तदेवं मण्डलतन्त्राद्यागमो दूषितः ॥

अथ संसारमोचकागमेऽप्येतदतिदेशमाह—

## संसारमोचकस्यापि हिंसा यद्धर्मसाधनम् । मुक्तिश्चास्ति ततस्तस्याऽप्येष दोषोऽनिवारितः ३८

संसारमोचकस्यापि यद्– यस्मात् कारणात्, हिंसा धर्मसाधनम्, मुक्तिश्चास्ति 'अभ्युपगता' इति शेषः । ततः– तस्मात् कारणात्, तस्याऽप्येष पूर्वोक्तदोषोऽनिवारितः, हिंसाया धर्मसाधनताया लोकदृष्टविरुद्धत्वात्, तदुत्कर्षाभावेन मुक्त्यभावप्रसङ्गाच्च । स्यादेतत्, तृष्णानिमित्तैव हिंसा न धर्महेतुः, न तूपकारनिमित्ताऽपि, व्याधितस्याऽऽप्तवैद्येन दाहादिकरणात्; तथाच दुःखितानां दुःखविघाताय हिंसाभ्युपगमो न विरोत्स्यत इति । मैवम्, अविरतानां हतानां जीवानां प्रेत्याऽनन्तदुःखेष्वेव नियोजनात् । किञ्च, एवं सुखिनामपि पापवारणार्थं घातः स्यात्, तथाचाऽपूर्वकारुणिकस्य तव कुटुम्बघातोऽपि न्यायप्राप्तः । तस्माद् दुष्टोऽयमभिनिवेशः । दुःखकारणाऽधर्मविनाशेन धर्मे नियोजनादेव च कारुणिकत्वमुपपद्यते, इत्यार्हतमतं रमणीयम् ॥ ३८ ॥

दोषानिवारितत्वमेवोक्तं भावयति—

**मुक्तिः कर्मक्षयादेव जायते नान्यतः क्वचित्। जन्मादिरहिता यत्तत्स एवात्र निरूप्यते।३९।**

मुक्तिः कर्मक्षयादेव- जन्महेतुपुण्या-ऽपुण्यविलयत एवाऽसाधारणहेतोः, नाऽन्यतः क्वचिद् दानादेः, अभय-सुपात्रदानादीनामपि व्यवहितहेतुत्वात्; जन्मादिरहिता– जन्म-मरणाद्यनाश्लिष्टा, यद्– यस्माद्धेतोः । तत्– तस्मात् कारणात्, स एव कर्मक्षय एव, अत्र प्रकृतस्थले, निरूप्यते ॥ ३९ ॥

किंहेतुकोऽयम् ?, इति पर्यनुयुज्यते—

**हिंसाद्युत्कर्षसाध्यो वा तद्विपर्ययजोऽपि वा। अन्यहेतुरहेतुर्वा स वै कर्मक्षयो ननु ? ॥४०॥**

तथाहि– 'ननु' इत्याक्षेपे, वै– निश्चितम्, स कर्मक्षयो हिंसाद्युत्कर्षसाध्यो वा स्यात्– हिंसोत्तरदुःखापनयनोत्कर्षसाध्यो वा स्यात्, तद्विपर्ययसाध्यो वा– अहिंसाद्युत्कर्षसाध्यो वा स्यात्, अन्यहेतुः– एतदुभयातिरिक्तहेतुर्वा स्यात्, अहेतुर्वा स्यात्; इति चत्वारः पक्षाः ॥ ४० ॥

आद्य आह—

**हिंसाद्युत्कर्षसाध्यत्वे तदभावे न तत्स्थितिः। कर्मक्षयास्थितौ च स्यान्मुक्तानां मुक्तताक्षतिः॥४१॥**

हिंसाद्युत्कर्षसाध्यत्वे तदभावे- हिंसाद्युत्कर्षाभावे, न तत्स्थितिः- न कर्मक्षयस्थितिः, कर्मक्षयाऽस्थितौ च मुक्तानां मुक्तताक्षतिः स्यात् ॥ ४१ ॥

द्वितीय आह-

**तद्विपर्ययसाध्यत्वे परसिद्धान्तसंस्थितिः । कर्मक्षयः सतां यस्मादहिंसादिप्रसाधनः ॥४२॥**

तद्विपर्ययसाध्यत्वे- अहिंसाद्युत्कर्षसाध्यत्वे, परसिद्धान्तसंस्थितिः- अन्याभ्युपगमप्रसङ्गः, यतः सतां- साधूनाम् , कर्मक्षयोऽहिंसादिप्रसाधन इष्टः ॥ ४२ ॥

तृतीय आह-

**तदन्यहेतुसाध्यत्वे तत्स्वरूपमसंस्थितम् । अहेतुत्वे सदाभावोऽभावो वा स्यात्सदैव हि ॥४३॥**

तदन्यहेतुसाध्यत्वे- उक्तोभयातिरिक्तसाध्यत्वे, तत्स्वरूपं- तदन्यहेतुस्वरूपम् , असंस्थितम्- अनिर्वचनबाधितं बाधकम् । चतुर्थ आह- अहेतुत्वे कर्मक्षयस्य, सदाभावः स्यात् , उत्पत्तिशीलत्वात् , हि- निश्चितम् , सदैवाऽभावो वा स्यात् , अनुत्पत्तिशीलत्वात् ॥ ४३ ॥

१ ख. ग. घ. च. 'प्रधान' ।

तदत्र द्वितीयविकल्प एव न्याय्य इति दर्शयति—

**मुक्तिः कर्मक्षयादिष्टा ज्ञानयोगफलं स च । अहिंसादि च तद्धेतुरिति न्यायः सतां मतः॥४४॥**

मुक्तिः– परमानन्दप्राप्तिः, कर्मक्षयादिष्टा– कर्मक्षयजन्याऽभिमता, स च–कर्मक्षयः, ज्ञानयोगफलम्– रत्नत्रयसाम्राज्य-जन्यः, तद्धेतुः– तत्कारणं च, अहिंसादि– हिंसाविरतिपरिणामादि, इति– एषः, सतां जैनागमोपनिषद्वेदिनाम्, न्यायः– सन्मार्गः, मतः– इष्टः । तदेवं संसारमोचकाऽऽगमाऽसारता प्रतिपादिता ॥ ४४ ॥

अथ यज्वनामागमाऽसारतां तद्वदिव प्रदर्शयति—

**एवं वेदविहिताऽपि हिंसा पापाय तत्त्वतः । शास्त्रचोदितभावेऽपि वचनान्तरबाधनात् ॥४५॥**

एवम्– संसारमोचकाभिमतहिंसावत्, वेदविहितापि "श्वेतं वायव्यमजमालभेत भूतिकामः" इत्यादिविधिनेष्टसाधनत्वेन बोधितापि, हिंसा, तत्त्वतः– युक्त्या विचार्यमाणा, पापाय भवति । विधिबोधितत्वे कथमेवं स्यात्?, इत्यत्राह– शास्त्रचोदितभावेऽपि– प्रकृतविधिबोधितेष्टसाधनताकत्वेऽपि, वचनान्तरबाधनात्– सामान्यतः प्रवृत्तेन निषेधविधिनाऽनिष्टसाधनत्वेन बोधनात् ॥ ४५ ॥

१ क. 'न्यं त' । २ उपनिषद्– रहस्यम् ।

एतदेव भावयन्नाह—

**न हिंस्यादिह भूतानि हिंसनं दोषकृद् मतम्। दाहवद्वैद्यके स्पष्टमुत्सर्गप्रतिषेधतः ॥४६॥**

'न हिंस्यादिह' इत्यत्रस्थेहशब्दोऽन्यत्र योज्यः, तथा च 'न हिंस्याद् भूतानीह' इत्यर्थः। इदं च "न हिंस्यात् सर्वाभूतानि" इति वेदवाक्यस्मारकम्। इह वाक्ये हिंसनं– राग-द्वेष-मोह-तृष्णादिनिबन्धनाहिंसासामान्यम्, दोषकृत्– अनिष्टजनकम्, स्पष्टम्– असंदिग्धतया, मतम्– अभीष्टम्। किंवत्?, इत्याह– वैद्यके दाहवत्– 'दाहो न कार्यः' इति वैद्यकनिषेधवाक्यनिषिद्धदाहवत्। कुतः?, इत्याह– उत्सर्गप्रतिषेधतः– नञ्समभिव्याहारादनिष्टसाधनत्वे निरूढलाक्षणिकप्रकृतविध्यर्थस्य व्युत्पत्तिमहिम्ना निषेध्यतावच्छेदकावच्छेदेनैवाऽन्वयात्। एतेन 'नञर्थे लिङर्थान्वये कथं दोषकृत्त्वबोधः?, प्रकृतनिषेधविधेः पापजनकत्वे निरूढलक्षणायां च दृष्टान्तानुपपत्तिः, इति प्रकृतविध्यर्थनिषेधस्य हिंसात्वसामानाधिकरण्येनाऽन्वयाद् नानुपपत्तिः' इति निरस्तम्; सामानाधिकरण्येनापि विधिशङ्काविरहेण सामान्यत एव निषेधान्वयस्वीकारात्॥ ४६॥

ततः किम्?, इत्याह—

**ततो व्याधिनिवृत्त्यर्थं दाहः कार्यस्तु चोदिते। न ततोऽपि न दोषः स्यात्फलोद्देशेन चोदनात्॥४७॥**

ततो 'दाहो न कार्यः' इत्यनेन सामान्यत एव दाहस्यानिष्टसाधनत्वासिद्धेः 'व्याधिनिवृत्त्यर्थं दाहः कार्यः' इति

१ छान्दसत्वाद् दीर्घः, ख. ग. घ. च. 'सर्वभू'।

चोदितेऽपि– विहितेऽपि, तुरप्यर्थः, न ततोऽपि– दाहात् फलोद्देशेन व्याधिनिवृत्त्यर्थं चोदनात्– विधानाद् हेतोः, न दोषः– तापलक्षणः स्यात्, किन्तु स्यादेव ॥ ४७ ॥

प्रकृते दार्ष्टान्तिकयोजनामाह—

**एवं तत्फलभावेऽपि चोदनातोऽपि सर्वथा। ध्रुवमौत्सर्गिको दोषो जायते फलचोदनात् ॥४८॥**

एवं चोदनातोऽपि– क्रत्वङ्गहिंसाविधेरपि, तत्फलभावेऽपि– तद्बोधितफलभावेऽपि, ध्रुवं– निश्चितम्, सर्वथाऽन्यहिंसातुल्यतयौत्सर्गिकः सामान्यनिषेधबोधितः, दोषः– पापलक्षणः, जायते, फलचोदनात्– फलोद्देशात्, तृष्णामूलकाहिंसात्वेनैवाऽधर्मजनकत्वात् ।

ननु निषेधविधिनाऽनिष्टसाधनत्वमात्रबोधने ततो निवृत्त्यनुपपत्तिः, बलवदनिष्टसाधनत्वबोधने च व्याधिनिवृत्त्यर्थं दाहेऽपि प्रवृत्त्यनुपपत्तिः, इति विशेषनिषेधे सामान्यविधेस्तदितरपरत्ववद् विशेषविधौ सामान्यनिषेधस्यापि तदितरपरत्वमेव न्याय्यम्; अवश्यं चैतदभ्युपेयम्, कथमन्यथा तवापि[1] सामान्यत आधाकर्मिकादिग्रहणनिषेधेऽप्येसंस्तरणादिदशायां[2] तद्विधानम्? इति चेत्। न, आधाकर्मिकग्रहणा-ऽग्रहणयोः संयमपालनार्थमेकोद्देशेनैव विधानादुत्सर्गा-ऽपवादभावव्यवस्थितावपि, प्रकृतेऽहिंसा-यागयोरेकार्थत्वाभावेनोत्सर्गा-ऽपवादव्यवस्थाया एवाऽयोगात्; सामान्यनिषेधे संकोचस्याऽन्याय्यत्वात् । तदुक्तं



१ तव– आर्हतस्य । २ ग्लानाद्यनिर्वाहावस्थायाम् ।

स्तुतिकृता–"नोत्सृष्टमन्यार्थमपोद्यते च" इति । प्रवृत्तिस्तु तत्र मूढानां श्येनादाविव दोषादेव ।

अत एव सांख्या अपि सामान्यनिषेध-विशेषविधिबोधितानर्थहेतुकत्व-क्रत्वङ्गत्वयोरेकत्र समावेशसंभवाद् निषिद्धस्यापि विहितत्वस्य, विहितस्यापि निषिद्धत्वस्य च श्येनादिवदुपपत्तेः, श्येनादाविव ज्योतिष्टोमादौ रागद्वेषादिवशीकृतस्यैवाऽधिकाराज्ज्योतिष्टोमादीनां दुष्टत्वमेव प्रतिपन्नवन्तः । तथा महाभारते—

"जपस्तु सर्वधर्मेभ्यः परमो धर्म उच्यते । अहिंसया हि भूतानां जपयज्ञः प्रवर्तते ॥ १ ॥" इति ।

मनुस्मृतावपि—

"जपेनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः । कुर्यादन्यद् न वा कुर्याद् मैत्रो ब्राह्मण उच्यते ॥ १ ॥"

इत्यहिंसायाः प्रशंसया हिंसाया दुष्टत्वमेवोक्तम् । तथोत्तरमीमांसायामप्युक्तम्—

"अन्धे तमसि मज्जामः पशुभिर्ये यजामहे । हिंसा नाम भवेद् धर्मो न भूतो न भविष्यति ॥ १ ॥" इति ।

तथा, व्यासेनाप्युक्तम्—

"ज्ञानपालीपरिक्षिप्ते ब्रह्मचर्यदयाम्भसि । स्नात्वा तु विमले तीर्थे पापपङ्कापहारिणि ॥ १ ॥
ध्यानाग्नौ जीवकुण्डस्थे दममारुतदीपिते । असत्कर्मसमित्क्षेपैरग्निहोत्रं कुरूत्तमम् ॥ २ ॥

---

१ हेमचन्द्रप्रभुणा । २ अन्ययोगव्यवच्छेदद्वात्रिंशिकायां श्लो० ११ ।

कषायपशुभिर्दुष्टैर्धर्म-कामा-ऽर्थनाशकैः । शममन्त्रहुतैर्यज्ञं विधेहि विहितं बुधैः ॥ ३ ॥
प्राणिघातात्तु यो धर्ममीहते मूढमानसः । स वाञ्छति सुधावृष्टिं कृष्णाहिमुखकोटरात् ॥ ४ ॥ " इत्यादि ।

ततो 'दुष्टमग्निष्टोमादि कर्माऽधिकारिणापि दोषासहिष्णुना त्याज्यम्, अन्तःकरणशुद्धेरीदृशेन गायत्रीजपादिनैव बाढमुपपत्तेः' इत्याहुः ।

अत्र भाट्टाः– 'न क्रत्वर्था हिंसाऽनर्थहेतुः, विधिस्पृष्टे निषेधानवकाशात्, तथाहि– विधिना बलवदिच्छाविषयसाधनताबोधरूपां प्रवर्तनां कुर्वताऽनर्थसाधने तदनुपपत्तेः, स्वविषयस्य प्रवर्तनागोचरस्याऽनर्थसाधनत्वाभावोऽप्यर्थादाक्षिप्यते, तेन विधिविषयस्य नानर्थहेतुत्वं युज्यते । न हि क्रत्वर्थत्वं साक्षाद्विध्यर्थः, येन विरोधो न स्यात्, किन्तु प्रवर्तनयैव; प्रवर्तना तु पुरुषार्थमेव विषयीकुर्वती क्वचित् क्रतुमपि तथाभावमापन्नं विषयीकरोति, इत्यन्यदेतत् । पुरुषप्रवृत्तिश्च बलवदिच्छोपधानदशायां जायमाना न भाव्यस्यार्थहेतुतामाक्षिपति, किन्तु यथाप्राप्तमेवाऽवलम्बते, बलवदिच्छाविषये स्वत एव प्रवृत्तेः; स्वर्गादौ विध्यनपेक्षणात् । अत एव विहितश्येनफलस्याऽपि शत्रुवधरूपाऽभिचारस्यानर्थहेतुत्वमुपपद्यत एव, फलस्य विधिजन्यप्रवृत्तिविषयत्वाभावात्, विधिजन्यप्रवृत्तिविषयं तु धात्वर्थं करणं प्रवर्तनाऽऽगाहते । सा च नाऽनर्थहेतुं विषयीकरोति । इति विशेषविधिबाधितं सामान्यनिषेधवाक्यं राग-द्वेषादिमूलाऽक्रत्वर्थहिंसाविषयम् । तेन श्येना-ऽग्निष्टोमयोर्वैषम्यादुपपन्नमदुष्टत्वम् । ज्योतिष्टोमादेर्विधिस्पृष्टस्यापि निषेधविषयत्वे षोडशिग्रहणस्याप्यनर्थहेतुत्वापत्तिः,'नातिरात्रे षोडशिनं गृह्णाति' इति निषेधात् । तस्माद् न किञ्चिदेतत्' इत्याहुः ।

प्राभाकरास्तु–'फलसाधने रागत एव प्रवृत्तिसिद्धेर्न नियोगस्य प्रवर्तकत्वम्, तेन श्येनस्य रागजन्यप्रवृत्तिविषयत्वेन विधेरौदासीन्याद् न तस्याऽनर्थहेतुत्वं विधिना प्रतिक्षिप्यते। अग्नीषोमीयहिंसायां तु क्रत्वङ्गभूतायां फलसाधनत्वाभावेन रागाभावाद् विधिरेव प्रवर्तकः, स च स्वविषयस्याऽनर्थहेतुतां प्रतिक्षिपति, इति प्रधानभूता हिंसाऽनर्थं जनयति, न क्रत्वर्था, इति न हिंसामिश्रितत्वेन दुष्टत्वमग्नीषोमादेः' इत्याहुः।

इदं च मतद्वयं फलतस्तुल्यमेव। इयांस्तु विशेषो यत्– प्राभाकरमते "चोदनालक्षणोऽर्थो धर्मः"[1] इत्यत्राऽर्थपदव्यावर्त्यत्वेनाधर्मत्वं श्येनादेः। भाट्टमते तु श्येनफलस्यैवाऽभिचारस्याऽनर्थहेतुत्वादधर्मत्वम्, श्येनस्य तु विहितस्य समीहितसाधनस्य धर्मत्वमेव; अर्थपदव्यावर्त्यं तु कलिञ्जभक्षणादेर्निषिद्धस्यैव, इति फलतोऽनर्थहेतुत्वेन तु शिष्टानां श्येनादौ न धर्मत्वेन व्यवहार इति।

तत्र भाट्टमतेऽभिचारः शत्रुवधानुकूलव्यापारः पापरूप एव, इति कथं श्येनस्य नानर्थहेतुत्वम्? इति विधिविषयेऽपि निषेधावकाश एवाऽऽयातः, अनर्थप्रयोजकत्वस्यैव लाघवेन शिष्टप्रयोगानुरोधेन च; निषेधविध्यर्थत्वे तु सुतरां तस्मादिष्टसाधनत्वमात्रमेव विध्यर्थः। फले उत्कटेच्छाविरहविशिष्टदुःखजनकत्वज्ञानमेव च प्रवृत्तिप्रतिबन्धकम्, इति श्येन इव क्रत्वङ्गहिंसायामपि सामान्यनिषेधवाक्यात् प्रत्यवाय[2]जनकत्वबोधेऽपि प्रबलदोषमहिम्ना फले उत्कटेच्छाया अविघातात् प्रवृत्तिः, इति न तत्र

१ जैमिनीयसूत्रे १, १, २। २ प्रत्यवायः– दोषः, पापमिति यावत्।

क्रत्वङ्गत्वा-ऽनर्थहेतुत्वयोर्विरोधः, इति प्रत्यवायजनकेऽपि प्रवर्तकस्यैतादृशवाक्यस्याऽर्थशास्त्रत्वमेव, न धर्मशास्त्रत्वम्, इति प्रतिपत्तव्यम् ।

प्राभाकरमतेऽपि श्येनस्य विधिना फलसाधनत्वज्ञापनं विना प्रवृत्त्यविषयत्वात् कथं रागजन्यप्रवृत्त्यविषयत्वम्?। प्रधानहिंसात्वेन चाऽधर्मजनकत्वेऽन्यहिंसाया अधर्मजनकत्वं न स्यात् । रागप्राप्तहिंसात्वेन तथात्वेऽपि रागप्राप्तत्वं यदि विध्यजन्येच्छाविषयत्वम्, तदा श्येनासंग्रहः, यदि चाङ्गविध्यजन्येच्छाविषयत्वम्, तदा श्येनाङ्गाऽसंग्रहः, गौरवं च; इति न किञ्चिदेतत् । एतेन 'भाट्टदर्शनमवलम्ब्याभिहितम्, अशुद्धमिति चेत्, न शब्दात्' इति बादरायणसूत्रमप्यपास्तम् ।

नैयायिकास्तु– 'इष्टसाधनत्वम्, कृतिसाध्यत्वम्, बलवदनिष्टाननुबन्धित्वं च, इति त्रयमेव विध्यर्थः । तत्र क्रत्वर्थहिंसायां साक्षाद् निषेधाभावात् प्रायश्चित्तानुपदेशाच्चेष्टसाधनत्व-कृतिसाध्यत्ववद् बलवदनिष्टाननुबन्धित्वमपि विधिना बोध्यते, इति न तस्या अनर्थहेतुत्वम् । श्येनादेस्त्वभिचारस्य साक्षादेव निषेधात्, प्रायश्चित्तोपदेशाच्चानर्थहेतुत्वावगमात् तावन्मात्रं तत्र विधिना न बोध्यते, इति संगतं श्येना-ऽग्नीषोमयोर्वैलक्षण्यम्' इत्याहुः ।

तदप्यसत्, क्रत्वङ्गहिंसायामपि सामान्यनिषेधानुरोधेनाऽनर्थहेतुत्वावश्यकत्वात्, तत्प्रायश्चित्तबोधकवेदस्याऽपि कल्पनात् । सामान्यनिषेध-विधिसंकोचे शक्यार्थत्यागेन वेदे लक्षणापक्षाश्रयणस्यातिजघन्यत्वात्; अन्यथा 'रात्रौ श्राद्धं न कुर्वीत' इत्यत्रापि नञो भेदवत्परत्वेन गुणविधेः, अधिकारविधेर्वा प्रसङ्गात्; 'अमावास्यायां पितृभ्यो दद्यात्' इत्यादिविधिबोधित- ॥ ७६ ॥

१ बलवदनिष्टाननुबन्धित्वम् ।

श्राद्धजन्यतावच्छेकपुण्यत्वाऽवान्तरजातिव्यापकजात्यवच्छिन्नं प्रति रात्रीतरश्राद्धकरणस्य कारणत्वेन रात्रिकृतश्राद्धात् फलानुत्पादसंभवात् । अथ तत्रापि विशेषनिषेधे सामान्यविधिः, तदितरपरत्वव्युत्पत्त्या प्रसह्य नञैवोपपत्तौ नञो भेदवत्परत्वं स्वीक्रियत इति चेत् । तर्हि सामान्यविधेरसंकोचानुरोधेन निषेधविधौ विशेषणाभावमात्रविषयत्वं स्वीक्रियताम्, विकल्प एव वा ।

यैस्तु तत्र पर्युदासविषयप्राप्ते श्राद्धे रात्रिभिन्नत्वरूपगुणविधानमेव स्वीक्रियते, न तु रात्रिभिन्नाऽमावास्यात्वेन निमित्तत्वम्, विशेषण-विशेष्यभावविनिगमनाविरहेणातिगौरवात् । तैरत्रापि सामान्यनिषेधविधावक्रत्वङ्गहिंसात्वेन निमित्तत्वं परित्यज्य क्रत्वङ्गहिंसायां श्येन इव बलवदनिष्टाननुबन्धित्वान्वयपरित्यागमात्रे किं न मनो दीयते, प्रवृत्तेस्तद्वदेवोपपत्तेः ? । एतेन 'तेन[1] रूपेण निमित्तताऽऽर्थिकी, इति न शक्यार्थत्यागः' इत्यपास्तम्, अर्थतः क्रत्वङ्गहिंसायां बलवदनिष्टाननुबन्धित्वस्यैवाऽसिद्धेः, श्येन इव तत्र सामान्यनिषेधबाधादेव तदनन्वयात् 'श्येने तदनन्वयप्रयोजकं तात्पर्यम्, क्रत्वङ्गहिंसायां तु न तत्[2]' इति कल्पनागौरवे हिंसारसिकत्वं विनाऽन्यस्य बीजस्याऽभावात् ।

अथाऽग्नीषोमादेः स्वर्गजनकत्वं श्रुतं तदङ्गहिंसाया बलवदनिष्टानुबन्धित्वं विरुन्ध्यादिति चेत् । श्येनस्याभिचारजनकत्वमपि किं न तथा ? । श्येनजन्याऽदृष्टस्य शत्रुवध-नरकोभयजनकत्वाद् न विरोध इति चेत् । तर्हि क्रत्वङ्गहिंसाजन्याऽदृष्टस्यापीष्टानिष्टोभयजनकत्वमङ्गीक्रियताम् । एवं सति पुण्यत्व-पापत्वयोः साङ्कर्यमिति चेत् । तदिदं तवैव[3] संकटम्; अस्माकं[4] तु पापा-

१ तच्छब्देन बलवदनिष्टाननुबन्धित्वम् । २ तद्- बलवदनिष्टाननुबन्धित्वानन्वयप्रयोजकं तात्पर्यम् । ३ तव- नैयायिकस्य । ४ अस्माकम्- जैनानाम् ।

नुबन्धिपुण्यविपाकनिमित्ततया श्येनाऽग्नीषोमादीनामिष्टप्रयोजकत्वमात्राभ्युपगमे न किञ्चिद् बाधकम् । ' यो यद्गतफलार्थितया क्रियते, स तद्गतकिञ्चिदतिशयजनकः ' इति नियमात् शत्रुवधार्थितया क्रियमाणं श्येनजन्यादृष्टं पापरूपं शत्रावेव स्वीक्रियत इति चेत् । कथं तर्हि श्येनकर्तुर्नरकावाप्तिः; श्येनध्वंसस्य श्येनव्यापारतायामन्यत्राऽप्यदृष्टोच्छेदप्रसङ्गात्, शत्रुनिष्ठपापस्य च भोगेन नाशात् ?। न चायं नियमोऽपि, कर्मणः समानाधिकरणस्यैवाऽदृष्टस्य जनकत्वात्, तत्तददृष्टाऽन्यादृष्टत्वेन समानाधिकरणकर्मजन्यत्वे गौरवात् । एतेन श्येनात् पापद्वयाभ्युपगमोऽपि परास्तः; इति न किञ्चिदेतत् ।

ये तु– ' श्येनेऽपि बलवदनिष्टाननुबन्धित्वं न बाधितान्वयम्, न हि सा हिंसा, अदृष्टाद्वारकमरणोद्देश्यकमरणानुकूलव्यापारस्यैव हिंसात्वात् । गङ्गामरणार्थक्रियमाणत्रिसन्ध्यस्तवपाठवारणाय 'अदृष्टाऽद्वारक–' इति विशेषणम्; कूपकर्तुर्दैवात् कूपपतितगोहिंसावारणाय 'मरणोद्देश्यक–' इति । तथा च श्येनस्याऽपि न निषिद्धत्वम्' इत्याहुः ।

तेषां हिंस्राणामपूर्वा हिंसारसिकता, यया श्येनकर्तुरपि वैरिमरणप्रयोजकवज्रपाताद्यकर्तृत्वेन शिष्टत्वमनुमतम्, अनर्थप्रयोजकेऽपि निषेधविधिमप्रवृत्तौ च प्रतिज्ञाबाध इति । न च तैः पाप्मभिर्हिंसालक्षणं स्वमतेनाऽपि सुष्ठु घुष्टम्[1], स्वजन्याऽदृष्टाजन्यत्वस्य मरणविशेषणत्वेऽसंभवात्, कार्यमात्रस्याऽदृष्टजन्यत्वात्, सामानाधिकरण्येनाऽदृष्टजन्यत्वनिवेशे च श्येनातिव्याप्तेः । एतेन 'अदृष्टव्यापारसंबन्धेन स्वाजन्यत्वं तत्' इत्यपि निरस्तम्, प्रतियागप्रतिबद्धश्येनातिव्याप्तेश्च । न च तत्र मरणोपधायकत्वलक्षणं मरणानुकूलत्वमेव न, इति नातिव्याप्तिरिति वाच्यम्; खड्गघातेनाऽपि यत्र दैवाद् मरणं तत्राऽव्याप्त्यापत्तेः । न च

१ घुषेर्विशब्दनार्थाद्विशब्दने क्तः ।

तत्रापि पूर्णप्रायश्चित्ताभावाद् न हिंसेति वाच्यम्, अर्धप्रायश्चित्तस्यापि हिंसानिमित्तत्वात् । एतेन 'मरणजनकादृष्टाजनकत्वलक्षणं तद्व्यापारविशेषणम्' इत्यपि निरस्तम्, इतरहिंसाजनकतादृशाऽदृष्टाऽप्रसिद्धेश्च मरणोद्देश्यकत्वमपि न मरणत्वप्रकारकेच्छाऽजन्येच्छाविषयत्वम्, धनादिलिप्सया हिंसायामतिव्याप्तेः; किन्तु मरणजनकेच्छाऽविषयत्वम्; तथा च क्रत्वङ्गहिंसायामतिव्याप्तिः; अत एव मरणफलकत्वाबोधकविधिबोधितकर्तव्यताकान्यत्वरूपाऽदृष्टाऽद्वारकत्वानिवेशेऽपि न निस्तारः । न चाविहितत्वमात्रनिवेशेऽपि निर्वाहः, प्रमादकृतहिंसायामव्याप्तेः; विहितेऽपि श्येनादौ त्वदीयानामपि हिंसाव्यवहारात्, अनेन रूपेण पापजनकत्वे गौरवाच्चेति दिग् ।

तस्मात् 'प्रमादयोगेन प्राणव्यपरोपणं हिंसा'[1] इति परमर्षिप्रणीतमेव हिंसालक्षणं सम्यक् । अत्र च प्रमादयोगः–यतनाऽभावः, यतना च जीवरक्षानुकूलो व्यापारः, तत्त्वं[2] च जीवमरणव्यापारविघटकत्वम्, युगमात्रक्षेत्रे सम्यग्नेत्रव्यापाररूपेर्यासमित्यादिना जीवमरणजनकचरणव्यापारादेरनिष्टसाधनत्वेन निवर्तनादिति बोध्यम् । न च 'मरणानुकूलव्यापारेण' इत्येवाऽस्तु, किमधिकेन ?, इति वाच्यम् । अप्रमत्तहिंसायामतिव्याप्तेः । न चैवमप्यनाभोगाविघटनेनाऽप्रमत्तहिंसाया हिंसात्वापत्तिः, शक्यविघटनत्वस्य व्यापारविशेषणत्वात् । न चैवमप्यनशनादावतिव्याप्तिः, परजीवग्रहणे चात्महिंसायामव्याप्तिरिति वाच्यम्; शुभसंकल्पापूर्वकत्वस्य मरणव्यापारविशेषणत्वात् । न चैवं याज्ञिकानामपि क्रत्वङ्गहिंसायां शुभसंकल्पाद् न दोष इति वाच्यम्, विधिजन्यमोक्षेच्छाया एव शुभसंकल्पपदेन ग्रहणात् । अत एव राज्यादिनिदानार्थमनशनमप्यात्महिंसां वदन्ति

१ तत्त्वार्थसूत्रे ७, ८ । २ जीवरक्षानुकूलव्यापारत्वं च ।

तान्त्रिकाः[1]। द्रव्य-भावोभयहिंसालक्षणं चैतत्, कर्मबन्धजनकता तु प्रकृतिप्रदेशावाश्रित्य प्रमत्तयोगत्वेन, स्थिति-रसौ चाश्रित्य क्लिष्टाध्यवसायत्वेन, इत्यन्यत्र विस्तरः। तस्माद् हिंसायामहिंसात्वं समर्थयतां परेषां वेदावलम्बनमपि महतेऽनर्थाय; उक्तं च[2]—

"ये चक्रुः क्रूरकर्माणः शास्त्रं हिंसोपदेशकम्। क्व ते यास्यन्ति नरके नास्तिकेभ्योऽपि नास्तिकाः? ॥ १ ॥

वरं वराकश्चार्वाको योऽसौ प्रकटनास्तिकः। वेदोक्तितापसच्छद्मच्छन्नं रक्षो न जैमिनिः[3] ॥ २ ॥" इति।

वेदाऽप्रामाण्यं पापकर्मणि प्रवर्तकत्वात्, परपरिगृहीतत्वाच्च विभावनीयम्, इति किमतिहिंस्रेण सह बहुविचारणया? ॥४८॥

तदेवं याज्ञिकाऽऽगमे दृष्टे-ष्टविरुद्धतामुपदर्श्य, अन्यत्राऽप्यतिदिशन्नाह—

**अन्येषामपि बुद्ध्यैवं दृष्टेष्टाभ्यां विरुद्धता। दर्शनीया कुशास्त्राणां ततश्च स्थितमित्यदः॥४९॥**

अन्येषामपि– आजीवकादिसंबन्धिनाम्, एवम्– उपदर्शितप्रकारेण, बुद्ध्या– विचारणया, कुशास्त्राणां– शास्त्राभासानाम्, दृष्टे-ष्टाभ्यां विरुद्धता दर्शनीया, उपदर्शितजातीयत्वेन सर्वेषामपि तेषां दुष्टत्वात्, तदुक्तं स्तुतिकृता[4]—

" हिंसादिसंसक्तपथोपदेशादसर्वविन्मूलतया प्रवृत्तेः।

नृशंसदुर्बुद्धिपरिग्रहाच्च ब्रूमस्त्वदन्यागममप्रमाणम् ॥ १ ॥" इति।

१ आर्हतसिद्धान्तनिष्णाताः। २ कलिकालसर्वज्ञश्रीहेमचन्द्राचार्येण। ३ योगशास्त्रे द्वितीयस्मिन् प्रकाशे श्लो॰ ३७,३८। ४ अयोगव्यवच्छेदद्वात्रिंशिकायां श्लो॰ १०।

ततश्च– अन्यागमानां दृष्टे-ष्टाविरुद्धत्वेनाऽप्रतिपक्षत्वाच्च, इति– पूर्वोक्तम् , अदः– वक्तृप्रत्यक्षं 'हिंसादिभ्योऽशुभादि' इत्यादि, स्थितम्– अप्रामाण्यशङ्काविरहितेनाऽऽगमप्रमाणेन सिद्धम् ॥ ४९ ॥

ततः सिद्धं प्रतिनियतं कर्म, तच्च कर्तारमाक्षिपति, इति तथात्वं स्वात्मन एव, इति नियमयति—

**क्लिष्टं हिंसाद्यनुष्ठानं न यत्तस्यान्यतो मतम्। ततः कर्ता स एव स्यात्सर्वस्यैव हि कर्मणः॥**

क्लिष्टं– रौद्राध्यवसायपूर्वकम् , प्राणिघाताद्याचरणम्; इदमुपलक्षणमक्लिष्टाचरणस्य, यत्– यस्माद्धेतोः, तस्य– आत्मनः, अन्यतः– स्वातिरिक्तव्यापारवतः, न मतं– नाऽभीष्टम् , देवदत्तयोगेन यज्ञदत्तानुष्ठानाभावात् । ततः– तस्माद्धेतोः, स एव– अधिकृतात्मैव, हि– निश्चितम् , सर्वस्यैव– स्वीयहिता-ऽहितकर्मणः, कर्ता स्यात् , स्वव्याप्यस्य कर्मणः कारणान्तराप्रयोज्यत्वे सति कारणान्तरप्रयोजकत्वलक्षणस्वातन्त्र्येण हेतुत्वात् । अत्र [1]निश्चयतोऽपृथग्भावेन स्वव्याप्यस्य रागद्वेषाद्यध्यवसायलक्षणस्य भावकर्मणः परिणामित्वलक्षणस्वातन्त्र्येण कर्तृत्वम्; [2]व्यवहारेण तु संयोगविशेषेण स्वव्याप्यद्रव्यकर्माणि योगव्यापारस्वातन्त्र्येण कर्तृत्वमिति विवेकः ॥ ५० ॥

ननु यद्यात्मैव कर्ता, तदा हितमेवाऽयं कुर्यात्, नाहितम्; इत्यत्राह—

**अनादिकर्मयुक्तत्वात्तन्मोहात्संप्रवर्तते। अहितेऽप्यात्मनः प्रायो व्याधिपीडितचित्तवत्॥५१॥**

१ निश्चयनयमतमाश्रित्येत्यर्थः । २ व्यवहारनयापेक्षया ।

स आत्मा, आत्मनः– स्वस्य, अहितेऽपि– हिंसाद्यनुष्ठानेऽपि, अनादिकर्मयुक्तत्वाद् हेतोः, तन्मोहात्– कर्मजनितमौढ्यात्, संप्रवर्तते– आदरेण प्रवर्तते, प्रायो बाहुल्येन। किंवत्? इत्याह– व्याधिपीडितचित्तवत्– रोगाकुलहृदयवत्। यथा व्याधितोऽपथ्यं जानन्, अजानन् वा बहुकालस्थितिकव्याधिमहिम्नाऽपथ्य एव प्रवर्तते, तथा संसार्यपि जानन्, अजानन् वाऽहित एव प्रायः कर्मदोषात् प्रवर्तत इति भावः। अत्राऽहितप्रवृत्तौ क्लिष्टं[1] कर्म हेतुः, तत्र चाहितप्रवृत्त्यन्तरम्, इत्यन्योन्याश्रयोऽनादिपदेन न दोषायेति सूच्यते; बीजाऽङ्कुरस्थलीयस्याऽन्योन्याश्रयस्योत्पत्ति-ज्ञप्त्यप्रतिबन्धकत्वेनाऽदोषत्वादित्याशयः ॥ ५१ ॥

अत्र प्रसङ्गाद् वार्तान्तरमाह—

**कालादीनां च कर्तृत्वं मन्यन्तेऽन्ये प्रवादिनः। केवलानां तदन्ये तु मिथः सामग्र्यपेक्षया ५२**

अन्ये प्रवादिनः– एकान्तवादिनः, कालादीनाम्, आदिना स्वभावादिग्रहः, केवलानां– परक्लृप्तहेतुरहितानाम्, कर्तृत्वम्– असाधारणत्वेन हेतुत्वम्, मन्यन्ते। तदन्ये तु– अनेकान्तवादिनः सामग्र्यपेक्षया– सामग्रीप्रविष्टत्वेन, मिथः– परस्परम्, सहकारिलक्षणं कर्तृत्वं 'मन्यन्ते' इति प्राक्तनानुषङ्गः। इदमेवाऽभिहितं सम्मतिकारेण—

"[2]कालो सहाव-णियई पुव्वकयं पुरिसकारणेगंता। मिच्छत्तं ते चेव उ समासओ हुंति सम्मत्तं[3] ॥१॥" इति ॥५२॥

तत्र पूर्वं कालवादिमतोपपत्तिमाह—

---

१ क्लिष्टे कर्मणि। २ कालः स्वभाव-नियती पूर्वकृतं पुरुषकारणमेकान्तात्। मिथ्यात्वं त एव तु समासतो भवन्ति सम्यक्त्वम्। ३ सम्मतिसूत्रे १५०।

न कालव्यतिरेकेण गर्भकालशुभादिकम् । यत्किञ्चिज्जायते लोके तदसौ कारणं किल ॥५३॥

कालव्यतिरेकेण– स्त्री-पुंससंयोगादिजन्यत्वेन पराभिमतस्याऽपि गर्भस्य जन्म न भवति, न हि तज्जन्मनि गर्भपरिणतिर्हेतुः, अपरिणतस्यापि कदाचिज्जन्मदर्शनात्; तथा, कालोऽपि शीतो-ष्ण-वर्षाद्युपाधिः, तद्व्यतिरेकेण न भवति । अत्र कालस्थाने 'बाल' इति क्वचित् पाठः, तत्र बालत्वं जन्मोत्तरावस्था, साऽपि कालव्यतिरेकेण न, अन्यथाऽतिप्रसङ्गादित्यर्थः । तथा, शुभादिकं– स्वर्गादिकम्, आदिना नरकादिग्रहः, यत् किञ्चिल्लोके घटादि, तदपि कालव्यतिरेकेण न भवति, कर्मदण्डादिसत्त्वेऽपि कालान्तर एव स्वर्ग-घटाद्युत्पत्तेः । तत्– तस्मात् कारणात्, असौ कालः 'किल' इति सत्ये, कारणम्– अन्यस्य त्वन्यथासिद्धत्वादसत्यत्वमिति भावः ॥ ५३ ॥

तथा—

कालः पचति भूतानि कालः संहरति प्रजाः । कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥५४॥

कालः भूतानि– उत्पत्तिमन्ति, पचति– उत्पन्नानां प्रकृतपर्यायोपचयं करोतीत्यर्थः । तथा, कालः प्रजाः संहरति– प्रकृतपर्यायान्तरपर्यायभाजः करोति । तथा, कालः सुप्तेषु– अजनितकार्येषु पराभिमतकारणेषु सत्सु, जागर्ति– विवक्षितकार्यमुपदधातीत्यर्थः । अतो हि– निश्चितम् , कालः सृष्टि-स्थिति-प्रलयहेतुतया दुरतिक्रमः– अनपलपनीयकारणताकः ॥ ५४ ॥

**किञ्च कालादृते नैव मुद्गपक्तिरपीक्ष्यते । स्थाल्यादिसंनिधानेऽपि ततः कालादसौ मता॥५५॥**

'किञ्च' इत्युपचये, कालादृते- कालं विना, स्थाल्यादिसंनिधानेऽपि, आदिना विलक्षणवह्निसंयोगादिग्रहः, मुद्गपक्तिरपि- मुद्गानां विलक्षणरूप-रसादिरूपविक्लृतिपरिणतिरपि, नैवेक्ष्यते। ततोऽसौ- मुद्गपक्तिः, कालाद् मता- कालमात्रजन्येष्टा। न च तदा मुद्गपक्तिजनकविलक्षणाग्निसंयोगाभावादेव तदपक्तिरिति वाच्यम् , तत्रापि हेत्वन्तरापेक्षावैयग्र्यात् , आवश्यकत्वेन कालस्यैव तद्धेतुत्वौचित्यादित्याशयः ॥ ५५ ॥

विपक्षे बाधकमाह—

**कालाभावे च गर्भादि सर्वं स्यादव्यवस्थया । परेष्टहेतुसद्भावमात्रादेव तदुद्भवात्॥५६॥**

कालाभावे च— कालस्याऽसाधारणहेतुत्वानङ्गीकारे च, गर्भादिकं सर्वं कार्यमव्यवस्थया- अनियमेन स्यात् । कुतः ?, इत्याह- परेष्टहेतुसद्भावमात्रादेव- पराभिमतमाता-पित्रादिहेतुसंनिधानमात्रादेव, तदुद्भवात्- अविलम्बेन गर्भाद्युत्पत्तिप्रसङ्गात् । ननु कालोऽपि यद्येक एव सर्वकार्यहेतुः, तदा युगपदेव सर्वकार्योत्पत्तिः, तत्तत्कार्ये तत्तदुपाधिविशिष्टकालस्य हेतुत्वे चोपाधीनामेवाऽऽवश्यकत्वात् कार्यविशेषहेतुत्वम् ; इति गतं कालवादेन, इति चेत् । अत्र नव्याः- क्षणरूपः कालोऽतिरिच्यत एव, स्वजन्यविभागप्रागभावविशिष्टकर्मणस्तथात्वे जाते विभागे तदभावापत्तेः, तदाऽन्यविशिष्टकर्मणस्तथात्वेऽननुगमात् , तस्य च



१ सर्वत्र मूलादर्शेषु ' पीष्यते ' इति पाठः । २ तच्छब्दो मुद्गपरामर्शकः ।

तत्क्षणवृत्तिकार्ये तत्पूर्वक्षणत्वेन हेतुत्वम्[1]; तत्क्षणवृत्तित्वं च तत्क्षणस्याऽप्यभेदेऽपि 'इदानीं क्षणः' इति व्यवहारात् कालिकाधाराऽऽधेयभावसिद्धेः। अतस्तत्तत्क्षणतन्नाशानां तत्तत्पूर्वक्षणजन्यत्वाद् न क्षणिकत्वानुपपत्तिः। एवं च क्षणिकेनैव क्षणेन कार्यविशेषजननाद् नातिरिक्तहेतुसिद्धिः। न च तत्क्षण एव तन्तौ पटादिकं जायते, घटादिकं त्वन्यत्र, इति देशनियमार्थमतिरिक्तहेतुसिद्धिः, काचित्कत्वस्य नित्य इवाऽनित्येऽपि स्वभावत एव संभवात्, कादाचित्कत्वस्यैव हेतुनियम्यत्वात्, अन्यत्राऽन्यापत्तेरभावात्। क्षणस्येवाऽन्येषामपि नियतपूर्ववर्तित्वात् कथं हेतुत्वप्रतिक्षेपः ?, इति चेत्। 'अवश्यक्लृप्त०'[2] इत्याद्यन्यथासिद्धिसद्भावात्। अत एव न पटत्वाद्यवच्छिन्नस्याऽऽकस्मिकतापत्त्या तदवच्छिन्नं प्रति हेतुतासिद्धिः, तदवच्छिन्ननियतपूर्ववर्तित्वनिश्चयादेवैतावत्सत्त्वेऽवश्यं पटोत्पत्तिरिति निश्चयेन कृतिसाध्यताधीसंभवात्; अप्रामाणिकव्यवहारानुपपत्तिरूपमाकस्मिकत्वं तु न बाधकम्, युक्तं चैतत्, अनन्तनियतपूर्ववर्तिष्वनन्यथासिद्धत्वाकल्पनेन लाघवात्' इत्याहुः ॥ ५६ ॥

॥ उक्तः कालवादः ॥

अथ स्वभाववादमाह—

**न स्वभावातिरेकेण गर्भबालशुभादिकम्। यत्किञ्चिज्जायते लोके तदसौ कारणं किल ॥५७॥**

---

१ ख. ग. घ. च. 'त्वं तत्क्ष[illegible]। २ अवश्यक्लृप्तनियतपूर्ववर्तिन एव कार्यसंभवे तद्व्यतिरिक्तस्याऽन्यथासिद्धत्वेनाऽऽम्नायादिति तात्पर्यम्।

स्वभावातिरेकेण– स्व[illegible]तिवृत्य, गर्भ-बाल-शुभादिकं यत् किञ्चित्– कार्यं, लोके न जायते, तत्– तस्मात् कारणात्, 'किल' इति सत्ये, असौ स्वभावः, कारणं– कादाचित्कत्वनियामकः, आकाशत्वादीनां काचित्कत्ववद् घटादीनां कादाचित्कत्वस्येतरानियम्यत्वात्; आकाशादीनामन्यत्र सत्त्वे तत्स्वभावत्वाभावप्रसङ्गस्येव कादाचित्कत्वस्याऽपि गगनादौ सत्त्वे घटादिस्वभावत्वाभावप्रसङ्गस्य बाधकत्वात्; अवधीनां नियतपूर्ववर्तित्वेऽपि तद्गतोपकाराजनकत्वेनाऽहेतुत्वात्। भवनस्वभावत्वे घटः सर्वदा भवेदिति चेत्। न, तदहरेव भवनस्वभावत्वात्। अथवा, कारणमिति– मुख्य एवाऽर्थः, उपादानस्वभावस्यैवोपादेयगतस्वभावरूपोपकारजनकस्योपादेयहेतुत्वात्। न चोपकारेऽप्युपकारान्तरापेक्षायामनवस्था, तस्य स्वत एवोपकृतत्वात्। दण्डादीनां दण्डरूपादीनामिव नियताऽवधित्वेऽप्यन्यथासिद्धत्वम्, 'दण्डाद् घटः' इति व्यवहारस्तु 'इन्धनात् पाकः' इतिवदेव ॥ ५७ ॥

इदमेवाह—

**सर्वे भावाः स्वभावेन स्वस्वभावे तथा तथा। वर्तन्तेऽथ निवर्तन्ते कामचारपराङ्मुखाः॥५८॥**

सर्वे भावाः, स्वभावेन– स्वगतेन हेतुगतेन वा निमित्तेन, तथा तथा– विशिष्टसंस्थानादिप्रतिनियतरूपेण, स्वस्वभावे– आत्मीयात्मीयसत्तायाम्, 'तिलेषु तैलम्' इतिवदभिव्याप्तौ सप्तमी, स्वस्वभावमभिव्याप्येत्यर्थः, वर्तन्ते– भूत्वा तिष्ठन्ति। अथ नाशकाले निवर्तन्ते– स्वभावेन नाशभाजो भवन्ति। किंभूताः?, इत्याह– कामचारपराङ्मुखाः– अनियतभावनिरपेक्षाः ॥५८॥

हेत्वन्तरे कामचारमेव स्पष्टयति—

**न विनेह स्वभावेन मुद्गपक्तिरपीष्यते। तथाकालादिभावेऽपि नाश्वमाषस्य सा यतः॥५९॥**

इह– जगति, स्वभावेन विना, तथाकालादिभावेऽपि– प्रतिनियतकालव्यापारादिसामग्रीसंनिधानेऽपि, मुद्गपक्तिरपि नेष्यते। कुतः?, इत्याह– यतोऽश्वमाषस्य– कङ्कटुकस्य[1], सा– पक्तिः, न भवति। न ह्यश्वमाषे विलक्षणाग्निसंयोगादिकं नास्तीति वक्तुं शक्यते, एकयैव क्रियया तत्तदन्यवह्निसंयोगात्। न चादृष्टवैषम्यात् तदपाकः, दृष्टसाद्गुण्ये तद्वैषम्याऽयोगात्; अन्यथा दृढदण्डनुन्नमपि[2] चक्रं न भ्राम्येत्। तस्मात् स्वभाववैषम्यादेव तदपाकः, इत्यन्यत्र कामचारात् स्वभाव एव कारणमिति पर्यवसन्नम्॥ ५९॥

उक्तदार्ढ्यायैव विपक्षे बाधकमाह—

**अतत्स्वभावात्तद्भावेऽतिप्रसङ्गोऽनिवारितः। तुल्ये तत्र मृदः कुम्भो न पटादीत्ययुक्तिमत्॥६०॥**

अतत्स्वभावात्– तत्स्वभावभिन्नात्, तत्स्वभावरहिताद् वा; तद्भावे– अधिकृतकार्योत्पादे 'अङ्गीक्रियमाणे' इति शेषः; अतिप्रसङ्गोऽनिष्टप्रसङ्गः, अनिवारितः– अबाधितः। कुतः?, इत्याह– तुल्ये– समाने, तत्र– अतत्स्वभावत्वे सति, मृदा कुम्भ एव जन्यते, न पटादीति, अयुक्तिमत्– नियामकरहितम्। ननु नातत्स्वभावत्वं तज्जननप्रयोजकमुच्यते, येनेयमापत्तिः[3] संगच्छते,

---

१ कङ्कटुकापाकः। २ नुन्नम्– प्रेरितम्। ३ अतत्स्वभावत्वे मृदः कुम्भाद्यपि न स्यात्, पटाद्यपि वा स्यात्, अविशेषात्, इत्येवंरूपा।

किन्तु सामग्रीमेव कार्यजनिकां ब्रूमः; अश्वमाषस्य च पक्तिं प्रति स्वरूपयोग्यतैव न, इति को दोषः?, इति चेत्।

अत्र वदन्ति[1]– अन्तरङ्गत्वात् स्वभाव एव कार्यहेतुः, न तु बाह्यकारणम्। न च मृत्स्वभावाविशेषाद् घटादिकार्याविशेषप्रसङ्गः, 'स्वस्य भावः कार्यजननपरिणतिः' इति स्वभावार्थत्वात्, तस्याश्च[2] कार्यैकव्यङ्ग्यत्वात्। न चेदेवम्, अङ्कुरजननस्वभावं बीजं प्रागेवाऽङ्कुरं जनयेत्। सहकारिलाभा-ऽलाभाभ्यां हेतोः कार्यजनना-ऽजनने उपपत्स्येते इति चेत्। न, सहकारिचक्रानन्तर्भावेन विलक्षणबीजत्वेनैवाङ्कुरहेतुत्वौचित्यात्[3]। न च सहकारिचक्रस्याऽतिशयाधायकत्वं त्वयाऽपि[4] कल्पनीयम्, इति तस्य[5] तत्कार्यजनकत्वकल्पनमेवोचितमिति वाच्यम्; पूर्व-पूर्वोपादानपरिणामानामेवोत्तरोत्तरोपादेयपरिणामहेतुत्वात्, अत एव कालवादाप्रवेशात्। न च चरमक्षणपरिणामरूपबीजस्याऽपि द्वितीयादिक्षणपरिणामरूपाङ्कुराजनकत्वाद् व्यक्तिविशेषमवलम्ब्यैव हेतु-हेतुमद्भावो वाच्यः, अन्यथा व्यावृत्तिविशेषानुगतप्रथमादिचरमपर्यन्ताङ्कुरक्षणात् प्रतिव्यावृत्ति विशेषानुगतानां चरमबीजक्षणादिकोपान्त्याङ्कुरक्षणानां हेतुत्वे कार्य-कारणतावच्छेदककोटावेकैकक्षणप्रवेशा-ऽप्रवेशाभ्यां विनिगमनाविरहप्रसङ्गात्; तथा च तज्जातीयात् कार्यात् तज्जातीयकारणानुमानभङ्गप्रसङ्ग इति वाच्यम्; सादृश्यतिरोहितवैसदृश्येनाऽङ्कुरादिना तादृशबीजादीनामनुमानसंभवात्, प्रयोज्य-प्रयोजकभावस्यैव विपक्षबाधकतर्कस्य जागरूकत्वादिति। अधिकमध्यात्ममतपरीक्षायाम्। ततः स्वभावहेतुकमेव जगदिति स्थितम्। उक्तं च—

१ स्वभाववादिन इति शेषः। २ कार्यजननपरिणतेः। ३ सहकार्यतिरिक्तत्वेन मुख्यतयाऽभिमते हेताविति गम्यते। ४ स्वभाववादिना। ५ सहकारिचक्रस्य। ६ तच्छब्देनाधिकृतपरामर्शः।

"कः कण्टकानां प्रकरोति तैक्ष्ण्यं विचित्रभावं मृगपक्षिणां च ? ।
स्वभावतः सर्वमिदं प्रवृत्तं न कामचारोऽस्ति कुतः प्रसङ्गः ? ॥ १ ॥" इति ॥६०॥

॥ उक्तः स्वभाववादोऽपि ॥

अथ नियतिवादमाह—

**नियतेनैव रूपेण सर्वे भावा भवन्ति यत्। ततो नियतिजा ह्येते तत्स्वरूपानुवेधतः॥६१॥**

नियतेनैव– सजातीय-विजातीयव्यावृत्तेन स्वभावानुगतेनैव रूपेण, सर्वे भावा भवन्ति, यद्– यस्माद् हेतोः । ततो हि– निश्चितम्, एते– भावाः, नियतिजाः– नैयत्यनियामकतत्त्वान्तरोद्भवाः । हेत्वन्तरमाह– तत्स्वरूपानुवेधतः– नियतिकृत-प्रतिनियतधर्मोपश्लेषात् । दृश्यते हि तीक्ष्णशस्त्राद्युपहतानामपि मरणनियतताभावेन मरणम्, जीवननियततया च जीवनमेवेति !! ६१ ॥

इदमेव स्फुटमाह—

**यद्यदैव यतो यावत्तत्तदैव ततस्तथा। नियतं जायते, न्यायात्क एतां बाधितुं क्षमः ?॥६२॥**

यद्– घटादिकम्, यदैव– विवक्षितकाल एव, यतः– दण्डादेः, यावत्– विवक्षिताल्प-बहुदेशव्यापि, जायमानं

दृश्यते; तद्- घटादिकम्, तदैव- विवक्षितकाल एव, ततः- दण्डादेः, तथा- तावद्देशव्यापि, लोके- जगति, नियतम्- नियतिकृतम्, जायते । ततो न्यायात्- तर्कात्, क एतां- नियतिम्, बाधितुं क्षमः, प्रमाणसिद्धेऽर्थे बाधानवतारात्, नियतरूपावच्छिन्नं प्रति नियतेरेव हेतुत्वात्, अन्यथा नियतरूपस्याप्याकस्मिकताऽऽपत्तेः ? । न च तावद्धर्मकत्वं न जन्यतावच्छेदकम्, किन्त्वार्थसमाजसिद्धमिति वाच्यम्; नियतिजन्यत्वेनैवोपपत्तावार्थसमाजाऽकल्पनात्, भिन्नसामग्रीजन्यतयैकवस्तुरूपव्याघातापत्तेश्च । तदुक्तम्—

"प्राप्तव्यो नियतिबलाश्रयेण योऽर्थः सोऽवश्यं भवति नृणां शुभोऽशुभो वा ।
भूतानां महति कृतेऽपि हि प्रयत्ने नाऽभाव्यं भवति, न भाविनोऽस्ति नाशः ॥ १ ॥" इति ॥ ६२ ॥

इदमेव विवृणोति—

**न चर्ते नियतिं लोके मुद्गपक्तिरपीक्ष्यते । तत्स्वभावादिभावेऽपि नासावनियता यतः ॥६३॥**

न च लोके- जगति, नियतिमृते- नियतिं विना, मुद्गपक्तिरपीक्ष्यते- दृश्यते; यतस्तत्स्वभावादिभावेऽपि- मुद्गपक्तिजनकस्वभावव्यापारादिसत्त्वेऽपि, नासौ- अधिकृता मुद्गपक्तिः, अनियता, किन्तु स्वरूपनियता । न चैतद् नैयत्यं स्वभावप्रयोज्यम्, स्वभावस्य कार्यैकजात्यप्रयोजकत्वात्, अतिशयरूपस्याऽपि तस्य विशेष एव प्रयोजकत्वात्, पक्त्यन्तरसाजात्य-

१ सर्वत्र मूलपुस्तकादर्शेषु 'पीष्यते' इति पाठः ।

वैजात्योभयानुवेधस्य नियतिं विनाऽसंभवात् । हेतुना व्यक्तिरेवोत्पाद्यते, उभयानुवेधस्तु तत्र तत्त्वान्तरसंवेधादिति चेत् । न, समवायादिनिरासेन तत्संवेधानुपपत्तेः, अनिरासेऽपि तत्रैव तत्संवेधनियामकगवेषणात् । किञ्च, दण्डादिसत्त्वेऽवश्यं घटोत्पत्तिरिति न सम्यग् निश्चयः, तत्सत्त्वेऽपि कदाचिद् घटानुत्पत्तेः ; किन्तु संभावनैव, इति न दृष्टहेतुसिद्धिः; 'यद् भाव्यं तद्भवत्येव' इति तु सम्यग् निश्चयः । न चैव कार्योत्पत्तेः पूर्वं नियत्यनिश्चयात् प्रवृत्तिर्न स्यादिति वाच्यम् , अविद्ययैव प्रवृत्तेः, फललाभस्य तु यादृच्छिकत्वादिति दिग् ॥ ६३ ॥

उक्तमेव बाधकविपक्षत्वेनाह—

**अन्यथाऽनियतत्वेन सर्वभावः प्रसज्यते । अन्योन्यात्मकतापत्तेः क्रियावैफल्यमेव च ॥६४॥**

अन्यथा- नियतिजन्यत्वं विना, अनियतत्वेन हेतुना, सर्वभावः प्रसज्यते, व्यक्त्यविशेषात् । च पुनः अन्योन्यात्मकतापत्तेः- घट-पटाद्यविशेषापत्तेः, क्रियावैफल्यमेव, सिद्धाया व्यक्तेरसाध्यत्वात् । सा व्यक्तिरसिद्धैवेति चेत् । तत्त्वं नान्यभेदः, तदग्रहेऽपि 'सोऽयम्' इति तत्ताग्रहात् । न च तद्व्यक्तिरेव तत्त्वम् , तस्य तत्राविशेषणत्वात् , किन्तु नियतिकृतधर्म एव ; इति सिद्धं नियत्या ॥ ६४ ॥

॥ उक्तो नियतिवादः ॥

अथ कर्मवादमाह--

न भोक्तृव्यतिरेकेण भोग्यं जगति विद्यते। न चाकृतस्य भोक्ता स्यान्मुक्तानां भोगभावतः६५

भोक्तृव्यतिरेकेण, जगति- चराचरे, भोग्यं न विद्यते, भोग्यपदस्य ससंबन्धिकत्वात्; न चाकृतस्य भोक्ता स्यात्, स्वव्यापारजन्यस्यैव स्वभोग्यत्वदर्शनात्; अन्यथा, मुक्तानां- निष्ठितार्थानाम्, भोगभावतः- भोगप्रसङ्गात् ॥ ६५ ॥

ततः किम्?, इत्याह—

भोग्यं च विश्वं सत्त्वानां विधिना तेन तेन यत्। दृश्यतेऽध्यक्षमेवेदं तस्मात्तत्कर्मजं हि तत् ॥६६॥

भोग्यं च- भोगप्रयोजनं च, सत्त्वानां- संसारिणाम्, तेन तेन- सुख-दुःखप्रदानादिलक्षणेन, विधिना- प्रकारेण, इदं विश्वं- जगत्, अध्यक्षमेव- स्वसंवेदनसाक्षिकमेव, दृश्यते, यद्- यस्माद् हेतोः; तस्मात् कारणात्, हि- निश्चितम्, तत्- जगत्, तत्कर्मजं- भोक्तृकर्मजम्; जगद्धेतुत्वं कर्मण्येव, नान्यत्र, इतरेषां पराभिमतहेतूनां व्यभिचारित्वादिति भावः ॥ ६६ ॥

तथा—

न च तत्कर्मवैधुर्ये मुद्गपक्तिरपीक्ष्यते। स्थाल्यादिभङ्गभावेन यत् क्वचिन्नोपपद्यते ॥६७॥

न च तत्कर्मवैधुर्ये- भोक्तृगतानुकूलादृष्टाभावे, मुद्गपक्तिरपीक्ष्यते। कथम्?, इत्याह— यद्- यतो हेतोः, क्वचित्- ॥ ८४ ॥

विवक्षितस्थाने, स्थाल्यादिभङ्गभावेन, नोपपद्यते– न सिध्यति। दृष्टकारणवैगुण्यादेव तत्र कार्याभाव इति चेत्। तर्हि तद्वैगुण्यं यन्निमित्तम्, तत एव कार्यवैगुण्यं न्यायप्राप्तम्, 'तद्धेतोः०' इति न्यायात्। नन्वेवं नियमतो दृष्टकारणापेक्षा न स्यादिति चेत्। न स्यादेव, तथाविधप्रयत्नं विनापि शुभादृष्टेन धनप्राप्त्यादिदर्शनात्; कर्मविपाककालेऽवर्जनीयसंनिधिकत्वेनैव [1]तेषां निमित्त[2]त्वव्यवहारात्। अत एव 'दृष्टकारणानामदृष्टव्यञ्जकत्वम्' इति सिद्धान्तः; तदुक्तम्—

"यथा यथा पूर्वकृतस्य कर्मणः फलं निधानस्थमिवाऽवतिष्ठते।
तथा तथा तत्प्रतिपादनोद्यता प्रदीपहस्तेव मतिः प्रवर्तते ॥ १ ॥" इति।

न च विपाककालापेक्षणात् कालवादप्रवेशः, तस्य कर्मावस्थाविशेषरूपत्वात्। न च कर्महेत्वपेक्षावैयग्र्यम्, अनादित्वात् कर्मपरम्परायाः ॥ ६७ ॥

विपक्षे बाधकमाह–

**चित्रं भोग्यं तथा चित्रात्कर्मणोऽहेतुतान्यथा। तस्य यस्माद्विचित्रत्वं नियत्यादेर्न युज्यते॥६८॥**

तथा– प्रतिनियतरूपेण, चित्रं– नानाप्रकारम्, भोग्यम्, चित्रात्कर्मणो घटते, [3]तस्य तत्तत्कार्यजनकविचित्रशक्तियोगित्वात्। अन्यथा– चित्रकर्मानभ्युपगमे, अहेतुता स्यात्, 'चित्रभोग्यस्य' इत्यनुषज्यते; क्वचिदुद्भूतरूपमेव, क्वचिच्चानुद्भूत-

१ तेषां दृष्टकारणानाम्। २ ख. ग. घ. च. 'त्वव्य'। ३ चित्रकर्मणः।

रूपमेव, परमाणुसाद्भूतानां च शाल्यादिबीजानां शाल्याद्यङ्कुरजनकत्वमेव, इति नियमे परेणाऽप्यदृष्टस्यैवाऽङ्गीकारात्, सर्वत्र तद्धेतुत्वस्यैवौचित्यात् । ननूक्तमेव नियत्यादेः कार्यवैचित्र्यम्, अत एतत्पक्षेणैव प्रत्यासत्त्या प्रतिलोमक्रमेण तद्दूषणार्थमाह— तस्य— भोग्यस्य, विचित्रत्वम्, यस्माद्धेतोः, नियत्यादेः— नियत्यादिप्रयोज्यम्, न युज्यते ॥ ६८ ॥

तथाहि—

**नियतेर्नियतात्मत्वान्नियतानां समानता । तथानियतभावे च बलात्स्यात् तद्विचित्रता ॥६९॥**

नियतेर्नियतात्मत्वात्— एकरूपत्वात्, नियतानां— तज्जन्यत्वेनाभिमतानाम्, समानता स्यात्, तथा— अदृष्टप्रकारानतिक्रमेण, अनियतभावे च— असमानकार्यकारित्वे च नियतेरभ्युपगम्यमाने, बलात्— न्यायात्, तद्विचित्रता— नियतिविचित्रता, स्यात्; 'घटो यदि पटजनकाऽन्यूना-ऽनतिरिक्तहेतुजन्यः स्यात्, पटः स्यात्; घटजनकं यदि पटं न जनयेत्, पटजनकाद् भिद्येत' इति तर्कद्वयम् ॥ ६९ ॥

प्रागुक्तरीत्या कार्यवैचित्र्यनिर्वाहकतयैव नियत्यभ्युपगमाद् द्वितीय इष्टापत्तिमाशङ्क्याह—

**न च तन्मात्रभावादेर्युज्यतेऽस्या विचित्रता । तदन्यभेदकं मुक्त्वा सम्यग्न्यायाविरोधतः ॥७०॥**

न च— नैव, तन्मात्रभावादेः— तन्मात्रभावो— नियतिमात्रत्वम्, आदिना परिणामग्रहः ततोऽस्याः— प्रतिनियतकार्य- 

जनकनियतेः, तदन्यभेदकं– नियत्यन्यभेदकम्, मुक्त्वा– अनभ्युपगम्य, सम्यग्न्यायाऽविरोधतः– सत्तर्काऽप्रातिकूल्येन, विचित्रता स्यात् ॥ ७० ॥

एतदेव प्रकटयन्नाह—

**न जलस्यैकरूपस्य वियत्पाताद् विचित्रता। ऊषराधिधराभेदमन्तरेणोपजायते॥ ७१ ॥**

जलस्य, एकरूपस्य– जलत्वेन समानस्य, वियत्पातात्– अभ्रपातादनन्तरम्, ऊषरादिधराभेदम्– ऊषरेतर-पृथिवीसंबन्धादिजन्यवर्ण-गन्ध-रस-स्पर्शादिवैलक्षण्यम्, अन्तरेण, विचित्रता न दृश्यते; सकललोकसिद्धं खल्वेतत्; तथा, नियतेरप्यन्यभेदकं विना न भेद इति भावः ॥ ७१ ॥

अस्तु तर्हि तदन्यभेदकम्, अत्राह—

**तद्भिन्नभेदकत्वे च तत्र तस्या न कर्तृता। तत्कर्तृत्वे च चित्रत्वं तद्वत्तस्याप्यसंगतम् ॥७२॥**

तद्भिन्नभेदकत्वे च– तद्भिन्नं भेदकं यस्यास्तस्या भावस्तत्त्वमिति समासः, नियतिभिन्नभेदकशालित्वे नियतेरङ्गीक्रिय-माण इत्यर्थः, तत्र– भेदकत्वेनाऽभिमते, तस्याः– नियतेः, न कर्तृता– न हेतुता, तथाच सर्वहेतुत्वसिद्धान्तव्याकोपः। तत्कर्तृत्वे च– नियतेर्भेदकत्वाभिमतहेतुत्वे च, चित्रत्वं– भेदकत्वम्, तद्वत्– नियतिवत्, तस्यापि– भेदकत्वाभिमतस्यापि,

असंगतम्, कारणसरूपत्वात् कार्यस्येति भावः । एतेन 'तद्व्यक्तिनिरूपितनियतित्वेन तद्व्यक्तिजनकत्वम्' इत्यप्यपास्तम्, 'तन्नियतिजन्यत्वेन तद्व्यक्तित्वसिद्धिः, तत्सिद्धौ च तद्व्यक्तिनिरूपितत्वेन नियतिजन्यतासिद्धिः' इत्यन्योन्याश्रयात्, कार्यस्य कारणतानवच्छेदकत्वाच्च, अन्यथा नियतित्वनिवेशवैयर्थ्यादिति दिग् ॥ ७२ ॥

ननु नियतिस्वभावभेदादेव कार्यभेदोऽस्तु, इत्याशङ्क्याह—

**तस्या एव तथाभूतः स्वभावो यदि चेष्यते । त्यक्तो नियतिवादः स्यात्स्वभावाश्रयणान्ननु ॥ ७३ ॥**

यदि च तस्या एव– नियतेरेव, तथाभूतः– कार्यवैचित्र्यप्रयोजकः, स्वभावभेद इष्यते, तदा 'ननु' इत्याक्षेपे, स्वभावाश्रयणाद् नियतिवादस्त्यक्तः स्यात् । अथ तत्स्वभावस्तत्परिपाक एवेति नान्यहेतुत्वाभ्युपगम इति चेत् । न, परिपाकेऽप्यन्यहेत्वाश्रयणावश्यकत्वात् । अन्यत्र परिपाकद्वैविध्यदर्शनेऽपि नियतिपरिपाकः स्वभावादेवेति चेत् । घट्टकुटीप्रभातापत्तिः । उत्तरपरिपाके पूर्वपरिपाक एव हेतुः, आद्यपरिपाके चान्तिमापरिपाक एव, इत्यादिरीत्या विशिष्य हेतु-हेतुमद्भावाद् न दोष इति चेत् । तर्ह्येकदैकत्र घटनियतिपरिपाकेऽन्यत्रापि घटोत्पत्तिः, प्रतिसंतानं नियतिभेदाभ्युपगमे च नियति-परिपाकयोर्द्रव्य-पर्यायनामान्तरत्व एव विवादः ।

किञ्च, एवं शास्त्रोपदेशवैयर्थ्यप्रसक्तिः, तदुपदेशमन्तरेणाऽप्यर्थेषु नियतिकृतत्वबुद्धेर्नियत्यैव भावात्, दृष्टा-ऽदृष्टफल-

१ ख. ग. घ. च. 'दृष्टफ'।

शास्त्रप्रतिपादितशुभा-ऽशुभक्रियाफलनियमाभावश्च स्यात् । तद्धेतुकत्वान्तर्भावितनियमस्य नियतिप्रयोज्यत्वे च सिद्धमितरहेतुना, पारिभाषिककारणत्वप्रतिक्षेपस्याऽबाधकत्वादिति दिग् ॥ ७३ ॥

स्वभावाश्रयणेऽपि दोषमाह—

**स्वो भावश्च स्वभावोऽपि स्वसत्तैव हि भावतः। तस्यापि भेदकाभावे वैचित्र्यं नोपपद्यते॥७४॥**

स्वभावोऽपि च स्वो भावः, कर्मधारयाऽऽश्रयणात्, एकपदव्यभिचारेऽपि तस्य बहुलमुपलम्भात् । अन्यभावपदार्थभ्रान्तिनिरासाय तद्विवरणमाह– हि निश्चितम्, भावतः– अध्यक्षविषयतया, स्वसत्तैव; तस्याऽपि– स्वभावस्य, भेदकाभावे– वैजात्याभावे, वैचित्र्यं– कार्यवैचित्र्यप्रयोजकत्वम्, नोपपद्यते ॥ ७४ ॥

**ततस्तस्याविशिष्टत्वाद्युगपद्विश्वसंभवः। न चासाविति सद्युक्त्या तद्वादोऽपि न संगतः॥७५॥**

ततः– वैचित्र्याभावात्, तस्य– स्वभावस्य अविशिष्टत्वात्– एकरूपत्वात्, विश्वजनकत्वे, युगपत्– एकदैव, विश्वसंभवः– जगदुत्पादप्रसङ्गः; न च स्याद् युगपज्जगदुत्पादः, भवति, इति हेतोः, सद्युक्त्या– अबाधिततर्केण, तद्वादोऽपि– स्वभाववादोऽपि, न संगतः । ननु स्वभावस्य क्रमवत्कार्यजनकत्वमपि स्वभावादेवेति नानुपपत्तिरिति चेत् । न, तस्यैव स्वभावस्य

---

१ सिद्धमित्यत्र भावे क्तः । २ तस्य– कर्मधारयस्य । ३ सर्वत्रादर्शेषु पाठोऽयं लेखकप्रमादकृतः प्रतिभाति 'न चासौ– यु' इति स्यात्, युक्तं स्यात् ।

पूर्वोत्तरकार्यजनकत्वे पूर्वोत्तरकालयोरुत्तरपूर्वकार्यप्रसङ्गेन क्रमस्यैव व्याहतेः, एकस्यैव स्वभावस्य नानाजातिनियामकत्वे सर्वस्य सर्वजातीयत्वस्य, एकजातीयत्वस्य वा प्रसङ्गात् ॥ ७५ ॥



पराभिप्रायमाशङ्क्य परिहरति—

## तत्तत्कालादिसापेक्षो विश्वहेतुः स चेन्ननु । मुक्तः स्वभाववादः स्यात्कालवादपरिग्रहात् ॥ ७६ ॥

तत्तत्कालादिसापेक्षः– तत्तत्क्षणादिसहकृतः, सः– स्वभावः, विश्वहेतुः, कालक्रमेण कार्यक्रमोपपत्तेरिति चेत् । 'ननु' इत्याक्षेपे, स्वभाववादो मुक्तः स्यात्, कालवादपरिग्रहात्– कालहेतुत्वाश्रयणात् । ननु क्षणिकस्वभावे नाऽयं दोष इत्युक्तमेवेति चेत् । उक्तम्, परं न युक्तम्, एकजातीयहेतुं विना कार्यैकजात्याऽसंभवात्; कुर्वद्रूपत्वस्य च जातित्वाभावेन घटं प्रति घटकुर्वद्रूपत्वेन हेतुत्वस्य वक्तुमशक्यत्वात्, सामग्रीत्वेन कार्यव्याप्यत्वस्य वास्तविकत्वेन गौरवस्याऽदोषत्वात्, प्रत्यभिज्ञादिबाधेन क्षणिकत्वस्य निषेत्स्यमानत्वाच्च । किञ्च, एकत्र घटकुर्वद्रूपसत्त्वेऽन्यत्र घटानुत्पत्तेर्देशनियामकहेत्वाश्रयणे स्वभाववादत्यागः, दण्डादौ घटादिहेतुत्वं प्रमायैव प्रेक्षावत्प्रवृत्तेश्च; अन्यथा दण्डादिकं विनाऽपि घटादिसंभावनया निष्कम्पप्रवृत्त्यनुपपत्तेरिति दिग् । न च निर्हेतुका भावा इत्यभ्युपगमेनाऽपि स्वभाववादसाम्राज्यम्, तत्र हेतूपन्यासे वदतो व्याघातात्; तदुक्तम्—

"न हेतुरस्तीति वदन् सहेतुकं ननु प्रतिज्ञां स्वयमेव बाधते ।

अथापि हेतुप्रलयार्दसौ भवेत्, प्रतिज्ञया केवलयाऽस्य किं भवेत्? ॥ १ ॥" इति ।

न च ज्ञापकहेतूपन्यासेऽपि कारकहेतुप्रतिक्षेपवादिनो न स्वपक्षबाधेति वाच्यम्; ज्ञानजनकत्वेनैव ज्ञापकत्वात्, अनियतावधित्वे कादाचित्कत्वव्याघातात्, नियतावधिसिद्धौ तत्त्वस्यैव[2] हेतुत्वात्मकत्वाच्च; अन्यथा 'गर्दभाद् धूमः' इत्यपि प्रमीयेतेति । अधिकमग्रे ॥ ७६ ॥

अत एव कालवादोऽपि निरस्तः?, इत्याह—

**कालोऽपि समयादिर्यत्केवलः सोऽपि कारणम् । तत एव ह्यसंभूतेः कस्यचिन्नोपपद्यते ॥ ७७ ॥**

कालोऽपि समयादिः– क्लृप्तद्रव्यपर्यायरूपः, अतिरिक्तकालपर्यायो वा; यद्– यस्माद्धेतोः[3], ततः, तत एव– समयादेः, हि-- निश्चितम्, कस्यचित्– कस्यापि, असंभूतेः-- अनुत्पत्तेः, केवलः– अन्यानपेक्षः, सोऽपि-- कालोऽपि, कारणं नोपपद्यते, विवक्षितसमये कार्यान्तरस्याऽप्युत्पत्तिप्रसङ्गात् । न च तत्क्षणवृत्तिकार्ये तत्पूर्वक्षणहेतुत्वाभिधानाद् न दोष इत्युक्तमेवेति वाच्यम्, अग्रेभाविनस्तत्क्षणवृत्तित्वस्यैव फलत आपाद्यत्वात्, तत्क्षणवृत्तिकार्ये तत्पूर्वक्षणेन हेतुत्वम्, तदुत्तरक्षणविशिष्टे कार्ये तत्क्षणत्वेन वा?, इति विनिगमनाविरहाच्च ॥ ७७ ॥

---

१ असौ– प्रतिज्ञा, हेतुप्रलयात्– हेतुरहितैवेत्यर्थः, भवेदिति पूर्वपक्षः । २ कादाचित्कत्वस्यैव । ३ ख. ग. घ. च. 'तोस्तत ए' ।

दोषान्तरमाह—

यतश्च काले तुल्येऽपि सर्वत्रैव न तत्फलम्। अतो हेत्वन्तरापेक्षं विज्ञेयं तद् विचक्षणैः ॥७८॥

यतश्च, काले— समयादौ, तुल्येऽपि— अविशिष्टेऽपि सति, तत्फलं— तत्कालजन्यं घटादि, सर्वत्रैव न, तन्त्वादौ तदनुपपत्तेः ; अतस्तत्फलं, विचक्षणैः— यौक्तिकैः, हेत्वन्तरापेक्षं— कालातिरिक्तदेशादिहेतुजन्यं, विज्ञेयम्। न च मृदोऽन्यत्र घटस्याऽनापत्तिरेव, काले हेतुसत्त्वेऽपि देशे कार्यानापत्तेरिति वाच्यम्, मृदजन्यत्वेन मृदवृत्तित्वस्याऽऽपाद्यत्वात्। मृदजन्यत्वं च जन्यतासंबन्धेन मृद्भिन्नत्वम्। अतो न तर्कमूलव्याप्त्यसिद्धिः। न च तत्स्वभावत्वादेव तस्य क्वाचित्कत्वम्, फलतस्तत्स्वभावत्वस्यैवाऽऽपाद्यत्वादिति दिग् ॥ ७८ ॥

उपसंहारमाह—

अतः कालादयः सर्वे समुदायेन कारणम्। गर्भादेः कार्यजातस्य विज्ञेया न्यायवादिभिः।७९।

अतः— उक्तहेतोः, कालादयः सर्वे समुदायेन स्वस्वप्रत्यासत्त्या, गर्भादेः कार्यजातस्य, न्यायवादिभिः, कारणम्— फलोपधायकाः, विज्ञेयाः ॥ ७९ ॥

इदमेव स्फुटतरशब्देनाह—

न चैकैकत एवेह क्वचित्किञ्चिदपीक्ष्यते। तस्मात्सर्वस्य कार्यस्य सामग्री जनिका मता।८०। ॥८८॥

इह– जगति, न च– नैव, एकैकत एव नियत्यादेः, क्वचित्– क्वापि, किञ्चित्– किमपि घटादि, ईक्ष्यते– जायमानं प्रतीयते । तस्माद् हेतोः, सर्वस्य घटादेः कार्यस्य, सामग्री– कथञ्चित्तद्व्यतिरिक्ताऽव्यतिरिक्तहेतुसंहतिः, जनिका– कार्योपधायिका, मता– इष्टा । पूर्वं कारणसमुदाये कार्योपधायकत्वनियमः साधितः, इदानीं तु कार्ये कारणसमुदायोपाधेयत्वनियम इति तु तत्त्वम् । ननु कालाद्येकान्तप्रतिक्षेपेऽप्यदृष्टैकान्ताऽप्रतिक्षेपाद् न साध्यसिद्धिरिति चेत् । न, अदृष्टैकान्तवादेऽनिर्मोक्षापत्तेः । मोक्षस्य कर्माजन्यत्वात्, आत्मस्वरूपावस्थानरूपो मोक्षः कर्मक्षयेणाभिव्यज्यत एव, न तु जन्यत एवेति चेत् । सत्यम्, कर्मक्षयस्यैव कर्म विनाऽनुत्पत्तेः । स्वप्रयोज्यज्ञानयोगसंबन्धेन पूर्वकर्मैव तत्र हेतुरिति चेत् । न, साक्षादेव तस्य हेतुत्वौचित्यात्; अन्यथा कर्मत्वस्यैव तेन संबन्धेन हेतुत्वप्रसङ्गात् । किञ्च, दृष्टकारणान्यनतिपत्या[1]ऽदृष्टस्य कार्यजनकत्वात् तेषामपि[2] तथात्वमनिवारितम्[3]; तद्विपाकेन तदुपक्षये तैस्तद्विपाकोपक्षयस्यापि वक्तुं शक्यत्वात्, बलवत्त्वस्याऽप्युभयत्र "अब्भंतर-बज्झाणं"[4] इत्यादिना महता प्रबन्धेनाऽन्यत्राऽविशेषेणैव साधितत्वादिति दिग् ॥ ८० ॥

'अत्र कालादयश्चत्वारोऽपि स्वातन्त्र्येण हेतवः' इत्येके; 'काला-दृष्टे एव तथा,[5] नियति-स्वभावयोस्त्वदृष्टधर्मत्वेन न तथात्वम्' इत्यन्ये; इति मतभेदमाह—

**स्वभावो नियतिश्चैव कर्मणोऽन्ये प्रचक्षते। धर्मावन्ये तु सर्वस्य सामान्येनैव वस्तुनः ॥८१॥**

---

१ अनतिपत्य– अनतिवृत्य, अनुल्लङ्घ्येत्यर्थः । २ दृष्टकारणानाम् । ३ हेतुत्वम् । ४ अभ्यन्तर-बाह्यानाम् । ५ तथा– स्वातन्त्र्येण हेतू ।

अन्य आचार्याः, स्वभावो नियतिश्च, एवकारस्य 'कर्मणः' इत्युत्तरं संबन्धात् कर्मण एव धर्मौ 'इति' इत्यध्याह्रियते, इति प्रचक्षते- अभ्युपगमप्रकर्षेण व्याख्यान्तीति योजना; उद्भूतरूपादिवस्तुस्वभावहेतोः स्वभावस्य वह्नेरूर्ध्वज्वलनादिनियमरूपार्थम्, नियतेश्चाऽदृष्ट एव स्वीकारादित्याशयः। अन्ये त्वाचार्याः, सामान्येनैव- दृष्टा-ऽदृष्टसाधारण्येनैव, सर्वस्य वस्तुनः स्वभावो नियतिश्च धर्मौ, इति 'प्रचक्षते' इति प्राक्तनेन योजना। अत्र स्वभावस्तथाभव्यात्मिका जातिः कार्यैकजात्याय, नियतिश्चातिशयितपरिणतिरूपा कार्यातिशयाय सर्वत्रोपयुज्यत इति। अधिकमन्यत्र ॥ ८१ ॥

इति श्रीपण्डितपद्मविजयसोदरपण्डितयशोविजयविरचितायां स्याद्वादकल्पलताभिधानायां शास्त्रवार्तासमुच्चयटीकायां द्वितीयः स्तबकः संपूर्णः ॥

---

अभिप्रायः सूरेरिह हि गहनो दर्शनततिर्निरस्या दुर्धर्षा निजमतसमाधानविधिना।
तथाप्यन्तः श्रीमन्नयविजयविज्ञांह्रिभजने न भग्ना चेद् भक्तिर्न नियतमसाध्यं किमपि मे ॥ १ ॥
यस्यासन् गुरवोऽत्र जीतविजयप्राज्ञाः प्रकृष्टाशया भ्राजन्ते सनया नयादिविजयप्राज्ञाश्च विद्याप्रदाः।
प्रेम्णा यस्य च सद्म पद्मविजयो जातः सुधीः सोदरस्तेन न्यायविशारदेन रचिते ग्रन्थे मतिर्दीयताम् ॥ २ ॥

१ ग. घ. च. 'दृष्टसा'।

॥ अर्हम् ॥

# अथ तृतीयः स्तबकः ।

सर्वः शास्त्रपरिश्रमः शमवतामाकालमेकोऽपि यत्साक्षात्कारकृते धृते हृदि तमो लीयेत यस्मिन्मनाक् ।
यस्यैश्वर्यमपङ्किलं च जगदुत्पाद-स्थिति-ध्वंसनैस्तं देवं निरवग्रहग्रहमहाऽऽनन्दाय वन्दामहे ॥ १ ॥

सामग्र्यामीश्वरोऽपि निविशत इति वार्तान्तरमाह—

**ईश्वरः प्रेरकत्वेन कर्ता कैश्चिदिहेष्यते। अचिन्त्यचिच्छक्तियुक्तोऽनादिसिद्धश्च सूरिभिः॥१॥**

इह– सामग्र्याम्, कैश्चित् सूरिभिः– पातञ्जलाचार्यैः, प्रेरकत्वेन– परप्रवृत्तिजनकत्वेन, ईश्वरः कर्तेष्यते । कीदृशः ?, इत्याह– अचिन्त्या-इन्द्रियादिप्रणालिकां विनाऽपि यथावत्सर्वविषयावच्छिन्ना या चिच्छक्तिश्चेतना, तया युक्तस्तदाश्रयः, तथा, अनादिसिद्धश्च, कदापि बन्धाभावात् । त्रिविधो हि तैर्बन्ध उच्यते, प्राकृतिक-वैकारिक-दाक्षिणभेदात् । तत्र प्रकृतावात्मताज्ञानाद् ये प्रकृतिमुपासते तेषां प्राकृतिको बन्धः, यान् प्रतीदमुच्यते—

"पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः ।" इति ।

ये तु विकारानेव भूते-न्द्रिया-ऽहङ्कार-बुद्धीः पुरुषबुद्ध्योपासते, तेषां वैकारिको बन्धः, यान् प्रतीदमुच्यते—

"दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः ॥ १ ॥
बौद्धा[1]ः शतसहस्राणि तिष्ठन्ति विगतज्वराः ।" इति ।

इष्टापूर्ते दाक्षिणो बन्धः, पुरुषतत्त्वानभिज्ञो हीष्टापूर्तकारी कामोपहतमना बध्यत इति । इयं च त्रिविधापि बन्धकोटिरीश्वरस्य मुक्तिं प्राप्यापि भवे पुनरेष्यतां प्रकृतिलीनत्वज्ञानानां योगिनामिव नोत्तरा, नवा पूर्वा, संसारिमुक्तात्मनामिव, इति निर्बाधमनादिसिद्धत्वम् । तथा चाह पतञ्जलिः— "क्लेश-कर्मविपाका-ऽऽशयैरपरामृष्टः पुरुषविशेष ईश्वरः"[2] इति । क्लेशाः— अविद्या-ऽस्मिता-राग-द्वेषा-ऽभिनिवेशाः, कर्माणि शुभा-ऽशुभानि, तद्विपाको जात्यायुर्भोगाः; आशयाः— नानाविधास्तदनुगुणाः संस्काराः, तैरपरामृष्टोऽसंस्पृष्टः, सर्वज्ञतया भेदाऽग्रहनिमित्तकाऽविद्याऽभावात्, तस्या एव च भवहेतुसर्वक्लेशमूलत्वात्; तथाच सूत्रम्— "अविद्या[3] क्षेत्रमुत्तरेषां प्रसुप्त-तनु-विच्छिन्नो-दाराणाम्" इति । अनभिव्यक्तरूपेणावस्थानं सुप्तावस्था, अभिव्यक्तस्यापि सहकार्यभावात् कार्याऽजननं तन्ववस्था, अभिव्यक्तस्य जनितकार्यस्यापि केनचिद् बलवता सजातीयेन विजा-

१ बौद्धाः—बुद्धिशब्दाच्छैषिकोऽण् । २ योगसूत्रे १, २४ । ३ योगसूत्रे २, ४ ।

तीयेन वा लब्धवृत्तिकेनाऽभिभवाद् भविष्यद्वृत्तिकत्वेनावस्थानं विच्छिन्नावस्था, अभिव्यक्तस्य प्राप्तसहकारिसंपत्तेरप्रतिबन्धेन लब्धवृत्तिकतया स्वकार्यकरत्वमुदारावस्था। तत्राद्यमवस्थाद्वयं प्रतिप्रसवाख्येन निर्बीजसमाधिना हीयते, अन्त्यं तु शुद्धसत्त्वमयेन भगवद्ध्यानेनेति। अविद्याऽभावात् तन्नाशजन्यं[1] कथं तत्त्वज्ञानं तस्य[2]?, इति चेत्। अत एव नित्यं तत्, नित्यज्ञानवत्त्वादेव चायं कपिलप्रभृतिमहर्षीणामपि गुरुः ॥ १ ॥

तदिदमाह—

**ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः। ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयम् ॥ २ ॥**

यस्य जगत्पतेर्ज्ञानम्, अप्रतिघम्– नित्यत्वेन सर्वविषयत्वात् क्वचिदप्यप्रतिहतम्। वैराग्यं च– माध्यस्थ्यं च, रागाभावादप्रतिघम्। चः समुच्चये। एवोऽवधारणे। ऐश्वर्यं पारतन्त्र्याभावादप्रतिघम्, तच्चाष्टविधम्– अणिमा, लघिमा, महिमा, प्राप्तिः, प्राकाम्यम्, वशित्वम्, ईशित्वम्, यत्रकामावसायित्वं चेति। यतो महानणुर्भवति सर्वभूतानामप्यदृश्यः, सोऽणिमा। यतो लघुर्भवति सूर्यरश्मीनप्यालम्ब्य सूर्यलोकादिगमनसमर्थः, स लघिमा। यतोऽल्पोऽपि नाग-नगादिमानो[3] भवति, स महिमा। यतो भूमिष्ठस्याप्यङ्गुल्यग्रे गगनस्थादिवस्तुप्राप्तिः, सा प्राप्तिः। प्राकाम्यमिच्छानभिघातः, यत उदक इव भूमावुन्मज्जति निमज्जति च। वशित्वम्– यतो भूत-भौतिकेषु स्वातन्त्र्यम्। ईशित्वम्– यतस्तेषु प्रभव-स्थिति-व्ययानामीष्टे[4]। यत्रकामावसायित्वम्–

१ तच्छब्देनाऽविद्या परामृश्यते। २ ईश्वरत्वेनाभिमतस्य पुरुषस्य। ३ नागो हस्ती, नगः पर्वतः। ४ "स्मृत्यर्थदयेशः" ॥ २ । २ । ११ ॥ इति सूत्रेण कर्मसंज्ञाया विकल्पेन पक्षे षष्ठी।

यतः सत्यसंकल्पता भवति, यथेश्वरसंकल्पमेव भूतभावादिति । धर्मश्च प्रयत्न-संस्काररूपोऽधर्माभावादप्रतिघः । एतच्चतुष्टयं सहसिद्धम्– अन्यानपेक्षतयाऽनादित्वेन व्यवस्थितम् । अत एव नेश्वरस्य कूटस्थताव्याघातः, जन्यधर्माऽनाश्रयत्वादिति बोध्यम् ॥२॥

तस्य कर्तृत्वे युक्तिमाह—

**अज्ञो जन्तुरनीशोऽयमात्मनः सुख-दुःखयोः । ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा ॥३॥**

अयं संसारी जन्तुः, आत्मनः सुख-दुःखयोर्जायमानयोः, अनीशः– अकर्ता, यतोऽज्ञः– हिता-ऽहितप्रवृत्ति-निवृत्त्युपायानभिज्ञः, अतः स्वर्गं वा, श्वभ्रमेव वा– नरकमेव वा, ईश्वरप्रेरितो गच्छेत्, अज्ञानां प्रवृत्तौ परप्रेरणाया हेतुत्वावधारणात्, पश्वादिप्रवृत्तौ तथादर्शनात्, अचेतनस्यापि चेतनाधिष्ठानेनैव व्यापाराच्च । अत एव

“ मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् । तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ॥ १ ॥ ”

इत्यागमेन सर्वाधिष्ठानत्वं भगवतः श्रूयते, इति पातञ्जलाः ।

नैयायिकास्तु वदन्ति—

“ कार्या-ऽऽयोजन-धृत्यादेः पदात् प्रत्ययतः श्रुतेः । वाक्यात् संख्याविशेषाच्च साध्यो विश्वविदव्ययः ॥१॥ ” इति ।

अस्याऽर्थः– कार्यादीश्वरसिद्धिः, कार्यं सकर्तृकम्, कार्यत्वात्, इत्यनुमानात् । न च कार्यत्वस्य कृतिसाध्यत्वलक्षणस्य

१ कुसुमाञ्जलौ पञ्चमे स्तबके कारिका १ ।

क्षित्यादावसिद्धिरिति वाच्यम्, कालत्रयस्यत्यन्ताभावप्रतियोगित्वे सति, प्रागभावप्रतियोगित्वे सति, ध्वंसप्रतियोगित्वे सति वा सत्त्वस्य हेतुत्वात्। पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वाच्च न कार्यस्य घटादेः सकर्तृकत्वसिद्ध्याऽंशतः सिद्धसाधनम्; न वा पक्षतावच्छेदकस्य हेतुत्वं दोषः, 'कार्यत्वं साध्यसमानाधिकरणम्' इति सहचारग्रहेऽपि 'कार्यं सकर्तृकम्' इति बुद्धेरभावाच्च। ननु तथापि सकर्तृकत्वं यदि कर्तृसाहित्यमात्रम्, तदाऽस्मदादिना सिद्धसाधनम्; यदि च कर्तृजन्यत्वम्, तदा बाधोऽपि, ज्ञानादेरेव जनकतया कर्तुरजनकत्वादिति चेत्। न, प्रत्यक्षजन्यत्वेच्छाजन्यत्वादिना साध्यतायामदोषात्। अदृष्टाद्वारा जन्यत्वस्य, विशेष्यतासंबन्धावच्छिन्नकारणताप्रतियोगिकसमवायावच्छिन्नजन्यत्वस्य वा साध्यत्वाच्च नाऽदृष्टजनकास्मदादिज्ञानजन्यत्वेन सिद्धसाधनम्, अर्थान्तरं वा।

अथाऽत्र शरीरजन्यत्वमुपाधिः, अङ्कुरादौ साध्यव्यापकतासंदेहे संदिग्धोपाधितासाम्राज्यात्; तदाहितव्यभिचारसंशयेनाऽनुमानप्रतिरोधात्, लाघवाद् व्यभिचारज्ञानत्वेनैव व्याप्तिधीविरोधित्वात्, पक्ष-तत्समयोरपि व्यभिचारसंशयस्य दोषत्वादिति चेत्। 'न, प्रकृते ज्ञानत्वादि-कार्यत्वाभ्यां हेतु-हेतुमद्भावनिश्चयात्, लाघवतर्कावतारे तदुपाधिसंशयस्याऽविरोधित्वात्, अनुकूलतर्कानवतार एव संदिग्धोपाधेर्व्यभिचारसंशयाधायकत्वात्; अन्यथा पक्षेतरत्वोपाधिशङ्कया प्रसिद्धानुमानस्याऽप्युच्छेदप्रसङ्गात्' इत्येके।

परे तु– स्वोपादानगोचराऽस्वजनकाऽदृष्टाऽजनिका या कृतिस्तदजन्यं समवेतं जन्यं स्वोपादानगोचरस्वजनकादृष्टजनकान्यापरोक्षज्ञान-चिकीर्षाजन्यम्, कार्यत्वात्। घटादावंशतः सिद्धसाधनवारणाय तदजन्यान्तम्, तादृशकृतिजन्यं यत् यत्स्वं तद्भि-

न्तत्वं तदर्थः; नातो द्व्यणुकादेरुपादानगोचरतादृशकृत्यप्रसिद्ध्या पक्षत्वाभावप्रसङ्गः। तत्र शब्द-फूत्कारादेरपक्षत्वे संदिग्धसाध्यकत्वेन तत्राऽनैकान्तिकत्वसंशयः स्यात्, अतः प्रतियोगिकोटौ गोचरान्तम्; शब्दादेर्मृदङ्गादिगोचरतादृशकृतिजन्यत्वेऽपि न स्वोपादानगोचरतादृशकृतिजन्यत्वमिति न दोषः। मन्त्रविशेषपाठपूर्वकस्पर्शजन्यकांश्यादिगमनस्य स्पर्शजन्याऽदृष्टद्वारा स्वोपादानकांश्यगोचरस्पर्शजनकजन्यकृतिजन्यस्याऽपक्षत्वे तत्र संदिग्धानैकान्तिकत्वं स्यात्, एवं स्वोपादानशरीरगोचरोर्ध्वचरणादितपःकृतिजन्यकालशरीरीयगौररूपादौ तत् स्यात्; अतस्तत्कोटौ 'स्वजनक'-इत्यादि; कांश्यचालनादिकं तु स्वजनकाऽदृष्टजनकजन्यकृतिजन्यमेवेत्यदोषः। ध्वंस-गगनैकत्वादिवारणाय 'समवेतम्' इति, जन्यमिति च। शब्द-फूत्कारादौ सिद्धसाधनवारणाय साध्ये गोचरान्तम्। उक्तकांश्यचालनादौ तद्वारणाय 'स्वजनक-' इत्यादि। न च साध्ये पक्षे च गोचरान्तद्वयं माऽस्तु, मृदङ्गादिगोचरकृतिजन्यशब्दादिस्तु पक्षबहिर्भूत एव दृष्टान्तोऽस्त्विति वाच्यम्; अदृष्टेतरव्यापारद्वाराऽस्मदादिकृतिजन्यत्वसिद्ध्याऽर्थान्तरप्रसङ्गवारणाय साध्ये तन्निवेशावश्यकत्वे, शब्दादावनैकान्तिकत्वसंशयवारणाय पक्षेऽपि तदावश्यकत्वात्; तादृशशब्दादिकर्तृतयापि भगवत्सिद्धये पक्षे तन्निवेशेऽशतः सिद्धसाधनवारणाय साध्ये तन्निवेशावश्यकत्वाच्च। एतेन 'स्वजनकाऽदृष्टजनकान्यत्वमप्युभयत्र माऽस्तु' इत्यपास्तम्, तादृशकांश्यचालनादिकर्तृतयाऽपि भगवत्सिद्ध्यर्थं पक्षे तदुपादाने साध्येऽप्यावश्यकत्वात्। यदि च 'स्वजनकादृष्टजनककृतेर्न स्वजनकत्वम्, मानाभावात्' इति विभाव्यते, तदा पक्षे तद् नोपादेयम्; साध्ये तु देयमेव, अन्यथा सर्गान्तरीयज्ञानादीनां द्व्यणुकाद्युपादानागोचरत्वेन द्व्यणुकादौ सिद्धसाधनाभावेऽप्युक्तकांश्यचालनादावदृष्टजनककृतिजन्यत्वसिद्ध्याऽर्थान्तरापत्तेर्वस्तुगत्या स्वोपादानगोचरकृतिजन्यं यत्, तत्त्वावच्छिन्नभेदकूटवत्त्वेन कांश्यचालनादे-

रपि पक्षान्तर्गतत्वात्' इत्याहुः ।

अन्ये तु– 'द्रव्याणि ज्ञाने-च्छा-कृतिमन्ति, कार्यत्वात्, कपालवत् । साध्यता विशेष्यतया, हेतुता च समवायेन; पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वाद् नांशतः सिद्धसाधनम् । न च बहिरिन्द्रियाऽग्राह्यत्वमुपाधिः, अनुकूलतर्केण हेतोर्व्याप्यतानिर्णये तदनवकाशात् । न च त्रितयस्य मिलितस्य साध्यत्वेऽप्रयोजकत्वम्, मिलितत्वेनाऽहेतुत्वात्, प्रत्येकं साध्यत्वे ज्ञाने-च्छावत्त्वेन साधने सर्गान्तरीयज्ञानादिना सिद्धसाधनमिति वाच्यम्; मिलितत्वेन साध्यत्वेऽपि कार्यकारणभावत्रयस्य प्रयोजकत्वात् । 'सर्गाद्यकालीनं द्रव्यं ज्ञानवत्, कार्यत्वात्, पक्षतावच्छेदककालावच्छेदेन साध्यसिद्धेः' इत्यप्याहुः ।

'क्षित्यादिकं सकर्तृकम्, कार्यत्वात्' इत्येवाऽनुमानम्, प्रकृतिविचारानुकूलविवादविषयत्वेन च क्षित्यादीनामनुगमः, सकर्तृकत्वं च प्रतिनियतकर्तृनिरूपितः संबन्धो व्यवहारसाक्षिकः, घटादिदृष्टान्तदृष्टः[1], नित्यवर्गव्यावृत्त इति नानुपपत्तिः' इत्यपि केचित् ।

आयोजनादपि[2], सर्गाद्यकालीनद्व्यणुककर्म प्रयत्नजन्यम्, कर्मत्वात्, अस्मदादिशरीरकर्मवत्, इत्यनुमानात्[3] । पर-

---

१ ख. ग. घ. च. 'दिदृष्टः' । २ द्व्यणुकारम्भकसंयोगजनकं सर्गाद्यकालीनपरमाणुकमात्रमायोजनम्, आयुज्यते संयुज्यतेऽन्योन्यं द्रव्यमनेनेति व्युत्पत्तेः, इदं च 'साध्यो विश्वविदव्ययः' इति कुसुमाञ्जलिकारिकान्त्यपादेन, तत्कारिकाव्याख्यानप्रारम्भेऽत्र ग्रन्थे स्थितेन 'ईश्वरसिद्धिः' इत्यनेन वाऽन्वीयते; एवमुत्तरत्रापि 'धृतेरपि, नाशादपि, पदादपि, प्रत्ययतः' इत्यादिषु सर्वत्र विज्ञेयम् । ३ अचेतनत्वात् परमाणूनां चेतनोत्पादितकर्मत्वेनैव वास्यादिवत् प्रवृत्तेरभ्युपगमनीयत्वात्, तादृशचेतनावत एव चेश्वरवद्वाच्यत्वेन स्वीकारादिति पूर्वपक्षाभिप्रायः ।

माणोरेव तादृशप्रयत्नवत्त्वे जडताहानिः स्यात्[1] ।

अदृष्टं तु तत्र[2] दृष्टहेत्वनपेक्षं न हेतुः, तथात्वे[3] दृष्टहेतूच्छेदापत्ते[4]ः कर्मण एवाऽनुत्पत्तिप्रसङ्गात् । चेष्टात्वमुपाधिरिति चेत् । किं तत्[5] ? । प्रयत्नजन्यक्रियात्वमिति चेत् । न, तत्रैव त[6]स्यैवाऽनुपाधित्वात् । हिता-ऽहितप्राप्ति-परिहारफलत्व[7]मिति चेत् । न, [8]विषभक्षणा-ऽहिलङ्घनाद्यव्यापनात् । शरीरसमवायिक्रियात्वं त[9]दिति चेत् । न, मृतशरीरक्रियाया अतथात्वात् । जीवत इति चेत् । न, नेत्रस्पन्दादेरतथात्वात् । स्पर्शवद्द्रव्यान्तराप्रेरणे सति शरीरक्रियात्वं तत्, शरीरपदोपादानाद् न ज्वलन-पवनादिक्रियाऽतिव्याप्तिरिति चेत् । न, शरीरत्वस्य चेष्टाघटितत्वात् । चेष्टात्वं सामान्यविशेषो यत उन्नीयते, प्रयत्नपूर्विकेयं क्रियेति चेत् । न, क्रियामात्रेण तदुन्नयनात् ।

धृतेरपि, ब्रह्माण्डादिपतनाभावः पतनप्रतिबन्धकप्रयुक्तः, धृतित्वात्, उत्पतत्पतत्रिपतनाभाववत्, तत्पतत्रिसंयुक्ततृणादिधृतिवद् वा । ए[10]तेनेन्द्रा-ऽग्नि-यमादिलोकपालप्रतिपादका आगमा अपि व्याख्याताः, तेषां तदधिष्ठानदेशानामीश्वरावेशे-

१ तादृशप्रयत्नवत्त्वस्यैव स्वातन्त्र्यपदार्थत्वात्, तस्य च चेतनाधिष्ठानाऽविनाभावादिति भावः । २ सर्गाद्यकालीनद्व्यणुककर्मणि । ३ दृष्टहेत्वनपेक्षमेवाऽदृष्टस्य कारणत्वे । ४ द्व्यणुकादीनामप्यदृष्टादेवोत्पत्तेरित्यर्थः । ५ चेष्टात्वम् । ६ परमाणुक्रियायां हि प्रयत्नवदात्मसंयोगासमवायिकारणकत्वमेव चेतनाऽऽयोजितत्वमिति साध्यम्, न च तस्योपाधित्वम्, साधनव्यापकत्वेन साधनाव्यापकघटितस्योपाधिलक्षणस्यानन्वयादिति हृदयम् । ७ चेष्टात्वमिति संबध्यते, एवमुत्तरत्रापि । ८ विषभक्षणादिक्रियाया अहितमरणप्रापकत्वादिति भावः । ९ तत्– चेष्टात्वम्, एवमग्रेऽपि । १० एतेन– धारकप्रयत्नधृतत्वव्युत्पादनेनेत्यर्थः ।

नैव पतनाभाववत्त्वात्। तथाच श्रुतिः "एतस्य चाक्षरस्य प्रशासनो गार्गि, द्यावापृथिवी विधृते तिष्ठतः" इति । प्रशासनं-दण्डभूतः प्रयत्नः, आवेशस्तच्छरीरावच्छिन्नप्रयत्नवत्त्वमेव, सर्वावेशनिबन्धन एव च सर्वतादात्म्यव्यवहार इति । "आत्मैवेदं सर्वम्, ब्रह्मेवेदं सर्वम्" इत्यादिकम् ।

आदिना नाशादपि, ब्रह्माण्डनाशः प्रयत्नजन्यः[1], नाशत्वात्, पाट्यमानपटनाशवदिति ।

पदादपि, पद्यते गम्यतेऽनेनेति पदं व्यवहारः, ततः, घटादिव्यवहारः, स्वतन्त्रपुरुषप्रयोज्यः, व्यवहारत्वात्, आधुनिककल्पितलिप्यादिव्यवहारवत्, इत्यनुमानात् । न च पूर्वपूर्वकुलालादिनैवाऽन्यथासिद्धिः, प्रलयेन तद्विच्छेदात् ।

प्रत्ययतः- प्रमायाः, वेदजन्यप्रमा वक्तृयथार्थवाक्यार्थज्ञानजन्या, शाब्दप्रमात्वात्, आधुनिकवाक्यजशाब्दप्रमावत् ।

श्रुतेरपि, वेदोऽसंसारिपुरुषप्रणीतः, वेदत्वात्, इति व्यतिरेकिणः । न च परमते साध्याऽप्रसिद्धिः, 'आत्मत्वमसंसारिवृत्ति, जातित्वात्' इत्यनुनानेन पूर्वं साध्यसाधनात् ।

वाक्यादपि, वेदः पौरुषेयः, वाक्यत्वात्, भारतवत्, इत्यन्वयिनः ।

संख्याविशेषः- द्व्यणुकपरिमाणजनिका संख्या, ततोऽपि; इयं संख्या, अपेक्षाबुद्धिजन्या, एकत्वान्यसंख्यात्वात्, इत्यस्मदाद्यपेक्षाबुद्ध्यजन्यत्वादतिरिक्तापेक्षाबुद्धिसिद्धौ तदाश्रयतयेश्वरसिद्धेः । न चासिद्धिः, द्व्यणुकपरिमाणं संख्याजन्यम्, जन्यपरिमाणत्वात्, घटादिपरिमाणवत् । न वा दृष्टान्तासिद्धिः, द्विकपालादिपरिमाणात् त्रिकपालादिघटपरिमाणोत्कर्षादिति दिग् ।

---

१ स्वजनकप्रयत्नसमानकालीनचरमकारणनाशप्रतियोगीत्यर्थः ।

अथवा, कार्यं– तात्पर्यं वेदे, यस्य तत्, स एवेश्वरः । आयोजनं सद्व्याख्या, वेदाः केनचिद् व्याख्याताः, महाजनपरिगृहीतवाक्यत्वात् । अव्याख्यातत्वे तदर्थानवगमेऽननुष्ठानापत्तेः, एकदेशदर्शिनोऽस्मदादेश्च व्याख्यायामविश्वासः, इति तद्व्याख्येयेश्वरसिद्धिः । धृतिर्धारणं मेधाख्यज्ञानम्, आदिपदार्थोऽनुष्ठानम्; ततोऽपि, वेदा वेदविषयकजन्यधारणान्यधारणाविषयाः, धृतिवाक्यत्वात्, लौकिकवाक्यवत्; यागादिकं यागादिविषयकजन्यज्ञानान्यज्ञानवदनुष्ठितम्, अनुष्ठितत्वात्, गमनवत्, इति प्रयोगः । पदं प्रणवेश्वरादिपदम्, तत्सार्थक्यात्, स्वतन्त्रोच्चारयितृशक्तश्रुत्यादिस्थाऽहंपदाद् वा । न चेश्वरादिपदस्य स्वपरता,

"सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडन्तरङ्गाणि[2] महेश्वरस्य ॥ १ ॥"

इत्यादिवाक्यशेषेण 'ईश्वरमुपासीत' इत्यादिविधिस्थेश्वरादिपदशक्तिग्रहात्, यथा यवादिपदस्य "वसन्ते[3] सर्वशस्यानां" इत्यादिवाक्यशेषाच्छक्तिग्रहेण न कङ्ग्वादिपरता ।

प्रत्ययो विधिप्रत्ययः, ततोऽपि, आप्ताभिप्रायस्यैव विध्यर्थत्वात् । न हीष्टसाधनत्वमेव तथा, 'अग्निकामो दारूणि मथ्नीयात्' इत्युक्तौ, 'कुतः ?' इति प्रश्ने 'यतो दारुमथनमग्निसाधनम्' इत्युत्तरेऽग्निसाधनत्वेन विध्यर्थवत्त्वानुमानानुपपत्तेः, अभेदे हेतुत्वेनोपन्यासानौचित्यात्, 'तरति मृत्युम्' इत्यादौ विधिवाक्यानुमानानुपपत्तेश्चेष्टसाधनतायाः प्रागेव बोधात्; 'कुर्याः, कुर्याम्'

१ "पिताऽहमस्य जगतो माता धाता पितामहः" इत्यादौ । २ 'षडाहुरङ्गानि' इत्यन्यत्र ग्रन्थे पाठः । ३ "जायते पत्रशातनम्; मोदमानाश्च तिष्ठन्ति, यवाः कणशशालिनः" इति शेषं पादत्रयम् । आदिना 'वराहं गावोऽनुधावन्ति' इत्यादि ।

इत्यादौ वक्तृसंकल्पस्यैव बोधात्, आज्ञा-ध्येषणा-ऽनुज्ञा-संप्रश्न-प्रार्थना-ऽऽशंसालिङ्गीच्छाशक्तत्वस्यैव कल्पनाच्च– उल्लङ्घने क्रोधादिभयजनिकेच्छाऽऽज्ञा, अध्येषणीये प्रयोक्तुरनुग्रहद्योतिकाऽध्येषणा, निषेधाभावव्यञ्जिकाऽनुज्ञा, प्रयोजनादिजिज्ञासा प्रश्नः, प्राप्तीच्छा प्रार्थना, शुभेच्छाऽऽशंसा; निषेधानुपपत्तेश्चेष्टसाधनत्वनिषेधस्य बाधात्; बलवदनिष्टाननुबन्धित्वस्यापि तदर्थत्वे 'श्येनेन' इत्यादावलसस्य यागादिदुःखेऽपि बलवद्द्वेषेण 'यजेत' इत्यादौ बाधात्। तत आप्ताभिप्रायस्यैव विध्यर्थत्वात् तादृशाभिप्रायवदीश्वरसिद्धिः। श्रुतिः– ईश्वरविषयो वेदः, ततः; 'यज्ञो वै विष्णुः' इत्यादेर्विध्येकवाच्यतया "यँद् न दुःखेन संभिन्नम्" इत्यादिवत् तस्य स्वार्थ एव प्रामाण्यात्। वाक्यात्– वैदिकप्रशंसा-निन्दावाक्यात्, तस्य तदर्थज्ञानपूर्वकत्वात्। संख्या "स्यामभूवम्, भविष्यामि" इत्याद्युक्ता। ततोऽपि स्वतन्त्रोच्चारपितृनिष्ठाया एव तस्या अभिधानादिति रहस्यम्।

श्रुत्वैवं सकृदेनमीश्वरपरं सांख्या-ऽऽक्षपादागमं लोको विस्मयमातनोति, न गिरो यावत् स्मरेदार्हतीः।
किं तावद्बदरीफलेऽपि न मुहुर्माधुर्यमुन्नीयते यावत्पीनरसा रसाद् रसनया द्राक्षा न साक्षात्कृता ?॥ १॥ ३॥

॥ इत्थमभिहितेश्वरकर्तृत्वपूर्वपक्षवार्ता ॥

अथ समाधानवार्तामाह —

**अन्ये त्वभिदधत्यत्र वीतरागस्य भावतः। इत्थं प्रयोजनाभावात् कर्तृत्वं युज्यते कथम् ?॥४॥**

---

१ अवशिष्टं पादत्रयं तु– "न च ग्रस्तमनन्तरम्; अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्" इति।

अन्ये तु– जैनाः, अत्र– ईश्वरविचारे, अभिदधति– परीक्षन्ते । किम् ?, इत्याह– वीतरागस्य– वैराग्यवतः, ईश्वरस्य– पातञ्जलैरभ्युपगतस्य, इत्थं– प्रेरकत्वे, प्रयोजनाभावात्, भावतः– इच्छातः, कर्तृत्वं कथं युज्यते ? । यो हि परप्रेरको दृष्टः स स्वप्रयोजनमिच्छन्निष्टः, ततोऽत्र व्यापिकायाः फलेच्छाया अभावाद् व्याप्यस्य परप्रेरकत्वस्याऽभावः ॥ ४ ॥

एतदेव स्पष्टयन्नाह—

**नरकादिफले कांश्चित्कांश्चित्स्वर्गादिसाधने। कर्मणि प्रेरयत्याशु स जन्तून्केन हेतुना ? ॥५॥**

सः– ईश्वरः, कांश्चिज्जन्तून् नरकादिफले– ब्रह्महत्यादौ, कर्मणि, कांश्चित् स्वर्गादिसाधने– यम-नियमादौ वा, आशु– शीघ्रम्, केन हेतुना प्रेरयति ? । क्रीडादिप्रयोजनाभ्युपगमे राग-द्वेषाभ्यां वैराग्यव्याहतिः, प्रयोजनानभ्युपगमे च तन्मूलकप्रेरणाभावात् सिद्धान्तव्याघातः, इत्युभयतः पाशा रज्जुरिति भावः ॥ ५ ॥

पराभिप्रायमाशङ्क्य निराकरोति—

**स्वयमेव प्रवर्तन्ते सत्त्वाश्चेच्चित्रकर्मणि । निरर्थकमिहेशस्य कर्तृत्वं गीयते कथम् ? ॥६॥**

सत्त्वाः, चित्रकर्मणि– ब्रह्महत्या-यम-नियमादौ, स्वयमेव– तमः-सत्त्वोद्रेकेण तथाविधबुद्ध्यंशव्यापारावेशेनैव, प्रवर्तन्ते– कर्तृत्वेनाऽभिमन्यन्ते । प्रयोजनज्ञानार्थं परमीश्वरापेक्षेति चेत् । इह– कर्मणि, निरर्थकमीशस्य कर्तृत्वं कथं

गीयते ? । प्रयोजनज्ञानं हि प्रवर्तनार्थमुपयुज्यते, प्रवृत्तिश्च यदि स्वत एवोपपन्ना, तदेश्वरसिद्धिव्यसनं गृहलब्ध एव धने विदेशगमनप्रायम् ॥ ६ ॥

अभिप्रायान्तरमाशङ्क्य निराकुरुते—

**फलं ददाति चेत्सर्वं तत्तेनेह प्रचोदितम् । अफले पूर्वदोषः स्यात्सफले भक्तिमात्रता ॥७॥**

सर्वं तत्– चित्रं कर्म, इह– जगति, तेन– ईश्वरेण, प्रचोदितम्– अधिष्ठितं सत्, फलं– सुख-दुःखादिकम्, ददाति– उपधत्ते, अचेतनस्य चेतनाधिष्ठितस्यैव कार्यजनकत्वादिति चेत् । अफले– स्वतश्चित्रफलदानासमर्थे कर्मण्यभ्युपगम्यमाने, पूर्वदोषः– पूर्वोक्तः स्वर्ग-नरकादिफलाऽनियमदोषः, स्यात् । सफले– स्वतश्चित्रफलदानसमर्थे कर्मणि त्वभ्युपगम्यमाने, भक्तिमात्रता– ईश्वरे भक्तिमात्रं स्यात्, हरीतकीरेकन्यायात् । अचेतनं चेतनाधिष्ठितमेव जनकमिति नियमस्त्वतादृशस्यापि वनबीजस्याऽङ्कुरजननत्वदर्शनादसिद्धः । तस्यापि पक्षतायाम्, अन्यत्रापि व्यभिचारिणः पक्षतायां निवेशेऽनैकान्तिकोच्छेदप्रसङ्गादिति भावः ॥ ७ ॥

आदिसर्गे तस्यैव स्वातन्त्र्यमित्याशङ्क्य निराकुरुते—

**आदिसर्गेऽपि नो हेतुः कृतकृत्यस्य विद्यते । प्रतिज्ञातविरोधित्वात्स्वभावोऽप्यप्रमाणकः ॥८॥**

आदिसर्गेऽपि कृतकृत्यस्य– वीतरागस्य, हेतुः– प्रयोजनम्, न विद्यते, ततः कथमादिसर्गमप्ययं कुर्यात् ? । अथेदृशः स्वभाव एवाऽस्य, यत्प्रयोजनाभावेऽप्यादिसर्गं स्वातन्त्र्येणैव करोति, अन्यदा त्वदृष्टाद्यपेक्षयैवेति । अत आह– स्वभावोऽपि– प्रागुक्तः, अप्रमाणकः, धर्मिण एव चाऽसिद्धौ कुत्र तादृशः स्वभावः कल्पनीयः ? इति भावः ॥ ८ ॥

विश्वहेतुतया धर्मिग्राहकमानेन तादृशस्वभाव एव भगवान् साध्यते, इत्यभिप्रायादाह—

## कर्मादेस्तत्स्वभावत्वे न किञ्चिद् बाध्यते विभोः। विभोस्तु तत्स्वभावत्वे कृतकृत्यत्वबाधनम्॥९॥

कर्मादेस्तत्स्वभावत्वे– ईश्वरमनपेक्ष्य जगज्जननस्वभावत्वे, न किञ्चिद् विभोः– परमेश्वरस्य, बाध्यते। विभोस्तु तत्स्वभावत्वे– स्वातन्त्र्येण, अन्यहेतुसापेक्षतया वा जगज्जननस्वभावत्वे; कृतकृत्यत्वबाधनम्, वीतरागत्वव्याहतेः, कारणतया प्रकृतित्वप्रसङ्गाच्च । अथ परिणामित्वाभावाद् न प्रकृतित्वम्, प्रयोजनाभावेन जन्येच्छाया अभावेऽपि नित्येच्छासत्त्वाद् न वैराग्यव्याहतिः, जन्येच्छाया एव रागपदार्थत्वात् । ऐश्वर्यमपि न जन्यम्, किन्तु तत्तत्फलावच्छिन्नेच्छैव । सर्गादौ रजःप्रभृत्युद्रेकोऽपि तत्र तत्कार्यकारितयैव गीयत इति न कूटस्थत्वहानिरिति चेत् ।

जल्पता गिरिशसाधने गिरं न्यायदर्शननिवेशपेशलाम् ।
सांख्य ! संप्रति निजं कुलं त्वया हन्त ! हन्त ! सकलं कलङ्कितम् ॥ १ ॥

यत एवं कार्यजनकज्ञानादिसिद्धौ तदाश्रयतया बुद्धिरेव नित्या सिध्येत्, न त्वीश्वरः, बुद्धित्वस्यैव ज्ञानाद्याश्रयतावच्छेदकत्वात्। आत्मत्वस्य तदाश्रयतावच्छेदकत्वे तु जन्यज्ञानादीनामप्यात्माश्रिततया वि[1]लीनं प्रकृत्यादिप्रक्रियया; इति कि[2]मज्ञेन सह विचारप्रपञ्चेन ?।

नैयायिकोक्तरीत्यापि नेश्वरसिद्धिः, तथाहि– कार्येण तत्साधने [3]आद्यानुमाने नाऽनुकूलस्तर्कः, तत्तत्पुरुषीयपटाद्यर्थिप्रवृत्तित्वावच्छिन्नं प्रति तत्तत्पुरुषीयपटादिमत्त्वप्रकारकोपादानप्रत्यक्षत्वेन हेतुत्वा[4]वश्यकत्वात्; प्रत्यक्षत्वेन कार्यसामान्यहेतुत्वे मानाभावात्; चिकीर्षाया अपि प्रवृत्तावेव हेतुत्वात्; कृतेरपि विलक्षणकृतित्वेनैव घटत्व-पटत्वाद्यवच्छिन्नहेतुत्वात्। न च प्रवृत्ताविव घटादावपि ज्ञाने-च्छयोरन्वय-व्यतिरेकाभ्यां हेतुत्वसिद्धेः; तत्र घटत्व-पटत्वादीनामानन्त्यात् कार्यत्वमेव साधारण्यात् कार्यतावच्छेदकम्, शरीरलाघवमपेक्ष्य संग्राहकलाघवस्य न्याय्यत्वात्; कृतेस्तु 'यद्विशेषयोः०' इति न्यायात् सामान्यतोऽपि हेतुत्वमिति वाच्यम्; कार्यत्वस्य कालिकेन घटत्व-पटत्वादिमत्त्वरूपस्य नानात्वात्, ध्वंसव्यावृत्त्यर्थं देयस्य सत्त्वस्य विशेषण-विशेष्यभावे विनिगमनाविरहेणाऽतिगुरुत्वाच्च। न च द्रव्यजन्यतावच्छेदकतया सिद्धं जन्यसत्त्वम्, अवच्छिन्नसमवेतत्वं वा तज्जन्यतावच्छेदकम्; तथापि प्रत्येकं विनिगमनाविरहात् 'यद्विशेषयोः०' इति न्याये मानाभावात्। किञ्च, एवं प्रायोगिकत्वमेव शैलादिव्यावृत्तं देवकुलाद्यनुवृत्तं सकलजनव्यवहारसिद्धं प्रयत्नजन्यतावच्छेदकमस्तु, व्याप्यधर्मत्वात्; इदमेवाऽभिप्रेत्य हेतु-
१७ विशेषविकल्पने कार्यसमत्वं सम्मतिटीकाकृता निरस्तम्।

---

१ भावे क्तप्रत्ययः। २ सांख्यापशदेनेत्यर्थः। ३ कार्यं सकर्तृकम्, कार्यत्वात्, इत्यत्र। ४ क. 'त्वात्'।

यत्तु 'घटत्वाद्यवच्छिन्ने कृतित्वेन हेतुत्वेऽपि खण्डघटाद्युत्पत्तिकाले कुलालादिकृतेरसत्त्वादीश्वरसिद्धिः' इति दीधितिकृतोक्तम् । तत्तुच्छम्, अस्माभिस्तत्र घटे खण्डत्वपर्यायस्यैवाभ्युपगमात्; युक्तं चैतत्, प्रत्यभिज्ञोपपत्तेः, तत्र सादृश्यादिदोषेण भ्रमकल्पने गौरवात् । अत एव पाकेनापि नान्यघटोत्पत्तिः, विशिष्टसामग्रीवशाद् विशिष्टवर्णस्य घटादेर्द्रव्यस्य कथञ्चिदविनाशेऽप्युत्पत्तिसंभवात्, इति व्यक्तं सम्मतिटीकायाम्; परेषामपि स्वप्रयोज्यविजातीयसंयोगसंबन्धेन तत्काले सत्त्वाच्च । न च वैशेषिकनये श्यामघटादिनाशोत्तरं रक्तघटाद्युत्पत्तिकाले प्राक्तनपरमाणुद्वयसंयोगद्व्यणुकादेर्नाशाद् नैवं संभवतीति वाच्यम्; पूर्वसंयोगादिध्वंसपूर्वद्व्यणुकादिध्वंसानामुत्तरसंयोगद्व्यणुकादावन्ततः कालोपाधितयापि जनकत्वात्, तत्कालेऽपि कुलालादिकृतेः स्वप्रयोज्यविजातीयसंयोगेन सत्त्वात्; अन्यथा घटत्वावच्छिन्ने दण्डादिहेतुत्वमपि दुर्वचं स्यात् । दण्डादिजन्यतावच्छेदकं विलक्षणघटत्वादिकमेवेति चेत् । कृतिजन्यतावच्छेदकमपि तदेवेष्यताम्, कृतेर्लाघवाद् विशेष्यतयैव हेतुत्वात् । यत्र दण्डस्य स्वप्रयोज्यकपालद्वयसंयोगेन सत्त्वम्, न तु विशेष्यतया कुलालकृतिः, तत्रैव खण्डघटे तत्सिद्धिरिति चेत् । न, कृतेरपि स्वप्रयोज्यसंबन्धेनैव हेतुत्वात्, विजातीयसंयोगत्वेन संबन्धत्वे गौरवात्, घटत्वावच्छिन्ने विजातीयकृतित्वेनैव हेतुत्वाच्चेति दिक् ।

किञ्च, उपादानप्रत्यक्षस्य लौकिकस्यैव हेतुत्वात् कथमीश्वरे तत्सिद्धिः ? । अपिच, प्रणिधानाद्यर्थं मनोवहनाड्यादौ प्रवृत्तिस्वीकाराद् यद्धर्मावच्छिन्ने यदर्थिप्रवृत्तिः, तद्धर्मावच्छिन्ने तत्प्रकारकज्ञानमात्रस्य हेतुत्वात् कथमुपादानप्रत्यक्षमीश्वरस्य ? । तस्यानुमितित्वे जन्यानुमितित्वं व्याप्तिज्ञानजन्यतावच्छेदकमिति गौरवोद्भावनं तु प्रत्यक्षत्वे जन्यप्रत्यक्षत्वस्येन्द्रियादिजन्यतावच्छे-

१ क. 'योगादेर्द्व्यणु'।

दकत्वकल्पनागौरवं नातिशेते । अपिच, तदुपादानप्रत्यक्षं निराश्रयमेवाऽस्तु; दृष्टविपरीतकल्पनभिया तु नित्यज्ञानादिकमपि कथं कल्पनीयम् ? । अभिहितश्चायमर्थो 'बुद्धिश्चेश्वरस्य यदि नित्या व्यापिकैवाऽभ्युपगम्यते, तदा सैवाऽचेतनपदार्थाधिष्ठात्री भविष्यति, इति किमपरतदाधारेश्वरपरिकल्पनया ?' इत्यादिना ग्रन्थेन सम्मतिटीकायामपि ।

किञ्च, एवं नानात्मस्त्वेव व्यासज्यवृत्ति तत्कल्प्यताम्, स्वाश्रयसंयुक्तसंयोगसंबन्धेन तेषु तत्कल्पनापेक्षया समवायेन तत्कल्पनाया एव तव न्याय्यत्वात् । न चैवं घटादिभ्रमोच्छेदापत्तिः, बाधबुद्धिसत्त्वादिति वाच्यम्; बाधबुद्धिप्रतिबन्धकतायां चैत्रीयत्वस्यावश्यं निवेश्यत्वात्, तच्च समवेतत्वसंबन्धेन चैत्रवत्त्वं, पर्याप्तत्वेन वा, इति न किञ्चिद् वैषम्यम् ।

अपि च, 'देवतासंनिधानेन' इति पक्षेण प्रतिष्ठादिना स्वाभेदस्वीयत्वादिज्ञानं तदाहितसंस्काररूपं ब्रह्मादौ स्वीकृतम्, न च ब्रह्मादीनामीश्वरभेदः, भगवद्गीताविरोधात् । एवं वैषयिकसुख-दुःखादिश्रवणाद् धर्मा-ऽधर्मावपि तत्राऽङ्गीकर्तव्यौ । न च विरोधः, ब्रह्मादिशरीरावच्छेदेनाऽनित्यज्ञानादिसत्त्वेऽप्यनवच्छिन्नज्ञानाविरोधात् । अत एवाऽन्ये तु 'स तपोऽतप्यत' इति श्रुतेः, अणिमादिप्रतिपादकश्रुतेश्च धर्मा-ऽधर्मावनित्यज्ञानादिकमपीश्वरे स्वीकुर्वन्ति, इति शशधरेऽभिहितम्[1] । एतन्मते च बाधादिप्रतिबन्धकतायामवच्छिन्नसमवेतत्वेन चैत्रवत्त्वादिलक्षणचैत्रीयत्वादेरवश्यं निवेश्यत्वाद् नातिरिक्तनित्यज्ञानाश्रयसिद्धिः ।

किञ्च, प्रवृत्तिविशेषे इच्छान्वय-व्यतिरेकवत्, प्रवृत्तिविशेषे द्वेषाऽन्वय-व्यतिरेकावपि दृष्टौ, दुःखद्वेषेण तत्साधनद्वेषे

१ नैयायिकस्य ।

तन्नाशानुकूलप्रवृत्तेः कण्टकादौ दर्शनात् । न च जिहासयैव द्वेषान्यथासिद्धिः; 'तद्धेतोः०' इति न्यायात्; अन्यथा द्वेषपदार्थ एव न स्यात्, 'द्वेष्मि' इत्यनुभवे क्वचिदनिष्टसाधनताज्ञानस्य, क्वचिच्चाऽनिष्टत्वज्ञानस्यैव द्वेषपदेन तथाभिलापात् । एवं च कार्यसामान्ये द्वेषस्याऽपि हेतुत्वसिद्धौ नित्यद्वेषोऽपीश्वरे सिध्येत् । द्वेषवतः संसारित्वप्रसङ्ग इति चेत् । चिकीर्षावतोऽपि किं न सः १ । द्वेष-चिकीर्षयोस्तत्र समानविषयत्वे करणा-ऽकरणप्रसङ्गः, भिन्नविषयत्वे च तत्कार्यं न कुर्यादेव, इति बाधकाद् द्वेषकल्पना त्यज्यत इति चेत् । एवमुत्तरकालोपस्थितबाधकेन तद्बाधोपगमे, नित्यज्ञानादिकल्पनागौरवादिबाधकेन क्लृप्तोऽपीश्वरस्त्यज्यताम् ।

एतेन 'पुरेषु पुरेशानामिव जगदीशज्ञानेच्छादित एव तत्तत्कार्याणां स्वल्पतमा-ऽधम-देश-कालादिनियमः, वदन्ति हि पामरा अपि– 'ईश्वरेच्छैव नियामिका' इति । न चैवं तत्तद्देश-कालनियततत्तत्कार्योत्पत्तिज्ञानादित एव तत्तत्कार्यानिर्वाहे गतं दण्डादिकारणत्वेनेति वाच्यम्; तदनुमतत्वेनैव दण्डादीनां घटादिहेतुत्वात्; न हि दण्डादिरेव घटादेरनन्यथासिद्धनियतपूर्ववर्ती, न वेमादिः, कपालादि समवायि, न तन्त्वादिकम्, इत्यत्राऽन्यद् नियामकं पश्यामः, इति तदनुमत्यादिकमेव । तथा, तदनुमत्यादिकं न साक्षात्, किन्तु तत्तत्कारणद्वारा तत्तत्संपादकम् । न हि राजाज्ञादितोऽपि विनांशुकं तन्त्वादि, विना तन्त्वादिकं पटादि' इति पामराशयानुसरणसंक्रान्तं पामरभावानां मतमपास्तम्; राजाज्ञादितुल्यतयेश्वरेच्छाया अहेतुत्वात्, सामग्रीसिद्धस्य नियतदेश-कालत्वस्य तज्जन्यताघटकतया तदनियम्यत्वात्; अन्यथा तत्कालावच्छिन्नतद्घटावच्छिन्नविशेष्यत-

१ ख. ग. घ. च 'ष्ट्ज्ञा'।

योपादाननिष्ठतयोपादानप्रत्यक्षादित्रयहेतुताकल्पने गौरवात्, समवेतत्वसंबन्धेनेश्वरीयत्वेन तत्रयानुगमेऽप्यसंसार्यात्मत्वलक्षणेश्वरत्वनिवेशे गौरवात्, प्रत्येकमादाय विनिगमनाविरहाच्च तत्कालावच्छिन्नतद्धटावच्छिन्नत्वसंबन्धेन नियतेरेव हेतुत्वकल्पनौचित्यात्, इतरकारणवैयर्थ्यापत्तेश्च । तदनुमतदण्डत्वादिनाऽहेतुत्वात्, दण्डादीनां हेतुत्वनियमस्य च स्वभावत एव संभवात्, न तदर्थमपीश्वरानुसरणम्, अन्यथा तज्ज्ञानादेस्तत्तत्कारणानुमतित्वेऽपि नियामकान्तरं गवेषणीयम् । धर्मिग्राहकमानेन तत् स्वतो नियतमेवेति चेत् । इदमपि तत एव किं न तथा ? । व्यवस्थितश्चायमर्थो 'न चाचेतनानामपि स्वहेतुसंनिधिसमासादितोत्पत्तीनां चेतनाधिष्ठातृव्यतिरेकेणापि देश-काला-ऽऽकारनियमोऽनुपपन्नः, तन्नियमस्य स्वहेतुबलायातत्वात्' इत्यादिना ग्रन्थेन सम्मतिटीकायामपि ।

किञ्च, एतादृशनियामकत्वं भवस्थ-सिद्धादिज्ञान एव, इति किं [1]शिपिविष्टकल्पनाकष्टेन ? । तदिदमुक्तं हेमसूरिभिः—

"सर्वभावेषु कर्तृत्वं ज्ञातृत्वं यदि संमतम् । मतं नः[2], सन्ति सर्वज्ञा मुक्ताः कायभृतोऽपि हि" ॥ १ ॥ इति ।

युक्तं चैतत्, "[3]जं जहा भगवया दिट्ठं तं तहा विपरिणामइ" इति भगवद्वचनस्यापीत्थमेव व्यवस्थितत्वात् । एवं च

"समालोच्य क्षुद्रेष्वपि भवननाथस्य भवने नियोगाद् भूतानां मितसमय-देश-स्थिति-लयम् ।
अये ! केयं भ्रान्तिः सततमपि मीमांसनजुषां व्यवस्थातः कार्ये जगति जगदीशाऽपरिचयः ? ॥ १ ॥"

---

१ शिपिविष्टो महेशः । २ आर्हतानाम् । ३ यद् यथा भगवता दृष्टं तत् तथा विपरिणमते ।

इति पद्येऽपि प्रतिपद्यमेवं मदीयम्—

पिनष्टीयं पिष्टं भवनियमसिद्धिर्व्यसितिः स्वभावाद् भूतानां मितसमयदेशस्थितिरिति ।
अये ! केयं भ्रान्तिः सततमपि तर्कव्यसनिनां वृथा यद्व्यापारो जगति जगदीशस्य कथितः ? ॥ १ ॥

इति दिग् । अत एवाऽग्रिमाण्यप्यनुमानान्यपास्तानि ।

किञ्च, [1]द्वितीयानुमाने 'स्वोपादान-' इत्यत्र स्वपदस्य द्व्यणुकादिपरत्वे साध्याप्रसिद्धिः, घटादिपरत्वे पटादौ संदिग्धानैकान्तिकत्वम् , स्वोपादानगोचरत्वादिनाऽऽपाततोऽपि हेतुत्वाभावतोऽत्यप्रयोजकत्वं च । [2]तृतीये ज्ञाने-च्छापदोपादानप्रयासः । [3]चतुर्थे सर्गासिद्ध्या परं प्रति पक्षासिद्धिः ।

[4]पञ्चमे तु क्षित्यादावकर्तृकत्वस्यैव व्यवहाराद् बाधः । विशेषान्वय-व्यतिरेकाभ्यां कर्तृत्वेन कार्यसामान्य एव हेतुत्वग्रहाद् न बाध इति चेत् । तर्हि शरीर-चेष्टयोरप्यन्वय-व्यतिरेकाभ्यां कार्यसामान्यहेतुत्वात् तयोरपि नित्ययोगीश्वरे प्रसक्तिः । अथ नित्यशरीरमिष्यत एव भगवतः । तत्र 'परमाणव एव प्रयत्नवदीश्वरात्मसंयोगाधीनचेष्टावन्त ईश्वरस्य शरीराणि' इत्येके । 'वायुपरमाणव एव नित्यक्रियावन्त[5]स्तथा, अत एव तेषां सदागतित्वम्' इत्यन्ये । "आकाशशरीरं ब्रह्म" इति श्रुतेः 'आकाशस्तच्छरीरम्' इत्यपरे । चेष्टाया नित्यत्वे तु मानाभावः, नित्यज्ञानसिद्धौ तु श्रुतिरपि पक्षपातिनी, "नित्यं विज्ञानं०" इत्यादि-

१. ९२ पत्रे प्रथमे पृष्ठे पङ्क्तिः १३ । २. ९३ पत्रे प्रथमे पृष्ठे पङ्क्तिः २ । ३. ९३ पत्रे प्रथमे पृष्ठे पङ्क्तिः ६ । ४. ९३ पत्रे प्रथमे पृष्ठे पङ्क्तिः ७ ।
५ तथा- ईश्वरस्य शरीराणीत्यर्थः ।

काः अत एव ज्ञानत्वावच्छेदेनाऽऽत्म-मनोयोगजन्यत्वं न बाधकमिति चेत्। न, ईश्वरसंबन्धस्य सर्वत्राऽविशेषेण 'इदमेवेश्वरशरीरम्' इति नियमायोगात्; चेष्टाया अपि ज्ञानवदेकस्या नित्यायाश्च स्वीकारौचित्यात्, उक्तश्रुतेस्त्वदभिमतेश्वरज्ञानापक्षपातित्वाच्च, अन्यथाऽऽनन्दोऽपि तत्र सिध्येत्, ज्ञाना-ऽऽनन्दभेदश्चेति दिग्।

आयोजनादपि नेश्वरसिद्धिः, ईश्वराधिष्ठानस्य सर्वदा सत्त्वेऽप्यदृष्टविलम्बादेवाऽऽद्याणुक्रियाविलम्बात्, तत्र तद्धेतुत्वावश्यकत्वात्, दृष्टकारणसत्त्व एवाऽदृष्टविलम्बेन कार्याविलम्बात्, अदृष्टस्य दृष्टाघातकत्वात्, चेष्टात्वस्याऽनुगतत्वेनोपाधित्वाच्च। तदवच्छिन्न एव हि जीवनयत्नव्यावृत्तेन प्रवृत्तित्वेन गमनत्वादि व्याप्यत्वे तु विलक्षणयत्नत्वेनैव हेतुत्वात् क्रियासामान्ये यत्नत्वेन हेतुत्वे मानाभावात्, 'यद्विशेषयोः०' इत्यादिन्याये मानाभावात्।

धृतेरपि नेश्वरः सिद्धिः, गुरुत्ववत्पतनाभावमात्रस्य गुरुत्वेतरहेत्वभावप्रयुक्तस्याऽऽम्रफलादावेव व्यभिचारित्वात्। प्रतिबन्धकाभावेतरसामग्रीकालीनत्वविशेषणे[2]ऽपि वेगवदिषुपतनाभावे[3] तथात्वात्। वेगाप्रयुक्तत्वस्यापि विशेषणत्वे मन्त्रविशेषप्रयुक्तगोलकपतनाभावे[3] तथात्वात्। अदृष्टाप्रयुक्तत्वस्यापि विशेषणत्वे च स्वरूपासिद्धिः, ब्रह्माण्डधृतेरप्यदृष्टप्रयुक्तत्वात्; तदुक्तम्—

"निरालम्बा निराधारा विश्वाधारो वसुन्धरा। यच्चावतिष्ठते तत्र धर्मादन्यद् न कारणम्॥ १॥" इति।

युक्तं चैतत्, ईश्वरप्रयत्नस्य व्यापकत्वेन समरेऽपि शरपाताऽनापत्तेः। पतनाभावावच्छिन्नेश्वरप्रयत्नस्य तथात्वे तादृश-

---

१ तच्छब्देनाऽदृष्टम्। २ ख. ग. घ. च. 'णे मे'। ३ व्यभिचारित्वादित्यर्थः।

ज्ञाने-च्छाभ्यां विनिगमनाविरहात् क्लृप्तजातीयस्याऽदृष्टस्यैव ब्रह्माण्डधारकत्वकल्पनौचित्यात् । न चात्माऽविभुत्ववादिनः¹ संबन्धानुपपत्तिः, असंबद्धस्यापि तत्कार्यजननशक्तस्य तत्कार्यकारित्वात्, अयस्कान्तस्याऽसंबद्धस्यापि लोहाऽऽकर्षकत्वदर्शनादिति; अन्यत्र विस्तरः । प्रयत्नस्य तु विलक्षणप्रयत्नत्वेन पतनप्रतिबन्धकसंयोगविशेष एव हेतुत्वम् ।

ब्रह्माण्डनाशकतयापि नेश्वरसिद्धिः, प्रलयाऽनभ्युपगमात्, अहोरात्रस्याऽहोरात्रपूर्वकत्वव्याप्यत्वात् । न च वर्षादिनत्वेनाऽव्यवहितवर्षादिनपूर्वकत्वे साध्ये राशिविशेषावच्छिन्नरविपूर्वकत्ववदत्राव्यवहितसंसारपूर्वकत्वमुपाधिः, राशिविशेषे वर्षादिनस्य हेतुत्वेन तत्रानुकूलतर्केणोपाधेः साध्यव्यापकत्वग्रहेऽप्यनुकूलतर्काभावेन प्रकृत उपाधेरसमर्थत्वात्, कालत्वस्य भोग्यव्याप्यत्वाच्च । कर्मणां विषमविपाकतया युगपन्निरोधासंभवात्, सुषुप्तौ कतिपयाऽदृष्टनिरोधस्य दर्शनावरणरूपाऽदृष्टसामर्थ्यादेवोपपत्तेर्बलवताऽदृष्टेनाऽदृष्टान्तरप्रतिरोधदर्शनात्; प्रलये तु कथं तादृशादृष्टं विनाऽदृष्टनिरोधः स्यात् ?, अन्यथा त्वनायाससिद्धो मोक्षः, इति किं ब्रह्मचर्यादिक्लेशानुभवेन ?, इत्यन्यत्र विस्तरः । एतेन 'आद्यव्यवहारादीश्वरसिद्धिः, प्रतिसर्गं मन्वादीनां बहूनां व्यवहारप्रवर्तकानां कल्पने गौरवादेकस्यैव भगवतः सिद्धेः' इत्यपास्तम्, सर्गादेरेवाऽसिद्धेः, इदानीमिव सर्वदा पूर्वपूर्वव्यवहारेणैवोत्तरोत्तरव्यवहारोपपत्तेः । यदि तु सर्गादिरुपेयते, तदा तदानीं प्रयोज्य-प्रयोजकवृद्धयोरभावात् कथं व्यवहारः ? ।

अथ यथा मायावी सूत्रसंचाराधिष्ठितदारुपुत्रकं 'घटमानय' इत्यादि नियोज्य घटाऽऽनयनं संपाद्य बालकस्य व्यु-

१ कायप्रमाणात्मवादिनो जैनस्येत्यर्थः ।

त्पत्तौ प्रयोजकः, तथेश्वरोऽपि प्रयोज्य-प्रयोजकवृद्धीभूय व्यवहारं कृत्वाऽऽद्यव्युत्पत्तिं कारयति। न चाऽत्र चेष्टया प्रवृत्तिम्, तया ज्ञानम्, तज्ज्ञाने उपस्थितवाक्यहेतुत्वम्, तज्ज्ञानविषयपदार्थे चाऽऽवापो-द्वापाभ्यां तत्तत्पदज्ञानं हेतुत्वमनुमाय तत्तपदे तत्तदर्थज्ञानानुकूलत्वेन तत्तदर्थसंबन्धवत्त्वमनुमेयम्, एवं चाऽयं संबन्धग्रहो भ्रमः स्यात्, जनकज्ञानस्य भ्रमत्वात्, इति वाच्यम्; तत्त्वेऽपि विषयाऽबाधेन प्रमात्वात्, चरमपरामर्शस्य प्रमात्वसंभवाच्च। एवमीश्वर एव कुलालादिशरीरं परिग्रह्य घटादि संप्रदाय प्रवर्तकः, अत एव श्रुतिः– "कुलालेभ्यो नमः, कर्मारेभ्यः" इत्यादीति चेत्।

न, अदृष्टाभावेन प्रयोज्यादिशरीरपरिग्रहस्यैव भगवतोऽयुक्तत्वात्, अन्यादृष्टेनाऽन्यस्य शरीरपरिग्रहे चैत्राऽदृष्टाऽऽकृष्टं शरीरं मैत्रोऽपि परिगृह्णीयात्। प्राण्यदृष्टेन घटादिवत् तत्तच्छरीरोत्पत्तिः, तत्परिग्रहस्तु भगवतस्तदावेश एवेति न दोष इति चेत्। न, घटादावतथात्वेऽपि तदीयशरीरे तदीयाऽदृष्टत्वेनैव हेतुत्वात्, अन्यथाऽतिप्रसङ्गात्।

किञ्च, कोऽयमावेशः? । तदवच्छिन्नप्रयत्न एवेति चेत्। न, तदजन्यस्य प्रयत्नस्य तदनवच्छिन्नत्वात्। अथैवंभूता-ऽऽवेशानुपपत्तिः, तत्र हि भूतात्मन्येव चैत्राद्यवच्छेदेन प्रवृत्तिरङ्गीक्रियते, अन्यथा मृतशरीरे तदावेशानापत्तेरिति चेत्। इयमपि तवैवानुपपत्तिः, अस्माकं तु तत्र संकोच-विकाशस्वभावभूतात्मप्रदेशानुप्रवेशादुपपत्तेः। तत्र त्ववच्छेदकतया चैत्रप्रयत्नं प्रति चैत्रशरीरत्वेनाऽवश्यं हेतुता वक्तव्या, अन्यथा मैत्रशरीरावच्छेदेन चैत्रप्रवृत्त्यापत्तेः; पाण्यादिचालकप्रयत्नसत्त्व एव पुन-

१ तव– नैयायिकस्य। २ अस्माकम्– जैनानाम्।

स्तदापत्तिवारणायाऽवच्छेदकतया तत्प्रयत्ने तया तद्भावस्य हेतोरापादकस्य सत्त्वात्, तत्तच्छरीरत्वेन तत्तत्प्रवृत्त्यादिहेतुत्वे गौरवात्, कायव्यूहस्थलेऽपि योगजाऽदृष्टोपगृहीतत्वसंबन्धेन तदात्मवत्त्वस्य सर्वशरीरानुगतत्वात् ।

अपि च, यथा कथञ्चिद् भूतावेशन्यायेन तच्छरीरपरिग्रहे जगदप्यावेशेनैव प्रवर्तयेत्, इति व्यर्थमस्य[1] वेदादिप्रणयनम् । कर्मवदस्याऽपि दृष्टे-ष्टानतिलङ्घनेनैव प्रवर्तकत्वाद् नानुपपत्तिरिति चेत् । तर्हि परप्रवृत्तये वाक्यमुपदिशन् स्वेष्टसाधनताज्ञानादिकमपि कथमतिपतेत् ?, कथं वा चेष्टात्वावच्छिन्ने विलक्षणयत्नत्वेन हेतुत्वात् तदवच्छिन्नस्य विजातीयमनःसंयोगादिजन्यत्वात् तादृशप्रयत्नं विना ब्रह्मादिशरीरचेष्टा ?, विलक्षणचेष्टायां विलक्षणप्रयत्नस्य हेतुत्वात् । अत्रेश्वरीययत्न एव हेतुरिति चेत् । तर्हि तस्य[2] सर्वत्राविशिष्टत्वात् सर्वत्रापीश्वरचेष्टापत्तिः । विलक्षणचेष्टावच्छिन्नविशेष्यतया तत्प्रयत्नस्य[2] हेतुत्वाद् नातिप्रसङ्ग इति चेत् । तर्हि चेष्टावैलक्षण्यसिद्धौ तथाहेतुत्वम्, तथाहेतुत्वे च तद्वैलक्षण्यमिति परस्पराश्रयः । किञ्च, स्वाधिष्ठातरि भोगाजनकशरीरादिसंपादनमपि तस्यै[2]श्वर्यमात्रमेव, इति दृष्टविरोधेनैव जगत्प्रवृत्तिरायाता । एतेनैतत् प्रतिक्षिप्तम्—

"हेत्वभावे फलाभावात् प्रमाणेऽसति न प्रमा । तदभावात् प्रवृत्तिर्नो कर्मवादेऽप्ययं विधिः[3] ॥ १ ॥"

इति, कर्मणः कर्त्रादिसापेक्षत्वेनैव जगद्धेतुत्वात् । समर्थितं च

"धर्माऽधर्मौ विना नाङ्गं विनाऽङ्गेन मुखं कुतः ? । मुखाद् विना न वक्तृत्वं तच्छास्तारः परे कथम् ? ॥ १ ॥"

१ अस्य– ईश्वरस्य । २ तच्छब्देनेश्वरः । ३ कुसुमाञ्जलौ तृतीये स्तबके कारिका १८ ।

इति, शरीरस्य स्वोपात्तनामकर्म[1]हेतुत्वात्, तद्वैचित्र्येण तद्वैचित्र्यात्[2], अन्यथाऽङ्गो-पाङ्गवर्णादिप्रतिनियमानुपपत्तेरिति, अन्यत्र विस्तरः। तस्माद् मायाविवत् समयग्राहकत्वम्, घटादि संप्रदाय प्रवर्तकत्वं च[3] पराभिमतेश्वरस्य मायावितामेव विद्याधरविशेषस्य व्यञ्जयति। पितुरिव पित्रादेर्युगादौ युगादीशस्य जगतः शिक्षया तु तथात्वं युक्तिमत्, स्वभावत एव तीर्थकृतां परोपकारित्वात्; अत एव "कुलालेभ्यो नमः" इत्याद्या श्रुतिः संगच्छत इति युक्तं पश्यामः। अनुमानेऽपि सिद्धसाधनं बोध्यम्।

प्रत्ययादिना तु वेदप्रामाण्यवादिनामाप्त-तद्वक्तृसिद्धावपि नेश्वरसिद्धिः, इति किमिह तदुपन्यासेन ? । एतेन कार्यादि-पदानाम्[4]र्थान्तरमपि प्रयासमात्रम्। 'जन्यतत्प्रमासामान्ये तत्प्रमात्वेन गुणतया हेतुत्वात्, आद्यप्रमाजनकप्रमाश्रयतयेश्वरसिद्धिः' इति तु मूढानां वचः, घटत्वादिमद्वृत्तिविशेष्यतया तत्र घटत्वादिविषयत्वेनैव हेतुतया, संस्कारेणैव घटत्वादिसंबन्धहेतुतयैव वा त्वत्रापि[5] निर्वाहात्; अस्माकं[6] तु सम्यग्दर्शनस्यैव गुणत्वात्।

संख्याविशेषादपि नेश्वरसिद्धिः, तत्रापि लौकिकापेक्षाबुद्धेरेव तद्धेतुत्वात्, ममा[6]प्यपेक्षाबुद्धेरेव तथाव्यवहारनिमित्तत्वात् तज्जन्यातिरिक्तसंख्यासिद्धेः; परिमाणेऽपि संघातभेदादिकृतद्रव्यपरिणामविशेषरूपे संख्याया अहेतुत्वाच्च, द्विकपालात् त्रिकपालघटपरिमाणोत्कर्षस्य दलोत्कर्षादेवोपपत्तेरिति। तत्त्वमत्रत्यमार्हतवार्तायां विवेचयिष्यते।

---

१ नामकर्म वैचित्र्येण। २ शरीरवैचित्र्यात्। ३ समयग्राहकत्वम्, घटादि संप्रदाय प्रवर्तकत्वं च। ४ कार्य तात्पर्यमित्यादिना ग्रन्थेन पूर्वपक्षे ९४ पत्रे प्रतिपादितम्। ५ तव— नैयायिकस्य। ६ आर्हतवाची अस्मच्छब्दः।

तस्माद् नेश्वरसिद्धौ किमपि साधीयः प्रमाणम्, नवा तदभ्युपगमेनापि तस्य सर्वज्ञत्वम्, उपादानमात्रज्ञानासिद्धावव्यतिरिक्तज्ञानासिद्धेः, कारणाभावात्, मानाभावाच्चेति दिग् ॥ ९ ॥

" संतुष्य नैयायिकमुख्य ! तस्मादस्माकमेवाऽऽश्रय पक्षमग्र्यम् ।
तवोच्चकैरीश्वरकर्तृताया मनोरथं संप्रति पूरयामः ॥ १ ॥
नयैः परानप्यनुकूलवृत्तौ प्रवर्तयत्येव जिनो विनोदे ।
उक्तानुवादेन पिता हितात् किं बालस्य नाऽऽलस्यमपाकरोति ? ॥ २ ॥ "

तदिदमाह—

**ततश्चेश्वरकर्तृत्ववादोऽयं युज्यते परम् । सम्यग्न्यायाविरोधेन यथाहुः शुद्धबुद्धयः ॥१०॥**

ततश्च– पातञ्जल-नैयायिकमतनिरासाच्च, अयं– तथाविधलोकप्रसिद्धः, ईश्वरकर्तृत्ववादः, परम्– उक्तविपरीतरीत्या, सम्यग्न्यायाविरोधेन– प्रतितर्काप्रतिहततर्कानुसारेण, युज्यते; यथा, शुद्धबुद्धयः– सिद्धान्तोपबृंहितमतयः परमर्षय आहुः ॥१०॥

तद्वचनमेवाऽनुवदति—

**ईश्वरः परमात्मैव तदुक्तव्रतसेवनात् । यतो मुक्तिस्ततस्तस्याः कर्ता स्याद् गुणभावतः ॥११॥** ॥१०२॥

ईश्वरः परमात्मैव– कायादेर्बहिरात्मनो ध्यातुर्भिन्नत्वेन ज्ञेयादन्तरात्मनश्च तदधिष्ठायकस्य ध्यातुर्ध्येयैकस्वभावत्वेन भिन्नोऽनन्तज्ञान-दर्शनसंपदुपेतो वीतराग एव । अन्ये तु– 'मिथ्यादर्शनादिभावपरिणतो बाह्यात्मा, सम्यग्दर्शनादिपरिणतस्त्व-न्तरात्मा, केवलज्ञानादिपरिणतस्तु परमात्मा । तत्र व्यक्त्या बाह्यात्मा, शक्त्या परमात्मा, अन्तरात्मा च; व्यक्त्याऽन्तरात्मा तु शक्त्या परमात्मा, भूतपूर्वनयेन च बाह्यात्मा; व्यक्त्या परमात्मा तु भूतपूर्वनयेनैव बाह्यात्मा, अन्तरात्मा च' इत्याहुः । तदुक्तव्रतसेवनात्– परमाप्तप्रणीतागमविहितसंयमपालनात्; यतो मुक्तिः कर्मक्षयरूपा, भवति; ततस्तस्या गुणभावतः– राजा-दिवदप्रसादानियतप्रसादाभावेऽप्यचिन्त्यचिन्तामणिवद् वस्तुस्वभावबलात् फलदोपासनाकत्वेनोपचारात्, कर्ता स्यात् । अत एव भगवन्तमुद्दिश्याऽऽरोग्यादिप्रार्थना । सार्थका-ऽनर्थकचिन्तायां तु भाज्यमेतत्, चतुर्थभाषारूपत्वात्, इति ग्रन्थकृतैव ललित-विस्तरायामुक्तम् । अप्रार्थनीये कर्तरि प्रार्थनाया विधिपालनबलेन शुभाध्यवसायमात्रफलत्वादिति निगर्वः ॥ ११ ॥

अस्त्वेवं मुक्तिकर्तृत्वम्, भवकर्तृत्वं तु कथम्?, अत आह—

**तदनासेवनादेव यत्संसारोऽपि तत्त्वतः । तेन तस्यापि कर्तृत्वं कल्प्यमानं न दुष्यति ॥१२॥**

तदनासेवनात्– तदुक्तव्रताऽपालनादेव, यत्– यस्मात् कारणात्, तत्त्वतः– परमार्थतः, संसारोऽपि जीवस्य भवति, अविरतिमूलत्वात् तस्येति भावः; तेन हेतुना, तस्यापि– संसारस्यापि, कर्तृत्वं कल्प्यमानम्– स्वहेतुक्रियाविरुद्धविधिबोधितोपा-

सनाकत्वपरेण कर्तृत्वपदेन बोध्यमानम्, न दुष्यति "अङ्गुल्यग्रे करिशतम्" इत्यादिवद् यथा कथञ्चिदुपचारेण व्यवहारानिर्वाहादिति भावः ॥ १२ ॥

नन्वीदृशकल्पनायां को गुणः?, इत्यत्राह—

**कर्तायमिति तद्वाक्ये यतः केषाञ्चिदादरः। अतस्तदानुगुण्येन तस्य कर्तृत्वदेशना ॥१३॥**

अयम्- ईश्वरः, कर्ता, इति हेतोः, तद्वाक्ये- ईश्वरवाक्ये सिद्धान्ते, 'अयं कर्ता' इति तद्वाक्ये प्रसिद्धवाक्ये वा; यतः केषांचित्- तथाविधभद्रकविनेयानाम्, आदरः स्वरसवाहिश्रद्धानात्मा, भवति; अतस्तदानुगुण्येन- तथाविधविनेयश्रद्धाभिवृद्धये, तस्य- परमात्मनः, कर्तृत्वदेशना- कर्तृत्वोपदेशः। श्रोतृभावाभिवृद्ध्यर्थो हि गुरोरुपदेशः, सा च कल्पितोदाहरणेनापि निर्वाह्यते, किं पुनरुपचारेण ? इति भावः ॥ १३ ॥

साक्षादपि कर्तृत्वं समर्थयति—

**परमैश्वर्ययुक्तत्वान्मत आत्मैव वेश्वरः। स च कर्तेति निर्दोषः कर्तृवादो व्यवस्थितः ॥१४॥**

परमैश्वर्ययुक्तत्वात्- निश्चयतो घनाऽऽवृतस्यापि रवेः प्रकाशस्वभावत्ववत् कर्माऽऽवृतस्याऽप्यात्मनः शुद्ध बुद्धैकस्वभावत्वेनोत्कृष्टकेवलज्ञानाद्यतिशयशालित्वात्, आत्मैव-जीव एव वा, ईश्वरो मतः- ईश्वरपदेन संकेतितः। स च- जीवश्च, कर्ता- साक्षात्कर्ता, इति हेतोः, निर्दोषः- उपचारेणाऽप्यकलङ्कितः, कर्तृवादः- ईश्वरकर्तृत्वोपदेशः, व्यवस्थितः- प्रमाणसिद्धः। अत

एव "विश्वतश्चक्षुरुत विश्वतोमुखः०" इत्यादिका श्रुतिरप्युपपद्यते ; जीवस्य निश्चयतः सर्वज्ञत्वात्, अन्यथा रागाद्यावरणविलये तदाविर्भावानुपपत्तेः ।

"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १ ॥"

इत्यादिकमप्युपपद्यते, आवृतस्वरूपादनावृतस्वरूपस्य भिन्नत्वात् ; चैतन्यात्मकमहासामान्येन लोकत्रयावेशाद् ग्राह्याकारक्रोडीकृतत्वेन तद्भरणाच्च; इत्यादिरीत्या यथाऽऽगमं पराभिप्राय उपपादनीयः ॥ १४ ॥

यतः—

**शास्त्रकारा महात्मानः प्रायो वीतस्पृहा भवे । सत्त्वार्थसंप्रवृत्ताश्च कथं तेऽयुक्तभाषिणः ?॥१५॥**

शास्त्रकाराः, प्रायः– लोकायतादीन् परलोकाऽभीरून् विहाय,महात्मानः– धर्माभिमुखाः, भवे– संसारे, वीतस्पृहाः– लोकमानख्याति-धनलिप्सादिरहिताः, सत्त्वार्थसंप्रवृत्ताश्च– यथाबोधं परोपकारप्रवृत्ताश्च, अन्यथेदृशप्रवृत्त्ययोगात् ; ततः कथं तेऽयुक्तभाषिणः– ज्ञात्वा विरुद्धभाषिणः ? । विरोधः खलु जल-ज्वलनयोरिव परोपकारित्व-विरुद्धभाषित्वयोरिति भावः ॥१५॥

ततः किम् ?, इत्याह—

**अभिप्रायस्ततस्तेषां सम्यग् मृग्यो हितैषिणा । न्यायशास्त्राविरोधेन यथाह मनुरप्यदः॥१६॥**

ततः– अविरुद्धभाषित्वात्, तेषां– परोपकारार्थं प्रवृत्तानां शास्त्रकाराणाम्, अभिप्रायः– शब्दतात्पर्यात्मा, सम्यग्–व्यासङ्गपरिहारेण, मृग्यः– उन्नेयः, हितैषिणा– मुमुक्षुणा, न्यायशास्त्राविरोधेन– युक्त्या-ऽऽगमबाधा यथा न स्यात् तथा, न तु यथाश्रुतग्रहणमात्रेणाऽऽन्ध्ये मज्जनीयं मनः, अन्यथा 'ग्रावाणः प्लवन्ते' इत्यादिश्रुतिश्रवणेन गगनमेवाऽवलोकनीयं स्यात्। अत्र पराऽभियुक्तसंमतिमाह– यथा मनुरपि, अदः– वक्ष्यमाणम्, आह ॥ १६ ॥

किम्?, इत्याह—

**आर्षं च धर्मशास्त्रं च वेदशास्त्राविरोधिना। यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥१७॥**

आर्षं च– वेदादि, धर्मशास्त्रं च पुराणादि। 'आर्षं धर्मोपदेशं च' इति क्वचित् पाठः; तत्राऽप्ययमेवार्थः– आर्षं– मन्वादिवाक्यम्, धर्मजनक उपदेशो धर्मोपदेशः,'धर्मस्येश्वरस्य वोपदेशो धर्मोपदेशस्तं– वेदम्' इत्यन्ये। वेदशास्त्राविरोधिना– परस्परं तदुभयाविरोधिना, तर्केण यः, अनुसंधत्ते– तदर्थमनुस्मरति, स धर्मं वेद– जानाति, नेतरः– ऊहरहितः। तस्मादीश्वरकर्तृत्वप्रतिपादकपरागमस्याऽप्ययमेवाऽऽश्रयो युक्तः, इति सम्यग्दृष्टिपरिगृहीतत्वेन तत्प्रामाण्यमुपपादनीयम्। द्रव्यासत्याभिधानं चेदं ग्रन्थकारस्य तत्प्रमाण्याभ्युपगन्तृश्रोतृपरिबोधार्थम्, एवमग्रेऽप्यूहनीयम्।

इत्येवं पटुरीश्वरव्यतिकरः सत्तर्कसंपर्कभाग् येषां विस्मितमातनोति न मनस्ते नाम वामाशयाः।
अस्माकं तु स एक एव शरणं देवाधिदेवः, सुखाम्भोधौ यस्य भवन्ति बिन्दव इव स्वःसद्मनां संपदः ॥ १ ॥ १७ ॥

वार्तान्तरमाह—

**प्रधानोद्भवमन्ये तु मन्यन्ते सर्वमेव हि । महदादिक्रमेणेह कार्यजातं विपश्चितः॥१८॥**

अन्ये तु विपश्चितः– सांख्याः, इह– सामग्रीविचारे, सर्वमेव हि कार्यजातं महदादिक्रमेण प्रधानोद्भवं मन्यन्ते । तथाहि– तेषां पञ्चविंशतिस्तत्त्वानि, तत्राऽकारणम्, अकार्यं च कूटस्थनित्यचैतन्यरूप आत्मा । प्रकृतिरचेतना, महदाद्युत्पादकाशेष-शक्तिप्रचिता, आदिकारणम्, परिणामिनी च । तदभावे हि परिमितं व्यक्तं न स्यात्, तथोत्पादकहेत्वभावात् । न च स्याद् भेदानामन्वयः, तन्मयकारणप्रभवत्वं विना तज्जातिमत्कार्यानुपलब्धेः । न च बुद्धिरेव कार्यधर्मानुविधायिनी, असाधारणत्वात्, अनित्यत्वाच्च । न च महदादिहेतुशक्तिप्रवृत्तिः स्यात् । न हि पटादिजननी शक्तिस्तन्तुवायादिकमाधारं विना प्रवर्तते । तथा, कारण-कार्यविभागोऽपि न स्यात्, महदादौ कार्यत्वव्यवहारस्य संबन्धिसापेक्षत्वात् । न च स्यात् क्षीरावस्थायां क्षीरं दध्न इव प्रलये भूतादीनां तन्मात्रादिक्रमेणाऽविवेकरूपोऽविभाग इति प्रकृतिसिद्धिः; तदुक्तम्—

"भेदानां परिमाणात् समन्वयाच्छक्तिसंप्रवृत्तेश्च । कारण-कार्यविभागादविभागाद् वैश्वरूप्यस्य[2] ॥ १ ॥" इति ।

न चाऽसदेव महदादिकमुत्पद्यताम्, किं तत्समन्वयार्थं प्रकृत्यनुसरणेन ? इति वाच्यम्; असतोऽनुत्पत्तेः, तदुक्तम्—

"असदकरणादुपादानग्रहणात् सर्वसंभवाभावात् । शक्तस्य शक्यकरणात् कारणभावाच्च सत् कार्यम्[3] ॥ १ ॥"

---

१ क. 'कार्य कारणांव' । २ सांख्यकारिकायां कारिका १५ । ३ सांख्यकारिकायां कारिका ९ ।

असतः शशविषाणादेः सत्त्वस्य कर्तुमशक्यत्वात्, सत एव हि सत्कारणम्, तद्धर्मत्वात्, दृष्टं च तिलेषु सत एव तैलस्य निष्पीडनेन करणम्, असतस्तु करणे न निदर्शनम्। न च विद्यमानप्रागभावप्रतियोगित्वरूपस्याऽसत्त्वस्य, विद्यमानत्वरूपस्य च सत्त्वस्य न विरोध इति सांप्रतम्, लाघवादविद्यमानत्वस्यैवाऽसत्त्वरूपत्वात्, तेनैव सर्वत्राऽनुगताऽसत्त्वव्यवहारात्। तथा, उपादानग्रहणादपि सत् कार्यम्, अन्यथा शालिफलार्थिनः शालिबीजस्यैवोपादानम्, न कोद्रवबीजादेरिति प्रतिनियमानुपपत्तेः, फलायोगस्योभयत्राऽविशेषात्। 'उपादानेन ग्रहणं संबन्धस्ततोऽसतः संबन्धाभावात्' इत्यन्ये। तथा, सर्वसंभवाऽभावात् सत् कार्यम्, असतः करणेऽसंबद्धाविशेषे सर्वं सर्वस्माद् भवेत्, न चैवम्, तस्मात् कार्यं प्रागुत्पत्तेः कारणेन सह संबद्धम्; यथाहुः—

"असत्त्वाद् नास्ति संबन्धः कारणैः सत्त्वसङ्गिभिः। असंबद्धेषु चोत्पत्तिमिच्छतो न व्यवस्थितिः॥ १॥" इति।

तथा, अशक्तस्य जनकत्वेऽतिप्रसङ्गाच्छक्तस्य जनकत्वं वाच्यम्, शक्तिश्चास्य न सर्वत्र, तथैवाऽतिप्रसङ्गात्, किन्तु क्वचिदेव, इति कथमसति कार्ये कारणस्य शक्तिर्नियता स्यात्, असतो विषयत्वायोगात्[1]। तस्मात् कारणात् प्रागपि शक्यं सदेव। तथा, कारणभावात्– कारणतादात्म्यादपि सत् कार्यं, नाऽवयवी अवयवेभ्यो भिद्यते, तथाप्रतीत्यभावात्; 'कपालं घटीभूतम्, तन्तुः पटीभूतः, स्वर्णं कुण्डलीभूतम्' इत्यादिप्रतीतेः। तस्माद् महदादिकार्यस्योत्पत्तेः प्रागपि यत्र सत्त्वं सा प्रकृतिः। ततो बुद्ध्यपरनामकं महत्तत्त्वमुत्पद्यते, न हि चैतन्यस्य स्वभावतो विषयावच्छिन्नत्वम्, अनिर्मोक्षापत्तेः। नापि प्रकृ-

१ ख. ग. घ. च. 'पस'।

त्यधीनं तत्, तस्या अपि नित्यतया तद्दोषानुद्धारात्। नापि घटादिरेवाऽऽहत्य चैतन्यावच्छिन्नः, दृष्टा-ऽदृष्टतत्त्वानुपपत्तेः। न चेन्द्रियमात्रापेक्षो घटादिचैतन्यावच्छेदः, व्यासङ्गानुपपत्तेः। अतो यत्संबद्धेन्द्रियस्य विषयचैतन्यावच्छेदनियामकत्वम्, यद्व्यापाराच्च सुषुप्ताविन्द्रियादिव्यापारविरतावपि श्वास-प्रश्वासादि, तद् महत्तत्त्वम्। तस्य धर्मा ज्ञाना-ऽज्ञानै-श्वर्या-ऽनैश्वर्य-वैराग्या-ऽवैराग्य-धर्मा-ऽधर्मारूपा अष्टौ, बुद्धि-सुख-दुःखे-च्छा-द्वेष-प्रयत्ना अपि, भावनायास्तैरनङ्गीकारात्, अनुभवस्यैव स्मृतिपर्यन्तं सूक्ष्मरूपतयाऽवस्थानात्। तस्य ज्ञानरूपपरिणामेन संबद्धो विषयः, पुरुषस्य स्वरूपतिरोधायकः। एवं च बुद्धितत्त्वनाशादेव पुंसो विषयावच्छेदाभावाद् मोक्षः। भेदाऽग्रहाच्च 'चेतनोऽहं करोमि' इत्यध्यवसायः, अचेतनप्रकृतिकार्याया बुद्धेश्चैतन्याभिमानानुपपत्त्यैव स्वाभाविकचैतन्यरूपस्य पुंसः सिद्धेः। आलोचनं व्यापार इन्द्रियाणाम्, विकल्पस्तु मानसः, अभिमानोऽहङ्कारस्य कृत्यध्यवसाये बुद्धेः। सा हि बुद्धिरंशत्रयवती, पुरुषोपरागः, विषयोपरागः, व्यापारावेशश्च, इत्यंशाः। भवति हि 'ममेदं कर्तव्यम्' इति बुद्धेरध्यवसायः। तत्र 'मम' इति पुरुषोपरागः, दर्पणस्येव मुखोपरागः, भेदाग्रहादतात्त्विकः। 'इदम्' इति विषयोपरागः, इन्द्रियप्रणालिकया परिणतिभेदो दर्पणस्येव मुखनिश्वासहतस्य मलिनिमोपरागस्तात्त्विकः। तदुभयोपपत्तौ व्यापारावेशोऽपि। तत्र विषयोपरागलक्षणज्ञाने पुरुषोपरागस्याऽतात्त्विकसंबन्धो दर्पणप्रतिबिम्बितस्येव मुखस्य तन्मालिन्येनेति। ततो महत्तत्त्वादहङ्कारोत्पत्तिः। भवति हि स्वप्नावस्थायां 'व्याघ्रोऽहम्, वराहोऽहम्' इत्यभिमानः, न तु 'नरोऽहम्' इत्यभिमानः। अस्ति च तत्र नरत्वं संनिहितमिन्द्रिय-मनःसंबन्धश्च। अतो नियतविषयाभिमानव्यापारकाऽहङ्कारसिद्धिः।

१ ख. ग. घ. च. 'श्वासा'।

ततः पञ्च तन्मात्राणि, एकादशेन्द्रियाणि च । पञ्च तन्मात्राणि– शब्द-रूप-रस-गन्ध-स्पर्शाः सूक्ष्मा उदात्तादिविशेष-रहिताः । एकादशेन्द्रियाणि च– चक्षुः, श्रोत्रम्, घ्राणम्, रसनम्, त्वगिति पञ्च बुद्धीन्द्रियाणि, वाक्-पाणि-पाद-पायू-पस्थाः पञ्च कर्मेन्द्रियाणि, मनश्चेति । पञ्चतन्मात्रेभ्यः पञ्च महाभूतान्युत्पद्यन्ते, तथाहि– शब्दतन्मात्रादाकाशं शब्दगुणम्, शब्दतन्मात्रसहितात् स्पर्शतन्मात्राद् वायुः शब्द-स्पर्शगुणः, शब्द-स्पर्शतन्मात्रसहिताद् रूपतन्मात्रात् तेजः शब्द-स्पर्श-रूपगुणम्, शब्द-स्पर्श-रूपतन्मात्रसहिताद् रसतन्मात्रादापः शब्द-स्पर्श-रूप-रसगुणाः, शब्द-स्पर्श-रूप-रसतन्मात्रसहिताद् गन्धतन्मात्रात् शब्द-स्पर्श-रूप-रस-गन्धगुणा पृथिवीति । तदुक्तमीश्वरकृष्णेन—

"प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः । तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि[1] ॥ १ ॥

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृति-विकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः[2] ॥२॥" इति ।

पूर्वं षोडशकपदेन पञ्चतन्मात्रै-कादशेन्द्रियग्रहणम्, अग्रे तु पञ्चमहाभूते-न्द्रियग्रहणमिति विशेषः ॥ १८ ॥

इममेव क्रममाह—

**प्रधानान्महतो भावोऽहंकारस्य ततोऽपि च । अक्षतन्मात्रवर्गस्य तन्मात्राद् भूतसंहतेः ॥१९॥**

प्रधानात्– प्रकृतितत्त्वात्, महतः– बुद्धितत्त्वस्य, भावः– उत्पत्तिः, अभिव्यक्तिर्वा, ततोऽपि च, अहङ्कारस्य 'भावः'

१ सांख्यकारिकायां कारिका २२ । २ सांख्यकारिकायां कारिका ३ ।

इत्युत्तरत्राप्यनुषज्यते । 'ततोऽपि' इत्युत्तरत्राऽऽवर्त्यते, ततोऽपि- अहङ्कारादपि, अक्ष-तन्मात्रवर्गस्य- एकादशेन्द्रिय-पञ्चमहाभूतानां भावः; तन्मात्रात्- जात्यपेक्षयैकवचनात् पञ्चभ्यस्तन्मात्रेभ्यः, भूतसंहतिः- पञ्चमहाभूतानां भावः ॥ १९ ॥

स्थूलकार्यमधिकृत्याह—

**घटाद्यपि पृथिव्यादिपरिणामसमुद्भवम् । नात्मव्यापारजं किञ्चित्तेषां लोकेऽपि विद्यते॥२०॥**

घटाद्यपि- स्थूलकार्यजातम्, पृथिव्यादीनां मृदात्मिकानां परिणामाद् विलक्षणसंयोगादिपरिणामात् समुद्भव उत्पत्तिर्यस्य तत्, परिणामादेव परिणामान्तराभ्युपगमात् । विशेषमाह- तेषां- सांख्यानाम्, लोकेऽपि- जगत्यपि, आत्मव्यापारजं किञ्चित् किमपि कार्यं नास्ति, आत्मव्यापारस्यैवाऽभावात् सुतरां तज्जन्यत्वाभावः । इति सांख्याशयवार्ता ॥२०॥

अत्र प्रतिक्षेपवार्तामाह—

**अन्ये तु ब्रुवते ह्येतत्प्रक्रियामात्रवर्णनम् । अविचार्यैव तद्युक्त्या, श्रद्धया गम्यते परम् ॥२१॥**

अन्ये तु- असत्कार्यवादिनः, ब्रुवते— हि- यतः, एतत्- अनुपदमभिहितम्, प्रक्रियामात्रवर्णनम्- यदृच्छाक्लृप्तपरिभाषामात्रोपदर्शनम्, न तात्त्विकमेव; तत्- तस्माद् हेतोः, युक्त्याऽविचार्यैव, परं केवलम्, श्रद्धया- वृद्धोक्तभक्त्या, गम्यते- उपादीयते ॥ २१ ॥

१ सर्वत्र पुस्तकादर्शेष्वेवमेव पाठेऽपि पूर्वग्रन्थानुरोधेन 'तन्मात्र' इति कारिकापदानुरोधेन च 'तन्मात्राणां' इति पाठो युक्तः प्रतिभाति ।

कुतः ?, इत्याह—

**युक्त्या तु बाध्यते यस्मात्प्रधानं नित्यमिष्यते। तथात्वाप्रच्युतौ चास्य महदादि कथं भवेत्?॥२२॥**

युक्त्या तु बाध्यते, यस्मात् प्रधानं, नित्यम्– अप्रच्युता-ऽनुत्पन्न-स्थिरैकस्वभावम्, इष्यते– सांख्यैरङ्गीक्रियते; अस्य– प्रधानस्य, तथात्वाप्रच्युतौ च– प्रधानत्वाप्रच्युतौ च, महदादि कथं भवेत् ?– पूर्वस्वभावपरित्यागा-ऽपूर्वस्वभावोपादानाभ्यामेव हेतु-हेतुमद्भावनियमात्, अङ्गदादिपरिणामनाशेनैव कुण्डलादिपरिणामोत्पाददर्शनादिति भावः ॥२२॥

अथ नाऽस्माभिरपूर्वस्वभावोत्पत्त्या हेतु-हेतुमद्भावोऽभ्युपगम्यते, यतो रूपभेदादनित्यता प्रसज्येत; किन्त्वपरित्यक्तसर्पभावस्य सर्पस्य कुण्डलावस्थावदपरित्यक्तप्रधानभावस्यैव प्रधानस्य महदादिपरिणामाभ्युपगम इति को दोषः, युवत्व-वृद्धत्वादिपरिणामयोरप्यवस्थित एव धर्मिणि पूर्वोत्तरभावनियमेनाऽवस्थासांकर्यात् ?, इत्यभिप्रायमुट्टङ्क्य निराकुरुते—

**तस्यैव तत्स्वभावत्वादिति चेत्किं न सर्वदा। अत एवेति चेत्तस्य तथात्वे ननु तत्कुतः? ॥२३॥**

तस्यैव– प्रधानस्यैव, एवकारेण स्वभावान्तरव्यवच्छेदः, तत्स्वभावत्वात्– महदादिजननस्वभावत्वात्, तथात्वाऽप्रच्युतावपि महदाद्युत्पत्तिरित्युपस्कारः, इति चेत्। तदा सर्वदा किं न भवति महदादिकम् ?, प्रकृतिसंनिधानस्य सर्वदा सत्त्वादेकहेलयैव जगत् स्यात्, समर्थस्य कालक्षेपाऽयोगादित्याशयः। परः प्राह– अत एव– कदाचिज्जननस्वभावत्वादेव, न सर्वदोत्पत्तिरित्याशयः। वाद्याह– इति चेत्, 'ननु' इत्याक्षेपे, तस्य– प्रधानस्य, तथात्वे– नियतस्वरूपाविकृतत्वे, तत्–

कदाचिज्जननस्वभावत्वम्, कुतः ?– एकरूपा हि प्रकृतिः सदैव महदादि जनयेत्, कदापि वा न जनयेत्। तत्तत्कालावच्छिन्नजनना-ऽजननोभयानिरूपितैकस्वभावत्वादयमदोष इति चेत्। जनना-ऽजननयोस्तत्कालावच्छिन्नत्वे तत्स्वभावत्वम्, तत्स्वभावत्वे च तयोस्तत्त्वमित्यन्योन्याश्रयः। स्वस्वभावादेव तयोस्तत्त्वे च विलीनं प्रकृत्यादिप्रक्रिययेति भावः ॥ २३ ॥

उपचयमाह—

**नानुपादानमन्यस्य भावेऽन्यज्जातुचिद्भवेत्। तदुपादानतायां च न तस्यैकान्तनित्यता॥२४॥**

अनुपादानं– तथाभाविकारणविकलम्, अन्यस्य– सर्वथा तथाभाविव्यतिरिक्तस्य प्रधानस्य, भावे– संनिधाने, अन्यत्– एकान्ताऽविद्यमानं महदादि, जातुचित्– कदाचित्, न भवेत्, सर्वथाऽसतः सत्ताऽयोगात्, तदुपादानतायां च महदादेरभ्युपगम्यमानायां, न तस्य– प्रधानस्य, एकान्तनित्यता, अनित्यमहदाद्यभिन्नत्वात्। महदाद्यपि सदासत्त्वाद् नित्यमेवेति चेत्। गता तर्हि प्रकृति-विकृत्यादिप्रक्रिया, मुक्तावपि तत्सत्त्वेऽपदर्शनं च। महादादेः प्रकृतिपरिणामित्वेन प्रकृत्यभिन्नत्वेऽप्यनित्यत्वादिना भेद एवेति चेत्। तर्हि भेदा-ऽभेदप्रसङ्ग इति दिग्॥ २४ ॥

स्थूलकार्यमधिकृत्याऽप्याह—

**घटाद्यपि कुलालादिसापेक्षं दृश्यते भवत्। अतो न तत्पृथिव्यादिपरिणामैकहेतुकम्॥२५॥**

घटाद्यपि– स्थूलकार्यजातम्, कुलालादिसापेक्षं भवद् दृश्यते, कुलालादीनां तत्राऽन्वय-व्यतिरेकानुविधानदर्शनात्।

अतस्तत् पृथिव्यादिपरिणामैकहेतुकं न भवति, नियतान्वय-व्यतिरेकौ विना तादृशपरिणामेऽपि हेतुताग्रहाभावात्, तयोश्च कुलालादावविशेषात्। कार्यगतयावद्धर्मानुविधायित्वाद् हेतोः कुलालादीनां न घटादिहेतुत्वमिति चेत्। तर्हि बुद्धिगता रागादयोऽपि प्रकृतौ स्वीकर्तव्याः, इति [1]सैव बुद्धिः, भावाष्टकसंपन्नत्वात्, न तु प्रकृतिः। स्थूलरूपतामपहाय सूक्ष्मरूपतया ते तत्र सन्तीति चेत्। लयाद्यवस्थायां सौक्ष्म्यं बुद्धावपि समानम्, सूक्ष्मतया घटादिगतधर्माणां कुलालादौ कल्पने बाधकाभावश्च ॥२५॥

चेतनेऽचेतनधर्मसंक्रमे परिणामित्वादिबाधकम्, कुलालादिदेहस्तु घटादिकर्तैष्यत एवेत्याशङ्क्याह—

**तत्रापि देहकर्ता चेन्नैवासावात्मनः पृथक्। पृथगेवेति चेद्भोग आत्मनो युज्यते कथम्? ॥२६॥**

तत्रापि- घटादावपि, देहः कर्ता, स्थूलरूपावच्छिन्नस्य तस्य कुलालादिचेष्टयैवोत्पादात्, इति चेत्। नैव, असौ- देहः, आत्मनः पृथग्- भिन्नः, सर्वगतत्वात् निष्क्रियत्वाच्च। आत्माऽसर्वगत-सक्रियदेहात् पृथगेवेति चेत्। तर्हि आत्मनो भोगः कथं युज्यते, सर्वथा देहाद् भेदे तस्य मुक्तकल्पत्वात्?, क्षीर-नीरन्यायेन देहाभिन्नस्यैवाऽऽत्मनो देहोपनीतभोगसंभवादिति भावः ॥ २६ ॥

नास्त्येव तत्त्वत आत्मनो भोग इतीष्टापत्त्या परः स्वाभिप्रायमाह—

**देहभोगेन नैवास्य भावतो भोग इष्यते। प्रतिबिम्बोदयात्किन्तु यथोक्तं पूर्वसूरिभिः ॥२७॥**

१ सैव- प्रकृतिः।

देहेन भोगो देहभोगस्तेन, 'धान्येन धनम्' इतिवदभेदे तृतीया, देहभोगेन देहद्वारेति वाऽर्थः; नैव, अस्य– आत्मनः, भावतः– तत्त्वतः, इष्यते भोगः; किन्तु प्रतिबिम्बोदयात्। यद्यप्येवमपि सुख-दुःखाद्यन्तःकरणधर्मानुविद्धस्य महत एव स्वतोऽचेतनस्य चेतनोपरागेण 'चेतनोऽहं सुखी' इत्याद्यभिमानरूपश्चैतन्यांशेऽतात्त्विको भोगः, न तु पुरुषस्य; तथापि भोक्तृबुद्धिसंनिधानात् तत्र भोक्तृत्वव्यवहारः; तदाह पतञ्जलिः– "शुद्धोऽपि पुरुषः प्रत्ययं बौद्धमनुपश्यति, तमनुपश्यन्नतदात्मापि तदात्मक इव प्रतिभासते" इति। केचित्तु बुद्धौ पुरुषोपरागवत् पुरुषेऽपि बुद्ध्युपरागं वर्णयन्ति। न चैवं विकृतत्वापत्तिः अतात्त्विकोपरागेण तदयोगात्। तथा चाह वादमहार्णवः– 'बुद्धिदर्पणसंक्रान्तमर्थप्रतिबिम्बकं द्वितीयदर्पणकल्पे पुंस्यध्यारोहति, तदेव भोक्तृत्वमस्य, न तु विकारोपपत्तिः' इति। 'बुद्धिगतप्रतिबिम्बात्मन्येव बुद्धिगतभोगोपसंक्रमः, बिम्बात्मनि तु न किञ्चित्' इत्यपरे। स्वोक्तेऽर्थेऽभियुक्तसंमतिमाह– यथोक्तं पूर्वसूरिभिः– विन्ध्यवास्यादिभिः॥ २७॥

किमुक्तम्?, इत्याह—

**पुरुषोऽविकृतात्मैव स्वनिर्भासमचेतनम्। मनः करोति सांनिध्यादुपाधिः स्फटिकं यथा॥२८॥**

पुरुषः– आत्मा, अविकृतमात्मैव– अप्रच्युतस्वभाव एव, अचेतनं मनः, सांनिध्यात्– सामीप्याद् हेतोः, स्वनिर्भासं– स्वोपरक्तम्, करोति। निदर्शनमाह– यथोपाधिः पद्मरागादिः स्फटिकं स्वधर्मसंक्रमेण स्वोपरक्तं करोति। न चैतावता स विकरोति, किन्तु स्फटिक एव विक्रीयते; तथाऽऽत्मापि बुद्ध्युपरागं जनयन् न विकरोति, किन्तु बुद्धिरेव विक्रीयत इति भावः॥२८॥

ततः किम्?, इत्याह—

**विभक्तेदृक्परिणतौ[1] बुद्धौ भोगोऽस्य कथ्यते। प्रतिबिम्बोदयः स्वच्छे यथा चन्द्रमसोऽम्भसि।२९।**

विभक्ता– आत्मभिन्ना, ईदृक्परिणतिः– अभिहितपुरुषोपरागपरिणामा च, इति कर्मधारयः, तस्यां; बुद्धौ– अन्तःकरणलक्षणायाम्, अस्य– आत्मनः, भोगः कथ्यते, आसुरिप्रभृतिभिः। किंवत्?, इत्याह– यथा चन्द्रमसः– वास्तवस्य चन्द्रस्य, प्रतिबिम्बोदयः– प्रतिबिम्बपरिणामः, स्वच्छे– निर्मले, अम्भसि– जले ॥ २९ ॥

तदिदमखिलमपाकुर्वन्नाह—

**प्रतिबिम्बोदयोऽप्यस्य नामूर्तत्वेन युज्यते। मुक्तेरतिप्रसङ्गाच्च न वै भोगः कदाचन ॥३०॥**

प्रतिबिम्बोदयोऽपि, अस्य– अमूर्तत्वेन न युज्यते, छायावन्मूर्तद्रव्येणैव हि प्रतिबिम्बाख्यं स्वाकारं भास्वरद्रव्योपादानं द्रव्यमारभ्यते; तथा चार्षम्—

"[2]सामा उदिया छाया अभासुरगया णिसिं तु कालाभा। स चेह भासुरगया सदेहवण्णा मुणेयव्वा ॥ १ ॥" इति।

युक्तं चैतत्, अन्यथेदंत्वावच्छेदेन मुखभेदग्रहाभावात्, 'इदं मुखम्' इति प्रतीतेः कथञ्चिदुपपादनेऽपि 'इदं मुख-



१ 'विविक्त' इत्यन्यत्र ग्रन्थे पाठः। २ श्यामोदिता छायाऽभास्वरगता निशि कालाभा। सा चेह भास्वरगता स्वदेहवर्णा ज्ञातव्या ॥ १ ॥

प्रतिबिम्बम्' इति प्रतीतेः कथमप्युपपादयितुमशक्यत्वात्; मुखभ्रमाधिष्ठानत्वरूपमुखप्रतिबिम्बत्वस्य प्रागेवाऽग्रहात्, 'आदर्शे मुखप्रतिबिम्बम्' इत्याधाराऽऽधेयभावाध्यवसायानुपपत्तेश्च । एतेन 'मुखे बिम्बत्वमिवाऽऽदर्श एव प्रतिबिम्बत्वं मुखसांनिध्यदोषाभावादिसामग्र्याऽभिव्यज्यते' इति निरस्तम्, बिम्बोत्कर्षेण प्रतिबिम्बोत्कर्षानुपपत्तेः, प्रतिबिम्बत्वाग्राहकसामग्र्या एवादर्शभेदभ्रमहेतुत्वेन 'अयं नाऽऽदर्शः, किन्तु मुखप्रतिबिम्बम्' इति सार्वजनीनानुभवानुपपत्तेश्च । न च प्रतिबिम्बस्य द्रव्यत्वे सावधिकत्वानुपपत्तिः, प्रतिबिम्बधर्मस्यैव महत्त्ववत् सावधिकत्वात् । न चाश्रयनाशे तन्नाशानुपपत्तिः, बिम्बसंनिधाननिमित्तजनितस्य तस्य तन्नाशेनैव नाशसंभवात् । न चैवमनन्तप्रतिबिम्बोत्पत्तिनाशादिकल्पने गौरवम्, सादृश्यातिरिक्तानन्तदोषादिकल्पने [1]तत्रैव गौरवात्, अनुभवापलापाच्चेति । अधिकमाकरे । स्फटिकादौ लौहित्यादिकमपि पद्मरागादिमूर्तसंनिधिजन्य एव परिणामविशेषः, साक्षात्संबन्धेन तत्प्रतीतौ परम्परासंबन्धस्याऽतिप्रसक्तत्वात् । स्फटिकादिनिष्ठतया लोहिताश्रयसंसर्गस्य साक्षात्संबन्धेन लौहित्यभ्रमजनकत्वे[2] तत्र विशेषदर्शनादेरुत्तेजकत्वे, परम्परासंबन्धेन लौहित्यप्रमानियामकत्वादिकल्पने चातिगौरवात्, लौहित्यमात्रजनकत्वकल्पनाया एव न्याय्यत्वात्; अभिभूता-ऽनभिभूतरूपयोः समावेशस्याऽनुभवसिद्धत्वेनाऽविरुत्वात्, नियतारम्भनिरासाच्चेति, अन्यत्र विस्तरः ।

तस्मादात्मनो बुद्धौ बिम्बतया, उपाधितया वाऽमूर्तत्वाद् न स्वोपरागजनकत्वम् । तत्त्वे वा कथमात्मनोऽकारणत्वम्? । कथं वा तदुपरागस्याऽनिर्वचनीयस्य, असतो वा स्वीकारे नौ[3]पनिषदबौद्धमतप्रवेशः? । एतेन 'नामूर्तस्य प्रतिबिम्बाभावः शक्यो

---

१ सांख्यस्य । २ क. 'त्वे त्वत्र' । ३ तत्त्वतो बौद्धपक्षकक्षीकार इत्यर्थः ।

वक्तुम्, अमूर्तानां रूप-परिमाणादीनां प्रतिबिम्बदर्शनात्, द्रव्यस्याऽप्यमूर्तस्य साभ्र-नक्षत्रस्याकाशादेर्जानुमात्रे जले दूर-विशालस्वरूपेण प्रतिबिम्बदर्शनाच्च' इत्युक्तावपि न निस्तारः ।

अथ न पुरुषजन्यः पुरुषोपरागः, किन्तु पुरुषभेदाग्रहादसत एव तस्योत्पत्तिः, सदुपरागेण भानाच्च नाऽसत्ख्यातिरिति चेत् । गतं तर्हि सत्कार्यवादेन । बुद्धौ सन्नेव पुरुषोपरागः कदाचिदाविर्भवतीति चेत् । तर्हि बुद्ध्युत्पत्तेः पूर्वं पुरुषस्यानुपरक्ततया मोक्षः स्यात्, प्रकृतेः साधारणत्वेनाऽनुपरञ्जकत्वात् । पूर्वबुद्धिवासनानुवृत्तेः साधारण्येऽप्यसाधारणी प्रकृतिरिति चेत् । न, 'बुद्धिनिवृत्तावपि तद्धर्मवासनानुवृत्तिः' इत्यपदर्शनम् । सौक्ष्म्याद् न दोष इति चेत् । मुक्तावपि तत्प्रसङ्गः । निरधिकारित्वाद् नैवमिति चेत् । तर्हि साधिकारा प्रसुप्तस्वभावा बुद्धिरेव प्रकृतिरस्तु, कृतमन्तरा प्रकृत्य-हङ्कार-मनः-शब्दानामर्थान्तरकल्पनया; [1]सैव हि तत्तद्व्यापारयोगात् तेन तेन शब्देन व्यपदिश्यते, शरीरवायुवत्, इत्यागमस्यापि न विरोध इति । स्वीक्रियतां वा यथा कथञ्चित् तस्याताात्त्विको भोगः, तथाप्यन्यदूषणमित्याह– मुक्तेरतिप्रसङ्गाच्च– तेषां प्रतिबिम्बाभावात् संसारिणामपि मुक्तैकस्वभावत्वात्, वै– निश्चितम्, कदाचन– कदाचिदपि, भोगो न स्यात् ॥ ३० ॥

अथ यदि संसारिणां प्रतिबिम्बोदयस्वभावः, तदाह—

**नच पूर्वस्वभावत्वात्स मुक्तानामसंगतः । स्वभावान्तरभावे च परिणामोऽनिवारितः॥३१॥**

---

१ सैव– बुद्धिरेव ।

नच– नवा, सः– प्रतिबिम्बोदयस्वभावः, पूर्वस्वभावत्वात्– संसार्यवस्थैकस्वभावत्वात्, मुक्तानामसंगतः, किन्तु संगत एव, अन्यथा नित्यत्वक्षतेः, एवमपि कदाचन न भोगः, किन्तु सर्वदैव स्यात्, इति योजना । स्वभावान्तरभावे च– अमुक्तस्वभावपरित्यागेन मुक्तस्वभावोत्पादे च मुक्तानामिष्यमाणे, अनिवारितः परिणामः, स्वभावान्यथात्वस्यैव त[1]ल्लक्षणत्वात् । घटनाशे घटावच्छिन्नस्याकाशस्य घटानवच्छिन्नत्वेऽपि स्वभावाऽपरित्यागवत् सवासनबुद्धिनाशे विषयावच्छिन्नस्य चैतन्यस्य विषयानवच्छिन्नत्वेऽपि स्वभावाऽपरित्याग एवेति चेत् । अहो! असिद्धमसिद्धेन साधयति भवान्, घटनाशेऽप्याकाशस्य घटावच्छिन्नत्वस्वभावापरित्यागे घटाकाशव्यवहारप्रसङ्गात् । किञ्च, सा बुद्धिस्तमेवात्मानं विषयेणावच्छिनत्ति, इत्यत्र न किमपि नियामकं पश्यामः । तस्माद् बुद्धिरेव रागादिपरिणताऽऽत्मस्थानेऽभिषिच्यताम् । तस्या लयश्च रागादिलय एव, इति तत्रैव मुक्तिरिति युक्तम् ॥ ३१ ॥

देहात् पृथक्त्व आत्मनो दोषान्तरमाह—

**देहात्पृथक्त्व एवास्य नच हिंसादयः क्वचित् । तदभावेऽनिमित्तत्वात्कथं बन्धः शुभाशुभः ?॥**

देहात् पृथक्त्व एव– एकान्ततो देहपृथक्त्वे, अस्य– आत्मनः, स्वीक्रियमाणे, न च हिंसादयः क्वचिद् भवेयुः । न हि ब्राह्मणशरीरहत्यैव ब्रह्महत्या, मृतब्राह्मणशरीरदाहेऽपि त[2]त्प्रसङ्गात् । न च मरणोद्देशाभावादयमदोषः, त[3]दुद्देशेनापि त[4]त्प्रसङ्गात्,

---

१ तच्छब्दः परिणामपरामर्शकः । २ ब्रह्महत्यायाः प्रसङ्गात्, ब्राह्मणशरीरनाशस्य तत्राप्यविशेषादित्यर्थः । ३ मरणोद्देशेनाऽपि । ४ अदोषप्रसङ्गात् ।

ब्राह्मणात्मनस्तु नाश एव न, इति ब्राह्मणं घ्नतोऽपि सा[1] न स्यात्। ब्राह्मणशरीरावच्छिन्नज्ञानजनकमनःसंयोगविशेषनाशानुकूलो व्यापार एव ब्रह्महत्येति चेत्। न, तादृशमनःसंयोगस्य स्वत एव नश्वरत्वात्, साक्षाद्घातानुपपत्तेश्च। ब्राह्मणशरीरावच्छिन्नदुःखविशेषानुकूलव्यापार एव ब्रह्महत्येति चेत्। शरीरा[2]च्छरीरिणः सर्वथा भेदे तच्छेदादिना तस्य दुःखमपि कथम्?। परम्परासंबन्धेन तदात्मसंबन्धादिति चेत्। साक्षादेव कथं न तत्संबन्धः?। शरीरावयवच्छेदादात्मावयवच्छेद एव हि शरीरात् पृथग्भूतावयवस्य कम्पोपलब्धिरुपपद्यते, नाऽन्यथा, प्राणक्रियाया अपि तन्मात्रोपग्रहं विनाऽभावात्।

नन्वेवं छिन्नावयवानुप्रविष्टस्य पृथगात्मत्वप्रसक्तिः स्यादिति चेत्। न, त[3]त्रैव पश्चादनुप्रवेशात्[4], छिन्ने हस्तादौ कम्पादितल्लिङ्गादर्शनादित्थं कल्पनात्। न चैकत्व आत्मनो विभागाभावाच्छेदाभाव इति वाच्यम्; शरीरद्वारेण त[5]स्यापि सविभागत्वात्, अन्यथा सावयवशरीरव्यापिता त[5]स्य न स्यात्, तथाच तच्छेदनान्तरीयकश्च्छेदो न स्यात्। छिन्ना-ऽच्छिन्नयोः कथं पश्चात् संघटनम्?, इति चेत्। न, एकान्तेनाऽच्छिन्नत्वात्, पद्मनालतन्तुवच्छेदेऽपि च्छेदाभ्युपगमात्?; संघटनमपि तथाभूतादृष्टवशादविरुद्धमेव। हन्त! एवं शरीरदाहेऽप्यात्मदाहः स्यादिति चेत्। न, क्षीर-नीरयोरिवाऽभिन्नत्वेऽपि भिन्नलक्षणत्वेन तद्दोषाभावादिति, अन्यत्र विस्तरः।

तस्माद् देहादात्मन एकान्तपृथक्त्वे हिंसाद्यभावः, तदभावे- हिंसाद्यभावे, अनिमित्तत्वात्- निमित्तसंनिधानाभावात्,

---

१ सा- ब्रह्महत्या। २ ग. घ. च. 'शरीरि'। ३ यस्माच्छरीरावयवः पृथग्भूतस्तस्मिन् शरीरे। ४ छिन्नात्मावयवानामिति गम्यते। ५ तस्य- आत्मनः।

कथं शुभाशुभो बन्धः। अत्र शुभश्चाशुभश्चेति विग्रहे द्विवचनापत्तिः, कर्मधारये च [1]बाध इति शुभेन सहितोऽशुभ[2] इति व्याख्येयम् ॥ ३२ ॥

ततः को दोषः ?, इत्याह—

**बधादृते न संसारो मुक्तिर्वास्योपपद्यते। यमादि तदभावे च सर्वमेव ह्यपार्थकम् ॥ ३३ ॥**

बन्धादृते– बन्धं विना, देव-नारकादिरूपः संसारो न। नवाऽस्य– आत्मनः, मुक्तिरुपपद्यते, बद्धानां कर्मणां क्षय एव हि मुक्तिरिति। तदभावे च– मुक्त्यभावे च; सर्वमेव, हि– निश्चितम्, यमा[3]दि– यम-नियमादिकं घोरानुष्ठानम् अपार्थकम्– विपरीतप्रयोजनम्; कः खलु फलमनभिलषन्नेव दुष्करक्लेशैरात्मानमवसादयेत् ? ॥ ३३ ॥

पराभिप्रायमाह—

**आत्मा न बध्यते नापि मुच्यतेऽसौ कदाचन। बध्यते मुच्यते [4]चापि प्रकृतिः स्वात्मनेति चेत् ३४**

असौ– प्रत्यक्षसिद्धः, आत्मा न बध्यते– न प्राकृतिकादिबन्धपरिणतो भवति, सवासनक्लेशकर्माशयानां बन्धत्वेन समाम्नातानां पुरुषेऽपरिणामिन्यसंभवात्। नापि कदाचन मुच्यते– मुचेर्बन्धनविश्लेषार्थत्वात्, [5]तस्य च सर्वदाऽबद्धत्वात्।

---

१ विरोधेन विशेषणविशेष्यभावाभावादित्यर्थः। २ मयूरव्यंसकादित्वाद् मध्यमपदलोपी समासः, शाजिनवत्। ३ ग. घ. च. 'दिकं'। ४ मुद्रितमूले 'वापि' इति पाठः। ५ तस्य– आत्मनः।

कुत्र तर्हि बन्ध-मोक्षौ ?, इत्यत आह– बध्यते प्रकृतिरेव, स्वात्मना– स्वपरिणामलक्षणेन बन्धेन, मुच्यते चापि [1]तेन प्रकृतिरेव, [2]तत्रैव बन्धविश्लेषात् । पुरुषे तु तावुपचर्येते, भृत्यगताविव जय-पराजयौ स्वामिनीति; तदुक्तम्—

"तस्माद् न बध्यते[3] नापि मुच्यते नापि संसरति कश्चित् । संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः[4] ॥१॥"

इति । समाधत्ते– इति चेत् ॥ ३४ ॥

अत्रोत्तरम्—

**एकान्तेनैकरूपाया नित्यायाश्च न सर्वथा । तस्याः क्रियान्तराभावाद्बन्धमोक्षौ सुयुक्तितः॥३५॥**

एकान्तेनैकरूपायाः– सर्वथैकस्वभावायाः, सर्वथा नित्यायाश्च– सर्वैः प्रकारैः प्रवृत्तिरूपैकक्रियायाश्च, तस्याः– प्रकृतेः, क्रियान्तराभावात्– निवृत्तिक्रियाया अभावात् , सुयुक्तितः– सन्न्यायात् , बन्ध-मोक्षौ न । प्रकृति-पुरुषान्यताख्यातिरूपो हि व्यापारः पुरुषस्यैव, इति तस्यैव मोक्ष उचितः, न तु प्रकृतेः, तस्याः प्रवृत्त्येकरूपत्वात् ; पुरुषार्थमचेतनत्वेन व्यापारायोगाच्च ।

किञ्च, प्रकृतेर्मुक्तौ पुरुषस्य स्वरूपावस्थाने तस्याः साधारणत्वादेकमुक्तौ संसारोच्छेदः, प्रकृतिवदात्मनोऽपि सर्वगतत्वेन 'एकावच्छेदेन मुक्तिः, नान्यावच्छेदेन' इत्यपि वक्तुमशक्यत्वात् । 'तद्बुद्ध्यवच्छेदेन मुक्तत्वम् , नान्यबुद्ध्यवच्छेदेन' इत्यपि क्षीणाया बुद्धेरनवच्छेदकत्वादनुद्घोष्यम् , बुद्धियोगेन पुरुषस्य संसारित्वे तस्यैव मोक्षप्रसङ्गाच्च ॥ ३५ ॥

१ स्वपरिणामलक्षणेन बन्धेन । २ तत्रैव–प्रकृतौ, बद्ध एव वा । ३ 'तेऽसौ न मु' इति सांख्यकारिकायां पाठः । ४ सांख्यकारिकायां कारिका ६२ ।

दोषान्तरमप्याह—

**मोक्षः प्रकृत्ययोगो यदतोऽस्याः स कथं भवेत्। स्वरूपविगमापत्तेस्तथा तन्त्रविरोधतः?॥३६॥**

मोक्षः [1]प्रकृत्ययोगः, यत्– यस्मात् कारणात् ; "प्रकृतिवियोगो मोक्षः" इति वचनात्, अतो हेतोः, अस्याः– प्रकृतेः, सः– मोक्षः, कथं भवेत् ? । कुतः ?, इत्याह– स्वरूपविगमापत्तेः– प्रकृतिस्वरूपनिवृत्तिप्रसङ्गात् ; पुरुषे तु [2]तद्व्यापारनिवृत्तिद्वारा तन्निवृत्तिर्युज्येतापि, न तु स्वस्मिन् स्वनिवृत्तिः संभवति, घटे घटनिवृत्त्यदर्शनात्, अप्रसक्तस्याऽप्रतिषेधात् । तथा, तन्त्रविरोधतोऽपि प्रकृतेर्मोक्षः कथम् ? ॥ ३६ ॥

[3]एतदेवोपदर्शयन्नाह—

**पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे रतः। जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः॥३७॥**

पञ्चविंशतितत्त्वज्ञः– प्रकृति-महदादिपञ्चविंशतितत्त्वरहस्यपरिज्ञाता, यत्र तत्र– गृहस्थादौ, आश्रमे, रतः– तत्त्वज्ञानाभ्यासवान्, जटी–जटावान्, मुण्डी– मुण्डितशिराः, शिखी वापि– शिखावानपि, मुच्यते– प्रकृति-विकारोपधानविलयेन स्वरूपावस्थितो भवति, बाह्यलिङ्गमत्राऽकारणम् । नात्र संशयः– इदमित्थमेव, वचनप्रामाण्यात् ॥ ३७ ॥

---

१ क. 'प्रवृत्त्य' । २ तच्छब्देन प्रकृतिः परामृश्यते । ३ एतत्– तन्त्रम्– प्रकृते साङ्ख्यसिद्धान्त इति यावत् ।

निगमयति–

**पुरुषस्योदिता मुक्तिरिति तन्त्रे चिरंतनैः। इत्थं न घटते चेयमिति सर्वमयुक्तिमत्॥३८॥**

इति– एतत्प्रकारे, तन्त्रे– शास्त्रे, चिरंतनैः– पूर्वाचार्यैः, पुरुषस्य मुक्तिरुक्ता। न चेयं– पुरुषस्य मुक्तिः, इत्थम्– उक्तप्रकारेण विचार्यमाणा, घटते; इति हेतोः, सर्वं– सांख्योक्तम्, अयुक्तिमत्– युक्तिरहितम्॥ ३८ ॥

अत्रापि यावद् यथोपपन्नं, तावतस्तथावार्तामाह–

**अत्रापि पुरुषस्यान्ये मुक्तिमिच्छन्ति वादिनः। प्रकृतिं चापि सन्न्यायात्कर्मप्रकृतिमेव हि।३९।**

अत्रापि– सांख्यवादे, अन्ये वादिनः– जैनाः, पुरुषस्य मुक्तिमिच्छन्ति प्रकृतिवियोगलक्षणाम्। प्रकृतिं चापि, सन्न्यायात्– सत्तर्कात्, हि– निश्चितम्, कर्मप्रकृतिमेवेच्छन्ति, बुद्ध्यादीनां निमित्तत्वात्; तत्समन्वयश्च कथञ्चिदात्मादावेवोपपद्यते। सर्वथा सत्कार्यवादे तु सतः सिद्धत्वेनाऽकरणात्, साध्यार्थितयैवोपादानग्रहणात्, नियतादेव क्षीरादेः सामग्र्या दध्यादिदर्शनात्, सिद्धे शक्त्यव्यापारात्, तादात्म्ये स्वस्मिन्निव कार्य-कारणभावाद् विपरीतं [1]हेतुपञ्चकम्।

यदि कारणव्यापारात् प्रागपि पटस्तन्तुषु सन्नेव, तदा किमित्युपलब्धिकारणेषु सत्सु, सत्यामपि जिज्ञासायां नोप-

---

१ "असदक०" इति सांख्यकारिकाया नवम्यां कारिकायां निर्दिष्टम्,–'असदकरणम्, उपादानग्रहणम्, सर्वसंभवाभावः, शक्तस्य शक्यकरणम्, कारणतादात्म्यम्' इत्येवंरूपमित्यर्थः; क्रमेण चैतेषां पञ्चानामपि 'सतः सिद्धत्वेनाकरणात्' इत्यादिनैकैकशो हेतुनाऽत्र वैपरीत्यं द्रष्टव्यम्।

लभ्यते ?। अनाविर्भावादिति चेत्। कोऽयमनाविर्भावः ?। उपलब्धेरभावश्चेत्। सैवं कथम् ?, इत्याक्षेपे तदेवोत्तरम्, इति घट्टकुट्यां प्रभातम्। अथोपलब्धियोग्यस्यार्थक्रियाकारिरूपस्य विरहोऽनाविर्भाव इति चेत्। असत्कार्यवादः, तादृशरूपस्य प्रागसतः पश्चाद्भावात्। विजातीयसंयोगस्य तदवच्छेदेन सन्निकर्षस्य वा व्यञ्जकस्याऽभावाद् न प्रागुपलब्धिरिति चेत्। तर्हि तस्यैव प्रागसत्त्वेऽसत्कार्यापातः। प्राक् सन्नेवाऽऽविर्भूतो व्यञ्जक इति चेत्। न, आविर्भावस्यापि सदसद्विकल्पग्रासात्। स्थूलरूपावच्छिन्नस्य प्रागसत्त्वाद् नोपलब्धिः, धर्म-धर्मिणोः सौक्ष्म्य-स्थौल्ययोश्चैकत्वाद् नानवस्थेति चेत्। तर्हि सूक्ष्मरूपावच्छिन्नस्याऽहेतुकत्वेऽतिप्रसङ्गः। प्रकृतिमात्रहेतुकत्वे च स्थूलतादशायामपि तदापत्तिः, अनिर्मोक्षश्च, इति न किञ्चिदेतत्। तस्माच्छबलस्यैव वस्तुनः कथञ्चित् सत्त्वम्, असत्त्वं चोपपत्तिमत्। तथा च बुद्ध्यादीनामहंत्वसामानाधिकरण्येनाऽध्यवसीयमानत्वात् तद्धर्मतया तत्रैव समन्वयः, कर्मप्रकृतिस्तु तत्र निमित्तमात्रमिति प्रतिपत्तव्यम् ॥ ३९ ॥

एवं च न पूर्वोक्तदोष इत्याह—

**तस्याश्चानेकरूपत्वात्परिणामित्वयोगतः। आत्मनो बन्धनत्वाच्च नोक्तदोषसमुद्भवः ॥४०॥**

तस्याश्च– कर्मप्रकृतेः, अनेकरूपत्वात्– एकानेकशबलस्वभावत्वात्, परिणामित्वयोगतः– ज्ञानावरणादिविपाकपरिणामोपपत्तेः, एकरूपत्व एवाऽनेककार्यजनकत्वासंभवात्। आत्मनोऽन्योन्यानुप्रवेशेन बन्धनत्वात्– स्वरूपतिरोधायकत्वात्,

१ उपलब्धिः। २ व्यञ्जकत्वेनाऽऽज्ञातस्य विजातीयसंयोगस्य तदवच्छेदेन संनिकर्षस्य वेत्यर्थः।

कर्मा-ऽऽत्मनोर्द्वयोरपि बन्धन-बध्यस्वभावपरिणामात् तथोपपत्तेः, नोक्तदोषस्याऽनिर्मोक्षादेः समुद्भवोऽवकाशः ॥ ४० ॥

परः शङ्कते—

**नामूर्तं मूर्ततां याति मूर्तं नायात्यमूर्तताम्। यतो बन्धाद्यतो न्यायादात्मनोऽसंगतं तया॥४१॥**

न अमूर्तं– रूपादिसंनिवेशरहितम्, मूर्ततां– रूपादिमत्परिणतिम्, याति– आश्रयति, आकाशादौ तथादर्शनात्। तथा, मूर्तं– रूपादिमत्, अमूर्ततां– अमूर्तपरिणतिम्, न, आयाति– परमाण्वादिषु तत्सद्भावासिद्धेः, यतः– यस्मादेवं न स्वरूपविपर्ययो भवति, अतः– अस्मात्, न्यायात्– नियमात्, तया— कर्मप्रकृत्या, आत्मनो बन्धाद्यसंगतम् ॥ ४१ ॥

अत्रोत्तरम्—

**देहस्पर्शादिसंवित्त्या न यात्येवेत्ययुक्तिमत्। अन्योन्यव्याप्तिजा चेयमिति बन्धादि संगतम्॥४२॥**

देहे स्पर्शः कण्टकादिस्पर्शः, उपघातहेतूपनिपातोपलक्षणमेतत्, आदिनाऽनुग्रह-हेतूपनिपातसंग्रहः, तत्संवित्त्या– तज्जनितसुख-दुःखानुभूत्या, यात्येव 'अमूर्तं मूर्तताम्' इति प्राक्तनानुषङ्गः; इति– एतत्, अयुक्तिमत्– अनुभवबाधितम्। घटादिसंवित्तिवद् देहस्पर्शादिसंवित्तिरात्मनोऽतन्मयत्वेऽप्युपपत्स्यत इत्यत आह– इयं च– देहस्पर्शादिसंवित्तिश्च, अन्योन्यव्याप्तिजा– गुड-शुण्ठीद्रव्ययोरिव शरीरा-ऽऽत्मनोर्जात्यन्तरतापत्तिप्रभवा, प्रतिप्रतीकं तदनुभवात्, एकाभावेऽप्यभावाच्च। युक्तं चैतत्, अ- ॥ ११४ ॥

विभागदर्शनात्, नरत्वादेरेकनिष्ठत्वेऽतिप्रसङ्गात्; व्यासज्यवृत्तित्वे च [1]परस्यापसिद्धान्तः, व्यासज्यवृत्तिजात्यनभ्युपगमात्, एकाश्रयत्वानुभवविरोधात्, शरीराप्रत्यक्षेऽप्यन्धकारे नरत्वप्रतीत्यनुपपत्तेश्च । तदिदमाह भगवान् सम्मतिकारः—

" [2,3]अण्णोण्णाणुगयाणं इमं व तं व त्ति विभयणमजुत्तं । जह दुद्ध-पाणि[4]याणं जावंता विसेसपज्जाया[5] ॥ १ ॥"

अन्योन्यानुगतयोरात्म-कर्मणोर्दुग्ध-पानीययोरिव यावन्तो विशेषपर्यायास्तावत्सु 'इदं वा, तद् वा' इति विभजनमयुक्तम्, प्रमाणाभावात् । एवं तर्हि ज्ञानादयोऽपि देहे स्युः, देहरूपादयोऽप्यात्मनीति चेत् । इष्टापत्तिः । तदाह—

" [6]रूवाइपज्जवा जे देहे जीवदवियम्मि सुद्धम्मि । ते [3]अण्णोण्णाणुगया [7]पण्णवणिज्जा भवत्थम्मि[8] ॥ १ ॥ " इति ।

'गौरोऽहं जानामि' इत्यादिधियस्तथैवोपपत्तेः, रूपादि-ज्ञानादीनामन्योन्यानुप्रवेशेन कथञ्चिदेकत्वा-ऽनेकत्व-मूर्तत्वा-ऽमूर्तत्वादिसमावेशात् । अत एव दण्डात्मादीनामेकत्वम्, अनेकत्वं च स्थानाङ्गे व्यवस्थितम् । तदाह—

---

१ सांख्यस्य । २ अन्योन्यानुगतयोरिदं वा तद्वेति विभजनमयुक्तम् । यथा दुग्ध-पानीययोर्यावन्तो विशेषपर्यायाः ॥ १ ॥

३ मुद्रितमूलादर्शे सम्मतिसूत्रे 'अन्नोन्नाणु' इति पाठः । ४ 'णिआणं' इत्यपि तत्र । ५ सम्मतिसूत्रे गाथा ४७ ।

६ रूपादिपर्यवा ये देहे जीवद्रव्ये शुद्धे । तेऽन्योन्यानुगताः प्रज्ञापनीया भवस्थे ॥ १ ॥

७ मुद्रितसम्मतिपुस्तके 'पन्नव' इति पाठः । ८ सम्मतिसूत्रे गाथा ४८ ।

"एवं[1] एगे आया एगे दंडे अ होइ, किरिया[2]ए। करणविसेसेण य तिविहजोगसिद्धी[3] वि अविरुद्धा[4]" ॥ १ ॥

नन्वेवमन्तर्हर्ष-विषादाद्यनेकविवर्तात्मकमेकं चैतन्यम्, बहिर्बाल-कुमार-यौवनाद्यनेकावस्थात्मकमेकं शरीरमध्यक्षतः संवेद्यत इत्यस्य विरोधः, बाह्या-ऽभ्यन्तरविभागाभावादिति चेत्। सत्यम्, आत्मभिन्नत्वा-ऽभिन्नत्वाभ्यां तदभावेऽपि मानसत्वा-ऽमानसत्वाभ्यां तद्व्यपदेशात्। तदाह—

"ण[5][6] य बाहिरओ भावो अब्भंतरओ अ अत्थि समयम्मि। णोइंदियं पुण पडुच्च होइ अब्भंतर[7]विसेसो[8] ॥ १ ॥"

सर्वस्यैव मूर्ता-ऽमूर्तादिरूपतयाऽनेकान्तात्मकत्वात्। 'अयं बाह्यः, अयं चाभ्यन्तरः' इति समये न वास्तवो विभागः, अभ्यन्तर इति व्यपदेशस्तु नोइन्द्रियं मनः प्रतीत्य, तस्याऽऽत्मपरिणतिरूपस्य पराप्रत्यक्षत्वात्, शरीर-वाचोरिव। न च तद्वदेव तस्य परप्रत्यक्षत्वापत्तिः, इन्द्रियज्ञानस्याशेषपदार्थस्वरूपग्राहकत्वायोगात्। एवं च स्याद्वादोक्तिरेव युक्ता, न तु परस्परनिरपेक्षनयोक्तिर्विना श्रोतृधीपरिकर्मणानिमित्तम्, वस्तुनोऽनेकान्तात्मकत्वात्, तदाह—

---

१ एवमेक आत्मैको दण्डश्च भवति, क्रियया। करणविशेषेण च त्रिविधयोगसिद्धिरप्यविरुद्धा ॥ १ ॥
२ ग. घ. च. 'या य'। ३ मुद्रितसम्मतिसूत्रे 'द्धी उ अ'। ४ सम्मतिसूत्रे गाथा ४९।
५ नँ च बाह्यको भावोऽभ्यन्तरकश्चास्ति समये। नोइन्द्रियं पुनः प्रतीत्य भवत्यभ्यन्तरविशेषः ॥ १ ॥
६ मुद्रितपुस्तके 'न य' इति पाठः। ७ मुद्रिते 'तरो भावो' इति पाठः। ८ सम्मतिसूत्रे गाथा ५०।

"[1]दव्वट्ठियस्स आया बंधइ कम्मं फलं च वेएइ । बिइयस्स भावमेत्तं णे कुणइ णे[2] य कोइ[3] वेएइ ॥ १ ॥
दव्वट्ठियस्स जो चेव कुणइ सो चेव [4]वेयए नियमा । [5]अण्णो करेइ [5]अण्णो परिभुंजइ पज्जव[6]णयस्स ॥ २ ॥
[7]जे वयणिज्जविअप्पा संजुज्जंतेसु होंति एएसु । सा[8] ससमय[9]पण्णवणा तित्थयरासायणा अण्णा[10] ॥ ३ ॥
पुरिसज्जायं तु पडुच्च जाणओ पण्णविज्ज अण्णयरं । परिकम्मणानिमित्तं दाएहा सो विसेसं पि"[11] ॥ ४ ॥ "

तस्माद् देहात्मनोऽन्योन्यव्याप्तिजैव देहस्पर्शादिसंवित्तिरिति सिद्धम् । इति हेतोः, बन्धादि, संगतं- युक्तम्, कार्यान्यथानुपपत्तेः ॥ ४२ ॥

न च सहचारमात्रदर्शनादुक्तनियमोऽपीत्याह—

**मूर्तयाऽप्यात्मनो योगो घटेन नभसो यथा । उपघातादिभावश्च ज्ञानस्येव सुरादिना ॥४३॥**

---

१ द्रव्यास्तिकस्याऽऽत्मा बध्नाति कर्म फलं च वेदयति । द्वितीयस्य भावमात्रं न करोति न च कोऽपि वेदयति ॥ १ ॥
द्रव्यास्तिकस्य य एव करोति स एव वेदयति नियमात् । अन्यः करोत्यन्यः परिभुङ्क्ते पर्यवनयस्य ॥ २ ॥
ये वचनीयविकल्पाः संयुज्यमानयोर्भवन्त्येतयोः । सा स्वसमयप्रज्ञापना तीर्थकराशातनाऽन्या ॥ ३ ॥
पुरुषजातं तु प्रतीत्य ज्ञायकः प्रज्ञापयेदन्यतरत् । परिकर्मणानिमित्तं दर्शयेत् स विशेषमपि ॥ ४ ॥

२ मुद्रिते 'न' इति पाठः । ३ 'को वि वे' इत्यपि तत्र । ४ मुद्रिते 'वेअई निअमा' इति पाठः । ५ 'अन्नो' इत्यपि तत्र । ६ 'वनय' इति मुद्रितसम्मतौ । ७ 'जं' इति मुद्रिते । ८ 'सा सम' इति मुद्रिते पाठः । ९ 'पन्नव' इत्यपि तत्र । १० 'अन्ना' इति मुद्रिते । ११ सम्मतिसूत्रे गाथा ५१, ५२, ५३, ५४ ।

मूर्तयापि– प्रकृत्या, आत्मनो योगः 'संभवति' इति शेषः। दृष्टान्तमाह– यथा घटेन नभसः । घटेन संयुक्तमपि नभो न घटस्वभावतां यातीति न दोष इति चेत्। स संयोगः किं घटस्वभावः, नभःस्वभावः, उभयस्वभावः, अनुभयस्वभावो वा ? । आद्ययोरुभयनिरूप्यत्वानुपपत्तिः। तृतीये च वदतो व्याघातः, घटस्वभावसंयोगवत्तया नभसो घटस्वभावत्वात्। चतुर्थे त्वनुपाख्यत्वापत्तिः। इति न किञ्चिदेतत्।

अस्तु तर्हि नभसो घटादिनेव कर्मणा जीवस्य संबन्धः, ततोऽनुग्रहो-पघातौ तु तस्य नभस्वदेव नः इत्यत आह– उपघातादिभावश्च– उपघाता-ऽनुग्रहभावश्च मूर्ताया अपि कर्मप्रकृतेः सकाशात्, सुरादिना– सुरा-ब्राह्मी-घृतादिना, ज्ञानस्येव युक्तः[1], अङ्गा-ऽङ्गिभावलक्षणसंबन्धप्रयोज्यत्वात् तस्येति[2] भावः।

ननु सर्वमिदमात्मनोऽविभुत्वे संभवति, तदेव चाद्यापि न सिद्धमिति चेत्। न, शरीरानियतपरिमाणवत्त्वेनैवाऽऽत्मनोऽनुभवात् मूर्तत्वसंशयस्य ज्ञानप्रामाण्यसंशयादिनोपपत्तेः । न च द्रव्यप्रत्यक्षत्वावच्छिन्नहेतोर्महत्त्वस्याऽऽत्मनि सिद्धौ तस्यावयवमहत्त्वाद्यजन्यत्वेन नित्यतया 'आत्मा विभुः, नित्यमहत्त्वात्, आकाशवत्' इत्यनुमानात् तस्य विभुत्वमेव युक्तमिति वाच्यम्; नित्यमहत्त्वेऽप्यपकृष्टपरिमाणवत्त्वे बाधकाभावेनाप्रयोजकत्वात्। अपकृष्टत्वे तस्य जन्यत्वापत्तिर्बाधिका, गगनमहत्त्वावधिकापकर्षस्य बहुत्वजन्यतावच्छेदकत्वादिति चेत्। न, परमाणुपरिमाणसाधारणतयाऽस्य[3] कार्यतानवच्छेदकत्वात्, त्रुटिम-

१ उपघातानुग्रहभावस्य। २ तस्य– आत्मनः। ३ गगनमहत्त्वावधिकापकर्षस्य।

हस्त्वावधिकोत्कर्षेण समं सांकर्यात् तादृशजात्यसिद्धेश्च; वस्तुतः प्रदीपप्रभाया इवात्मनः संकोच-विकाशाभ्यां परिमाणभेदस्याऽभ्युपगमेन सर्वथा नित्यमहत्त्वासिद्धेश्च ।

कथं चात्मनो विभुत्वे स्वस्मिन् क्रियादिप्रतीतिः, तीर्थगमनादेरदृष्टहेतुत्वश्रवणादिकं चोपपादनीयम् ? । कथं वात्मनः सर्वगतत्वात् स्वशरीरादन्यत्रापि न ज्ञानाद्युत्पादः ? । शरीराभावादिति चेत् । न, अन्यशरीरस्य सत्त्वात् । स्वशरीराभावादिति चेत् । न, स्वसंयुक्तत्वेन तस्याऽपि स्वीयत्वात् । स्वादृष्टोपगृहीतशरीराभावादिति चेत् । तर्हि उपजीव्यत्वात् तददृष्टस्यैव तदज्ञानादिहेतुत्वात् तस्य शरीरव्यापितयाऽऽत्मनस्तथात्वसिद्धिः; तदुक्तम्– "यत्रैव यो दृष्टगुणः स तत्र०"[1] इत्यादि । अपिच, आत्मविभुत्ववादे ज्ञानादीनामव्याप्यवृत्तित्वादिकल्पने गौरवमिति न किञ्चिदेतत् । अधिकं न्यायालोकादौ ॥ ४३ ॥

उपसंहरन्नाह—

**एवं प्रकृतिवादोऽपि विज्ञेयः सत्य एव हि । कपिलोक्तत्वतश्चैव दिव्यो हि स महामुनिः ॥४४॥**

एवम्– उक्तप्रकारेण, हि– निश्चितम्, प्रकृतिवादोऽपि सत्य एव विज्ञेयः, नानृतः । उपपत्त्यन्तरमाह– कपिलोक्तत्वतश्चैव– द्रव्यार्थिकनयावलम्बिकपिलप्रणीतत्वाच्चैव । तेनाऽनृत एवायं वाद उक्तो भविष्यतीत्यत आह– हि– यतः, स महामुनिः, दिव्यः– अद्भुतशीलाचरणशाली, अतो नानृतं ब्रूयात्, इति तस्याऽप्ययमेवाऽभिप्राय इति भावः ॥ ४४ ॥

१ हेमचन्द्राचार्यविरचितायामन्ययोगव्यवच्छेदद्वात्रिंशिकायां श्लो० ९ ।

सांख्य ! सख्यमिदमेव केवलं मन्यसे प्रकृतिजन्म यज्जगत् ।
आत्मनस्तु भणितौ विधर्मणः संख्यमेव भजदेवमावयोः ॥ १ ॥
आत्मानं भवभोगयोगसुभगं विस्पष्टमाचष्ट यो यः कर्मप्रकृतिं जगाद जगतां बीजं जगच्छर्मणे ।
नद्योऽब्धाविव दर्शनानि निखिलान्यायान्ति यद्दर्शने तं देवं शरणं भजन्तु भविनः स्याद्वादविद्यानिधिम् ॥ २ ॥

इति पण्डितश्रीपद्मविजयसोदरन्यायविशारदपण्डितयशोविजयविरचितायां स्याद्वादकल्पलताभिधानायां शास्त्रवार्तासमुच्चयटीकायां तृतीयः स्तबकः संपूर्णः ॥ ३ ॥

अभिप्रायः सूरेरिह हि गहनो दर्शनततिर्निरस्या दुर्धर्षा निजमतसमाधानविधिना ।
तथाप्यन्तः श्रीमन्नयविजयविज्ञांह्रिभजने न भग्ना चेद्भक्तिर्न नियतमसाध्यं किमपि मे ॥ १ ॥
यस्यासन् गुरवोऽत्र जीतविजयप्राज्ञाः प्रकृष्टाशया भ्राजन्ते सनया नयादिविजयप्राज्ञाश्च विद्याप्रदाः ।
प्रेम्णां यस्य च सद्म पद्मविजयो जातः सुधीः सोदरस्तेन न्यायविशारदेन रचिते ग्रन्थे मतिर्दीयताम् ॥ २ ॥

॥ अर्हम् ॥

# अथ चतुर्थः स्तबकः ।

यस्याभिधानाज्जगदीश्वरस्य समीहितं सिध्यति कार्यजातम् ।
सुरा-ऽसुराधीशकृतांह्रिसेवः पुष्णातु पुण्यानि स पार्श्वदेवः ॥ १ ॥

अङ्कारूढमृगो हरिर्न भुजगाऽऽतङ्काय सर्पाऽसुहृद् निःशङ्काश्च सुरा-ऽसुरा न च मिथोऽहङ्कारभाजो नृपाः ।
यद्व्याख्याभुवि वैर-मत्सरलवाशङ्कापि पङ्कावहा श्रीमद्वीरमुपास्महे त्रिभुवनालङ्कारमेनं जिनम् ॥ २ ॥

वार्तान्तरमाह—

**मन्यन्तेऽन्ये जगत्सर्वं क्लेशकर्मनिबन्धनम्। क्षणक्षयि महाप्राज्ञा ज्ञानमात्रं तथा परे ॥ १ ॥**

अन्ये– सौत्रान्तिकाः सौगताः, सर्वं– चराचरम्, जगत्, क्लेशकर्मनिबन्धनं– रागादिनिमित्तम्, तथा, क्षणक्षयि- प्रतिक्षणनश्वरम्, मन्यन्ते । तथा, महाप्राज्ञाः– तेभ्योऽपि सूक्ष्मबुद्धयः, परे– योगाचाराः, ज्ञानमात्रं– क्षणिकविज्ञानमात्रं जगद् मन्यन्ते ॥ १ ॥

तथाहि—

**तयाहुः क्षणिकं सर्वं नाशहेतोरयोगतः। अर्थक्रियासमर्थत्वात् परिणामात्क्षयेक्षणात् ॥२॥**

ते– सौगताः, आहुः– प्रतिजानते । किम् ?, इत्याह– सर्वं क्षणिकमिति । अत्र हेतुचतुष्टयम्– नाशहेतोरयोगत इत्याद्यो हेतुः, अर्थक्रियासमर्थत्वादिति द्वितीयः, परिणामादिति तृतीयः, अतादवस्थ्यादित्यर्थः; क्षयेक्षणादिति तुर्यः, अन्ते क्षयदर्शनादित्यर्थः ।

अत्राद्यहेतुना स्थायित्वासिद्धौ साध्यसिद्धिः, तथाहि– नाशहेतुभिर्नश्वरस्वभावो भावो नाश्येत, अतादृशो वा ? । आद्ये, प्रयासवैफल्यम् । द्वितीये तु स्वभावपराकरणस्य कर्तुमशक्यत्वादनाशप्रसङ्गः । कियत्कालस्थायित्वस्वभावस्यैव कार्यस्य हेतुभिर्जनने च तादृशस्वभावस्योदयकाल इवान्तकालेऽपि सत्त्वात् पुनस्तावन्तं कालमवस्थानापत्तिरिति ।

द्वितीयेऽप्यर्थक्रियासमर्थत्वं स्थायिनो निवर्तमानं क्षणिक एव भावे विश्राम्यति; तथाहि– स्थायी भावः क्रमेण वा कार्यं कुर्यात्, अक्रमेण वा ? । द्वितीये, एकदैव सर्वकार्योत्पत्तिः । आद्ये चार्थक्रियाजननस्वभावत्वे प्रागेव कुतो न कुर्यात् ? । सहकार्यभावादिति चेत् । किं सहकारित्वम् ?– अतिशयाऽऽधायकत्वम्, एककार्यप्रतिनियतत्वं वा ?। आद्ये, अतिशयाधानेनैव कारकोपक्षयः, अतिशयस्य भेदे च सहकार्यनुपकारः, अभेदे च बलाद् भिन्नस्वभावत्वम् । द्वितीये साहित्येऽपि पररूपेणाऽहे- ॥११८॥

तुत्वादकारकावस्थात्यागात् कार्यानुत्पत्तिरेव । इतरहेतुसंनिधान एव कार्यं जनयतीति हेतोः स्वभाव इति चेत् । तर्ह्युत्पत्त्यनन्तरमेव स्वभावानुप्रविष्टत्वादितरहेतून् मेलयेदिति ।

तृतीये परिणामस्याऽन्यथाभावरूपस्य पूर्वरूपपरित्यागं विनाऽभावात्, तस्य चानुभवसिद्धत्वात् क्षणिकत्वसिद्धिः ।

चतुर्थेऽप्यन्ते[1] क्षयदर्शनात् तदन्यथानुपपत्त्या प्रागपि तत्सिद्धिः । इह प्रत्यक्षानुपपत्तिर्मूलम्, आद्ये[2] तु स्वभावानुपपत्तिरिति विशेषः ॥ २ ॥

योगाचारमतप्रयोगमाह—

**ज्ञानमात्रं च यल्लोके ज्ञानमेवानुभूयते । नार्थस्तद्व्यतिरेकेण ततोऽसौ नैव विद्यते ॥ ३ ॥**

ज्ञानमात्रं च 'जगत्' इति शेषः । चकारेण क्षणिकत्वसमुच्चयः । हेतुमाह- यद्- यस्मात्, लोके ज्ञानमेवाऽनुभूयते, अर्थस्तद्व्यतिरेकेण नानुभूयते, तस्य जडत्वाभ्युपगमात्, ज्ञानविषयताया ज्ञानाभेदनियतत्वात् । ततः, असौ- संवृतिसिद्धोऽर्थः[3], नैव विद्यते- पारमार्थिको नेत्यर्थः ॥ ३ ॥

अत्र समाधानवार्तामाह—

**अत्राप्यभिदधत्यन्ये स्मरणादेरसंभवात् । बाह्यार्थवेदनाच्चैव सर्वमेतदपार्थकम् ॥ ४ ॥**

---

१ क्षयेक्षणरूपे चतुर्थे हेतौ । २ नाशहेत्वयोगरूपे प्रथमे हेतौ । ३ संवृतिः- कल्पना ।

अत्रापि– बौद्धवादेऽपि, अन्ये– जैनाः, अभिदधति– उत्तरयन्ति । किम्?, इत्याह– क्षणिकत्वे स्मरणादेरसंभवात्, बाह्यार्थवेदनाच्चैव– बाह्यार्थप्रमान्यथानुपपत्त्या ज्ञानमात्रासिद्धेश्चैवेत्यर्थः, सर्वमेतत्– दिङ्मात्रेण निर्दिष्टं सौगतमतद्वयम्, अपार्थकं– निष्प्रयोजनम् ॥ ४ ॥

स्मरणासंभवमुपपादयति—

**अनुभूतार्थविषयं स्मरणं लौकिकं यतः । कालान्तरे तथाऽनित्ये मुख्यमेतन्न युज्यते ॥५॥**

अनुभूतार्थविषयं– ज्ञातार्थगोचरम्, लौकिकम्– आगोपादिसिद्धम्, यतः– यस्मात्, कालान्तरे– अनुभवव्यवहितोत्तरकाले, तथा– प्रतिनियतरूपेण, अनित्ये– निरन्वयनश्वरेऽनुभवितरि, मुख्यम्– अभ्रान्तमेव, एतत्– स्वसंवेदनसिद्धं स्मरणम्, नोपपद्यते– अन्येनाऽनुभवेऽन्यस्य स्मरणायोगात्, ' योऽहमन्वभवं सोऽहं स्मरामि ' इत्युल्लेखानुपपत्तेश्च ॥ ५ ॥

प्रत्यभिज्ञापि न युज्यते, इत्याह—

**सोऽन्तेवासी गुरुः सोऽयं प्रत्यभिज्ञाप्यसंगता । दृष्टकौतुकंयुद्वेगः प्रवृत्तिः प्राप्तिरेव वा ॥६॥**

'सोऽयमन्तेवासी' 'सोऽयं गुरुः' इति प्रत्यभिज्ञापि क्षणिकत्वपक्षेऽसंगता, तत्ताविशिष्टाभेदस्येदंताविशिष्टेऽनुपपत्तेः । न च प्रत्यभिज्ञा न प्रमाणम्, 'सैवेयं गूर्जरी' इत्यादौ विषयबाधदर्शनादिति वाच्यम्; एवं सति हेत्वाभासादिदर्शनात् सद-



१ सर्वत्र मूले स्वोपज्ञटीकायां च 'कमुद्वे' इति प्रथमान्त एव पाठ आदृतः ।

नुमानादीनामप्यप्रामाण्यप्रसङ्गात् । न चाध्यक्षे पूर्वकालसंबन्धिताया असंनिहितत्वात् परामर्शानुपपत्तिः, अन्त्यसंख्येयग्रहणकाले 'शतम्' इति प्रतीतेः क्रमगृहीतसंख्येयाध्यवसायतत्संस्कारवशादुपपत्तेः । न च नील-पीतयोरिव वर्तमाना-ऽवर्तमानत्वयोर्विरुद्धत्वादेकत्र तत्परिच्छेदरूपत्वादयं भ्रमः, अत एव तस्य तादृशापरापरविषयसंनिधानदोषजन्यत्वमिति वाच्यम्; एकत्र नानाकालसंबन्धस्याऽविरुद्धत्वात्; अन्यथा नीलसंवेदनस्यापि स्थूराकारावभासिनो विरुद्धदिक्संबन्धात् प्रतिपरमाणु भेदप्रसक्तेस्तदवयवानामपि षट्कयोगाद् भेदापत्तितोऽनवस्थाप्रसक्तेः ।

न च क्षणिकत्वानुमानेनाऽस्या[1] बाध इति शङ्कनीयम्, निश्चितप्रामाण्यकत्वेनाऽनयैव[2] तद्बाधात्[3]; कुर्वद्रूपत्वसिद्धावुपस्थितवह्नित्वादिकं विहाय वह्न्यादेर्विजातीयवह्नित्वादिना हेतुत्ववद् विजातीयधूमत्वादिना धूमादेः कार्यत्वसंभावनयोपस्थितधूमत्वावच्छेदेन कार्यत्वाग्रहात्, तदनुकूलतर्काभावेन व्याप्तेरग्रहात्, प्रसिद्धानुमानस्याप्युच्छेदेन क्षणिकत्वानुमानस्यैवाऽनवताराच्च । घटे रूपादेरिवोक्तप्रत्यभिज्ञायां पूर्वताया वर्तमानत्वेनैव भानाद् भ्रमत्वमित्यपि न वाच्यम्, संनिहित एव विशेषणे विद्यमानतायाः संसर्गादिना भानादिति दिक् ।

तथा, दृष्टकौतुकेऽर्थे, उद्वेगः- सिद्धत्वज्ञानकृतेच्छाविच्छेदरूपः, असंगतः स्यात्, क्षणिकतद्व्यक्त्यन्तरदर्शनस्यासिद्धत्वात् । तथा, प्रवृत्तिरपि- तद्व्यक्तिविषयिणी, असंगता स्यात्, ज्ञाताया व्यक्तेर्नष्टत्वात्, अज्ञातायां चाप्रवृत्तेः । तथा, प्राप्तिरेव च इच्छाविषयव्यक्तेः, असंगता, अस्याः प्रागेव नाशात् ॥ ६ ॥

---

१ अस्याः- प्रत्यभिज्ञायाः । २ अनयैव- प्रत्यभिज्ञया । ३ क्षणिकत्वानुमानबाधात् ।

तथा—

**स्वकृतस्योपभोगस्तु दूरोत्सारित एव हि । शीलानुष्ठानहेतुर्यः स नश्यति तदैव यत् ॥७॥**

स्वकृतस्य– शुभादेः, उपभोगः– विपाकानुभवः, दूरोत्सारित एव, हि– निश्चितम्; प्रवृत्तेर्भ्रमादिना कथञ्चिदुपपत्तावपि स्वकृतोपभोगोपपादने न कोऽप्युपाय इति भावः । कुतः ?, इत्याह– यत्– यस्मात् कारणात्, यः शीलानुष्ठानहेतुः क्षणः, स तदैव, नश्यति– निरन्वयनाशभाग् भवति ॥ ७ ॥

पर आह—

**संतानापेक्षयास्माकं व्यवहारोऽखिलो मतः । स चैक एव तस्मिंश्च सति कस्मान्न युज्यते ? ॥८॥**

संतानापेक्षया– भूत-वर्तमान-भविष्यत्क्षणप्रवाहापेक्षया, अस्माकम्[1], अखिलः– ऐहिक आमुष्मिकश्च, व्यवहारः, मतः– इष्टः । स च– संतानः, एक एव । तस्मिंश्च सति कस्माद् न युज्यते स्मृत्यादिः, ऐहिकतयोपपत्तेः ? ॥ ८ ॥

आमुष्मिकमधिकृत्याह—

**यस्मिन्नेव तु संताने आहिता कर्मवासना । फलं तत्रैव संधत्ते कर्पासे रक्तता यथा ॥९॥**

यस्मिन्नेव संताने– क्षणप्रवाहे, तुराधानयोग्यतां विशेषयति, कर्मवासना, आहिता– कर्मणा जनिता, फलं– शुभा-

१ अस्माकं– बौद्धानामित्यर्थः ।

ऽशुभादिकम्, तत्रैव, संधत्ते- जनयति । किंवत् ?, इत्याह- यथा कर्पासे लाक्षारसाद्याहिता रक्तता कर्पास एव स्वफलं स्वोपरक्तबुद्ध्यादिकं जनयति ॥ ९ ॥

अत्रोत्तरम्—

**एतदप्युक्तिमात्रं यन्न हेतु-फलभावतः । संतानोऽन्यः स चायुक्त एवासत्कार्यवादिनः ॥ १० ॥**

एतदपि- संतानैक्यमादाय समाधानमपि, उक्तिमात्रं- युक्तिशून्यं वचनम्, यद्- यस्मात् कारणात्, हेतु-फलभावतः- पूर्वा-ऽपरक्षणहेतु-हेतुमद्भावात्, अन्यः संतानो नास्ति । एवमपि नानुपपत्तिः, स्वजन्यतासंबन्धेनानुभवादेः स्मृत्यादिनियामकत्वात्, प्रत्यभिज्ञाया अपि 'स एवायं गकारः' इत्यादाविव तज्जातीयाभेदविषयकतयोपपत्तेः, इच्छादेरपि समानप्रकारकतयैव प्रवृत्त्यादिहेतुतयोपपत्तेश्च; इत्यत आह- स च- क्षणिकहेतु-हेतुमद्भावश्च, असत्कार्यवादिनो मते, अयुक्त एव ॥ १० ॥

तथाहि—

**नाभावो भावतां याति शशशृङ्गे तथाऽगतेः । भावो नाभावमेतीह तदुत्पत्त्यादिदोषतः ॥ ११ ॥**

न अभावः- तुच्छः; भावतां याति- अतुच्छतां प्रतिपद्यते । कुतः ?, इत्याह- शशशृङ्गे, तथा- भावत्वेन, अगतेः- अपरिच्छेदात् । तथा, भावः- अतुच्छः, नाऽभावमेति- न तुच्छतां याति, इह- जगति । कुतः ? इत्याह- तदुत्पत्त्यादिदोषतः- अभावोत्पत्त्यादिदोषप्रसङ्गात् ॥ ११ ॥

तथाहि—

**सतोऽसत्त्वे तदुत्पादस्ततो नाशोऽपि तस्य यत् । तन्नष्टस्य पुनर्भावः सदानाशे न तत्स्थितिः १२**

सतः– क्षणिकभावस्य, असत्त्वे– द्वितीयादिक्षणेऽसत्त्वे सति, तदुत्पादः– असत्त्वोत्पादः, कादाचित्कत्वात् । ततः– उत्पादात्, नाशोऽपि, तस्य–असत्त्वस्य; कृतकत्वात्; यद्– यस्मात् कारणात् । तत्– तस्मात्, नष्टस्य सतः, पुनर्भावः, [1]तदसत्त्वनाशाधिकरणक्षणत्वस्य तदधिकरणत्वव्याप्यत्वादिति भावः । नाशस्य नित्यत्वाद् न दोष इति चेत् । तर्हि सदानाशे, न तत्स्थितिः– प्रथमक्षणेऽपि भावस्य स्थितिर्न स्यात् ॥ १२ ॥

पराभिप्रायमाह—

**स क्षणस्थितिधर्मा चेद् द्वितीयादिक्षणास्थितौ । युज्यते ह्येतदप्यस्य तथा चोक्तानतिक्रमः १३**

सः– भावनाशः, क्षणस्थितिधर्मा– भाव एव । अयं भावः– द्विविधो ह्यस्माकं[2] विनाशः, सांव्यवहार्यः, तात्त्विकश्च । आद्यो भावनिवृत्तिरूपः । द्वितीयश्च भावरूपः । तत्र कार्यकाले कारणनिवृत्तिकल्प आद्यमेव नाशमवलम्बते । वस्तुव्यवस्थापकस्त्वाद्य एव । एतेन 'कार्योत्पत्तिकाल एव कारणविनाशाभ्युपगमे कारणोत्पादरूपत्वात् तस्य सहभावेन कार्य-कारणभावव्यवस्थोत्सीदेत्, कारणोत्पादात् कारणविनाशस्य भिन्नत्वाभ्युपगमे च कृतकत्वस्वभावत्वमनित्यत्वस्य न भवेत्; व्यतिरिक्ते

१ अभावाभावस्य भावात्मकत्वादिति पर्यवसितोऽर्थः । २ अस्माकम्– बौद्धानां मते ।

च नाशे समुत्पन्ने न भावस्य निवृत्तिः, इति कथं क्षणिकत्वम् ?' इत्यध्ययनाविद्धकर्णोद्द्योतकरादीनामपि मतं परास्तम्। अत्राह- इति चेत्। एतदपि- क्षणस्थितिधर्मकत्वम्, हि- निश्चितम्, अस्य द्वितीयादिक्षणास्थितौ सत्यां ,युज्यते, तथा चोक्तानतिक्रमः- उक्तदोषापरिहारः॥ १३॥

इदमेव भावयति—

**क्षणस्थितौ तदैवास्य नास्थितिर्युक्त्यसंगतेः। न पश्चादपि सा नेति सतोऽसत्त्वं व्यवस्थितम्[1]॥**

क्षणस्थितौ- क्षणस्थितिरूपस्यैव क्षणस्थितिधर्मकत्वस्याभ्युपगमे, तदैव- द्वितीयादौ क्षण एव, अस्य- भावस्य, अस्थितिर्न भवति, युक्त्यसंगतेः- क्षणस्थिति-क्षणास्थित्योर्युक्त्या विरोधात्। न चेष्टापत्तिरित्याह- न पश्चादपि- द्वितीयादिक्षणेऽपि, सा- अस्थितिः, न, तदस्थितेरेवानुभवात्, क्षणिकत्वभङ्गप्रसङ्गाच्च। न च द्वितीयादिक्षणस्थितिरपि निवृत्तिरूपा संव्यवहार्यैव, तात्त्विकी त्वाद्यक्षणस्थितिरूपेति न दोष इति वाच्यम्, अभावस्याऽधिकरणानतिरेकेण द्वितीयादिक्षणरूपत्वात्, द्वितीयादिक्षणास्थितेः। अतो द्वितीयादिक्षणेषु सतः- घटादेः, असत्त्वं व्यवस्थितम्- सिद्धम्। तथाच 'सतोऽसत्त्वे' इत्याद्युक्तदोषानतिक्रम एव॥ १४॥

अत्रैवाक्षेप-परिहारावाह—

---

१ कारिका द्वादशी।

न तद्भवति चेत् किं न सदा सत्त्वं तदेव यत् । न भवत्येतदेवास्य भवनं सूरयो विदुः ॥१५॥



न तत्– असत्त्वं, भवति, तुच्छत्वादित्यभिप्राय इति चेत् । किं न सदा सत्त्वं भावस्य, तदसत्त्वाभावात् । पर आह– तदेव– सत्त्वमेव, यद्– यस्मात्, न भवति द्वितीयादिक्षणेषु, अतो न सदा सत्त्वं भावस्य । अत्रोत्तरम्, एतदेव– भावस्याऽभवनं, तदात्वेनासत्त्वस्य भवनं, सूरयः– पण्डिताः, विदुः– जानन्ति । तथाहि– नेदं भावाभवनं काल्पनिकम्, तथात्वे भावस्यापि काल्पनिकत्वापत्तेः, यतो लाक्षणिको विरोधो नील-पीतादेः परैरभ्युपगम्यते, वस्तुस्वरूपव्यवस्थापकं च लक्षणम्, तन्निमित्तो विरोधो लाक्षणिक उच्यते, भावप्रच्युतिश्च लक्षणम्, यतो नीलस्य विरोधो नीलप्रच्युत्या, तद्विरोधे च पीतादीनामपि तत्प्रच्युतिव्याप्तानां तेन विरोधः; तथाच 'प्रमाणं नीलपरिच्छेदकत्वेन प्रवृत्तं नीलप्रच्युतिं, तद्व्याप्तांश्च पीतादीन् व्यवच्छिन्ददेव स्वपरिच्छेद्यं नीलं परिच्छिनत्ति' इत्यभ्युपगमः । स च भावाभवनस्य शशविषाणप्रख्यत्वे भावविरुद्धत्वस्य पीतादिव्यापकत्वस्य भावाद् नोपपद्यत इति । न च तदभवने तदग्रहणमात्रमेव, न तु तदतिरिक्तग्रहणम्, इति न तदभवनमेव तदसत्त्वभवनमिति वाच्यम्, सद्व्यवहारनिषेधा-ऽसद्व्यवहारप्रवृत्त्योस्तदग्रहण-तदभावग्रहणनिमित्तत्वादिति दिक् ॥ १५ ॥

एतदेव स्पष्टयन्नाह—

कादाचित्कमदो यस्मादुत्पादाद्यस्य तद् ध्रुवम् ।
तुच्छत्वान्नेत्यतुच्छस्याप्यतुच्छत्वात्कथं नु यत् ? ॥ १६ ॥

अदः– एतदसत्त्वम्, यस्मात् कादाचित्कम्, भावकालेऽसत्त्वात्। तदस्योत्पादादि– उत्पाद-विनाशादि, ध्रुवं– नियतम्, यद्यत् कादाचित्कं तत्तदुत्पादादिमदिति व्याप्तेः। पर आह– तुच्छत्वादसत्त्वस्योत्पादादि नेति। परिहरति– अतुच्छस्यापि भावस्य, अतुच्छत्वात् कारणात्, कथं नु तदुत्पादादि ?। यद्- यस्मादेवम्, अतो न प्रागुक्तम्, अप्रयोजक-हेतुमात्रेण साध्यासिद्धेरिति भावः ॥ १६ ॥

पर आह—

तदाभूतेरियं तुल्या तन्निवृत्तेर्न तस्य किम्।
तुच्छताप्तेर्न भावोऽस्तु नासत्सत्सदसत्कथम् ? ॥ १७ ॥

तदाभूतेः– तदोत्पत्तिदर्शनेन, अतुच्छस्योत्पादादि न्याय्यमित्यर्थः। अत्रोत्तरम्– इयम्– अनुभवसिद्धा तदाभूतिः, तुल्या, तुच्छस्यापि सत्त्वानन्तरमसत्त्वस्यानुभूयमानत्वात्। पर आह– तन्निवृत्तेः– अतुच्छनिवृत्तेः, न तुल्या तुच्छस्य तदाभूतिः, अतुच्छस्योत्पादानुभवः प्रमाणम्, तुच्छस्य तु निवृत्त्यनुपपत्तेरुत्पादानुभवो न प्रमाणमिति भावः। अत्रोत्तरम्– न तस्य किं– नन्व उभयत्र संबन्धात् तस्य तुच्छस्य किं न निवृत्तिः ? इत्यर्थः। पर आह– तुच्छताप्तेरिति, तुच्छेन हि तुच्छताप्तैव, तदात्मकत्वात्। न तन्निवृत्तावपि तत्रान्यत् किञ्चिदाप्यमस्ति, तन्निवृत्तेरपि तुच्छत्वात्, अतो न तुच्छस्य निवृत्तिरिति। अत्रोत्तरम्– न, भावो-

 

ऽस्त्विति- नैतदेवं यदुच्यते भवता- 'तुच्छेन तुच्छतापैव, इति न तन्निवृत्तिः' इति, यतो भावोऽस्तु तुच्छता, एवमेवैतन्निवृत्त्युपपत्तेरिति। पर आह- नासत् सदिति- कथं चासत् सद् भवति, येनोच्यते- 'तुच्छतानिवृत्तौ भावोऽस्तु ?' इत्यभिप्रायः। अत्रोत्तरम्- सदसत् कथमिति- एतदुक्तं भवति- यद्यसत् सद् न भवति प्रकृत्यन्यथायोगेन, ततः सदसत् कथं भवति ? इति ॥ १७ ॥

पर आह—

**स्वहेतोरेव तज्जातं तत्स्वभावं यतो ननु। तदनन्तरभावित्वादितरत्राप्यदः समम् ॥१८॥**

स्वहेतोरेव- स्वकारणादेव, तत्- सत्त्वम्, जातम्- उत्पन्नम्, तत्स्वभावम्- असद्भवनस्वभावम्, यतः- यस्मात्, तस्मात् सत् असद् भवतीति न दोषः। अत्रोत्तरम्- ननु यद्येवम्, तदा तदनन्तरभावित्वात्- सत्त्वानन्तरभावित्वात्, इतरत्रापि- असत्त्वे, अदः- एतत् 'स्वहेतोरेवासत् सद्भवनस्वभावं जातम्' इति कल्पनं, समं- तुल्ययोग-क्षेमम् ॥ १८ ॥

पर आह—

**नाहेतोरस्य भवनं न तुच्छे तत्स्वभावता। ततः कथं नु तद्भाव इति युक्त्या कथं समम्? ॥१९॥**

नाहेतोः- नाकारणस्य, अस्य- असत्त्वस्य, भवनम्। तथा, तुच्छे- असत्त्वे, न तत्स्वभावता- सद्भावस्वभावता, निःस्वभावत्वेन तुच्छत्वव्यवस्थानात्। यत एवम्, अतः कथं नु तद्भावः- असतः सद्भावः? नैवेत्यर्थः। इति- एवम्, ॥१२३॥

युक्त्या– न्यायेन, कथं समं स्वहेतोरेव जातत्वादिकल्पनम् ? इति ॥ १९ ॥

अत्रोत्तरम्—

**स एव भावस्तद्धेतुस्तस्यैव हि तदाऽस्थितेः। स्वनिवृत्तिस्वभावोऽस्य भावस्येव ततो न किम् ?॥**

स एव भावो यस्याग्रिमक्षणेऽसत्त्वम् , तद्धेतुः– असत्त्वहेतुः, तस्यैव हि– भावस्य, तदा– द्वितीयसमये, अस्थितेः– अभवनात् । एतेन नियतानन्तरभावित्वं हेतु-फलभावाङ्गमुक्तं कार्यदर्शनेन तत्कुर्वद्रूपानुमानमपि निराबाधमेव, तथाविधक्षण-कुर्वद्रूपक्षणानुमानेऽप्यस्यैव बीजत्वात्, कार्यसामान्ये सत्कुर्वद्रूपत्वेन तु न हेतुता, मानाभावात् , गौरवाच्च । यदि चाभावस्य भावीकरणमेव तद्व्यापारः, अन्यथानुपयोगादिति संप्रदायः, तदा कार्यदर्शनबलाद् भावस्याभावीकरणमपि हेतुव्यापार-तयाऽवश्यं स्वीकर्तव्यमिति । अधिकमग्रे । तथा, स्वनिवृत्तिः स्वात्मनिवृत्तिः स्वभावो धर्मः, अस्य– असत्त्वस्य, भावस्येव, हेतुसामर्थ्यात् । यत एवम् , ततो न किं युक्त्या समं स्वहेतोरेव जातत्वादिकल्पनम् ? ॥ २० ॥

उपचयमाह—

**ज्ञेयत्ववत्स्वभावोऽपि न चायुक्तोऽस्य तद्विधः। तदभावे न तज्ज्ञानं तन्निवृत्तेर्गतिः कथम् ?॥**

न चास्य– असत्त्वस्य, तद्विधः– सद्भवनलक्षणः, स्वभावोऽपि, ज्ञेयत्वस्वभाववदयुक्तः, भावस्वभावत्वाभाव एव हि तुच्छत्वम्, न तु सर्वथा निःस्वभावत्वम् । अत एव शशविषाणादावखण्डेऽप्यनादिवासनाप्रभवविकल्पगोचरतया ज्ञेयत्वं

परैरङ्गीकृतम्। ज्ञेयत्वमपि नास्त्येव तत्र, इत्यत्राह– तदभावे– ज्ञेयत्वाभावे, न तज्ज्ञानं– नासत्त्वज्ञानम्। तथा च, तन्निवृत्तेः– सत्त्वनिवृत्तेः, गतिः– परिच्छेदः, कथम्? ॥ २१ ॥

परामिप्रायमाह—

**तत्तद्विधस्वभावं यत्प्रत्यक्षेण तथैव हि। गृह्यते तद्गतिस्तेन नैतत्क्वचिदनिश्चयात्॥२२॥**

तत्– सत्त्वानुविद्धं वस्तु, तद्विधस्वभावं– निवृत्तिरूपधर्मकम्, यद्– यस्मात्, तस्मात् प्रत्यक्षेण– तथाभूतवस्तुग्राहिणा निर्विकल्पेन, तथैव हि– स्वधर्मवदेव, गृह्यते परिच्छिद्यते। यत एवं, तेन कारणेन, तद्गतिः– सत्त्वनिवृत्तिगतिः। यद्यप्येवमपि तदधर्मभूतनिवृत्तेर्भ्रमविषयतयापि ज्ञेयत्वस्वभाववत् कार्यत्वस्वभावोऽविरुद्ध एव, तथापि वस्तुस्थित्या समाधानमाह– नैतद् यदुक्तं परेण– 'प्रत्यक्षेणैव सत्त्वनिवृत्तिर्गृह्यते' इति। कुतः?, इत्याह– क्वचिदनिश्चयात्– प्रतीत्यभावेन काप्यनिश्चयात्। यद्वा, क्वचित् सभागसंततावनिश्चयात्; निश्चय एव ह्यध्यक्षकल्पकः, यथा नीलादिनिश्चयात् तदध्यक्षकल्पनम्, अन्यथा दान-हिंसाविरतिचेतसा स्वर्गप्रापणशक्तेरप्यध्यक्षत एवावसितेर्न तत्र विप्रतिपत्तिः, इति तद्व्युदासार्थमनुमानप्रवर्तनं, शास्त्रविरचनं वा वैयर्थ्यमनुभवेत् ॥ २२ ॥

पराभिप्रायमाशङ्क्याह—

**समारोपादसौ नेति गृहीतं तत्त्वतस्तु तत्। यथाभावग्रहात्तस्यातिप्रसङ्गाददोऽप्यसत्॥२३॥**

समारोपात्– तुल्यसत्त्वाध्यारोपात्, असौ– सत्त्वनिवृत्तिनिश्चयः, नः यथा रजतसमारोपाद् न शुक्तिनिश्चयः; तत्त्वतस्तु तत्– असत्त्वं, गृहीतम्– अध्यक्षेण परिच्छिन्नम्, तस्य– अध्यक्षस्य, यथाभावग्रहात्– प्रतिनियतधर्मकस्वलक्षणग्राहित्वात्, तद्बलेनैव तदुत्पत्तेः, अन्यधर्मानुकरणे भ्रान्तत्वप्रसङ्गात्, तद्धर्माननुकरणे चानुत्पत्तेरेवेति । अत्र यद्यपि वस्तुनो निवृत्तिधर्मकत्वसिद्धावध्यक्षस्य तद्ग्राहित्वसिद्धिः, तस्य तद्ग्राहित्वसिद्धौ च वस्तुनस्तथात्वसिद्धिः, अनुमानेऽपि प्रत्यक्षस्य मूलत्वात्, इति स्फुट एवान्योन्याश्रयः, तथाऽप्युत्कटदोषान्तरमाह– अदोऽप्यतिप्रसङ्गादसत्– अकिञ्चित्करम् ॥ २३ ॥

तथाहि—

**गृहीतं सर्वमेतेन तत्त्वतो-निश्चयः पुनः । मितग्रहसमारोपादिति तत्त्वव्यवस्थितेः॥२४॥**

गृहीतं सर्वं– त्रैलोक्यम्, एतेन– अध्यक्षेण, तत्त्वतः– परमार्थतः, अनिश्चयः पुनः सर्वविषयः, मितग्रहसमारोपात्– यावद् यत्र निश्चीयते तावत एव तत्रारोपात्, इति– एवम्, तत्त्वव्यवस्थितेः स्वलक्षणाध्यक्षस्वरूपोपपत्तेः संभवात् । त्रैलोक्यासंनिकर्षात् कथं तद्ग्रहणापादनम् ? इति चेत् । अभिप्रायानभिज्ञोऽसि, स्वलक्षणस्यैव त्रैलोक्यात्मकत्वापादनात् । इतरग्रहप्रतिबन्धककल्पनापेक्षयेतराग्रहस्यैव कल्पने लाघवमिति चेत् । तदाऽसत्त्वस्याप्यग्रह एव कल्प्यताम्, किं समारोपेण तन्निश्चयप्रतिबन्धकल्पनया ? । यद्वा, परमार्थतोऽसदृशानामपि भावानां समारोपबलेन तादृशविकल्पोत्पादकदर्शनहेतुत्वे स्वयमनीला-

१ निवृत्तिधर्मकत्वसिद्धिः ।

दिस्वभावानामपि भावानां नीलादिविकल्पोत्पादकदर्शनहेतुत्वसंभवाद् निर्धर्मकमेवास्तु स्वलक्षणम् । तथाच, सर्वं धर्माभावाद् निरवशेषमित्यर्थः, नञोऽप्रश्लेषाद् निश्चयः- मितनिश्चयः पुनर्मितग्रहसमारोपाद् नियतवासनाप्रबोधात्, इति व्याख्येयम् । वासनाप्रबोधनियमेऽप्यनुभवस्यैव नियामकत्वाद् नायं दोष इति चेत् । तर्ह्यत्यन्तासति विषये कथं वासनास्वीकारः ? । समनन्तरा-ऽसमनन्तरविकल्पविभागार्थं वासनाभेदस्वीकाराद् न दोष इति चेत् । सोऽपि किमर्थम् ? । परम्परया संवादा-ऽसंवादनियमार्थमिति चेत् । तर्हि साक्षादेव तदभ्युपगमोऽस्तु, किमीदृशकुसृष्ट्या ? इति दिक् ॥ २४ ॥

अत्रैवोपचयमाह—

**एकत्र निश्चयोऽन्यत्र निरंशानुभवादपि । न तथा पाटवाभावादित्यपूर्वमिदं तमः ॥२५॥**

एकत्र सत्त्वे, निश्चयः, अनुभवपाटवात्; अन्यत्र च- असत्त्वे, निरंशानुभवादपि पाटवाभावात्, न तथा- न निश्चयः, इतीदमपूर्वं तमः- महत्तममज्ञानम्, निरंशे एकत्र पाटवम्, अन्यत्र न, इति विभागाभावात् । सत्त्वनिश्चयजननी शक्तिरेव पाटवम्, असत्त्वनिश्चयहेतुशक्त्यभावश्चापाटवम्, न तु तत्र विषयावच्छेदोऽपि निविशते, येन निरंशत्वविरोधः स्यादिति चेत् । न, तद्विषयत्वेनैव तच्छक्तिनियमात्; अन्यथा नीलादिस्वभावेऽप्यनाश्वासप्रसङ्गात् । विभागसंततात्रसत्त्वनिश्चयदर्शनेनानुभवे तच्छक्तिकल्पनावश्यकत्वाच्च; अन्यथाऽतिप्रसङ्गात् सर्वानुभवेऽपि मितनिश्चयशक्तिसंभवादिति दिक् ॥ २५ ॥

प्रस्तुतमेव समर्थयति—

स्वभावक्षणतो ह्यूर्ध्वं तुच्छता तन्निवृत्तितः। नासावेकक्षणग्राहिज्ञानात्सम्यग्विभाव्यते॥२६॥

स्वभावक्षणतः– स्वसत्ताक्षणात्, ऊर्ध्वम्– अग्रिमक्षणेषु, हि– निश्चितम्, तुच्छता– तदसत्त्वरूपा। कुतः इत्याह– तन्निवृत्तितः– भावनिवृत्त्यभ्युपगमात्। यत एवम्, अतो नासौ– तुच्छता, एकक्षणग्राहिज्ञानात् सम्यग् विभाव्यते– न्यायतो निश्चीयते, तदा तुच्छताया असत्त्वेन तदननुभवादिति भावः॥ २६॥

ततः किम्? इत्याह—

तस्यां च नागृहीतायां तत्तथेति विनिश्चयः। न हीन्द्रियमतीतादिग्राहकं सद्भिरिष्यते॥

तस्यां च द्वितीयादिक्षणास्थितिरूपायां तुच्छतायाम्, अगृहीतायां सत्याम्, तद्– वस्तु, तथा– क्षणास्थितिधर्मकम्, इति न विनिश्चयः, तत्त्वेन विनिश्चयस्य द्वितीयादिक्षणास्थितिग्रहसापेक्षत्वात्। न च तद्ग्रहोऽपीन्द्रियेणैव भविष्यति, इत्याह– न हीन्द्रियं– चक्षुरादि, अतीतादिग्राहकम्– अतीतैष्यत्परिच्छेदकम्, सद्भिः– पण्डितैः, इष्यते। न च वर्तमानक्षणग्रहे पूर्वाऽपरयोरदर्शनादेवाभावग्रह इति शङ्कनीयम्, दृश्यादर्शनस्यैवाभावग्राहकत्वात्॥ २७॥

प्रस्तुतोपचयमाह—

अन्तेऽपि दर्शनं नास्य कपालादिगतेः क्वचित्। न तदेव घटाभावो भावत्वेन प्रतीतितः॥२८॥

अन्तेऽपि- विभागसन्तत्युत्पत्तावपि, अस्य- घटासत्त्वस्य, क्वचिद् दर्शनं न। कुतः? इत्याह- कपालादिगतेः- कपालादेरेव परिच्छेदात्। कपालाद्येव घटाभावः स्यात्, इत्यत्राह- न तदेव- कपालाद्येव, घटाभावः- घटासत्त्वम्। कुतः? इत्याह- भावत्वेन प्रतीतितः- सत्त्वेनानुभवात्; न चासत् सत्त्वेनानुभूयते ॥ २८ ॥

मा भूत् कपालादिकमेव घटासत्त्वम्, तथापि कपालादिदर्शनेन घटासत्त्वमनुमास्यत इत्यत्राह—

**न तद्गतेर्गतिस्तस्य प्रतिबन्धविवेकतः। तस्यैवाभवनत्वे तु भावाविच्छेदतोऽन्वयः ॥२९॥**

न तद्गतेः- कपालादिदर्शनात्, तस्य- घटासत्त्वस्य, गतिः- ज्ञानम्। कुतः? इत्याह- प्रतिबन्धविवेकतः- कपालादि-घटाभावयोर्व्याप्त्यभावात्। 'तादात्म्य-तदुत्पत्तिभ्यामेव हि व्याप्तिः' इति सुगतसुतस्य संप्रदायः। न च कपाले घटाभावतादात्म्यम्, तदुत्पत्तिर्वा, इति न व्याप्तिरिति निगर्वः। अस्तु तर्हि अनायत्या घटाभावतादात्म्यमेव कपालादौ, अधिकरणानतिरिक्ताभावस्य शशविषाणाप्ररूप्यत्वात्, एकस्यैवाखण्डतया प्रतीयमानस्य नाशस्य सांवृतिकत्वात्, इति पक्षाङ्गीकारे परस्याह- तस्यैव- कपालादेरेव, अभवनत्वे तु- घटाभवनत्वे तु, तुनाऽभ्युपगमः सूच्यते, भावाविच्छेदतोऽन्योत्पादनस्य नाशाव्यवहारेण कपालरूपघटनाशे घटस्य तादात्म्यसंबन्धस्वीकारे कपालतया घटस्य परिणामेऽपि घट एव कपालीभूत इत्यर्थप्रतीयमानया भावतोऽविच्छिन्नया, अन्वयः सिद्धः। घटासत्त्वस्याखण्डस्य स्वीकारे तु 'शशविषाणम्' इत्यादाविव षष्ठ्यर्थापर्यालोचनात् स्यादप्यनन्वय इति भावः ॥ २९ ॥

उपसंहरन्नाह—

**तस्मादवश्यमेष्टव्यं तदूर्ध्वं तुच्छमेव तत्। ज्ञेयं सज्ज्ञायते ह्येतदपरेणापि युक्तिमत् ॥ ३० ॥**

तस्मात्– उक्तयुक्तेः, तदूर्ध्वं– क्षणस्थितिधर्मणः सत्त्वादूर्ध्वम्, तद्– घटासत्त्वम्, तुच्छमेव– भावविलक्षणमेव, अवश्यमेष्टव्यम्– अङ्गीकर्तव्यम्। हि– निश्चितम्, एतत्– असत्त्वम्, ज्ञेयं सत्– ज्ञेयस्वभावं सत्, अपरेणापि– अग्रिमज्ञानेनापि, ज्ञायते– परिच्छिद्यते, युक्तिमत्– न्याय्यमेतत्, विषयसत्त्वे तज्ज्ञानसंभवात्; तत्तुच्छत्वा-ऽतुच्छत्वयोः प्रामाण्या-ऽप्रामाण्ययोरेव प्रयोजकत्वात्, सन्मात्रविषयत्वरूपप्रामाण्याभावेऽपि भ्रमभिन्नत्वरूपस्य तस्याक्षयत्वाच्चेति निगर्वः। तदेवमसत्त्वस्योत्पादादि व्यवस्थापितम् ॥ ३० ॥

अत्रानिष्टापत्तिपरिजिहीर्षयाह—

**नोत्पत्त्यादेस्तयोरैक्यं तुच्छे-तरविशेषतः। निवृत्तिभेदतश्चैव बुद्धिभेदाच्च भाव्यताम्॥३१॥**

नोत्पत्त्यादेः कारणात्, तयोः– सत्त्वा-ऽसत्त्वयोः, ऐक्यम्। कुतः? इत्याह– तुच्छे-तरत्वभेदात्; असत्त्वं हि तुच्छस्वभावम्, सत्त्वं चातुच्छस्वभावमिति। तथा, निवृत्तिभेदतश्चैव– सत्त्वस्य निवृत्तिस्तुच्छा, असत्त्वस्य त्वतुच्छेति। तथा, बुद्धिभेदाच्च– सत्त्वे 'अस्ति' इत्येव बुद्धिः, असत्त्वे च 'नास्ति' इति, विभाव्यताम्– विमृश्यताम्, विरुद्धधर्माध्या-

सत्त्वस्यैव भेदकत्वात्, अन्यथा नील-पीतादीनामपि भावत्वेन भेदो न स्यादिति । एवं तावदभिहितः परपक्षेऽनिष्टप्रसङ्गः ॥ ३१ ॥

अथैतेन यदपाकृतं तदुपन्यस्यन्नाह—

**एतेनैतत्प्रतिक्षिप्तं यदुक्तं न्यायमानिना । 'न तत्र किञ्चिद् भवति न भवत्येव केवलम्' ॥३२॥**

एतेन– अनन्तरोदितेन प्रसङ्गदोषेण, एतत् प्रतिक्षिप्तं यदुक्तं न्यायमानिना– तर्कावलिप्तेन धर्मकीर्तिना । किं तदुक्तमिति सार्धकारिकाद्वयमाह– न तत्र– वस्तुनि क्षणादूर्ध्वं, किञ्चिद् भवति– वस्तुशब्दवाच्यम् । किं तर्हि तत् ? इत्याह– केवलं न भवत्येव– प्राक्क्षणे भवनशीलं तदेव न भवति, अन्यथा तन्नाशायोगादित्यर्थः ॥ ३२ ॥

ननु तद् घटाभवनं यदि घटस्वभावम्, अनीदृशं वा । उभयथापि घटाप्रच्युतिः, घटस्वभावनाशकाले घटस्यापि सत्त्वात्, घटास्वभावेन नाशेन घटस्वरूपाप्रच्युतेश्च, इत्यादिदोषोपनिपातः कथं वारणीयः ? इत्यत आह—

**'भावे ह्येष विकल्पः स्याद्विधेर्वस्त्वनुरोधतः । न भावो भवतीत्युक्तमभावो भवतीत्यपि' ॥३३॥**

भावे हि– वस्तुनो भवने, एषः– तत्त्वा-ऽन्यत्वयोरनिष्टप्रसङ्गादिरूपः, विकल्पः– स्यात् । कुतः ? इत्याह– विधेः– शब्दादिना विधिव्यवहारस्य, वस्त्वनुरोधतः वस्त्वालम्ब्यैव प्रवृत्तेः, अवस्तुनि तदभावात् । ननु यद्येवं, कथं तर्हि 'शशविषाणमभावो भवति' इत्यादिर्व्यवहारः ? इत्यत आह– 'अभावो भवति' इत्यप्युक्ते 'भावो न भवति' इत्युक्तम्, तस्य तत्रैव

तात्पर्यात्; अन्यथा विधिव्यवहारविषयत्वे तत्र तुच्छतैव न स्यात् । ननु योग्योपलब्ध्या शशशृङ्गाभावग्रहात् तत्र कालसंबन्धार्थकभवनविधानमविरुद्धम्, प्रतियोगिव्याप्येतरत्ववद् दोषेतरत्वस्यापि योग्यताशरीरे निवेशात्, अन्यथा ह्रदादौ वह्न्यादिभ्रामकदोषसत्त्वेनानुपलम्भः, तदसत्त्वे तु न योग्यता, इति तत्र वह्न्याद्यभावप्रत्यक्षमपि न स्यात् । न च प्रतियोग्यंशे भ्रमजनकदोषेतरत्वं निवेशनीयम्, ह्रदे वह्निभ्रामकदोषकाले वह्निविशिष्टह्रदत्वाभावप्रत्यक्षापत्तेः; तत्र तदनुपलम्भविघटकदोषेतरत्वनिवेशे च 'अत्र पीतशङ्खो नास्ति' इत्यादाविव तत्र तद्वृत्ताभ्रमजनकदोषातिरिक्तस्य प्रतियोगिनि प्रतियोगितावच्छेदकवैशिष्ट्यांशे भ्रमजनकस्य दोषस्य सत्त्वेऽपि तत्र तदनुपलम्भस्याबाधात् । एतेन

"दुष्टोपलम्भसामग्री शशशृङ्गादियोग्यता । न तस्यां नोपलम्भोऽस्ति नास्ति सानुपलम्भने[1] ॥ १ ॥"

इत्युदयनोक्तमपास्तम् । न च पदवृत्त्याद्यभावात् तादृशशाब्दव्यवहारासङ्गतिरिति वाच्यम्, पदवृत्त्याद्यभावेऽपि दोषविशेषमहिम्ना शब्दादपि तद्बोधसंभवात्, वेदान्तवाक्याद् निर्दोषत्वमहिम्ना पदवृत्त्यादिकं विनैव वेदान्तिनो निर्गुणब्रह्मबोधवत्; तदाह श्रीहर्षः—

"अत्यन्तासत्यपि[2] ह्यर्थे ज्ञानं शब्दः करोति हि । अबाधात्तु प्रमामत्र स्वतः प्रामाण्यनिश्चलाम्[3] ॥ १ ॥" इति ।

न चैवं तदुपलम्भकसामग्र्यादिकल्पने गौरवम्, प्रामाणिकत्वात्; अन्यथा प्रातीतिकपदार्थमात्रविलयापत्तेरिति चेत् ।

---

१ कुसुमाञ्जलौ तृतीये स्तबके कारिका ३ । २ 'पि ज्ञानमर्थे श' इति खण्डन० मुद्रितपुस्तके पाठः । ३ खण्डनखण्डखाद्ये प्रथमपरिच्छेदे कारिका ११ ।

न, दोषेतरतदुपलम्भकहेतोरेवाभावात्, आलोक-मनस्कारादेर्भावस्यैवोपलम्भकत्वात्, शब्दस्थलेऽपि शशशृङ्गमुख्यविशेष्यके नास्तित्वप्रकारकशाब्दविकल्प एव तत्तदानुपूर्व्याः सामर्थ्यकल्पनात्। न हि 'शशशृङ्गं नास्ति' इत्यत्र 'शशशृङ्गाभावोऽस्ति' इति कस्यचिद् व्यवहारः, किन्तु 'शशशृङ्गमस्तित्वाभाववत्' इत्येव। न च व्यवहारप्रातिकूल्येन कल्पना युक्तिमतीति ॥३३॥

एवं समर्थिते स्वमते परः स्वयमेव प्रसङ्गदोषं परिहरन्नाह—

'एतेनाहेतुकत्वेऽपि ह्यभूत्वा नाशभावतः। सत्त्वानाशित्वदोषस्य प्रत्याख्यातं प्रसञ्जनम्'॥

एतेन- नाशस्य विधिव्यवहाराविषयत्वप्रतिपादनेन, नाशस्याहेतुकत्वेऽप्यङ्गीक्रियमाणे, हि- निश्चितम्, अभूत्वा- प्रथममभवनरूपेणोत्पद्य, नाशभावतः- अनन्तरं भावरूपतया नाशोत्पत्तेः, सत्त्वानाशित्वदोषस्याङ्कुरादिवत् सत्त्वोन्मज्जनरूपस्यानिष्टस्य, प्रसञ्जनम्- आपादनम्, प्रत्याख्यातं- निराकृतम् ॥ ३४ ॥

एतद् धर्मकीर्तिनोक्तम्, तच्च सर्वं 'सतोऽसत्त्वे' इत्यादिनेह दूषितमेव, तथापि 'एतेन' इत्यादि योजयन्नाह—

प्रतिक्षिप्तं च यत्सत्त्वानाशित्वागोऽनिवारितम्। तुच्छरूपा तदाऽसत्ता भावाप्तेर्नाशितोदिता ३५

प्रतिक्षिप्तं चैतत्, यद्- यस्मात्, सत्त्वानाशित्वागः- भावोन्मज्जनापराधः, अनिवारितम्, अतस्तदवस्थ एव। कथम्?

१ अत्रैव स्तबके कारिका १२।

अधिकृतशेषमाह—

**पराभिप्रायतो ह्येतदेवं चेदुच्यते न यत्। उपलब्धिलक्षणप्राप्तोऽर्थस्तस्योपलभ्यते ॥८॥**

पराभिप्रायतः– बाह्यार्थवादिनैयायिकाद्यभिप्रायतः, हि– निश्चितम्, एतदेवमुच्यते यदुत– 'उपलब्धिलक्षणप्राप्तोऽर्थो नोपलभ्यते' इति। अत्र किं तदभिमतानुपलब्ध्यङ्गीकारेण तदभावः साध्यते, उत घटज्ञानात् प्रागपि घटसत्ताभ्युपगमे तदा तदुपलम्भप्रसङ्गापादनं परं प्रति क्रियत इति?। आद्ये, तदभिमतेश्वराद्यनुमानाङ्गीकारेणेश्वरादेरभ्युपगमप्रसङ्ग इति स्फुट एव दोषः। अन्त्ये त्वाह– न– नैतदेवम्, यद्– यस्मात्, तस्योपलब्धिलक्षणप्राप्तोऽर्थस्तेनोपलभ्यत एव, अन्यस्य तु न, तदुपलम्भप्रसङ्गात्, तद्ग्राहकेन्द्रिय-संनिकर्षाद्यभावादिति न किञ्चिदेतत् ॥ ८ ॥

अतत्स्वभावत्वपक्ष आह—

**[1]तदग्रहणभावैश्च यदि नाम न गृह्यते। तत एतावता सत्त्वं न तस्यातिप्रसङ्गतः ॥ ९ ॥**

तदग्रहणभावैश्च– बाह्यार्थाग्रहणस्वभावैश्च प्रत्ययान्तरैः, यदि नाम न गृह्यते बाह्योऽर्थः, तत एतावता हेतुना, न तस्यासत्त्वम्, अतिप्रसङ्गतः, पीतासंवेदनस्वभावेन तदसंवेदने पीतसंवेदनाभावप्रसङ्गात्। न[2]न्वन्यदर्शनाभ्यासवासनाप्रबोधादुपस्थितस्य बाह्यघटस्यानादिवासनाविशेषप्रबोधोपस्थितस्य शशविषाणस्येवाऽभावग्राहकसमनन्तरे सत्यभावग्रहः सर्वदैव भवति, घटाकारज्ञान-

---

१ मुद्रितमूलादर्शे 'अतद्ग्रह' इति पाठः। २ ख. ग. घ. च. 'न्वद'।

स्यापि बाह्यघटाभावग्रहाप्रतिरोधित्वात्, विषाणाकारग्रहस्य शशविषाणाभावग्रहाप्रतिरोधित्ववत्, अतः किमुच्यते– 'योग्यानुपलब्ध्यभावाद् न बाह्यघटाभावग्रहः' इति, तत्तदभावाकारज्ञाने तत्तत्समनन्तरस्यैव योग्यतात्वात्?। न हि परेणाप्येका योग्यता स्वमतानुरोधेनापि वक्तुं शक्यते; तथाहि– प्रतियोगि-तद्व्याप्येतरयावत्प्रतियोग्युपलम्भकसमवधानमुदयनाभिमता योग्यता। न चैकत्र कुत्रापि न यावत्तदुपलम्भकसमवधानमिति वाच्यम्, स्वाश्रयसंबन्धे तु तदुपलम्भकतावच्छेदकसमवधानोक्तेः। प्रतियोगिव्याप्यत्वं चात्र न कालिकेन, संनिकर्षस्य घटाद्यव्याप्यत्वात्, घटनाशोत्तरं तन्नाशात्, अणौ पृथिवीत्वाभावग्रहाप्रसङ्गात्, महत्त्वादेरपि तद्व्याप्यत्वात्, कालिकेन नित्यव्याप्येतराप्रसिद्धेर्वा; न च दैशिकेन, संनिकर्षस्यापि प्रतियोग्यव्याप्यत्वात्, किन्तु प्रतियोगिग्रहासाधारणकारणत्वम्। अत एव संयोगिनाशजन्यसंयोगनाशप्रत्यक्षम्, तत्र संयोगिनो हेतुत्वेऽप्यसाधारणत्वात्। अत एव च प्रतियोग्युपलम्भप्रागभावस्याभावप्रत्यक्षे हेतुत्वेऽपि न दोषः, तस्यासाधारणत्वात्। संसर्गाभावग्रहे चेयं योग्यता, तेन नातीन्द्रियान्योन्याभावप्रत्यक्षानुपपत्तिदोषः। प्रतियोगितावच्छेदकावच्छिन्नोपलम्भकसमवधानग्रहणाच्च न पिशाचवद् घटाभावप्रत्यक्षता। न च गुणे रूपाभावाप्रत्यक्षतापत्तिः, तदुपलम्भकमहत्त्वस्य तत्राभावादिति वाच्यम्, एकार्थसमवायेन तदुपलम्भकमहत्त्वस्य तत्र सत्त्वादित्येतन्निष्कर्षः।

सोऽयमनुपपन्नः, असाधारणत्वस्य दुर्वचत्वात्, विषयतासंबन्धेन हेतुत्वरूपासाधारणत्वविवक्षण आलोकसंयोगादेरप्यसाधारणत्वापत्तौ तमसि घटाभावादेः प्रत्यक्षतापातात्, प्रागभावादेरपि साधारणत्वात्, उपलम्भपदेन प्रतियोगितावच्छेदकाश्रयाणां यावतामुपलम्भस्वरूपयोग्यत्वग्रहणे महति वायादुद्भूतरूपाभावाप्रत्यक्षतापत्तेः, अणुरूपोपलम्भाप्रसिद्धेः,

यत्किञ्चिदुपलम्भयोग्यत्वग्रहणे च रूपसामान्याद्यभावप्रत्यक्षतापत्तेः। किञ्च, यत्किञ्चित्संबन्धेन तदुपलम्भकतावच्छेदकाश्रयसत्त्वमतिप्रसक्तम्, नियतसंबन्धेन च रूपादेर्वाय्वावभावात् तत्र तदभावप्रत्यक्षतानापत्तिः। एतेन 'प्रतियोगिग्राहकत्वाभिमतेन्द्रियजन्यभावविषयकयावद्ग्रहनिष्ठकार्यताभिन्नप्रतियोगिग्रहनिष्ठकार्यताप्रतियोगिककारणताकत्वमसाधारणत्वम्, 'भावविषयक-' इति विशेषणाद् नालोकादेरसाधारण्यम्। प्रतियोगिग्राहकत्वाभिमतेन्द्रियजन्यभावविषयकयावद्ग्रहजनकतावच्छेदकावच्छिन्नं प्रतियोगिभिन्नं यावत्तत्समवधानं योग्यतेति फलितम्। वायौ रूपाभावाप्रत्यक्षतावारणाय प्रतियोगिभिन्नेति तीति (?) निरस्तम्, ब्राह्मण्याभावादेः प्रत्यक्षतापातात्, यावदुपलम्भकावच्छिन्नाभावत्वेन स्वरूपयोग्यत्वेऽविनिगमात्, अभावावच्छिन्नतावदुपलम्भकानामपि हेतुत्वसंभवात्, अनुपलब्धिकुक्षिनिक्षिप्तत्वेनेन्द्रियादेरभावप्रत्यक्षहेतुत्वोच्छेदाच्च।

केचित्तु– 'यद्धर्मावच्छिन्नप्रतियोगिनि प्रतियोगितत्सन्निकर्षविरहमात्रप्रयुक्तो यदधिकरणविशेष्यकलौकिकोपलम्भविषयत्वाभावस्तदधिकरणे तद्धर्मावच्छिन्नाभावो योग्यः। तत्प्रयुक्तत्वं च स्वरूपसंबन्धविशेषः, 'कारणाभावप्रयुक्तः कार्याभावः' इति प्रत्ययात्। अस्ति चेदमालोकादिमति भूतले, तत्र घटानुपलम्भस्य तन्मात्रप्रयुक्तत्वात्। एवं स्तम्भे पिशाचानुपलम्भेऽपि बोध्यम्, पिशाचत्वादेरयोग्यत्वे मानाभावात्, सहकारिविरहादेव कार्याभावाद् नित्यस्येति व्याप्तेरसिद्धेः। भूतले पिशाचानुपलम्भस्तु न तन्मात्रप्रयुक्तः, उद्भूतरूपाभावस्यापि तत्र(।?)प्रयोजकत्वात्। अस्तु वाऽन्योन्याभावे प्रतियोगितावच्छेदकतत्संनिकर्षविरहमात्रप्रयुक्तस्तदधिकरणीयलौकिकोपलम्भप्रकारत्वाभावः प्रतियोगितावच्छेदकनिष्ठ एव, तथा पिशाचादेरनुपलम्भस्य योग्यत्वप्रयोज्यत्वेऽपि पिशाचत्वादेः स्तम्भेऽनुपलम्भस्यातथात्वात्, योग्यव्यक्तिवृत्तित्वेनैव जातेर्योग्यत्वात्। अ-

त्यन्ताभावे तु पूर्वैव योग्यता। अत एव न जलपरमाणौ पृथिवीत्वाभावप्रत्यक्षम्, तत्र तदनुपलम्भस्य तन्मात्रप्रयुक्तत्वाभावात्, अधिकरणे महत्त्वाभावस्यापि प्रयोजकत्वात्। ब्राह्मण्याभावस्तु शूद्रादौ न प्रत्यक्षः, विशुद्धिज्ञानस्य तद्व्यञ्जकस्याभावात्। न च य एव गगनादौ भूतलविशेष्यकोपलम्भविषयत्वाभावः, स एव घटादौ, आश्रयभेदेनाभावाभेदादित्यनुपपत्तिः, व्याप्यवृत्तित्वा-ऽव्याप्यवृत्तित्वाभ्यां तद्भेदात्, यद्धर्मावच्छिन्नप्रतियोगिकत्वावच्छेदेनोक्तप्रयुक्तत्वविवक्षणाद् वा। संयोगप्रत्यक्षे च न संयोगिद्वयप्रत्यक्षमपि हेतुः, मिथःसंयुक्तयोरन्यावच्छेदेनोपलम्भेऽपि संयोगाप्रत्ययात्, संयोगिनः संनिकर्षघटकतयैवोपयोगित्वात्, इति न तदभावप्रत्यक्षानुपपत्तिः' इत्याहुः।

तदपि न, धारावाहिकाभावप्रत्यक्षानुपपत्तेः, तत्र बाधस्याऽप्यनुपलम्भप्रयोजकत्वात्। न च धर्मितावच्छेदकामिश्रितोपलम्भस्याभावस्तन्मात्रप्रयुक्त इति स एव वाच्यः, बाधाभावोऽपि वा विरहप्रतियोगिकोटौ निवेश्य इति वाच्यम्, तथापि भूतले घटानुपलम्भस्य घटालोकसंयोगाभावप्रयुक्तत्वेन तन्मात्रप्रयुक्तत्वाभावात्। न च तत्संनिकर्षातिरिक्तप्रतियोग्युपलम्भकतावच्छेदकावच्छिन्नविरहाप्रयुक्त इति मात्रान्तार्थः, भूतले आलोकसंयोगसत्त्वाद् न तद्विरहः, द्रव्यचाक्षुषे आलोकसंयोगत्वेनैव हेतुत्वात्, अतिप्रसङ्गस्य विषयनिष्ठसामानाधिकरण्येनैव वारितत्वात्, अत एव घटाकाशसंयोगाद्यध्यक्षत्वस्य घटाकाशसंयोगादीनां गुरुत्वादिवदयोग्यत्वेन प्रयुक्तत्वेऽपि न क्षतिः, गुरुत्वादिभेदस्य सामान्यत एव प्रत्यक्षहेतुत्वादिति वाच्यम्; संनिकर्षस्यापि त्यागापत्तेः; यद्विरहमात्रप्रयुक्तत्वोपादानेऽपि दोषाभावाचक्षुःसंयोगत्वेनैव चाक्षुषहेतुत्वात्, घटाभावभ्रमानुपपत्तेश्च, तत्र ॥१७२॥
घटानुपलम्भस्य दोषप्रयुक्तत्वात्। न च तत्तद्दोषाभावोऽपि तत्तुल्यतया निवेश्यः, ह्रदादौ वह्न्यादिभ्रमाभावरूपवह्न्याद्यनुप-

लम्भस्य दोषाभावप्रयुक्तत्वात्, तत्तद्दोषाणामपि तत्तुल्यतया निवेशे चातिगौरवात्, भङ्ग्यन्तरेणोदयनीययोग्यतोक्तिरेवेयमिति दिक्।

'प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोग्युपलम्भाभावः' इति चिन्तामणिकारीया योग्यता, प्रतियोगिसत्त्वव्यापकोपलम्भविषयप्रतियोगिकाभावत्वं योग्यतावच्छेदकमिति फलितम्। नत्वापादनात्मकज्ञानमप्युपयुज्यते, तदभावेऽप्यभावप्रत्यक्षात्। तत्र शुद्धं प्रतियोगिसत्त्वं व्याप्यम्, किञ्चिदवच्छिन्नं वा?। नाद्यः, तत्सत्त्वेऽपि कारणान्तराभावादनुपलम्भेन व्यभिचारात्। न द्वितीयः, जलपरमाणौ पृथिवीत्वाभावप्रत्यक्षतापातात्, तत्रापि महत्त्वादिविशिष्टपृथिवीत्वेनोपलम्भापादनसंभवात्। न च पक्षावृत्तिविशेषणानवच्छिन्नयत्सत्त्वोक्तौ निस्तारः, तथापि गन्धवदणुभिन्नत्वे सति पृथिवीत्वेन तत्र तदापादनसंभवात्।

अथ यदधिकरणवृत्तिप्रतियोग्युपलम्भकातिरिक्तानवच्छिन्नं यत्सत्त्वमुपलम्भव्याप्यमिति वाच्यम्, गन्धवदणुभिन्नत्वादिकं न न प्रतियोग्युपलम्भकमिति न दोषः, यद्धर्मावच्छिन्नसत्त्वं यद्धर्मावच्छिन्नोपलम्भव्याप्यं तद्धर्मावच्छिन्नोपलम्भाभावस्य तद्धर्मावच्छिन्नाभावप्रत्यक्षहेतुत्वाद् न गुरुत्ववद् घटाभावादिप्रत्यक्षता, न वाकाशादिभेदस्य तथात्वम्, शब्दाश्रयत्वादेरयोग्यत्वात्, न वा घटत्वात्यन्ताभावस्य, घटेतरावृत्तित्वघटितत्वेनायोग्यत्वात्। शूद्रत्वादौ ब्राह्मणत्वाभावस्तु सुतरां न प्रत्यक्षः, तदधिकरणवृत्तिप्रतियोग्युपलम्भकमात्रावच्छिन्नेन तत्सत्त्वेनापादयितुमशक्यत्वात्, तत्र विशुद्धमातापितृजन्यत्वज्ञानस्यापि व्यञ्जकत्वात्। न चैवं तमस्यालोकनियतघटाद्यभावप्रत्यक्षापत्तिः, तत्र प्रतियोगिसत्त्वस्यैव व्याप्यत्वादिति वाच्यम्; प्रतियोगिसत्त्वस्योपलम्भव्याप्यतायां निरुपाधिसहचारातिरिक्ततर्कवत्त्वस्य विवक्षितत्वात्, प्रतियोग्युपलम्भकाव

च्छिन्नतत्सत्त्वस्य व्याप्यतायां कार्यकारणभावस्यापि तर्कत्वात् । न चैवमभावानुपलब्धिर्भावप्रत्यक्षेऽपि हेतुः स्यात्, भावज्ञानस्य निर्विकल्पादेरधिकरणानिश्रितस्याप्युत्पादार्थं तत्र महत्त्वादेरेव हेतुत्वस्वीकारात् ; इति चेत् ।

न, व्यापकत्वेनाभिमतस्योपलम्भस्य लौकिकस्य विवक्षणे स्तम्भपिशाचान्योन्याभावादेः, गुडतिक्तत्वाभावादेश्चाप्रत्यक्षत्वप्रसङ्गात् । प्रतियोग्यंशेऽधिकरणांशे च तादृशलौकिकोपलम्भरूपसाध्याप्रसिद्ध्या व्याप्यताया असंभवात् । एतेन 'पिशाचत्वं यदि स्तम्भवृत्तिजातिः स्यात् स्तम्भविशेष्यकलौकिकोपलम्भकप्रकारः स्यात्, इत्यापादनं संभवत्येव, इति स्तम्भविशेष्यकलौकिकप्रत्यक्षे पिशाचत्वप्रकारत्वाभावस्य हेतुत्वाद् न दोषः' इत्यपि निरस्तम्, तस्य सदासत्त्वेनाहेतुत्वात् ; तादृशोपलम्भस्यालौकिकस्य विवक्षणे च प्रतियोगिसत्त्वस्याव्याप्यत्वात् ; तदधिकरणवृत्त्यलौकिकोपलम्भकावच्छिन्नप्रतियोगिसत्त्वस्यालौकिकोपलम्भव्याप्यत्वे च भूतलादौ पिशाचात्यन्ताभावादिग्रहप्रसङ्गात् ; यावत्प्रतियोग्युपलम्भकावच्छिन्नस्य व्याप्यत्वोक्तावुदयनीययोग्यतायामेव पर्यवसानाच्च । 'योग्यप्रतियोगिकत्वं संसर्गाभावग्रहे योग्यता, योग्याधिकरणत्वं चान्योन्याभावग्रहः' इत्यपि तुच्छम्, मनस्त्वात्यन्ताभावादेरप्रत्यक्षत्वापातात्, घटादौ परमाणुभेदादेः प्रत्यक्षतापाताच्चेति ।

तस्माद् भावप्रत्यक्ष इवाभावप्रत्यक्षेऽपि महत्त्वादीनां हेतुत्वाद् विशिष्य घटाभावप्रत्यक्ष आलोकसंयोगादीनां हेतुता वाच्याः सापि वक्तुं न शक्यते, मेचकादिचाक्षुषे व्यभिचारात्, इति घटाभावाद्याकारे तत्कुर्वद्रूपसमनन्तरत्वेनैव हेतुता युक्तेति चेत् । न, स्ववासनया कथंचित् स्वयं बाह्याभावानुभवेऽपि परं प्रति तत्साधनार्थं प्रयोगानुपपत्तेः, तूष्णींभावेन कथायां निग्रहात्, बाह्यत्वस्य ज्ञानभिन्नत्वरूपस्यातीन्द्रियत्वेन तद्घटितघटोपलम्भस्य तु पिशाचवद् घटोपलम्भस्यैवापादयितुमशक्यत्वेन

तद्भावप्रत्यक्षस्यानापादनादिति दिक् ॥ ९ ॥

'घटादिर्न ज्ञानभिन्नः, प्रत्यक्षत्वात्, तत्स्वरूपवत्' इत्याशयेनाह—

## विज्ञानं यत्स्वसंवेद्यं न त्वर्थो युक्त्ययोगतः[1]। अतस्तद्वेदने तस्य ग्रहणं नोपपद्यते ॥१०॥

विज्ञानं, यत्– यस्मात्कारणात्, स्वसंवेद्यं– स्वत एव स्फुरद्रूपम्, तथानुभूतेः; न त्वर्थः परपरिकल्पितः स्वसंवेद्यः। कुतः? इत्याह– युक्त्ययोगतः– युक्त्यभावात्, सर्वस्य सर्वज्ञताद्यापत्तेः। अतस्तद्वेदने–विज्ञानानुभवे, तस्य– परपरिकल्पितस्यार्थस्य, ग्रहणं– ज्ञानम्, नोपपद्यते; तथाहि– 'ज्ञानविषयताया इन्द्रिय-संनिकर्षादिनियम्यत्वाज्ज्ञानस्याऽर्थस्य च परतः प्रकाश एव' इति नैयायिकादीनां मतं न युक्तम्, स्वसंवेदनस्य प्रसाधितत्वात्, प्रत्यक्षव्यवहारे प्रत्यक्षत्वस्यैव प्रयोजकत्वात्, क्वचित् प्रत्यक्षत्वस्य क्वचिच्च प्रत्यक्षविषयत्वस्य तथात्वे गौरवात्, नीलज्ञानत्वाद्यपेक्षया नीलत्वादेरेव चक्षुरादिजन्यतावच्छेदकत्वे लाघवाच्च। एतेन 'ज्ञानाभेदः संनिकर्षादिश्च ज्ञानविषयतायां नियामकः, इति ज्ञानस्य स्वप्रकाशत्वम्, अर्थस्य च परतः प्रकाशत्वम्' इत्यन्येषामपि मतं प्रत्याख्यातम्, विषयताया ज्ञानस्वरूपत्वात्, ज्ञानभिन्नस्य ज्ञानाविषयत्वात्। अथ 'नीलस्य प्रकाशः' इति प्रतीतेर्नील-प्रकाशयोर्भेद इति चेत्। न, विवेकेनाप्रतीयमानयोर्नील-तत्संविदोर्भेदाभावात्; 'अन्यथा नीलस्य स्वरूपम्' 'प्रकाशस्य प्रकाशता' इत्यादावपि भेदसिद्धिप्रसङ्गात्, अभेददर्शनबाधकस्याप्युभयत्र तुल्यत्वात्। न चार्थमन्तरेणाप्रतीयमाना बुद्धिरर्थ-

1 ख. ग. घ. च. ज. 'युक्तियो' मुद्रितेऽपि चायमेव पाठः।

स्येति संयोज्य प्रत्येतुं शक्या, शक्यत्वे वा नियतसहोपलम्भयोः पृथगपोद्धारकल्पनाया अभेदनिश्चयपर्यवसायित्वादिति; तदुक्तम्– "सहोपलम्भनियमादभेदो नील-तद्धियोः" इति ।

नन्वेवं कथमर्थाकारो ग्राह्य एव, बोधाकारस्तु ग्राहक एवेति नियमः ? इति चेत् । न, कथंचिद् भिन्नकालयोर्ग्राह्य-ग्राहकाभावात्, समानकालयोरप्येकस्य ग्राह्यत्वम्, अन्यस्य च ग्राहकत्वमित्यत्राविनिगमात् । ग्रहणक्रियाकर्तृ ज्ञानं ग्राहकम्, तदाश्रयश्चार्थो ग्राह्य इति चेत् । न, अन्तः सुखाकारव्यतिरेकेण बहिश्च नीलाद्याकारव्यतिरेकेणापराया ग्रहणक्रियाया अभानात् । भाने च तस्य 'स्वतः परतो वा ?' इति विकल्पावतारः । आद्ये, एकदा नील-बोध-ग्रहणानां स्वरूपनिमग्नानां प्रतिभानाद् न कर्तृ-कर्म-क्रियाव्यवहृतिः । अन्त्ये च तत्राप्यपरग्रहणक्रियाग्राहकान्तरापेक्षायामनवस्था, इति विनिर्मुक्तग्राह्य-ग्राहक-भावस्वसंवित्तिमात्रवाद एव साधीयान्; तदुक्तम्—

"नान्योऽनुभाव्यो बुद्ध्यास्ति तस्य नानुभवोऽपरः ।
ग्राह्य-ग्राहकवैधुर्यात् स्वयं सैव प्रकाशते ॥ १ ॥" इति ।

कथं तर्हि 'नीलमहं वेद्मि' इति कर्म-कर्तृ-भावाभिनिवेशी प्रत्ययः, कर्म-कर्तृभावस्याभावात् ? इति चेत् । यथा रजतमन्तरेणापि शुक्तिकायां रजतावगमः । बाधकाभावाद् न तद्वदस्य भ्रान्तत्वमिति चेत् । न, स्वरूपासंसक्तयोर्द्वयोः स्वातन्त्र्योपलम्भस्य कर्म-कर्तृभावोल्लेखे बाधकत्वात् । किं तत्र भ्रान्तिबीजम् ? इति चेत् । पूर्वभ्रान्तिरेव, तत्रापि पूर्वभ्रान्तिः, इति बीजाङ्कुरस्थलीयाऽनवस्था; तदुक्तम्—

"अवेद्य-वेदकाकारा यथा भ्रान्तैर्निरीक्ष्यते । विभक्तलक्षणग्राह्य-ग्राहकाकारविप्लवा ॥ १ ॥
तथा कृतव्यवस्थेयं केशादिज्ञानभेदवत् । यदा तदा न संनोद्यग्राह्य-ग्राहकलक्षणा ॥ २ ॥" इति ।

अनयोरयमर्थः– स्वरूपेणाविद्यमानवेद्य-वेदकाकारापि बुद्धिर्यथा भ्रान्तैर्व्यवहर्तृभिर्निरीक्ष्यते तथैव कृतव्यवस्थेयं व्यवह्रियते, तैस्तु केशादिज्ञानभेदवत्– तिमिराद्युपप्लुताक्षाणां बोधभिन्नाविद्यमानकेशादिप्रतिपत्तिवदियं विभक्तलक्षणग्राह्य-ग्राहकाकारविप्लुवा निरीक्ष्यते, विभक्तलक्षणौ ग्राह्य-ग्राहकाकारावेव विप्लवौ– असन्निभासविभागौ यस्याः सा तथोक्ता । यदायमविद्यानिबन्धनो बुद्धेः प्रविभागस्तदा न संनोद्यग्राह्य-ग्राहकाकारलक्षणा– संनोद्ये पर्यनुयोज्ये ग्राह्य-ग्राहकलक्षणे यस्याः सा तथा न भवति । न ह्यविद्यासमारोपिताकारः पर्यनुयोगमर्हति । अतो न 'भ्रान्तेः प्रकाशमानत्वेनाबोधरूपता, बोधरूपतायां वा नासदाकारसंस्पर्शः, तत्संस्पर्शे वा सत्त्वापत्तिः' इत्यादिपर्यनुयोगावकाशः । ' 'नीलमहं वेद्मि' इति परस्परासंसक्तं प्रतीतित्रयं क्रमवत् प्रतिभाति, न कर्म-कर्तृभावः' इत्यन्ये, तेषां द्वितीयाद्यर्थानुपपत्तिः ।

अथ सुख-स्तम्भाद्याकारव्यतिरिक्तसंवदेनाभावे कथं 'चक्षुरादिना मया रूपं प्रतीयते' इत्यादिप्रतीतिः ? इत्युपलभ्ये रूपादिके चक्षुरभिमुखीभूतं तत्प्रकाशत्वं विदधाति सैव बुद्धिरिति चेत् । न, 'चक्षुरादिना रूपमुपलभ्यते' इत्यादौ बाह्यार्थवादिपरिकल्पिते परोक्षे रूपादौ तदाकारा प्रकाशता चक्षुरादिना जन्यत इति वासनाविशेषेण तथा व्यपदेशसंभवात्, पूर्वसामग्रीतश्चक्षुरादिरूपाद्याकारप्रकाशता बुद्धिस्वभावोपजायत इत्येकसामग्र्यधीनतया वा तथा व्यपदेशात् । दृश्यते हि प्रदीप-प्रकाशयोः समानकालयोः 'प्रदीपेन घटः प्रकाशितः' इत्येकसामग्र्यधीनतया व्यपदेश इति । दर्शनात् प्रागर्थसद्भावे तु

न मानमस्ति, येन तत्र प्रकाशतां चक्षुरादिकमादध्यात्। दर्शनमेव तत्र मानमिति चेत्। न, तेन स्वकालावधेरेवाऽर्थस्य ग्रहणात्। अथ 'पूर्वदृष्टं पश्यामि' इति व्यवसायात् प्रागर्थः सिध्यति, प्रागर्थसत्तां विना दृश्यमानस्य पूर्वदृष्ट एकत्वगतेरयोगादिति चेत्। केन तयोरेकत्वं गम्यते ?– इदानींतनदर्शनेन, पूर्वदर्शनेन वा ? । नाद्यः, इदानींतनदर्शनकाले पूर्वदृक्कालस्याऽस्तमयात्, तेनाविद्यमानपूर्वदृग्गर्भपूर्वदृष्टताया अग्रहणात्, अन्यथा वितथत्वप्रसङ्गात्। अत एव न द्वितीयः, पूर्वदर्शनेन वर्तमानकालदर्शनव्याप्तेरनवसायात्। तस्मादपास्तपूर्वदृगादियोगं सर्वं वस्तु दृशा गृह्यते, पूर्वदृष्टतां तु स्मृतिरुल्लिखतीति। न च 'स एवायम्' इति प्रतीतिरेका, 'सः' इत्यस्य स्मृतिरूपत्वात्, 'अयम्' इत्यस्य च दृक्स्वरूपत्वात्, परोक्षत्वा-ऽपरोक्षत्वाभ्यां तद्भेदात्। न च 'पश्यामीति प्रतीतेः प्रत्यक्षमेव प्रत्यभिज्ञानम्, न च संस्कारजन्यत्वेन स्मृतित्वापत्तिः, संस्कारमात्रजन्यत्वस्यैव स्मृतित्वव्याप्यत्वात्, तत्तास्मृतेरेव वा तत्ताप्रत्यभिज्ञाहेतुत्वात्' इति नैयायिकादिमतमपि युक्तम्, तेषामपि 'पश्यामि' इत्याद्यनुगतमत्या चाक्षुषत्वासिद्धेर्निर्विकल्पकासाधारण्यात्, वैशद्यविशेषस्यैव 'पश्यामि' इति प्रतीतौ विषयत्वादिति न किञ्चिदेतत्।

अथानुमानात् प्राग् भावोऽर्थस्य सिध्यति, प्राक् सत्तां विना पश्चाद्दर्शनायोगादिति चेत्। न, प्राक् सत्ताया आसिद्ध्या तया सह पश्चाद्दर्शनस्य नियमासिद्धेः। अथ ज्ञाने नीलाद्याकारस्य कादाचित्कस्यान्यथानुपपद्यमानत्वात् तत्प्रसिद्ध्येऽर्थः परिकल्प्यत इति चेत्। न, स्वप्नाद्यवस्थायां वासनाविशेषसामर्थ्यवशादविद्यमानकरि-तुरग-रथाद्याकारप्रतिपत्तिनियमवज्जाग्रद्दशायामपि तत एव दर्शनस्य प्रतिनियतविषयत्वोपपत्तेः, तद् न प्रागर्थसत्त्वम्। प्रागसत्त्वे तु धर्मिस्वरूपे दर्शनमेव प्रमाणम्, यद् येनैव रूपेणोपलभ्यते तत् तेनैव रूपेणास्ति, यथा नीलं नीलरूपतयैव, इत्थं च वर्तमानत्वेनानुभव एव पूर्वकाले संबन्धित्वं

व्यवच्छिनत्तीति । अथ नीलं तद्दर्शनाविरतावपि परदृशि प्रतिभातीति साधारणतया ग्राह्यम्, विज्ञानं त्वसाधारणतया ग्राहकमिति भेदो युक्त इति चेत् । न, नीलस्य साधारणतयाऽप्रतीतेः। न हि नीलं परदृशि प्रतिभातीत्यत्र प्रत्यक्षप्रसरोऽस्ति। अथानुमानात् तत्साधारणता प्रतीयते, स्वसंताने नीलादानार्थप्रवृत्तेः, नीलदर्शनमूलकत्वदर्शनेन परसंतानेऽपि प्रवृत्तिदर्शनात् तद्विषयदर्शनानुमानादिति चेत् । न, परप्रवृत्त्यादिना परदृष्टनीलानुमानेऽपि स्व-परदृष्टयोरैक्यासिद्धेः, सामान्येनान्वयपरिच्छेदात्, अपरधूमदर्शनादपरवह्न्यनुमानात्, अपरवह्नौ पूर्वदृष्टवह्निसदृशताविकल्पवत् परदृष्टे स्वदृष्टसदृशतामात्रविकल्पावतारात् । प्रतिभासभेदेऽपि स्व-परदृष्टयोः सदृशव्यवहारादिकार्यदर्शनादभेदः स्यात्, तदा सदृशरोमाञ्चोद्भवादिकार्यदर्शनात् सुखादेरपि स्व-परसंतानभुवस्तत्त्वं भवेत्। न च संतानभेदात् तद्भेदः, तत्रापि भेदकान्तरगवेषणायामनवस्थानात् । स्वरूपत एव तद्भेदे च सुखादेरपि तत एव भेदसंभवात् । न च देशैकत्वात् स्व-परदृष्टनीलादीनामेकत्वम्, देशस्यापि स्व-परदृष्टस्योक्तवदेकत्वायोगात्। तस्माद् ग्राहकाकारवत् प्रतिपुरुषमुद्भासमानं नीलादिकमपि भिन्नमेव, तच्चैककालोपलम्भाद् ग्राहकवत् स्वप्रकाशम्।

अथ ग्राहकाकारश्चिद्रूपत्वाद् वेदकः, नीलाकारस्तु जडत्वाद् ग्राह्य इति चेत् । न, अपरोक्षस्वरूपस्य चिद्रूपत्वस्य नीलादिसाधारण्यात् । नीलादेरपरोक्षस्वरूपमन्यस्माद् भवति, न तु बोधस्येति विशेष इति चेत् । न, बोधस्यापीन्द्रियाद्यपेक्षत्वात् । स्वोत्पत्तावेव बोध इन्द्रियादिकमपेक्षते, न तु स्वापरोक्षतायामिति चेत् । न, एकत्रापेक्षा-ऽनपेक्षाऽयोगात्। एवं चान्तर्बहिराकारयोस्तुल्यत्वेऽपि 'एकत्र ग्राहकताशक्तिः, अन्यत्र च ग्राह्यताशक्तिः' इति परेषां वासनामात्रम्, असिद्धे ग्राह्यग्राहकभावे तच्छक्तिकल्पनाया अयोगात्, तस्याः कार्यानुमेयत्वात् । एवं च 'यदवभासते तज्ज्ञानम्, यथा सुखादिकम्, अव-

भासते च नीलादिकम्, अतो ज्ञानमेव' इति स्वभावहेतुः ।

कथं तर्हि 'भूतले घटः' इति प्रतीतिः, न तु 'भूतलं न घटज्ञानवत्' इतिवद् 'भूतलं न घटवत् ? इति; कथं वा 'अहं घटज्ञानवान्' इतिवत् 'अहं घटवान्' इति न प्रतीतिः ? इति चेत् । पृच्छैतद् नियताधाराधेयभावकल्पनाबीजम् । न हि परेणाप्याधाराधेयभावो वास्तवो वक्तुं शक्यते, संयोगमात्रस्य तत्त्वे कुण्ड-बदरयोस्तद्विपर्ययस्य विनिगन्तुमशक्यत्वात्, तिर्यक्संयुक्तयोर्द्वयोस्तदव्यवहाराच्च । न च बदरादिप्रतियोगिकत्वविशिष्टसंयोगादिरेव बदराद्याधारता, क्षणभङ्गापत्त्या विशिष्टस्यातिरिक्तस्यानभ्युपगमात्, प्रतियोगित्वाद्यविवेचनाच्च । न च कुण्डादिस्वरूपैव बदराद्याधारता, तत्स्वरूपस्य साधारणत्वाद् बदरं प्रतीव करभं प्रत्यप्यविशेषात् । तस्माद् भूतलादौ घटाद्याधारताप्रतीतिरविद्याविशेषादेव नियतेति प्रतिपत्तव्यम् । एतेन 'अर्थाभावेऽन्तर्बहिर्विभाग एव न स्यात्' इति निरस्तम्, भिन्नदेशसंबन्धित्वेन तदसंभवेऽपि विश्वरूपभेदेन तत्संभवात्; अन्यथा स्वप्नादौ रथादिज्ञाने बहिर्ज्ञानत्वं न स्यात् । एतेन चाहमिदमाकारभेदोऽपि व्याख्यातः, स्वरूपतस्तद्भेदात्, 'इदं नीलं' इत्यत्रेदमाकार-नीलाकारयोर्दोषादेवैकज्ञानत्वाभिमानात् । बहिर्नीलादिस्वरूपमिदंत्वं त्वनुपपन्नम्, असत्यप्यर्थे दोषवशात् 'इदम्' इति प्रतीतेः । 'इदं नीलम्' इत्यादिसहप्रयोगानुपपत्तेश्च 'घटो घटः' इत्यादिवदिति दिग् ॥ १० ॥

निगमयति—

**एवं चाग्रहणादेव तदभावोऽवसीयते। अतः किमुच्यते मानमर्थाभावे न विद्यते?॥११॥**

एवं च– उक्तरीत्या, अग्रहणादेव– अदर्शनादेव, तदभावः– बाह्यार्थाभावः, अवसीयते । अतः किमुच्यते– 'अर्थाभावे मानं न विद्यते' इति, नीलादौ ज्ञानाभिन्नत्वग्रहे समीहितसिद्धेः ? । एतेन 'अदर्शनादेवाभावनिश्चये पुत्रादर्शनात् तदभावनिश्चयेनोरस्ताडनादिना शोकप्रसङ्गः' इति दुर्भाषितमपास्तम्, परेषां पुत्रध्वंसग्रहसामग्रीनियतत्वात् तदाकारस्य, पुत्रध्वंसग्रहस्य च शोकहेतुत्वादिति । कथं तर्हि प्राक् पूर्वकालसंबन्धित्वेनादर्शनात् तदभावग्रह उक्तः ? इति चेत् । धर्म्यतिरिक्तस्य तस्य दुर्वचत्वाद् धर्मिस्वरूपत्वे योग्यत्वेन तदापादनसंभवादित्याकलय । एवं च विज्ञानस्वसंवेदनस्यैव मानत्वादित्याशयव्याख्याने 'मानत्वात्' इत्यस्य 'मानोत्थापकत्वात्' इत्यर्थो बोध्यः ॥ ११ ॥

अत्रोच्यते—

**अर्थग्रहणरूपं यत् तत्स्वसंवेद्यमिष्यते । तद्वेदने ग्रहस्तस्य ततः किं नोपपद्यते ? ॥१२॥**

यद्– यस्मात्, तद्– विज्ञानम्, अर्थग्रहणरूपं– बाह्यार्थपरिच्छेदात्मकं सत्, स्वसंवेद्यमिष्यते– 'नीलमहं वेद्मि' इति विच्छिन्नार्थग्रहणरूपतयाऽनुभूतेः; तद्वेदने– एवंभूतविज्ञानानुभवे, तद्ग्रहः– बाह्यार्थग्रहः, ततः– तस्मात् कारणात्, किं नोपपद्यते– अधिकृतवेदनस्यैवार्थमन्तरेणायोगात् ? इति ।

खलस्य योगाचारस्य ज्ञात्वार्थद्वेषितामिव । सभायामधुना सभ्याः ! अनर्थ उपतिष्ठते ॥ १ ॥

तथाहि– यत् तावदुक्तम्– 'ज्ञानभिन्नस्य ज्ञानाविषयत्वाद् न बाह्यार्थः' इति । तद् विपरीतम्, तद्विषयताप्रयोगस्य

भेदगर्भत्वात् । किञ्च, ग्राह्य ग्राहकाकारस्वरूपभेदः प्रत्यक्षसिद्ध एव । अत एव नीलाकारं नाहमाद्याकारमिति चेत् । न, अनेकाकारकरम्बितैकविज्ञानानभ्युपगमे नील-धवलाद्यवगाहिचित्रज्ञानानुपपत्तेः, 'क्रमिकाण्येव तज्ज्ञानानि' इत्यभ्युपगमेऽप्येकमपि नीलादिज्ञानं न व्यवतिष्ठेत, नीलाकारेऽपि नीलत्वोपरागात्, एकापलापेऽन्यापलापस्य तुल्यत्वात् । चित्रज्ञानाभ्युपगमे च चित्रार्थोऽप्यनिवारितः, ग्राह्य-ग्राहकभेदस्य सत्यस्य प्रतिभासात् । एतेन 'विवेकेनाग्रहणाद् न तद्भेदः सत्यः' इति निरस्तम्, आकारयोरसंभेदेन वेदनस्यैव विवेचनत्वात्; प्रकाश-प्रकाशतयोस्तु मिथोऽनुपरागलक्षणेनासंभेदेन वेदनाभावात् ।

यदपि 'सहोपलम्भनियमात्' इत्याद्युक्तम् । तदपि न युक्तम्, यतः सहोपलम्भो युगपदुपलम्भः, क्रमेणोपलम्भाभावः, एकोपलम्भो वाभिप्रेतः ? । आद्ये, बुद्धचित्तसन्तानान्तरचित्तानां सहोपलम्भनियमेऽपि तदभेदाभावेन व्यभिचारः । यत्तु– "यो हि ज्ञानोपलम्भ एव ज्ञेयोपलम्भः, ज्ञेयोपलम्भ एव च ज्ञानोपलम्भः स युगपदुलम्भनियमोऽभिधीयते' इति धर्मोत्तरानुसारिणः समाधानम्, बुद्धज्ञाने च नायं नियमः, पृथक् संतानान्तरैः स्वचित्तसंवेदनादिति । तत्र 'यज्ज्ञेयं यज्ज्ञानोपलम्भनियतसहोपलम्भं तत् तज्ज्ञानाभिन्नम्' इत्यर्थे पारमार्थिकज्ञाने सांवृतज्ञेयाभेदसाधने बाधात्, 'यज्ज्ञेयोपलम्भो यज्ज्ञानोपलम्भसहभावनियतः स तज्ज्ञानाभिन्नः' इत्युक्तौ च पूर्वोक्तदोषानतिवृत्तेः, यदीयत्वस्यापि व्याप्तौ निवेशे च बुद्धचित्तस्य संतानान्तरग्राहित्ववदभेदं विनापि कयाचित् प्रत्यासत्त्या ज्ञेयग्राहित्वोपपत्तावप्रयोजकत्वम्, तदग्राहित्वे च तस्य सार्वज्ञ्यानुपपत्तिः, विशुद्धज्ञानत्वेनैव तस्य गलितग्राह्य-ग्राहकाकारकलङ्कत्वात् सर्वज्ञत्वम्' इति कश्चित् । तदसत्, सर्वाग्रहे सर्वज्ञतापदार्थस्यैवाघटमानत्वादिति न किञ्चिदेतत् । द्वितीये, तुच्छस्य तस्य न प्रतीतिः । तृतीये च साध्याविशेषः । किञ्च, एकान्तैक्ये सह-

शब्दार्थानुपपत्तिरिति न किञ्चिदेतत् ।

एवं च 'नीलमहं वेद्मि' इत्यत्र कर्म-कर्तृ-भावप्रत्ययस्याविद्यकत्वं परास्तम्, बाधाभावात्, अन्यथा नीलादिप्रत्ययानामपि तथात्वापत्त्या शून्यतायां पर्यवसानप्रसङ्गात् । न च 'स्वातन्त्र्योपलम्भो बाधकः' इत्युक्तं युक्तम्, 'नीलमहं वेद्मि' इति परस्परोपरागेणैव प्रतीतेः । न च समकालयोर्भिन्नकालयोर्वा ग्राह्य-ग्राहकभावासंभवात् 'अर्थाग्राहि ज्ञानम्' इति युक्तम्, अनुमानोच्छेदप्रसङ्गात्, तत्रापि लिङ्गा-ऽनुमानयोः कार्यकारणभावे उक्तविकल्पदोषानतिवृत्तेः । एतेन 'नीलादि ज्ञानम्, ज्ञानकार्यत्वात्, उत्तरज्ञानवत्' इत्यपि निरस्तम्, अनुमानस्यापि लिङ्गजन्यत्वेनोत्तरलिङ्गक्षणवल्लिङ्गतापत्तेः, उपादान-निमित्तशक्तिस्वभावभेदाभ्यां समाधानस्यापि तुल्यत्वात् ।

एवं च 'यया प्रत्यासत्त्या ज्ञानं स्वरूपं गोचरयति तयैव चेदर्थम्, तदा तयोरैक्यापत्तिः; अन्यया चेत्, स्वभावद्वयापत्तिः, तदपि चापरेण स्वभावद्वयेन, तदपि चान्येन तेन ग्राह्यमित्यनवस्था, स्वसंविदितस्यासंविदितरूपायोगात्' इत्यपि निरस्तम्, लिङ्गस्य समानक्षणानुमानकरणेऽप्यस्य पर्यनुयोगस्य समानत्वात् । लिङ्गं तदुभयकरणैकस्वभावं चेत् । 'ज्ञानमपि स्व-परग्रहणैकस्वभावम्' इति स्वीकारे कस्तव कर्णशूलनिवारणोपायः ? । एवं ज्ञानाद् ग्रहणक्रियाया अर्थान्तरत्वा-ऽनर्थान्तरत्वपक्षदोषेऽप्यनुमाने लिङ्गादुत्पत्तेस्तत्पक्षदोषतौल्यं विभावनीयम् ।

परमार्थतो लिङ्गं नानुमानकारणम्, व्यवहारात्तु तथेष्यत इति चेत् । अर्थस्यापि तत एव ज्ञानग्राह्यत्वं किं नेष्यते ? । व्यवहाराप्रामाण्याल्लिङ्गमप्यनुमानकारणं तत्त्वतो नेष्यत एव, ग्राह्य-ग्राहकभाववत् कार्यकारणभावस्यापि निषेधात्, समारोप-

व्यवच्छेदकरणात् त्वनुमानं प्रमाणमिष्यत इति चेत् । न, तत्र समारोपव्यवच्छेदस्य तन्मते कथमपि कर्तुमशक्यत्वात्, नाशस्य निर्हेतुकत्वाभ्युपगमात्, तत्कारणानां सामर्थ्येऽसामर्थ्ये वा तदुत्पत्तिप्रतिबन्धस्यापि वक्तुमशक्यत्वात्;

"यस्य शक्तिरशक्तिर्वा या स्वभावेन संस्थिता । नित्यत्वादचिकित्स्यस्य कस्तां क्षपयितुं क्षमः ? ॥१॥"

इति स्वयमेवाभ्युपगमात् । न चानुमानसहायस्य प्राक्तनसमारोपक्षणस्योत्तरसमारोपक्षणानन्तरजननासमर्थक्षणजननाद् द्वितीयक्षणे कारणाभावादेव समारोपानुत्पत्तेरनुमानप्रामाण्यम्; लिङ्गा-ऽनुमानयोरिव पूर्वोत्तरसमारोपक्षणयोर्हेतुफलभावाभावात्, न्यायस्य समानत्वात् ।

यदपि 'पूर्वदृष्टैकत्वगतेरयोगाद् नानुभवात् प्रागर्थसिद्धिः' इत्यभिहितम्, तत्रापि न सम्यगवहितम्, प्रत्यभिज्ञयैव तदेकत्वावगतेः । न च 'सोऽयमिति नैकं ज्ञानम्' इत्युक्तं युक्तम्, प्रत्यक्षत्वजातिवादिनां तदैक्यासंगतावप्यस्माकं स्वरूप इवेदमंशेऽपि स्पष्टतया प्रत्यक्षत्वेऽपि तदुपयोगसामान्ये विलक्षणक्षयोपशमबलायातप्रत्यभिज्ञात्वाविरोधात्, 'इदं पश्यामि' इतिवत् 'तमिमं प्रत्यभिजानामि' इत्यनुभवात् । न चैवं "स्पष्टं प्रत्यक्षम्"[1] इति लक्षणातिव्याप्तिः, बहिर्विषयसामान्ये स्पष्टताया लक्षणघटकत्वात्, 'बहिरर्थग्रहणापेक्षया हि' इत्याकरस्वारस्याविरोधादित्यन्यत्र विस्तरः । यदप्यर्थं विनापि स्वापादाविव जाग्रद्दशायां भानमुक्तम्, तसिद्धमसिद्धेन साधयतः स्वस्य महामोहमग्नतां व्यञ्जयति, न हि स्वप्नादावप्यर्थं विना भानं भवादृशं

१ प्रमाणनयतत्त्वालोकालङ्कारे २।१।

विना स्वीकुरुतेऽन्यः कश्चित्, अनुभूतस्यैव रथादेस्तदा सन्निहितत्वेन दोषमहिम्ना भानात्, असदाकारस्यैव जनने च वासना शशविषाणमपि किं न जनयेत्? । न ह्यत्र न पर्यनुयोग इति राज्ञामाज्ञा । 'प्रतिनियतशक्तिविशेषश्चाविद्यायामेव, न शशविषाणे' इत्यत्र श्रद्धामात्रमेव शरणम् ।

यदपि 'प्रागसत्त्वे तु दर्शनमेव मानम्' इति । तदपि न पेशलम्, तद्रूपेणानिश्चयात्, अन्यथा संशयायोगात् । यदपि 'स्व-परदृष्टनीलयोर्भेदाद् न साधारणं नीलं ग्राह्यतयाभिमतं सिद्ध्यति, किन्तु ग्राहकत्वाभिमतमेव तद् युक्तम्' इति । तदप्यसत्, विना साधारणतां परदृष्टे नीलेऽनुमानस्यैवानवतारात् । न हि धूमेऽप्यसाधारणवह्निना समं व्याप्तिग्रहोऽस्ति । न चागृहीतव्याप्तिकमनुमाने विषयीभवितुमर्हतीति । एतेन '

"लिङ्गस्याव्यभिचारस्तु धर्मिणान्यत्र गृह्यते । तत्र प्रसिद्धं तद्युक्तं धर्मिणं गमयिष्यति ॥ १ ॥"

इति वह्निविशिष्टदेश एवानुमेयः' इति दिङ्नागोक्तमपास्तम्, असाधारणेन तेनापि समं व्याप्त्यग्रहात् । नन्वेवं सुखादिकमपि साधारणं स्यादिति चेत् । स्यादेव तिर्यक्सामान्येन । एवं नीलादिसाधारण्यं न दोषायेति चेत् । न, 'इदं देवदत्तदर्शनविषयः, देवदत्तप्रवृत्तिविषयत्वात्' इत्यूर्ध्वतासामान्येनापि साधारण्यासिद्धेः, क्षणभङ्गस्य निरस्तत्वात्, निरसिष्यमाणत्वाच्च ।

यदपि 'चिद्रूपत्वस्यापरोक्षरूपस्य नीलादिसाधारण्याज्ज्ञानवद् न ग्राह्यत्वम्' इति । तदप्यवद्यम्, स्फुरद्रूपत्वेनापरोक्षत्वे वह्न्यादेरपि तथात्वे प्रत्यक्षा-ऽनुमानविभागव्याघातात् । तत्त्वतस्तदविभागाद् न दोष इति चेत् । नील-पीताद्याकाराणामपि

कथं तत्त्वतो विभागः ?। प्रतिभासभेदादिति चेत् । प्रत्यक्षा-ऽनुमानयोरपि किं न विशदाविशदप्रतिभासभेदः ?। नीलाद्याकारव्यतिरेकेण तत्र वैशद्याद्याकाराननुभवाद् न तद्भेद इति चेत् । न, प्रदीर्घाध्यवसाये तदनुभवस्याबाधितत्वात् ; क्षणिकाध्यवसाये तु प्रतिनियतैकाकारानुभवस्यापि दुर्घटत्वात् । एवं च 'यदवभासते तज्ज्ञानं, यथा सुखादिकम्' इत्यनुमानमपि निरस्तम् , सुखादीनां सर्वथा ज्ञानाभिन्नत्वाभावेन दृष्टान्तासिद्धेश्च । न च 'सुखादयो ज्ञानात्मकाः, ज्ञानाभिन्नहेतुजत्वात्' इत्यतः सुखादीनां ज्ञानात्मकतासिद्धिः, कुम्भादिभङ्गजस्य शब्दस्य कपालखण्डादिना तुल्यहेतुजत्वेऽप्यतद्रूपत्वेन व्यभिचारात् , सुखादीनां विशिष्टादृष्टविपाक-स्रग्-वनितादिनिमित्तजन्यत्वेन सर्वथा ज्ञानाभिन्नहेतुजत्वाभावाच्च; अन्यथा विभिन्नस्वभावत्वानुपपत्तेः । न च तदसिद्धिरेव, सुखादेराह्लादनाद्याकारत्वात् , ज्ञानस्य च प्रमेयानुभवस्वभावत्वात् ; तदुक्तम्– "सुखमाह्लादनाकारं विज्ञानं मेयबोधनम्" इति । न च ज्ञानक्षणोपादानत्वादुत्तरज्ञानक्षणवत् सुखादीनां ज्ञानाभिन्नत्वम् , आत्मद्रव्योपादानत्वात् तेषाम् । न खलु पर्यायाणां पर्यायान्तरोत्पत्तावुपादानत्वं क्वचिद् दृष्टम् , द्रव्यस्यैवान्तर्बहिर्वोपादानत्वोपपत्तेः । तदुक्तम्–

"व्यक्ताव्यक्तात्मरूपं यत् पौर्वापर्येण वर्तते । कालत्रयेऽपि तद् द्रव्यमुपादानमिति स्मृतम् ॥ १ ॥ " इति ।

'यदि च सुखादयो ज्ञानात् सर्वथाऽप्यभिन्नाः, तर्हि तद्वदेवैषामप्यर्थप्रकाशकत्वं स्यात्, न चात्र तदस्ति, सुखादीनामपि स्वज्ञानप्रकाश्यत्वेन बहिरर्थाविशिष्टत्वात्' इति देवसूरिप्रभृतयः । अन्ये तु–'सुखादीनामहङ्कार-क्रोधादिवदन्तर्मुखत्वेऽपि विभिन्नकर्मजत्वात् ज्ञानभिन्नत्वम्' इत्यभिमन्यन्ते ।

यदपि घटादेर्ज्ञानाकारत्वेऽपि 'भूतले न घटः' इत्यादेर्नियताधाराधेयभावकल्पनाबीजसाम्राज्याद् वारणमकारि । तदप्यसत्, आधारा-ऽऽधेयाभ्यां कथंचिदपृथग्भूतस्याधाराधेयभावस्याबाधितानुभवसिद्धत्वेनाकाल्पनिकत्वात्; अन्यथा नीलादावप्यनाश्वासात्। यदपि 'अर्थाभावेऽपि धियामन्तर्बहिर्विभागः स्वरूपभेदादेव' इति भणितम्, तदपि न तथ्यम्, व्यक्तिभेदस्यातिप्रसङ्गित्वात्, जातिभेदस्य चानभ्युपगमात्। न चान्तर्बहिर्विभागो मिथ्या, सुख-नीलाद्यनुभवानामन्तर्बहिर्भावस्यागोपालाङ्गनं प्रसिद्धत्वात्। एतेनाहमिदमाकारभेदव्याख्यानमपि सुप्रत्याख्यातम्, अहमाकारस्य शरीरालम्बनत्वे 'इदं गौरम्' इत्यनुपपत्तेः, निरालम्बनत्वे च भ्रान्तत्वापत्तेः, दानाद्याकारकालेऽहमाकारानुपपत्तेश्च। न चेदंताया अन्यस्या अनुपपत्तेर्ज्ञानाकारमात्रत्वं युक्तम्, प्रत्यक्षसमानकालीनार्थपर्यायविशेषरूपत्वात् तस्याः, अनन्तधर्मात्मकवस्त्वभ्युपगमे दोषलेशस्याप्यभावादिति न किञ्चिदेतत्।

इत्थं विलक्षीभूतस्य तूष्णींभावमुपेयुषः। योगाचारस्य योगाय च्छलमद्य विजृम्भते ॥ १ ॥ १२ ॥

प्रकृतमेव भावयन्नाह—

**घटादिज्ञानमित्यादिसंवित्तेस्तत्प्रवृत्तितः। प्राप्तेरर्थक्रियायोगात्स्मृतेः कौतुकभावतः ॥१३॥**

घटादिज्ञानमित्यादिसंवित्तेः– 'घटमहं जानामि' इत्याद्यन्तर्बहिर्मुखसांशानुभवात्, विमुखज्ञानमात्रस्यावेदनात्, अनुभवापलापे निराकारस्यैव दर्शनस्य सिद्धेः, आकारव्यवस्थायाः कल्पनयोपपत्तेरतिप्रसङ्गाद् न ज्ञानमात्रं जगत्। तथा, तत्प्र-

प्रवृत्तितः– तत्र घटादावेव प्रवृत्तेः, बहिरर्थाभावे तु बहिष्प्रवृत्तिर्न स्यात्। तथा, प्राप्तेः– घटज्ञानात् प्रवृत्तस्य घटोपलम्भात्। एतेन 'घटाकारज्ञानस्य स्वभावतो घटप्रवृत्तिहेतुत्वात् शुक्तौ रजतज्ञानादिव बहिष्प्रवृत्तिः' इति निरस्तम्, प्रवृत्तिसंवादा-ऽसंवादनिर्वाहार्थं प्राप्या-ऽप्राप्यघटविषयकज्ञानभेदस्वीकारस्यावश्यकत्वात्। अथ प्राप्तिरपि प्रवृत्तस्य सतो घटोपलम्भ एव, तथा च घटप्राप्तौ सत्यघटाकारज्ञानस्य हेतुत्वाद् न दोष इति चेत्। न, सत्यघटज्ञानोत्तरं घटभङ्गेऽपि तत्प्राप्तेः प्रसङ्गात्, मम[1] त्वर्थासंनिधानाधीनत्वात् तदप्राप्तेः। न च तवापि[2] घटाभावज्ञानात् तदप्राप्तिः, तदज्ञानेऽपि तत्र प्राप्तेरयोगात्। न च घटाकारज्ञानमात्रात् तत्प्राप्तिः, भूतले घटज्ञानात् पर्वते तत्प्राप्तिप्रसङ्गात्। न च विशिष्टज्ञानं तवास्ति। न चागृहीतासंसर्गकज्ञानद्वयं प्रापकम्, भ्रमादपि प्राप्तिप्रसङ्गात्, सत्यत्वस्य चार्थाभावेऽव्यवस्थानात्। तथा, अर्थक्रियायोगात्– जलानयनादिसिद्धेः। यदि च ज्ञानाकार एव घटो जलानयनसमर्थः स्यात् तदा घटो बुद्ध्वैव जनो जलमानयेत्, इति हता देवानांप्रियेण कुम्भकारादीनामाजीविका!। 'घटप्रवृत्त्याख्यज्ञानं घटानयनाख्यज्ञानजनकम्' इति पुनरर्थे विज्ञप्तिरिति नामान्तरकरणं प्रतारकस्यायुष्मतः। तथा, स्मृतेः– गृहीतस्य घटादेः 'स घटः' इति स्मरणात्, उपलक्षणमेतत् 'सोऽयं घटः' इति प्रत्यभिज्ञायाः, निरूपिततत्त्वमेतत्, कौतुकभावतो बुभुत्सादिरूपकौतुकयोगात्। न चासत्यर्थे तुरङ्गशृङ्गादाविव बुभुत्सादिकमिति ॥ १३ ॥

उक्तमेव विपक्षे दोषं सूत्रयति—



१ जैनस्य। २ योगाचारस्य।

ज्ञानमात्रे तु विज्ञानं ज्ञानमेवेत्यदो भवेत्। प्रवृत्त्यादि ततो न स्यात्प्रसिद्धं लोक-शास्त्रयोः १४

ज्ञानमात्रे तु जगत्यभ्युपगम्यमाने, 'विज्ञानं ज्ञानमेव घटादि' इत्यदो भवेत्– इत्येतत् स्यात्, परिच्छेद्यान्तराभावात्। ततो लोक-शास्त्रयोः प्रसिद्धं प्रवृत्त्यादि– घटार्थि-स्वर्गार्थियत्नादि, न स्यात्– उक्तरीत्या नोपपद्येत ॥ १४ ॥

अस्तु तर्हि घटादिग्रहणमित्यत आह—

तदन्यग्रहणे चास्य प्रद्वेषोऽर्थेऽनिबन्धनः। ज्ञानान्तरेऽपि सदृशं तदसंवेदनादि यत् ॥१५॥

तदन्यग्रहणे च– ज्ञानान्यघटादिग्रहणे चाभ्युपगम्यमाने, अस्य– ज्ञानस्य, अर्थे प्रद्वेषः– अनभ्युपगमलक्षणः, अनिबन्धनः– निर्निमित्तः, यद्– यस्मात्, ज्ञानान्तरेऽपि– सन्तानान्तरवृत्तिज्ञानेऽपि, तदसंवेदनादि– विज्ञानान्तरासंवेदनादपि तत्सत्तादि, तुल्यम्– अर्थेऽपि तुल्यसमर्थनम्, अनुपलभ्यमानस्यासत्त्वे संतानान्तरचित्तस्यापि तथात्वप्रसङ्गात्। यदुपलभ्यमानं यथा नोपलभ्यते तत् तथा नास्ति, उपलभ्यमानं च नीलादि बाह्यत्वेन नोपलभ्यत इति तथा नास्तीति चेत्। न, एवं हि नीलाद्याकाराणामद्वयत्वेनाननुभूयमानानां तथात्वेनाभावप्रसङ्गात्। गृहीतेऽपि तस्मिन् निरंशत्वाद्वयबोधरूपे भ्रान्तिबीजानुगमनाद् न यथाबोधमध्यवसायो जायत इति गृहीतमपि तदगृहीतकल्पम्, इत्यननुभूतिरद्वयस्य तत्त्वत इति चेत्। न, एवं द्वयानुभवमनुभूयमानमपलप्याननुभूयमानाद्वयानुभवसमर्थनेऽतिप्रसङ्गात्; नीलाद्याकारबोधादप्यन्यरूप एव बोधोऽनुभूयते,

१ ज. 'लभमा'। २ ज. 'यायानु'।

नीलादिभ्रान्तिबीजानुगमनात्तु न यथाबोधमवसीयत इत्यस्यापि वक्तुं शक्यत्वात् । तत्राद्वयत्वमनुमास्यत इति तु न पेशलम्, स्व-परदृष्ट्योरिव साक्षात्क्रियमाणा-नुमीयमानयोर्भेदेन तत्राद्वयत्वानुमानस्य वक्तुमशक्यत्वात्; अन्यथा नीलादौ बाह्यत्वानुमानस्यापि सुवचत्वादिति न किञ्चिदेतत् ॥ १५ ॥



यश्चार्थे युक्त्ययोग उक्तस्तस्य ज्ञानेऽपि तुल्यतामुपदर्शयन्नाह—

**युक्त्ययोगश्च योऽर्थस्य गीयते जातिवादतः। ग्राह्यादिभावद्वारेण ज्ञानवादेऽप्यसौ समः॥१६॥**

युक्त्ययोगश्चार्थस्य यः परैर्महता प्रबन्धेन, जातिवादतः– अनुभवविरुद्धवादेन, गीयते– स्वेच्छामात्रेण प्रकल्प्यते, असौ– युक्त्ययोगः, ग्राह्यादिभावद्वारेण– वक्ष्यमाणलक्षणेन ग्राह्यादिभावविकल्पेन, ज्ञानवादेऽपि समः, तत्पक्षनिराकरणव्यापाराविशेषात् ॥ १६ ॥

अत्र ज्ञानं हि ग्राह्यमात्रस्वभावम्, ग्राहकमात्रस्वभावम्, उभयस्वभावम्, अनुभयस्वभावं वा स्यात्[1], इति विकल्प्याह–

**नैकान्तग्राह्यभावं तद् ग्राहकाभावतो भुवि। ग्राहकैकान्तभावं तु ग्राह्याभावादसंगतम्॥१७॥**

नैकान्तग्राह्यभावं तत्– न सर्वथा ग्राह्यस्वभावं ज्ञानम्। कुतः? इत्याह– भुवि– पृथिव्याम्, ग्राहकाभावतः– ग्राहकस्वभावस्य कस्याप्यभावात्। संबन्धिशब्दश्चायं न संबन्ध्यन्तरेण विना प्रवर्तत इति। अत एव, ग्राहकैकान्तभावं तु– सर्वथा



१ 'विज्ञानं यत्स्वसंवेद्यं' इति दशम्या कारिकया।

ग्राहकस्वभावं तु, ग्राह्याभावादसंगतम्- अयुक्तमेतत्। न हि ग्राहकस्वभावाज्ज्ञानाद् ग्राह्यं किञ्चिदन्यदस्ति, यदपेक्षया नियतस्वभावतां बिभृयादिदमिति भावः ॥ १७ ॥

## विरोधान्नोभयाकारमन्यथा तदसद्भवेत्। निःस्वभावत्वतस्तस्य सत्त्वं युज्यते कथम् ?।१८।

विरोधात्- एकस्य ग्राह्य-ग्राहकाकारोभयविमिश्रणेन द्वित्वविरोधात्, नोभयाकारं- न ग्राह्य-ग्राहकोभयस्वभावम्। अन्यथा- अनुभयस्वभावत्वपक्षे, तत्- ज्ञानम्, स्वभावविशेषनिषेधेन निःस्वभावत्वतः- स्वभावसामान्याभावात्, असद् भवेत्। एवं तस्य शशविषाणस्येव सत्ता कथं युज्यते ?। अत्र केचित् ताथागताश्चित्रप्रतिभासामेकां बुद्धिं स्वीकुर्वन्तस्तृतीयपक्षे विरोधमाहुः, तदुक्तम्—

"नीलादिश्चित्रविज्ञाने ज्ञानोपाधिरनन्यभाक्। अशक्यदर्शनस्तं हि पतत्यर्थे विवेचयन् ॥ १ ॥"

अत्र देवेन्द्रव्याख्या- 'चित्रज्ञाने हि यो नीलादिः प्रत्यवभासते, ज्ञानोपाधिर्ज्ञानविशेषणोऽनुभवस्वात्मभूत इति यावत्, स एवैकोऽनन्यभाक्- तज्ज्ञानस्वभावत्वादन्यमर्थं ज्ञानवदेव न भजते। तादृशश्च सन्नसौ तच्चित्रदर्शनप्रतिभासी तदन्यपीतादिप्रतिभासविवेकेन न केवलः शक्यते द्रष्टुम्, तस्मिन् प्रतिभासमाने सर्वेषामेव तज्ज्ञानतया तदन्येषामपि नियोगतः प्रतिभासनात्। तस्माद् यदैवमेकं नीलादिकमाकारं तदन्येभ्यः पीतादिभ्यः 'अयं नीलः' इति ज्ञानान्तरेण विवेचयति प्रमाता, तदैव तथा विवेचयन्नसौ न तज्ज्ञानमामृशति, अतद्रूपत्वात्तस्य, किं तर्हि ?, अर्थे पतति-अर्थ एव तज्ज्ञानं प्रवृत्तं भवतीत्यर्थः। तस्मा-

देकस्मिन्नप्याकारे प्रतिभासमाने सर्वमाभाति, न वा किञ्चिदपि, इत्यशक्यो विवेकतो दर्शने नीलादिप्रतिभास इति। न च चित्रताया बहिरर्थधर्मता, नीलादीनामवयविभेदा-ऽभेदाभ्यामनुपपत्तेः । सुखादीनां च ज्ञानाभिन्नहेतुजत्वादपि ज्ञानात्मकत्वम्' इति ।

तदसत्, बाह्यस्यापि द्रव्यस्य चित्रपर्यायात्मकस्याशक्यविवेचनत्वेन चित्रैकरूपताया दुरपह्नवत्वात्, अन्तर्विज्ञानात् तदाकाराणामिव बहिष्पुद्गलादे रूपादीनामशक्यविवेचनत्वात्। मणिसमूहे 'पद्मरागोऽयम्' 'चन्द्रकान्तोऽयम्' इत्यादिपृथग्बुद्धिरूपं विवेचनमस्त्येवेति चेत् । नीलाद्याकारैकज्ञानेऽपि 'नीलाकारोऽयम्' 'पीताकारोऽयम्' इति विवेचनं किं न प्रतीतम् ? । चित्रप्रतिभासकाले नेदृग् विवेचनम्, पश्चात्तु नीलाद्याभासानि ज्ञानान्तराण्यविद्योदयाद् विवेकेन प्रतीयन्त इति चेत् । तर्हि मणिराशिप्रतिभासकाले पद्मरागादिविवेचनमपि नास्त्येव, पश्चात्तु तत्प्रतीतिरविद्योदयादिति शक्यं वक्तुम् । मणिराशेर्देशभेदेन विभजनं विवेचनमिति चेत् । न, एकमण्याकारेषु तदभावात्। मणेरेकस्य खण्डने तदाकारेषु देशविभजनमस्त्येवेति चेत् । ज्ञानस्याप्येकस्य बुद्ध्या खण्डने तदस्त्येव। बुद्ध्यन्तराण्येव तत्खण्डने तानीति चेत् । पराण्येव मणिखण्डने मणिखण्डद्रव्याणि तानीति समानम् । चित्रज्ञानं विवेचयन्नर्थे पततीति तदविवेचनमिति चेत् । एकत्वपरिणतद्रव्याकारान् विवेचयन् नानाद्रव्याकारेषु पततीति तदविवेचनं तुल्यम् । एतेन 'ग्राहकैकस्वरूपस्य नानाग्राह्याकारकृतवास्तवैकत्वाविघातोऽविवेचनम्' इत्यपि निरस्तम्, वस्तुत एकस्य बाह्यस्य नानाधर्मकृतैकत्वाविघाततौल्यात्, शब्दपरावृत्तिमात्रत्वात् । एतेन विविच्यमानस्यावास्तवानेकत्वपरिग्रहोऽपि व्याख्यातः । बाह्यस्य विवेच्यमानस्यानुपपद्यमानत्वाज्ज्ञानस्यैव चित्ररूपतेति चेत् । न, बाह्यस्यात्यन्तानुपलभ्य[1]स्य स्वभा-

१ ख. ग. घ. च. 'भ्यस्व' ।

वस्य तथात्वासंभवात्, ज्ञानस्यैवोपलम्भयोग्यस्य तथात्वसंभवात् । ज्ञानाकारस्य बाह्यत्वेनाभिमतस्य दृश्यत्वाद् विवेचनोपपत्तिरिति चेत् । तद्विवेचनात् तस्यैवानुपपत्तिः, अन्यस्य वा ? । आद्ये, ज्ञानस्य नीलाद्याकारत्वायोगाच्चित्रैकरूपताव्याघातः । द्वितीये, अतिप्रसङ्गः, अन्यविवेचनादन्यानुपपत्तौ त्रैलोक्यस्याप्यभावप्रसङ्गात् ।

किञ्च, बाह्यस्य विवेचनं ज्ञानम्, इति कथं तेन तदसत्त्वव्यवस्था, अतिप्रसङ्गात् ? । भ्रान्तं तदिति चेत् । न, तस्याप्रमाणत्वात् । भ्रान्तिरप्यर्थसंबन्धतः प्रमेति चेत् । न, असता सह संबन्धाभावात् । असंबन्धेऽपि दोषमहिम्ना तज्ज्ञानसंभवाद् न दोष इति चेत् । तथापि भ्रान्तं ज्ञानं भ्रान्तत्वेन प्रतिसंधीयमानमर्थासत्त्वव्यवस्थापकम्, अन्यथा शुक्तौ रजतज्ञानं प्रागेव रजतासत्त्वं व्यवस्थापयेत्; तत्त्वप्रतिसंधानं चाऽसदर्थाकारत्वप्रतिसंधानेन, ततश्च तदसत्त्वव्यवस्थेत्यन्योन्याश्रयः । किञ्च, नीलादेरवयविनोऽवयविबुद्ध्या विवेच्यमानस्यासत्त्वम्, अवयवबुद्ध्या वा ? । नाद्यः, तद्बुद्ध्या तत्सत्त्वस्यैव ग्रहात् । न द्वितीयः, अवयवबुद्धेरवयविनः सत्त्वं विधातुं निषेद्धुं वाऽसमर्थत्वात् । यापि नीलादेरवयविभेदा-ऽभेदाभ्यामनुपपत्तिरुक्ता; साप्ययुक्ता, कथञ्चिद्वैरूप्यस्वीकारे दोषाभावात्; अन्यथा तवाप्येतद्दोषानतिवृत्तेः, एकज्ञानस्य नानाकारतादात्म्ये प्रत्याकारं भेदप्रसङ्गात्, नानाकाराणां चैकज्ञानतादात्म्ये नानात्वव्याहतेः । सुखादीनां ज्ञानात्मकत्वं तु प्रागेव पराहतमिति नेदानीं प्रयास इति ॥१८॥

परः स्वाभिप्रायमाह—

**प्रकाशैकस्वभावं हि विज्ञानं तत्त्वतो मतम् । अकर्मकं तथा चैतत्स्वयमेव प्रकाशते ॥१९॥**

प्रकाशैकस्वभावं हि– गगनतलवर्त्यालोककल्पम्, मतम्– इष्टम्, तत्त्वतः–परमार्थतः, अकर्मकम्– विचाराक्षमत्वेन ग्राह्यस्याभावात् तदपेक्षाप्रकल्पितग्राहकत्वाभावात् कर्तृ-कर्म-भावोपरागरहितम्, तदुक्तम्– "परस्परापेक्षया तयोर्व्यवस्थानात्" इति। तथा च– ग्राह्य-ग्राहकाकारासंस्पर्शे च, एतत्– विज्ञानम्, स्वयमेव– स्वसंविदितमेव, प्रकाशते, तदुक्तम्—

"नील-पीतादि यज्ज्ञानाद् बहिर्वदवभासते। तद् न सत्यमतो नास्ति विज्ञानं तत्त्वतो बहिः ॥ १ ॥
तदपेक्षा च संवित्तेर्मता या कर्तृरूपता। साप्यतत्त्वमतः संविदद्वयेति विभाव्यते ॥ २ ॥" इति ॥ १९ ॥

नन्वकर्मको न कश्चित् प्रयोगो दृष्ट इत्यत आह—

**यथास्ते शेत इत्यादौ विना कर्म स एव हि। तथोच्यते जगत्यस्मिंस्तथा ज्ञानमपीष्यताम् ॥**

यथा 'आस्ते' 'शेते' इत्यादौ प्रयोगे, विना कर्म, स एव– आसनादिक्रियोपरक्तो देवदत्तः, तथा– कर्मानुपरागेण, उच्यते, न तु 'कटं करोति' इत्यादाविव कर्मोपरागेण, उपवेशनादिक्रियाणामकर्मकत्वात्, तथा अस्मिन्– जगति, ज्ञानमप्यकर्मकमिष्यताम्, क्रियात्वात्। न चैवं तद्वदेवाकर्मकप्रयोगप्रसङ्गः, [1]अप्रयोगादेवाप्रयोगात्, शब्दानां विकल्पयोनित्वेन वासनासामर्थ्यात् कर्मोपसंदानेनैव 'जानाति' इत्यादिप्रयोगात् ॥ २० ॥

अत्रोत्तरम्—

१ लोके तस्याकर्मकत्वेन प्रयोगाभावादेवाकर्मकत्वेनाप्रयुज्यमानत्वादिति हृदयम्।

उच्यते सांप्रतमदः स्वयमेव विचिन्त्यताम्। प्रमाणाभावतस्तत्र यद्येतदुपपद्यते ॥२१॥

उच्यते सांप्रतम्– अदः– एतत्, अभिनिवेशत्यागेन स्वयमेव विचिन्त्यताम्– आलोच्यताम्, प्रमाणाभावतः, तत्र– अविशिष्टप्रकाशमात्रे विज्ञाने, यद्येतत्– एवं तत्त्वव्यवस्थापनम्, उपपद्यते ॥ २१ ॥

कथं नोपपद्यते ? इत्याह—

एवं न यत्तदात्मानमपि हन्त ! प्रकाशयेत्। अतस्तदित्थं नो युक्तमन्यथा न व्यवस्थितिः।२२।

एवं– गगनतलवर्त्यालोककल्पतायां, प्रकाशैकमात्रस्वभावत्वाद् निर्विषयं, तदात्मानमपि– तत्स्वरूपमपि, न प्रकाशयेत्। अत इत्थं तत्– प्रकाशमात्रं, न युक्तम्, अबुध्यमानस्य बोधरूपत्वायोगात्; अन्यथा– प्रकाशैकमात्रत्वे तस्य, न व्यवस्थितिरकर्मकस्वरूपस्य ॥ २२ ॥

एतदेव समर्थयति—

व्यवस्थितौ[1] च तत्त्वस्य तथाभावप्रकाशकम्। ध्रुवं यतस्ततोऽकर्मकत्वमस्य कथं भवेत् ?॥

१ सर्वत्र मूलादर्शे 'तौ च त' इति पाठेऽपि, टीकाकाराभिप्रायेण 'तौ तत् त' इति युज्यते, 'तद्– विज्ञानम्' इत्यस्य टीकापाठस्यान्यथानुपपद्यमानत्वात्।

व्यवस्थितौ तत्त्वस्य- तत्तथाभावस्य, ध्रुवं- निश्चितम्, तद्- विज्ञानम्, तथाभावप्रकाशकं- व्यवस्थाप्यज्ञानस्याकर्मकप्रकाशमात्रत्वद्योतकम्, यतः- यस्मात्; ततोऽस्य- ज्ञानस्य, अकर्मकत्वं कथं भवेत्, सविषयकत्वस्यैव सकर्मकत्वात्?। न हि शाब्दं सकर्मकत्वमत्र विचार्यत इति ॥ २३ ॥

पराभिप्रायमाशङ्क्य परिहरन्नाह—

**व्यवस्थापकमस्यैवं भ्रान्तं चैतत्तु भावतः। तथेत्यभ्रान्तमत्रापि ननु मानं न विद्यते॥२४॥**

अस्य- व्यवस्थाप्यस्य, एवं व्यवस्थापकम्- प्रकाशमात्रत्वद्योतकं ज्ञानान्तरमस्ति, एतत्तु भावतः-परमार्थतः, तथेति-सविषयकमिति भ्रान्तम्। व्यवस्थाप्यं तु स्वतःस्फुरद्रूपत्वाद् ग्राह्य-ग्राहकभावविनिर्मुक्तत्वात् प्रमाणम्, स्वाविषयकत्वेऽपि परानपेक्षस्फूर्तिकत्वेन स्वसंविदितत्वाव्याहतेः। ज्ञानाकारं वा तद् नीलाद्याकारं वेति चेत्। नीलादिस्वलक्षणाकारमेव, न तु सामान्याकारमिति। नन्वेवमत्रापि- अकर्मकप्रकाशमात्रत्वेऽपि, अभ्रान्तं मानं न विद्यते, सविषयकत्वेनास्यापि भ्रान्तत्वादित्यर्थः ॥ २४ ॥

यदि नामैवं ततः किम्? इत्याह—

**भ्रान्ताच्चाभ्रान्तिरूपा न युक्तियुक्ता व्यवस्थितिः। दृष्टा तैमिरिकादीनामक्षादाविति चेन्न तत्**

भ्रान्ताच्च- व्यवस्थापकात्, अभ्रान्तरूपा व्यवस्थितिरधिकृता, न युक्तियुक्ता- न न्यायोपपन्ना। पर आह- ननु

नायं नियमो यत्- 'भ्रान्तादभ्रान्तव्यवस्थितिर्न' इति, यतस्तैमिरिकादीनां- तिमिरादिदोषवताम्, तज्जनितद्विचन्द्रादिज्ञानाद् भ्रान्तादपि, अक्षादौ- तिमिराद्यक्षदोषादौ, अभ्रान्तव्यवस्थितिर्दृष्टेति चेत्। अत्रोत्तरम्- न तत्- नैतदेवम् ॥ २५ ॥

कथम्? इत्याह—

**नाक्षादिदोषविज्ञानं तदन्यभ्रान्तिवद्यतः। भ्रान्तं तस्य तथाभावे भ्रान्तस्याभ्रान्तता भवेत् ॥**

यतः- यस्मात्, तदन्यभ्रान्तिवत्- द्विचन्द्रादिभ्रमवत्, अक्षादिदोषविज्ञानं- तिमिरादिदोषविज्ञानम्, न भ्रान्तं- किन्त्वभ्रान्तमेव, कार्यलिङ्गकानुमानादिप्रभवत्वात्। विपक्षे बाधकमाह- तस्य- अक्षादिदोषविज्ञानस्य, तथाभावे- भ्रान्तत्वे, भावतोऽक्षादीनां दोषानुपप्लुतत्वात्, भ्रान्तस्य- द्विचन्द्रादिज्ञानस्य, अभ्रान्तता भवेत्- निर्दोषहेतुजत्वादिति भावः ॥ २६ ॥

दोषान्तरमाह—

**न च प्रकाशमात्रं तु लोके क्वचिदकर्मकम्। दीपादौ युज्यते न्यायादतश्चैतदपार्थकम् ॥२७॥**

न च प्रकाशमात्रं तु- सर्वथैकस्वभावमेव, लोके, क्वचित्- अनवलम्बनदीपादौ, न्यायाद् रूपं युज्यते, प्रकाशकत्वेनोपलब्धेः। अतश्चैतत्- विज्ञानाकर्मकत्वकल्पनम्, अपार्थकम्- निष्प्रयोजनम् ॥ २७ ॥

'यथास्ते' इत्यादावाह—

---

१ अत्रैव स्तबके कारिका २०।

**दृष्टान्तमात्रतः सिद्धिस्तदत्यन्तविधर्मिणः । न च साध्यस्य यत्तेन शब्दमात्रमसावपि॥२८॥**

दृष्टान्तमात्रात्– परपरिभाषितात् 'आस्ते' 'शेते' इत्यादेस्तत्र तत्क्रियाकर्तुः, अत्यन्तविधर्मिणः– नानाधर्मानुविद्धात् , न च साध्यस्य– बोधमात्रस्य, सिद्धिः, यत् तेनासावपि– उक्तदृष्टान्तोऽपि, शब्दमात्रं– न तु लक्षणयुक्त इति यत् किञ्चिदेतत् ॥ २८ ॥

अत्रैव प्रधानदोषमाह—

**किञ्च विज्ञानमात्रत्वे न संसारा-पवर्गयोः । विशेषो विद्यते कश्चित्तथाचैतद् वृथोदितम् ॥२९॥**

किञ्च, विज्ञानमात्रत्वे– ज्ञानाद्वयत्वे जगतोऽभ्युपगम्यमाने, संसारा-ऽपवर्गयोर्विशेषः कश्चिद् न विद्यते, ज्ञानमात्रस्योभयदशयोरविशेषात्, अधिकस्यापवर्गे प्राप्यस्याभावात्, भावे वाऽद्वैतव्याघातात् । तथा चैतद् वृथोदितं भवतामागमे ॥ २९ ॥

किम् ? इत्याह—

**'चित्तमेव हि संसारो रागादिक्लेशवासितम् । तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यते' ॥३०॥**

रागादिक्लेशवासितं चित्तमेव हि संसारः, तैर्विनिर्मुक्तं च तदेव– चित्तमेव, 'भवान्तः' इति कथ्यते– 'मोक्षः' इत्युपदिश्यत इति ॥ ३० ॥

१ 'मात्रतः' इति पाठो यदि स्यात, युक्ततरः स्यात, मूलपाठानुरोधात् ।

कथमेतद् वृथा ? इत्याह—

रागादिक्लेशवर्गो यन्न विज्ञानात्पृथग्मतः । एकान्तैकस्वभावे च तस्मिन्किं केन वासितम्? ३१

यद्– यस्मात्, रागादिक्लेशवर्गो विज्ञानात् पृथग्– भिन्नः, न मतः, द्वैतापत्तेः । एकान्तैकस्वभावे च तस्मिन्– विज्ञाने, किं केन वासितम्, वासकाभावात् ? ॥ ३१ ॥

पर आह—

क्लिष्टं विज्ञानमेवासौ, क्लिष्टता तत्र यद्वशात् । नील्यादिवदसौ वस्तु तद्वदेव प्रसज्यते ॥ ३२ ॥

असौ– रागादिक्लेशवर्गः, क्लिष्टं विज्ञानमेव न तु ततो भिन्नः । एवं चाक्लिष्टत्वं क्लिष्टभिन्नत्वं, न तु पृथग्भूत-क्लेशादिराहित्यमिति न दोषः, अक्लिष्टस्य प्राप्यस्य सत्त्वाच्च नापवर्गप्रवृत्त्यनुपपत्तिरित्याशयः । अत्राह– तत्र– संसारिचित्ते, यद्वशात् क्लिष्टता, नील्यादिवत्– नीलीद्रव्याद्युपरागात् पटादिक्लिष्टतावत्, असौ– चित्तक्लिष्टतापादकः, तद्वदेव– ज्ञानवदेव, वस्तु प्रसज्यते– पृथग् वस्त्वापद्यते, क्लिष्टताया उभयजनितत्वादिति भावः ॥ ३२ ॥

तथा,

मुक्तौ च तस्य भेदेन भावः स्यात्पटशुद्धिवत् । ततो बाह्यार्थतासिद्धिरनिष्टा संप्रसज्यते ॥ ३३ ॥

मुक्तौ च तस्य– क्लिष्टतापादकस्य, भेदेन– पृथग्भावेन, भावः स्यात्– स्वरूपाविर्भावलक्षणा शुद्धिः स्यात्। किंवत्? इत्याह– पटशुद्धिवत्– यथा पटादेर्नील्यादिद्रव्यसंसर्गापगमे प्राक्तनस्वरूपाविर्भावस्तद्वदित्यर्थः। यत एवम्; ततो बाह्यार्थतासिद्धिः, अनिष्टा– भवदनभिमता, संप्रसज्यते। तेनाक्लिष्टत्वं क्लेशराहित्यं क्लिष्टभिन्नत्वं वोच्यताम्, नोभयथापि विशेषः, प्रतियोगिनस्तदवच्छेदकस्य वा पृथग्भावावश्यकत्वेऽद्वैतासाम्राज्यात्। 'बाह्यार्थता' इत्यत्र तलः 'तत्स्वभावत्वम्' इत्यादाविव प्रकृत्यर्थमात्रे निरूढलक्षणायामपि तस्याः प्रयोगविशेषनियन्त्रितत्वादत्रासंभवत्प्रसरत्वेऽपि 'सत्पदप्ररूपणता' इत्यादाविवार्षत्वाद् न दोषः। वस्तुतो यथाश्रुतार्थेऽपि नानुपपत्तिः, बाह्यत्वसमानाधिकरणार्थतापादनेऽर्थताया बाह्यत्वसामानाधिकरण्यमात्रस्य फलत आपादनादिति ध्येयम् ॥ ३३ ॥

ननु पटादेः क्लिष्टतावद् न चित्तक्लिष्टता येन तज्जनकबाह्यार्थसिद्धिः स्यात्, किन्त्वन्यथा, इत्याशङ्कते—

**प्रकृत्यैव तथाभूतं तदेव क्लिष्टतेति चेत्। तदन्यूनातिरिक्तत्वे केन मुक्तिर्विचिन्त्यताम्?॥३४॥**

प्रकृत्यैव– स्वभावेनैव, तथाभूतं– क्लिष्टं चित्तं, तदेव क्लिष्टता नातिरिक्तेति न दोषः। अत्रोत्तरम्– तदन्यूनातिरिक्तत्वे– बोधाद् न्यूनस्याधिकस्य वाऽभावे चित्तमात्राच्चित्तभावे सति, केन मुक्तिः, क्लिष्टस्य चित्तस्य स्वभावतस्तथाभूतस्य प्रवाहाविच्छेदायोगादिति भावः ॥ ३४ ॥



१ आवश्यकनिर्युक्तौ पीठिकायां त्रयोदशी गाथा।

ननु स्वभावादपि किञ्चिदेव नीलयादिवत् क्लिष्टं, किञ्चिदेव च प्रदीपादिवदक्लिष्टं चित्तं भविष्यतीत्याशङ्कते—

**असत्यपि च या बाह्ये ग्राह्ये ग्राहकलक्षणे । द्विचन्द्रभ्रान्तिवद् भ्रान्तिरियं नःक्लिष्टतेति चेत् ॥**

असत्यपि बाह्ये ग्राह्ये ग्राहकलक्षणे च परस्परापेक्षाप्रकल्पिता ग्राह्य-ग्राहक-भावावगाहिनी 'नीलमहं वेद्मि' इत्याद्याकारा या द्विचन्द्रभ्रान्तिवद् भ्रान्तिः, इयं– अनुभवसिद्धा, नः– अस्माकं, क्लिष्टता । अत्रोत्तरम्– इति चेत्– यद्येवमुपगम्यते ॥३५॥

**अस्त्वेतत्किन्तु तद्धेतुभिन्नहेत्वन्तरोद्भवा। इयं स्यात्तिमिराभावे न हीन्दुद्वयदर्शनम् ॥३६॥**

अस्त्वेतदापाततः, किन्त्वियं– क्लिष्टता, तद्धेतुभिन्नहेत्वन्तरोद्भवा– क्लिष्टचित्तहेत्वतिरिक्तहेत्वपेक्षा स्यात् , हि– यतः, तिमिराभाव इन्दुद्वयदर्शनं न दृष्टम् , शङ्खपीतिमादिदर्शनहेतुकामलाद्युपलक्षणमेतत् । इत्थं च यथा तिमिरादि एकचन्द्रादिबोधहेतुभ्योऽधिकम् , तथा सत्यैतो बोधहेतोर्बोधमात्रादधिकेन क्लिष्टबोधहेतुना भवितव्यमित्यैदंपर्यम् ॥ ३६ ॥

ननु द्विचन्द्रादिज्ञान उपप्लववासनावत् सकर्मकत्वभ्रान्तावप्यनादिवासना हेतुभूतोक्तैवेति चेत् । सा किं सती, असती वा ? । आद्ये द्वैतापत्तिः । अन्त्ये त्वाह—

**न चासदेव तद्धेतुर्बोधमात्रं न चापि तत् । सदैव क्लिष्टतापत्तेरिति मुक्तिर्न युज्यते ॥३७॥**

१ मुद्रितमूलादर्शे स्वोपज्ञटीकापुस्तके च 'ग्राह्यग्रा' इति पाठः । २ ख.ग.घ.च. 'त्याका' । ३ ज. 'त्यबो' ।

न चासदेव- तुच्छमेव, तद्धेतुः, शशविषाणादेरपि तत्त्वप्रसङ्गात्। अथ सदिवासदपि किञ्चिदेव कस्यचिज्जनकम्, एवं चानाद्यविद्याख्यवासनैव क्लिष्टचित्तजननी, निवर्तते च साऽद्वयतत्त्वज्ञानात्, असतो ज्ञाननिवर्त्यत्वनियमात्, असत्यरजताकारे शुक्तितत्त्वज्ञाननिवर्त्यत्वदर्शनात् । अत एव प्रकाशमात्रमपि संसारदशायामविद्याशक्तिप्राबल्यादन्यथा प्रकाशते, तदाह धर्मोत्तरः— "तस्मादविद्याशक्तियुक्तं ज्ञानमसत्यरूपमादर्शयति, इत्यविद्यावशात् प्रकाशत इत्युच्यते" इत्यनवद्यमिति चेत् । न, अविद्याया इव तन्निवृत्तेरप्यसत्त्वे तन्निवृत्त्या[1] मुक्तस्य पुनः संसारितापत्तेः, सत्त्वे च द्वैतापत्तेः, ज्ञानरूपत्वे च ज्ञानमात्रस्य सर्वदा सत्त्वेन सदा मुक्त्यापत्तेः ।

अस्तु तर्हि प्राच्यः क्लिष्टचित्तक्षण एवोत्तरक्लिष्टचित्तहेतुरित्यत्राह— न चापि बोधमात्रं तदिति तद्धेतुः, सदैव क्लिष्टतापत्तेः, मुक्तिप्राच्यक्षणस्यापि क्लिष्टत्वेनोत्तरक्लिष्टक्षणजननस्वभावत्वात्, इति हेतोः, मुक्तिर्न युज्यते भवताम् । अथ संसारोपान्त्यक्षणेनोत्तरक्लिष्टचित्तक्षणजननासमर्थस्यैवान्त्यक्षणस्य जननाद् न दोष इति चेत् । कुत एतत् ? । स्वभावादिति चेत् । न, मुक्तेः स्वभावत उपपत्तौ तदर्थं प्रवृत्त्यनुपपत्तेः । भ्रमात् प्रवृत्तौ च तदर्थशास्त्रप्रणयनानुपपत्तेः । तस्मात् काल्पनिकीयं मुक्तिः, न तु परमानन्दादिमयीति न किञ्चिदेतत् ॥ ३७ ॥

इदमेवाह—



1 तन्निवृत्त्या- अविद्यानिवृत्तिनिवृत्त्या ।

मुक्त्यभावे च सर्वैव ननु चिन्ता निरर्थिका । भावेऽपि सर्वदा तस्याः सम्यगेतद्विचिन्त्यताम् ॥

मुक्त्यभावे च तपस्विनां सर्वैव चिन्ता– तत्त्वविचारणा, निरर्थिका, सर्वस्या एव तस्यास्तदेकपरमप्रयोजनत्वात् । बोधरूपायास्तस्या मुक्तेः सर्वदा भावेऽपि निरर्थिका चिन्ता, साध्यस्य सिद्धत्वात् । एतत् सम्यग् विचिन्त्यताम् ॥ ३८ ॥

उपसंहरन्नाह—

विज्ञानमात्रवादोऽयं नेत्थं युक्त्योपपद्यते । प्राज्ञस्यापि निवेशो न तस्मादत्रापि युज्यते ॥३९॥

[1]विज्ञानमात्रवादो यद्– यस्मात्, इत्थम्– उक्तरीत्या, युक्त्या– न्यायेन विचार्यमाणः, नोपपद्यतेः, तस्मादत्रापि– विज्ञानवादेऽपि, प्राज्ञस्यापि– कल्पनानिपुणस्यापि पुंसः, निवेशः– कदाग्रहः, न युज्यते ॥ ३९ ॥

हंसः किं सद्मपद्मं श्रयति परिगलत्पर्णमर्णः पिबेद् वा चाण्डालानां पिपासाकुलितमतिरपि श्रोत्रियः किं कदाचित् ? ।
दुष्टानां हन्त ! गोष्ठीमनुसरति रसात् सज्जनः किं गतार्थो त्याज्यस्तज्जैनतर्कैरयमिह निहतो विज्ञ ! विज्ञप्तिवादः ॥ १ ॥

अभिप्रायः सूरेरिह हि गहनो दर्शनततिर्निरस्या दुर्धर्षा निजमतसमाधानविधिना ।
तथाप्यन्तः श्रीमन्नयविजयविज्ञांह्रिभजने न भग्ना चेद् भक्तिर्न नियतमसाध्यं किमपि मे ॥ २ ॥

---

१ मुद्रितमूलपुस्तके स्वोपज्ञटीका-मूलयोश्च 'स्याभिनि' इति पाठः । २ ख. ग. घ. च. 'ज्ञा' ।

यस्यासन् गुरवोऽत्र जीतविजयप्राज्ञाः प्रकृष्टाशया भ्राजन्ते सनया नयादिविजयप्राज्ञाश्च विद्याप्रदाः।
प्रेम्णां यस्य च सद्म पद्मविजयो जातः सुधीः सोदरस्तेन न्यायविशारदेन रचितस्तर्कोऽयमभ्यस्यताम् ॥ ३ ॥

इति पण्डितश्रीपद्मविजयसोदरन्यायविशारदपण्डितयशोविजयविरचितायां स्याद्वादकल्पलताभिधानायां
शास्त्रवार्तासमुच्चयटीकायां पञ्चमः स्तबकः।



॥ अर्हम् ॥

# अथ षष्ठः स्तबकः ।

दृप्यद्यन्नखदर्पणप्रतिफलद्वक्त्रेण वृत्रद्रुहा शोभा कापि दशावतारसुगभा लब्धाऽनुजस्पर्धिनी ।
मुक्तिद्वारकपाटपाटनपटू दौर्गत्यदुःखच्छिदौ तावंह्री शरणं भजे भगवतो वीरस्य विश्वेशितुः ॥ १ ॥
यत्स्नात्रनीरेण नरायणस्य जरा भटानां न पराभवाय । जाग्रत्प्रभावं भगवन्तमेतं शङ्खेश्वराधीश्वरमाश्रयामः ॥ २ ॥

'सर्वमेतेन' इत्याद्यतिदिष्टमभिधित्सुराह—

**यच्चोक्तं पूर्वमत्रैव क्षणिकत्वप्रसाधकम् । नाशहेतोरयोगादि तदिदानीं परीक्ष्यते ॥१॥**

यच्च पूर्वमत्रैव– सुगतसुतवार्तायामेव, नाशहेतोरयोगादि क्षणिकत्वप्रसाधकं "तेयाहुः क्षणिकं सर्वम्" इत्यादिकारिकयोक्तं पूर्वपक्षिणा, तदिदानीमवसरप्राप्ततया परीक्ष्यते ॥ १ ॥

---

१ चतुर्थस्तबकेऽन्तिमा कारिका । २ चतुर्थे स्तबके कारिका २ ।

तत्र प्रथमहेतुं परीक्षितुं तदाशयमाविष्करोति—

**हेतोः स्यान्नश्वरो भावोऽनश्वरो वा विकल्पयंत् । नाशहेतोरयोगित्वमुच्यते तन्न युक्तिमत् ॥**

'हेतोः सकाशाद् नश्वरो भावः स्यात्, अनश्वरो वा ?' इति विकल्पयत्– विकल्पयुगलमुत्थापयत्, नाशहेतोरयोगित्वं क्षणिकत्वप्रसाधकमुच्यते परेण । आद्ये, स्वतो नश्वरे नाशहेतूनामकिञ्चित्करत्वात्; अन्त्येऽपि स्वभावस्य पराकर्तुमशक्यत्वेन तथात्वात् । न चोत्पादेऽप्ययं पर्यनुयोगः– स्वभावतो ह्युत्पत्तिस्वभाव उत्पत्तिहेतुव्यापारवैयर्थ्यात्, अनुत्पत्तिस्वभावस्य च वक्तुमशक्यत्वादिति वाच्यम्; उत्पत्तिस्वभाव इत्यस्याऽभूत्वा भवनलक्षणोत्पत्तिरेव स्वभावो यस्येत्यर्थेऽभूतस्य भवनायोगेनोक्तदोषानिवृत्तावपि, उत्पत्तौ सत्तायां स्वभाव आभिमुख्यलक्षणो यस्य नियतहेत्वन्तरभाविन इत्यर्थे दोषाभावात्, तथैव तद्व्यपदेशोपपत्तेः; द्वितीयविकल्पस्य चानभ्युपगमादेव, अनुत्पत्तिस्वभावस्य सर्वसामर्थ्याभावलक्षणस्यानुत्पाद्यत्वादेव । न ह्युत्पत्तिहेतवोऽभावं भावीकुर्वन्तीत्यभ्युपगम्यते, 'असदुत्पद्यते' इत्यस्य 'उत्पद्यमानं प्राग् नास्ति' इत्येवार्थात् । प्राग्नास्तितायां च न भावाश्रयाणां विकल्पानां शशविषाण इव तीक्ष्णतादिगोचराणां संभवः । न च 'भावधर्मत्वाविशेषाद् नाशवदुत्पत्तेरपि किं न निर्हेतुकत्वम् ?' इति शङ्कनीयम्, उदयापवर्गिणो भावाद् व्यतिरिक्तस्य नाशस्याभावात्, तस्य च स्वहेतोरेव तथाभूतस्योत्पन्नत्वेन तद्धर्मस्यानिमित्तत्वाभावात्; केवलं तमस्य स्वभावं न विवेचयति मन्दधीः, दर्शनपाटवाभावात्, विसदृशकपा-

१ मुद्रिते 'यन्' पाठः ।

लादिक्षणोत्पत्तावेव भ्रान्तिकारणविगमेन प्रत्यक्षनिबन्धनतन्निश्चयोत्पादात्, विषयरूपदर्शनेऽप्यतत्कारिपदार्थसाधर्म्यविप्रलब्धस्य प्राक्कारणशक्त्यविवेचनेऽपि विकारदर्शनानन्तरं तन्निश्चयवदिति। अत्रोत्तरम्– तद् न युक्तिमत्– एतदुक्तं न युक्तम् ॥२॥

कुतः? इत्याह—

**हेतुं प्रतीत्य यदसौ तथानश्वर इष्यते। यथैव भवतो हेतुर्विशिष्टफलसाधकः ॥३॥**

हेतुं– मुद्गरादिकम्, प्रतीत्य, यदसौ– भावः, तथानश्वरः– प्रायोगिकादिनाशापेक्षया नश्वरस्वभावः, इष्यते। निदर्शनमाह– यथैव भवतः– सुगतसुतस्य, हेतुः– घटादिः, विशिष्टफलसाधकः– मुद्गरादिकं प्रतीत्य विजातीयकपालादिक्षणजननस्वभाव इष्टः। एतेन'

"स्वभावोऽपि स तस्येत्थं येनापेक्ष्य निवर्त्यते। विरोधिनं यथान्येषां प्रवाहो मुद्गरादिकम् ॥ १ ॥"

इति समाधानं न युक्तम्, यतो नास्माभिर्विशरारुक्षणव्यतिरिक्तोऽपरः प्रवाहोऽभ्युपगम्यते, यः स्वनिवृत्तावकिञ्चित्करं मुद्गरादिकमपेक्षते, किन्तु परस्परव्यतिरिक्ताः पूर्वापरक्षणा एव, ते च स्वरसत एव विरुध्यन्त इति न क्वचिदकिञ्चित्करापेक्षा निवृत्तिः' इत्युक्तावपि न क्षतिः, विलक्षणहेतुं प्रतीत्य नश्वरस्वभावस्य तस्य तं प्रतीत्य विलक्षणजननस्वभावत्वाभ्युपगमसमसमाधानत्वात् ॥ ३ ॥

एतदेव भावयन्नाह—

**तथास्वभाव एवासौ स्वहेतोरेव जायते । सहकारिणमासाद्य यस्तथाविधकार्यकृत् ॥४॥**

तथास्वभाव एवासौ घटादिः, स्वहेतोरेव सकाशाज्जायते, यः सहकारिणं– मुद्गरादिकम्, आसाद्य, तथाविधकार्यकृत्– विजातीयकपालादिकार्यकारी । तदपेक्षस्यैव हि घटक्षणस्य समानक्षणान्तरोत्पादनासमर्था-ऽसमर्थतरा-ऽसमर्थतमादिक्षणान्तरोत्पादनप्रक्रमेण घटसंततिनिवृत्तौ कपालादिक्षणोत्पत्तेरभ्युपगमात् ॥ ४ ॥

उपचयमाह—

**न पुनः क्रियते किञ्चित्तेनास्य सहकारिणा । समानकालभावित्वात्तथाचोक्तमिदं तव ॥५॥**

न पुनस्तेन मुद्गरादिना सहकारिणा, तस्य– घटस्य, क्रियते किञ्चित्– अतिशयाधानम् । कुतः ? इत्याह– द्वयोः सहकार्य-सहकारिणोः, समानकालभावित्वात्– एककालोत्पत्तिकत्वात्, अतिशयस्य च सहकार्यगतस्य तत्स्वरूपत्वात्, कार्यकारणभावस्य च पौर्वापर्यनियतत्वात् । संवादमाह– तथाचोक्तमिदं– वक्ष्यमाणम्, तव स्वशास्त्रे ॥ ५ ॥

**'उपकारी विरोधी च सहकारी च यो मतः । प्रबन्धापेक्षया सर्वो नैककाले कथंचन ॥६॥'**

उपकारी– क्षीरादिर्बालादेः, विरोधी– नकुलादिः सर्पादेः, सहकारी– मुद्गरादिः कपालादेः, यो मतः– इष्टः, स प्रबन्धापेक्षया– सन्तानापेक्षया, सर्वः– निरवशेषः, नैककाले कथंचन, बालादिसत्ताया एव बालाद्युपकारकत्वात् । स्वसभाग- ॥१९०॥

क्षणोत्पत्तिर्हि उपकारः, स्वविसभागक्षणोत्पत्तिश्च विरोधः, स्वोत्पत्तिरेव च सहकार इति ॥ ६ ॥

तथैव चोक्तमन्यत्—

**'सहकारिकृतो हेतोर्विशेषो नास्ति यद्यपि । फलस्य तु विशेषोऽस्ति तत्कृतातिशयाप्तितः ७'**

सहकारिकृतो हेतोः— घटादेः, विशेषो नास्ति, यद्यपि— समानकालत्वाद् द्वयोः, तथापि फलस्य तु— कलापादेः, तत्कृतातिशयाप्तितः— सहकारिकृतातिशयाप्तेर्विलक्षणक्षणाभिन्नायाः, विशेषोऽस्ति विद्यत एव, तदपेक्षयैव घटक्षण-मुद्गरक्षणयोः सहकार्य-सहकारिभावादिव्यवहारात् ॥ ७ ॥

इदं चोक्तं यथोक्तस्वभावाभ्युपगमं विना न निर्वहेदित्याह—

**न चास्यातत्स्वभावत्वे स फलस्यापि युज्यते । सभागक्षणजन्माप्तेस्तथाविधतदन्यवत् ॥८॥**

न चास्य हेतोः— घटादेः, अतत्स्वभावत्वे— मुद्गरादिकमवाप्य कपालादिजननास्वभावत्वे, सः— विशेषो विलक्षणक्षणात्मा, फलस्यापि— कपालादेः, युज्यते । कुतः ? इत्याह— सभागक्षणजन्माप्तेः— घटादिक्षणोत्पत्तिप्रसङ्गात् । किंवत् ? इत्याह— तथाविधतदन्यवत्— घटादिजननस्वभाववद्घटादिवत् । यद्यप्यत्र 'अन्त्यघटक्षणः कपालादिजननास्वभावः स्याद् घटक्षणजनकः स्यात्' इति नापादनं संभवति, पटादौ व्यभिचारात्; तथाप्यन्यक्षणजननहेत्वभावादर्थात् तदापत्तिः; असमर्थत्वादन्त्यघटक्षणो नाग्रिमसमानक्षणारम्भक इति मुद्गराद्यभावे समानक्षणान्तरोत्पादकापरसमर्थजननं, तत्संनिधाने त्वसमर्थक्षणान्तरजननमिति

व्यवस्थाया मुद्गरादिना तत्सामर्थ्यविघातं विना वक्तुमशक्यत्वात्; अन्यथा तत्रापि समर्थक्षणान्तरजननस्वभावस्य कारणपरम्परायातस्यानपायात्, स्वहेतुतोऽसमर्थजननस्वभावस्यैव तस्योत्पत्तौ च प्रथमत एव संतत्युच्छेदप्रसङ्गात् ।

अथ स्वत एव निवर्तमाना घटक्षणजननी शक्तिः, प्रवर्तमाना वा कपालक्षणजननी शक्तिरवर्जनीयसंनिधिकं मुद्गरादिकं नापेक्षत इति चेत् । साधु बुद्धं बुद्धदर्शनम्, येनैवं नियतान्वय-व्यतिरेकदर्शनावगणनादग्न्यादौ पाकाद्यर्थिनामपि नियमतः प्रवृत्तिमपोहितुं व्यवसितोऽसि । तस्माद् मुद्गरादिना घटसामर्थ्याव्याहतावयं तर्कः- अन्त्यघटक्षणो यद्यव्याहतघटजननस्वभावः स्यात् समानक्षणोपहितः स्यादिति । अथ घटाकुर्वद्रूपत्वादेवान्त्यघटक्षणो घटं न कुरुते, कपालकुर्वद्रूपत्वात्तु कपालं कुरुत इति चेत् । तथापि मुद्गरादिसंनिधावेव तत्कुर्वद्रूपमिति "तद्धेतु०" इति न्यायात् स्थिरोऽपि तत्संनिहित एव कपालादिजननस्वभावो नश्वरस्वभावो वा घटोऽस्त्विति किमनुपपन्नम्? ॥ ८ ॥

एवं चान्यदप्यसमीक्षिताभिधानं परस्येति दर्शयन्नाह—

**अस्थानपक्षपातश्च हेतोरनुपकारिणः । अपेक्षायां नियुङ्क्ते यत्कार्यमेतद् वृथोदितम् ॥९॥**

अस्थानपक्षपातश्च- अयमयुक्तापेक्षात्मा, हेतोः- घटादिजनकस्य, यदनुपकारिणो मुद्गरादेरपेक्षायां नियुङ्क्ते कार्यम्- घटादि, तदपेक्षस्यैव नश्वरत्वाभ्युपगमात् । तदुक्तम्- "हेतवश्चानुपकार्यपेक्षायां नियुञ्जानाः स्वकार्यम्, आत्मनोऽस्थानपक्षपातित्वमाविष्कुर्युः" इति । एतद् वृथोदितं शुभगुप्तादिना ॥ ९ ॥

कथम् ? इत्याह—

**यस्मात्तस्याप्यदस्तुल्यं विशिष्टफलसाधकम्। भावहेतुं समाश्रित्य ननु न्यायान्निदर्शितम्**

यस्मात् तस्यापि– परस्यापि, एतत्– अस्थानपक्षपातापादनम्, तुल्यं, विशिष्टफलसाधकं– विजातीयकपालादिक्षण-जननस्वभावम्, भावहेतुं– घटादिकं, समाश्रित्य, ननु– निश्चितम्, न्यायाद् निदर्शितम्– तुल्ययोग-क्षेमतयोपदर्शितम्। एत-दुक्तं भवति– अस्थानपक्षपातित्वं यदि दण्डादिनाऽनश्वरस्वभावस्यैव घटस्योत्पादितत्वाद् नश्वरस्वभावस्य तस्य मुद्गरादिनैव जनितत्वाद् घटमात्रे दण्डादिनां व्यभिचारित्वम्, तदा तवापि तस्य दण्डादिनाऽसमानक्षणाजननस्वभावस्यैवोत्पादितत्वा-दतादृशस्य तस्यान्यत एवोत्पत्तेस्तुल्यम्। अथ तत्रान्येन तज्जननस्वभावतैव कृतेत्यदोषः, तदा ममापि तन्निवृत्तिस्वभाव-तैव कृतेत्यदोष इति। एवं 'स्वकार्यकारित्वमेव मुद्गरादेर्न तु स्वकारित्वम्' इत्ययमपि परिहारस्तुल्य इत्यादि सूक्ष्मधिया-ऽभ्यूहनीयम् ॥ १० ॥

इत्थं चान्यदप्यत्र दूषणं न युक्तमित्याह—

**एवं च व्यर्थमेवेह व्यतिरिक्तादिचिन्तनम्। नाश्यमाश्रितस्य नाशस्य क्रियते यद्विचक्षणैः**

एवं च नाश्यं घटादिकमाश्रित्य नाशस्य विचक्षणैर्व्यतिरिक्तादिचिन्तनं यत् क्रियते, तदपीह– नाश्यविचारे, व्यर्थम्, भावतुल्यत्वात्; तथाहि– परेषामिदमाकूतं यद्– नाशो नाश्यादतिरिच्यते, नवा ? । अन्त्ये भाव एव नाशः, स च सहेतुक

एवेति न परेषां साध्यसिद्धिः। आद्ये, अग्न्यादेरवस्तुरूपध्वंसोपगमेऽपि काष्ठादेस्तदवस्थत्वात् पुनरुपलब्धिप्रसङ्गः, वस्तुरूपतदुपगमे च काष्ठादेरङ्गारादिकमेव ध्वंसो नापर इत्यत्र किं निबन्धनम्?। तस्मिन् सति तन्निवृत्तिरिति चेत्। न, अन्यनिवृत्त्यनभ्युपगमेनैतदर्थाभावात्। किञ्च, एवं भावनिवृत्तावभिधेयायां भावान्तरविधानमभिहितमित्यप्रस्तुताभिधानम्। किञ्च, भावान्तरस्य प्रध्वंसत्वे तद्विनाशाद् घटाद्युन्मज्जनप्रसक्तिः। न च कपालादेर्भावरूपतैव ध्वस्ता न त्वभावरूपतेति नायं दोष इति वाच्यम्, भावान्तररूपस्याभावस्य तदभावे प्रच्युतत्वात्। किञ्च, अभावस्तुच्छैकरूपतयैवानुभूयते, न तु भावरूपानुविद्धः, तस्य च कार्यत्वे हेत्वनन्तरं भवितृत्वेन भावत्वं स्यात्, अभावात्मकतयैवासौ भवतीति च व्याहतमेतत्।

अपि च, यदि हेतुमान् विनाशस्तदा तद्भेदादात्मभेदं किं नानुभवेत्?। दृष्टो हि घटादीनां कार्यरूपाणां कारणभेदाद् भेदः। ध्वंसस्य त्वग्न्यभिघातादिहेतुभेदेऽपि न भेदोऽनुभूयते, सर्वत्र विकल्पज्ञाने तुल्यरूपस्यैवाभावस्यावभासनात्। किञ्च, अस्य हेतुमत्त्वे विनाशप्रसङ्गो दुरुद्धरः, तद्विनाशहेत्वदर्शनात्। तदविनाशे बुद्ध्यादीनामप्यनाशप्रसङ्गः। कार्यत्वेन प्रतियोगितया नाशहेतुत्वाद् बुद्ध्यादीनां विनाशः कल्प्यत इति चेत्। तुल्यमिदमन्यत्र। भावकार्यत्वेनैव तथात्वाद् न दोष इति चेत्। न, भावत्वप्रवेशे गौरवात्, प्रागभावासंग्रहाच्च। यस्तु घटनाशनाशादिधारामेव घटविरोधिनीमङ्गीकुरुते, तस्य 'घटनाशो नष्टः' इत्यपि धीर्दुर्निवारा। तस्माद् मुद्गरादेः कपालाद्युत्पत्तावन्तरा कस्यचिद् ध्वंसस्यादर्शनादकिञ्चिद्रूपतयानुभूयमानोऽसन्नेवाऽयम्, न तु सहेतुकः, अनन्ततद्धेत्वादिकल्पने गौरवाच्चेति।

१ कपालादेरभावरूपताया अभावे स्वीक्रियमाण इत्यर्थः।

अत्र ब्रूमः— अङ्गारादिसदंशानुविद्धासदंशरूपायाः काष्ठादिनिवृत्तेरभ्युपगमे किं दूषणम् ? । 'काष्ठादेरङ्गारादिकमेव ध्वंसो नापरः' इत्यत्र किं निबन्धनम् ? इत्यत्र 'अङ्गारादिरूपध्वंसे काष्ठादिनिरूपितत्वे किं प्रमाणम् ?' इति प्रश्ने तत्प्रतियोगिकत्वेनानुभवस्यैवोत्तरत्वात् । 'अङ्गारादेस्तद्ध्वंसत्वे किं मानम् ?' इति प्रश्ने च 'तास्मिन् सति तन्निवृत्तिः' इत्येवोत्तरम्, 'अङ्गारादिकं काष्ठध्वंसः, काष्ठानुपलब्धिनियतोत्पत्तिककाष्ठपरिणामत्वात्, काष्ठचूर्णवत्' इत्यनुमानात् । अन्यस्य तथात्वं किं न भवति ? इत्यत्र च स्वभाव एव नियामकः । कपालस्वरूपानुभवे घटनिवृत्त्यननुभवाद् न तद्रूपा तन्निवृत्तिरिति चेत् । न, कपालोत्पादस्याऽप्येवमतद्रूपत्वापत्तेः । कपालाद्यभिन्नायां निवृत्तौ, उत्पत्ताविव घटीयत्वं न स्यादिति चेत् । न, 'घटादुत्पन्नः' इत्युत्पत्तौ घटावधिकत्ववद् 'घटस्य नाशः' इत्यत्र निवृत्त्यंशेऽपि घटप्रतियोगिकत्वेऽविरोधात्, एकान्त एव तत्प्रसरात् । एवं चाप्रस्तुताभिधानमपि निरस्तम्, निवृत्त्यंशस्याधिकत्वात् । एतेन भावान्तररूपत्वे ध्वंसस्य तन्नाशे प्रतियोग्युन्मज्जनमपि निरस्तम्, कपालद्रव्यस्य भावात्मकरूपान्तरपरिग्रहेऽपि निवृत्त्यात्मकरूपान्तरापरिग्रहात् । कपालात्मना भङ्गुरं कपालं घटनिवृत्त्यात्मनापि किं न भङ्गुरम् ? इति चेत् । कपालैक्योपलम्भजनकदोषात्मना निवर्तमाना कपालक्षणसंततिर्मृदैक्योपलम्भजनकदोषात्मनापि किं न निवर्तते ? इति वक्तव्यम् । सा संततिः प्रदीर्घेति चेत् । निवृत्तिसंततिरपि तथा । इयांस्तु विशेषः— यदियं निवृत्त्यात्मना प्रत्यभिज्ञा विशेषात्मकमृदविखण्डैकतां, प्रतिकपालादिविशेषं च भावात्मना सखण्डैक-
३३ तामनुभवतीति । कपालात् पृथक्कृत्य 'घटनाशं कपालं नष्टं' इतिवद् 'घटनाशो नष्टः' इति किं न प्रयोगः ? इति चेत् । न यथा मृद्द्रव्यं नष्टमिति । विवक्षाभेदेन तत्र योग्या-योग्यत्वमिति चेत् । तुल्यमेतदन्यत्र ।

यत्तु– 'तुच्छैकरूपतयाऽनुभूयतेऽभावः' इत्युक्तम् । तदनभ्युपगमोपहतम्, उभयरूपस्यैव तस्यानुभवात् । अभावांशानुभवकाले भावत्वेनाननुभूयमानत्वं तुच्छत्वमिति चेत् । भावांशानुभवकालेऽभावत्वेनाननुभूयमानत्वमपि किं न तथा ? । शशविषाणादिवद् निःस्वभावतयाऽनुभूयमानत्वं तुच्छत्वं चेत् । न, असिद्धेस्तत्तुल्यत्व उत्पादादियोगितयाऽननुभवप्रसङ्गात् । किञ्च, अयमीदृशः सन् मुद्गरादिव्यापारानन्तरमेव कथमुपलभ्यते, नान्यदा ? इति । असतोऽपि शुक्तौ रजतादेः शुक्तिभ्रमदशायामेव दर्शनवदसन्नपि घटध्वंसः परैस्तद्धेतुत्वाभिमतानां समवधान एवोपलभ्यत इति चेत् । नन्वेवमनन्यथासिद्धान्वय-व्यतिरेकप्रतियोगिमुद्गरादिजन्यत्वस्य घटध्वंसेऽपलापे घटादेरप्यसत एव दण्डादिसमाजे भानोपपत्तावपलापप्रसङ्गः । न चेष्टापत्तिरत्र योगाचारस्येति वाच्यम्, ज्ञानाकारस्यापि घटादेरसत एव तदा स्फुरणापत्तेः । घटाद्यर्थिप्रवृत्त्याद्यन्यथानुपपत्त्या घटादेः सत्त्वोपगमे घटध्वंसाद्यर्थिप्रवृत्त्यन्यथानुपपत्त्या घटध्वंसादेरपि सत्त्वं किं नेष्यते ? ।

यदपि 'भवितृत्वेऽभावस्य भावत्वं स्यात्' इति । तदप्यवद्यम्, अभावप्रत्ययविषयत्वेन भवितृत्वेऽप्यभावरूपत्वात्; यथा भवितृत्वेनाविशेषेऽपि घट-पटयोः 'घटोऽयम्' 'पटोऽयम्' इति विभिन्नधीविषयत्वाद् विशेषस्तथा भवितृत्वेनाविशेषेऽपि भावा-ऽभावयोः 'अस्ति' 'नास्ति' इति धीविषयत्वेन विशेषसंभवात् । यदपि 'अभावात्मकतयैव चासौ भवतीति च व्याहतमेतत्' इति । तदपि तुच्छम्, अभावपदस्याभवनरूपक्रियार्थत्वाभावात्, भावत्वस्य भावपदस्येवाभावत्वस्यैवाभावपदस्य प्रवृत्तिनिमित्तत्वात्; अन्यथा 'भावो भवति' इति 'भवनं भवति' इतिवद् निराकाङ्क्षं स्यात् । अथ 'नास्ति' इति धीविषयत्वादेव शशविषाणादिवद् न नाशः कार्य इति चेत् । 'अस्ति' इति धीविषयत्वादाकाशादिवद् घटादेरपि न तथा

स्यात्; हेत्वन्वय-व्यतिरेकानुविधानं चोभयत्र तुल्यमिति।

अथ मुद्गराद्यन्वय-व्यतिरेकानुविधानं कपालजनन उपक्षीणम्, यथा नैयायिकादीनां भूतले घटानयनं भूतलघटसंयोगजनने, तस्य प्राग्वर्तिघटात्यन्ताभावानाशकत्वात्; घटानुपलम्भस्तु तदा स एव स्वरसतो न भवतीति हेतोरिति चेत्। न, 'स न' इत्यत्र नञ्शब्दवाच्यस्यैवाभावस्याभ्युपगमात्। किञ्च, तदा 'घटो न भवति' इत्येतावन्मात्रं न प्रतीयते, किन्तु 'घटो नष्टः' इति। यदपि 'यदि हेतुमान् विनाशस्तदा तद्भेदादात्मभेदं किं नानुभवेत्?' इत्याद्युक्तम्। तदप्ययुक्तम्, उत्पादेऽप्यस्य पर्यनुयोगस्य समानत्वात्। उत्पत्त्याश्रयविशेषादुत्पादविशेष इष्ट एवेति चेत्। नाशाश्रयविशेषाद् नाशविशेषोऽपीष्यताम्। उत्पादाद्यन्वितधर्मिण एव स्वहेतुजन्यत्वादुत्पादस्य स्वातन्त्र्येणाजन्यत्वाद् न विशेष इति चेत्। नाशाद्यन्वितकपालादिधर्मिण एव मुद्गरादिजन्यत्वाद् नाशस्यापि तथात्वाद् न विशेष इति तुल्यम्।

किञ्च, हेतुभेदकृतो व्यक्तिविशेषो नाशेऽभ्युपगम्यत एव, जातिरूपविशेषस्तु भावधर्मत्वादेव तत्र नास्तीति किमपरमापाद्यते?। न हि विजातीयहेतुजन्यत्वं कार्यवैजात्यप्रयोजकम्, एकत्रापि घटे दण्डादिनानाजातीयहेतुजन्यत्वेन नानाजातीयत्वप्रसङ्गात्, किन्तु तज्जातीयसामग्रीजन्यत्वं तज्जातीयत्वप्रयोजकमिति। तथा च घट-पटादीनां विजातीयानां स्वस्वसामग्रीप्रयोज्यवैजात्यसंभवेऽपि नाशानां सर्वेषामेकरूपाणां स्वस्वसामग्रीभेदजन्यत्वेऽप्येकत्वं न विहन्यत इति। एतेन 'प्रतिपुरुषं कर्मणां विशेषात् तत्क्षयस्यापि जन्यस्य सतो विशेषसंभवात् प्रतिपुरुषं मुक्तिवैचित्र्यं स्यात्' इति निरस्तम्, अविशिष्टस्वभावस्य हेतुसहस्रेणापि विशेषयितुमशक्यत्वात्, विभिन्नसामग्रीजन्यतायां च प्रतियोगिभेदस्यैव निवेशनीयत्वादिति विपाश्चित-

मन्यत्र। एतेन 'तद्रूपावच्छिन्नजन्यतारूपं स्वातन्त्र्यं नोत्पादे नाशे च तदव्याहतम्, घटध्वंसार्थितया प्रवृत्तेः' इत्युक्तावपि न क्षतिः।

यदपि 'किञ्च, अस्य हेतुमत्त्वेऽपि नाशप्रसङ्गो दुरुद्धरः' इत्याद्यभाणि। तदपि न निरवद्यम्, समुदयकृतादिनाशविशेषस्य नष्ट इति व्यवहारहेतोर्विशेषसामग्र्यभावादेवाभावात् 'त्रैलक्षण्यरूपवस्तुलक्षणघटकस्य तु कस्यचिद् नाशस्य तत्राभ्युपगमादेव। न च कपालादिनाश एव तदाश्रितघटनाशादिनाशहेतुरिति वाच्यम्, अस्माकमाश्रयनाशस्याश्रितनाशाहेतुत्वात्, घट-तद्रूपादीनामेकदैव नाशात्, तत्तन्नाशविशेषे तत्तच्छक्तिविशेषस्यैव नियामकत्वात्। किञ्च, कार्यत्वेन नाशहेतुत्वमप्याकाशादीनां नाशानुपपत्त्यैव कल्प्यते, अन्यथा सत्त्वेनैव तत्त्वं स्यात्; तथाच नाशस्यापि तदनुपपत्त्या नाशेतरत्वमपि निवेश्यताम्, गौरवस्य प्रामाणिकत्वादिति। यदपि मुद्गरादेः कपालाद्युत्पत्तावन्तरा ध्वंसादर्शनमुक्तम्। तदनुक्तोपालम्भमात्रम्। तस्माद् नाकिञ्चिद्रूपो नाश इति सिद्धः सहेतुकोऽयम् ॥ ११ ॥

अत्रैव दोषान्तरमाह—

**किञ्च निर्हेतुके नाशे हिंसकत्वं न युज्यते। व्यापाद्यते सदा यस्मान्न कश्चित्केनचित्क्वचित् ॥**

किञ्च, निर्हेतुके नाशेऽभ्युपगम्यमाने, हिंसकत्वं न युज्यते कचित् कस्यचित्। कथमित्याह— यस्माद्धेतोः, सदा,

१ उत्पाद-व्यय-ध्रौव्यस्वरूपम्। २ आर्हतानाम्।

केनचित्- लुब्धकादिना, क्वचित्- अरण्यादौ, कश्चित्- शूकरादिः, न व्यापाद्यते, अहिंसादशायामिव हिंसादशायामपि प्राणिक्षणानां स्वत एव नश्वरत्वात्, सांवृतनाशस्य च खपुष्पवदनुत्पाद्यत्वादिति भावः ॥ १२ ॥

पराभिप्रायमाशङ्क्य परिहरति—

**कारणत्वात्स संतानविशेषप्रभवस्य चेत्। हिंसकस्तन्न संतानसमुत्पत्तेरसंभवात् ॥१३॥**

सः- लुब्धकादिः, संतानविशेषप्रभवस्य- शूकरादिविसभागसंतानोत्पादस्य, कारणत्वाद् हिंसकः- शूकरादिव्यापादकः, चेत्- यद्येवं मन्यसे। तन्न- तदयुक्तम्, संतानसमुत्पत्तेस्त्वदभिप्रायेणासंभवात् ॥ १३ ॥

असंभवमेव विवृणोति—

**सांवृतत्वाद् व्ययोत्पादौ संतानस्य खपुष्पवत्। न स्तस्तदधर्मत्वाच्च हेतुस्तत्संभवे कुतः? ॥**

सांवृतत्वात्- अपरमार्थसत्त्वात्, व्ययो-त्पादौ- नाशो-त्पत्ती, संतानस्य, खपुष्पवत्- वियत्कुसुमस्येव, न स्तः- न संभवतः, नाशो-त्पादयोर्वस्तुधर्मत्वात्; तदधर्मत्वाच्च- संतानाधर्मत्वाच्चोत्पादस्य, तत्संभवे- संतानविशेषप्रभवे, हेतुः कुतः?- न कुतश्चिदित्यर्थः ॥ १४ ॥

पुनः पराशयमाशङ्क्य परिहरति—

**विसभागक्षणस्याथ जनको हिंसको, न तत् । स्वतोऽपि तस्य तत्प्राप्तेर्जनकत्वाविशेषतः ॥**

अथ विसभागक्षणस्य– शूकरक्षणात् शशक्षणादेः, जनकः, हिंसको लुब्धकक्षणः, चरमशूकरक्षणात् शशक्षणसमानकालभावी तज्जनितकर्मवासनया चाग्रिमलुब्धकक्षणेषु तत्कर्मविपाकफलोपभोग इति भावः । न तत्– नैतदेवम् । कुतः ? इत्याह– स्वतोऽपि– स्वात्मनोऽपि, तस्य– हिंस्यस्य शूकरक्षणादेः, तत्प्राप्तेः– हिंसकत्वप्राप्तेः । कथम् ? इत्याह– जनकत्वाविशेषतः– लुब्धकक्षणस्येव शूकरक्षणस्यापि जनकत्वमात्रेऽविशेषात् । निमित्तकारणतया विसभागक्षणजनकत्वं हिंसकत्वम्, शूकरक्षणस्तूपादानतया तज्जनक इति न दोष इति चेत् । न, आत्महिंसासंग्रहानुरोधेन हिंसकतायां जनकताविशेषस्यानुपादानात् । तथाप्यत्र परहिंसकत्वे विशेषोऽयमुपादीयत इति चेत् । किं ततः ?– एवमपि शूकरक्षणादेरात्महिंसकताकृतदोषापत्तेर्वज्रलेपायमानत्वादिति भावः ॥ १५ ॥

इहैवाक्षेप-परिहारावाह—

**हन्म्येनमिति संक्लेशाद्धिंसकश्चेत्प्रकल्प्यते । नैव त्वन्नीतितो यस्मादयमेव न युज्यते॥१६॥**

'हन्म्येनम्' इति संक्लेशाद् हेतोः, हिंसकः प्रकल्प्यते लुब्धकादिक्षणः, क्लिष्टविज्ञानक्षणस्यैव क्लिष्टकर्मक्षणहेतुत्वात्– मृगमव्यापादयन्नपि 'मृगं हन्मि' इति संक्लेशपरिणतः पापेन बध्यते, यतमानश्च विचरन्ननाभोगाद् घ्नन्नपि कथंचिल्लघुप्राणिनं न पापेन बध्यते त्वसंक्लिष्ट इत्यन्वय-व्यतिरेकदर्शनात् । न चैवं व्यापादिता-ऽव्यापादितमृगयोः संक्लिष्टक्षणयोरविशिष्टकर्मार्जन- ॥१९५॥

प्रसङ्गः, तत्सामर्थ्यविशेषेण कार्यविशेषात् । हिंसकत्वव्यवहारस्तु तथाविधविकल्परूपः सांवृतं नाशमादायैवेति न दोष इति चेत् । नैतदेवम्, यस्मात् त्वन्नीतितः– त्वदभ्युपगतन्यायात्, अयमेव– संक्लेश एव, न युज्यते ॥ १६ ॥

कथम्? इत्याह—

**संक्लेशो यद् गुणोत्पादः स चाक्लिष्टान्न केवलात् । न चान्यसचिवस्यापि तस्यानतिशयात्ततः**

यद्– यस्मात्, संक्लेशो गुणोत्पादः– क्लिष्टचित्तोत्पादः, स च केवलात्– अन्यसहकारिरहितात्, अक्लिष्टादुपादानात्, न भवति, ततोऽसंक्लिष्टचित्तस्यैवोत्पादात् । न चान्यसचिवस्यापि– हिंस्यादिसहकारिसमवहितस्यापि; तस्य– उपादानस्य, अनतिशयात्, ततः– अन्यसहकारिणः सकाशात् संक्लेश इति योगः, अनतिशयस्य समानासमानकालकरणायोगात् ॥१७॥

पराशयमाशङ्क्य परिहरति—

**तं प्राप्य तत्स्वभावत्वात्ततः स इति चेन्ननु । नाशहेतुमवाप्यैवं नाशपक्षेऽपि न क्षतिः॥१८॥**

तं– हिंस्यादिकं, प्राप्य, तत्स्वभावत्वात्– संक्लेशजननस्वभावत्वात् तदुपादानस्य, ततः– सहकारिणः, सः– संक्लेश इति चेत् । नन्वेवं नाशहेतुं– मुद्गरादिकम्, अवाप्य, एवं– स्वभावकल्पनायां, अनाशपक्षेऽपि न क्षतिः– न विरोधः, तस्यापि तं प्राप्य स्वनिवृत्तिस्वभावत्वात् । न च वस्तुमात्रजनका एव नाशजनका इति नाशजनने न सहकार्यनुप्रवेशापेक्षा, असंक्लेशमात्रजनका एव च न संक्लेशजनका इति संक्लेशे जननीये तदुपादानक्षणानां तदपेक्षा, शिंशपाक्षणानामिव चलशिंशपायां जननीयायां नोदना-

द्यपेक्षेति वाच्यम्; लुब्धक-शिंशपामात्रजनकानामेवासंक्लेशा-ऽचलशिंशपाजनकत्वाभावेन तत्रापि सहकार्यन्तरापेक्षावश्यकत्वात्, आर्थिकत्वस्यापि विनिगमात्, सहकारिप्रसूतविशेषस्यापि क्षणपरम्परासंक्रान्तस्यापरित्यागे विशेषान्तरानुपादानप्रसङ्गात्, तत्परित्यागश्चान्यत एव। इति सिद्धं 'नाशहेतुता' इत्याम्रेडिततत्त्वमेतत् ॥ १८ ॥

विकल्पमात्रेण नाशकत्वोच्छेदे[1] जनकत्वस्याप्युच्छेद इति प्रतिबन्द्या केचित् समादधत इत्याह—

**अन्ये तु जन्यमाश्रित्य सत्स्वभावाद्यपेक्षया। एवमाहुरहेतुत्वं जनकस्यापि सर्वथा ॥१९॥**

अन्ये त्वाचार्याः, एवं–नाश्यमाश्रित्य नश्वरस्वभावत्वाद्यपेक्षावत्, जन्यं– कार्यम्, आश्रित्य, सत्स्वभावाद्यपेक्षया– हेतुत्वेनाभिमतः किं सत्स्वभावजन्यजनकस्वभावः, उतासत्स्वभावजन्यजनकस्वभावः, आहोस्विदुभयस्वभावजन्यजनकस्वभावः, उताहो अनुभयस्वभावजन्यजनकस्वभावः? इति विकल्पचतुष्टयरूपया; जनकस्यापि– उत्पादकस्यापि, न केवलं नाशहेतोरेवेत्यर्थः, अहेतुत्वमाहुः– आपादयामासुः ॥ १९ ॥

एतदेव स्पष्टयन्नाद्यविकल्पे दोषमाह—

**न सत्स्वभावजनकस्तद्वैफल्यप्रसङ्गतः। जन्मायोगादिदोषाच्च नेतरस्यापि युज्यते ॥२०॥**

न सत्स्वभावजनकः– नोत्पादहेतुः सत्स्वभावजन्यजनकस्वभावः। कुतः? इत्याह– तद्वैफल्यप्रसङ्गतः– सत्स्वभावत्वे-

[1] ज. 'देन ज'।

नैव जन्यस्य जनकव्यापारवैफल्यात्, सत एव करणे चानिष्ठितेः। यदि च स्वकारणादुत्पत्तिरात्मलाभो यस्य स स्वोत्पत्तिधर्मा तं यदि स्वहेतुर्नोत्पादयेत्, तदा विरुद्धमभिधानं स्यात्, उत्पत्त्यनन्तरं च तस्य स्वत एव नाशात् कस्य पुनरुत्पत्तिरिति नानिष्ठितिरित्युच्यते; तदा विनाशकारणाद् विनाश आत्मप्रच्युतिलक्षणो धर्मो यस्य तं यदि विनाशहेतुर्न विनाशयेत् तदा विरुद्धाभिधानं स्यादित्याद्यपि तुल्यम्। द्वितीये दोषमाह– जन्मायोगादिदोषाच्च– इतरस्याप्यसत्स्वभावस्य जन्यस्यापि, जनक इति पृथक्कृतयोगः, न युज्यते 'जननस्वभावः' इति शेषः। असतो जन्मायोगश्च जन्मनः सत्तारूपत्वेन प्रकृत्यन्यथात्वानुपपत्तेः, उत्पत्तौ वोत्पादहेतुनाऽसतः सत्करणवद् नाशहेतुनापि सतोऽसत्करणसंभवात्, असत्कार्यपक्षोक्तसकलदोषप्रसङ्गाच्च ॥ २० ॥

अन्त्यविकल्पद्वये दोषमाह—

**न चोभयादिभावस्य विरोधासंभवादितः। स्वनिवृत्त्यादिभावादौ कार्याभावादितोऽपरे॥**

न चोभयादिस्वभावस्य– उभयस्वभावस्य, अनुभयस्वभावस्य वा जन्यस्य जननस्वभावो जनकः। कुतः? इत्याह– विरोधासंभवादितः– उभयस्वभावजन्यजनकत्वे वस्त्वविरोधेऽपि स्वमतविरोधात्, अनुभयस्वभावजन्यजनकत्वे चासंभवात्– तादृशस्य जन्यस्य निःस्वभावत्वेनानुपलब्धेः। आदिना जन्यस्योभयस्वभावत्वे वस्तुन एव स्थिरा-ऽस्थिरोभयस्वभावत्वे किमीदृशमयासेन? इत्यादि द्रष्टव्यम्। परेषां पुनरिह प्रकारान्तरेणानिष्टापादनविधिमाह– स्वनिवृत्त्यादिभावादौ– जनकस्य निवृत्त्यादिस्वभावत्वे, कार्याभावादितः– कार्यानुत्पत्त्यादिदोषप्रसङ्गात्, अपर आचार्याः, जनकस्याहेतुत्वमाहुः। इदमुक्तं

भवति- स जनकः स्वनिवृत्तिस्वभावः स्यात्, कार्यजननस्वभावो वा, उभयस्वभावो वा, अनुभयस्वभावो वा ? । आद्ये, स्वयं निवर्तेतैव न कार्यं जनयेत्। द्वितीये, कार्यमेव जनयेद् न निवर्तेत। तृतीय-चतुर्थयोस्तु विरोधा-ऽसंभवौ । अथ स्वनिवृत्तिरेव कार्यजननमिति न विरोध इति चेत्। तर्हि जननं कार्याव्यतिरिक्तमिति कार्यमेव, तच्च स्वनिवृत्तिः, सा च स्वात्मिकेत्यनिवारितोऽन्वयः, कार्याभावो वा, क्रमिकनिवृत्तिकार्यजननस्वभावकं च नैकं क्षणिकमित्यादि स्वधियाऽभ्यूहनीयम् ॥२१॥

नन्वेवं हेतुफलभावनिषेधः कृतः स्यात्, स च प्रत्यक्षबाधित इत्याशङ्कापोहायाह—

**न चाध्यक्षविरुद्धत्वं जनकत्वस्य मानतः। असिद्धेरत्र नीत्या तद्व्यवहारनिषेधतः ॥२२॥**

न चाध्यक्षविरुद्धत्वमत्र बाधकमुद्भावनीयम्, जनकत्वस्य मानतः- प्रमाणात्, असिद्धेः, अत्र नीत्या- न्यायेन, तद्व्यवहारनिषेधतः- जनकत्वव्यवहारनिषेधात्, प्रमाणाभावस्य सद्व्यवहारविषयत्वानुमापकत्वात्, अपेक्षया चोक्तरीत्यात्रार्थे प्रमाणाभावाव्याघातादिति भावः ॥ २२ ॥

अयं च परेणाप्याश्रित एव न्याय इत्याह—

**मानाभावे परेणापि व्यवहारो निषिध्यते। सज्ज्ञानशब्दविषयस्तद्वदत्रापि दृश्यताम् ॥२३॥**

परेणापि- बौद्धेनापि, मानाभावे- प्रमाणाभावे, क्वचिद् वस्तुनि प्रधाने-श्वरादौ सज्ज्ञानशब्दविषयो व्यवहारो निषिध्यते- प्रधानादिकं 'सद्' इति न ज्ञेयम्, 'सद्' इति नाभिधेयं वा, प्रमाणेनानुपलभ्यमानत्वादिति। तद्वदत्रापि- जनक- ॥१९७॥

त्वेऽपि, दृश्यतां प्रमाणाभावेन सद्व्यवहारनिषेधः, न्यायस्य समानत्वात् । निरस्तो 'नाशहेतोरयोगतः'[1] इत्याद्यो हेतुः ॥ २३ ॥

अथ 'अर्थक्रियासमर्थत्वात्' इति द्वितीयं हेतुं दूषयितुमाह—

**अर्थक्रियासमर्थत्वं क्षणिके यच्च गीयते । उत्पत्त्यनन्तरं नाशाद्विज्ञेयं तदयुक्तिमत् ॥२४॥**

अर्थक्रियासमर्थत्वं क्षणिके- निरन्वयनश्वरे वस्तुनि, यच्च गीयते परैः, तदुत्पत्त्यनन्तरं नाशादयुक्तिमद् विज्ञेयम् ॥२४॥

कथम् ? इत्याह—

**अर्थक्रिया यतोऽसौ वा तदन्यो[2] वा द्वयी गतिः । तत्त्वे न तत्र सामर्थ्यमन्यतस्तत्समुद्भवात् ॥**

अर्थक्रिया यतोऽसौ वा- जनकत्वाभिमतः पदार्थ एव वा स्यात्, तदन्यो वा- तदनन्तरभावी पदार्थ एव वा, द्वयी गतिः- द्वाविमावत्र प्रकारौ । आद्ये दूषणमाह- तत्त्वे- अर्थक्रियायास्तदात्मकत्वे, न तत्र- अर्थक्रियायाम्, सामर्थ्यं 'तस्य' इति योगः । कुतः ? इत्याह- अन्यतः- स्वहेतोः, तत्समुद्भवात्- तस्याखिलस्वधर्मान्वितस्योत्पादात्, स्वस्य जनकत्वं च दृष्टेष्टाभ्यां विरुद्धम् । तस्माद् नार्थक्रियायास्तदभेदे तस्यार्थक्रियाया उत्पादे सामर्थ्यम् ॥ २५ ॥

नापि तद्धारण-नाशयोरित्याह—

---

१ चतुर्थस्तबके द्वितीयकारिकायां प्रतिपादितः ।

२ 'दन्या वा' इति सर्वत्र, मुद्रितपुस्तके च पाठः ।

न स्वसंधारणे न्यायाज्जन्मानन्तरनाशतः । न च नाशोऽपि सद्युक्त्या तद्धेतोस्तत्समुद्भवात् ॥

न स्वसंधारणे- अर्थक्रियास्थापने, न्यायादस्य सामर्थ्यम् । कुतः? इत्याह- जन्मानन्तरनाशतः- उत्पत्त्यनन्तरं स्वधर्ममादायैव स्वस्य नाशात् । न च नाशेऽप्यर्थक्रियायाः, तत्सामर्थ्यं, सद्युक्त्या- युक्तम् । कुतः? इत्याह- तद्धेतोस्तत्समुद्भवात्- स्वहेतोरेव नश्वरस्वभावोत्पत्तेः ॥ २६ ॥

द्वितीयप्रकारे दोषमाह—

अन्यत्वेऽन्यस्य सामर्थ्यमन्यत्रेति न संगतम् । ततोऽन्यभाव एवैतन्नासौ न्याय्यो दलं विना ॥

अन्यत्वे- अर्थक्रियायाः स्वभिन्नत्वेऽभ्युपगम्यमाने, अन्यस्य- हेतोः, अन्यत्र- अर्थक्रियायाम्, सामर्थ्यम्, इत्यसंगतम्- अयुक्तम्, सामर्थ्य-सामर्थ्यवतोरभेदात् सामर्थ्यवदन्यत्र तदभावात् । स्यादेतत्, ततः- दण्डादेः, अन्यभाव एव- घटाद्युत्पाद एव, एतत्- सामर्थ्यम्, नान्यदिति । अत्राह- नासौ- अन्यभावः, न्याय्यः- घटमानकः, दलं विना- तथाभाविनमुपादानमन्तरेण ॥ २७ ॥

एतदेव स्पष्टयति—

नासत्सज्जायते यस्मादन्यसत्त्वस्थितावपि । तस्यैव तु तथाभावे नन्वसिद्धोऽन्वयः कथम् ?

यस्मादन्यसत्त्वस्थितावपि, किमुत तन्निवृत्तौ, असत् सद् न जायते, तच्छक्त्यभावेनातिप्रसङ्गात् । तस्यैव च– पूर्वक्षणस्य, तथाभावे– उत्तरक्षणरूपतया भवने, ननु– निश्चितम्, अन्वयः कथमसिद्धः, भावाविच्छेदस्यैवान्वयत्वात्? ॥२८॥

दोषान्तरमाह—

**भूतिर्येषां क्रिया सोक्ता न चासौ युज्यते क्वचित्। कर्तृभोक्तृस्वभावत्वविरोधादिति चिन्त्यताम्॥**

या एषां– प्रस्तुतभावानाम्, भूतिः, सा क्रियोक्ता भवता, न चासौ– भूतिः, न्यायतः क्वचिद् युज्यते। कथम्? इत्याह– कर्तृ-भोक्तृस्वभावत्वविरोधात्; तथाहि– सा किं कर्तृस्वभावा वा स्यात्, भोक्तृस्वभावा वा? । कर्तृस्वभावत्वे न भोक्तृत्वम्, भोक्तृस्वभावत्वे च न कर्तृत्वं स्यात्। न च कर्तृस्वभावत्वमेव भोक्तृस्वभावत्वम्, घट-कलशादिपदानामिव कर्तृ-भोक्तृपदयोरभिन्नप्रवृत्तिनिमित्तकत्वेन पर्यायत्वापातात्, चरमस्य कर्तृत्वाभावाच्च, भावे वा चरमत्वविरोधात्। न चादौ कर्तृस्वभावैव, अन्ते च भोक्तृस्वभावा, अन्तरा तूभयस्वभावेति वाच्यम्; द्वैरूप्यविरोधादिति चिन्त्यतां सूक्ष्मधिया ॥ २९ ॥

प्रस्तुतमुपसंहरति—

**न चातीतस्य सामर्थ्यं तस्यामिति निदर्शितम्।**
**न चान्यो लौकिकः कश्चिच्छब्दार्थोऽत्रेत्ययुक्तिमत् ॥ ३० ॥**

न चातीतस्य वस्तुनः, सामर्थ्यं स्वहेतोरव्यतिरिक्तम्, तस्यां– अर्थक्रियायां द्वितीयक्षणलक्षणायाम्, इति– एतत्, निदर्शितम्, 'अन्यस्य सामर्थ्यमन्यत्रेति न संगतम्' इत्यनेन । न चान्यो लौकिकः– लोकप्रसिद्धः, कश्चिच्छब्दार्थः, अत्र– अर्थक्रियायां सामर्थ्यमिति वाक्ये, इति– एवम्, अयुक्तिमदर्थक्रियासमर्थत्वं क्षणिकत्वे यद् गीयत इति ।

यच्च क्रम-यौगपद्याभ्यामर्थक्रिया स्थिराद् व्यावर्तमाना क्षणिकतायामेवावतिष्ठत इत्युच्यते । तत् कदाशामात्रम्, स्वभिन्नक्रमिकार्थक्रियाभेदेऽपि हेतोरभेदात् । न च हेतोः प्रतिक्षणमभिन्नरूपत्वेऽर्थक्रियापि युगपद् भवेदिति वाच्यम्, नियमाभावात्, यथा दर्शनम्, हेतोरभेदस्यार्थक्रियाभेदस्य च संभवात् । न च प्रतिक्षणविशरारुताऽविनाभूतः क्रमवदर्थक्रियोत्पादः क्वचिदुपलब्धः, येन तदुदयक्रमात् तद्धेतोः प्रतिक्षणभेदः सिद्धिमासादयेत् । न चार्थक्रियापि प्रतिक्षणं भेदवती सिद्धा, तत् कथं स्वयमसिद्धहेतोः प्रतिक्षणभेदमवगमयेत् ? । न च सौगतानां कालाभावादर्थक्रियाक्रमोऽपि युक्तः, कार्यपरम्पराव्यतिरिक्तस्य कालस्य तैरनभ्युपगमात् । न च फलभेदमात्राद् हेतुभेदव्यवस्था, एकेनापि प्रदीपादिनानेककार्याणामेकदा करणात् । परपरिकल्पितकालाभ्युपगमेन कार्यक्रमश्च प्रमाणाभावे दुर्घटः । न च तदभ्युपगमेन कारणक्रमोपपत्तावपि स्थैर्यभङ्गः[2] । जनकत्वाऽजनकत्वस्वभावभेदादसौ स्यादिति चेत् । न, क्रमोपेतकार्योपलम्भात्, कल्पनाध्यवसितेन जनका-ऽजनकत्वस्वभावभेदेनापि भावाभेदात्; अन्यथा भावानामेकत्वमध्यवस्यन्ती कल्पना तत्र स्थैर्यमपि किं न दर्शयेत् ? । तस्मादुदितफलापेक्षया कल्पना भावानां जनकत्वमध्यवस्यति, अनुदितफलापेक्षया तु तत्रैव जनकत्वमध्यारोपयतीति न भेदः, न चेदेवम्; एकस्यापि

१ प्रस्तुतस्तबके कारिका २७ । २ ख. ग. घ. च. 'यसङ्गः' ।

क्षणस्य परोपजनितकार्यापेक्षयाऽजनकत्वम्, स्वोत्पाद्यकार्यापेक्षया तु जनकत्वमिति भेदः स्यात्। कल्पनाप्रदर्शितभेदबाधकोऽभेदनिर्भासस्तूभयत्र तुल्य इति ध्येयम्। समर्थो यदि हेतुः, तदोत्पन्नमात्र एव कार्यं किं न जनयेत्? इति चेत्। तत्र कुर्वद्रूपः क्षणस्तदा किं न भवेत्?। सहकार्यभावादिति चेत्। तुल्यमिदमन्यत्र।

स्यादेतत्, मम कुर्वद्रूपाणां दण्ड-घटादिक्षणानामेकेन घटकुर्वद्रूपत्वेनैव घटव्याप्यत्वम्, परेषां त्वितरसहकारिसमवहितदण्डत्वादिना घटादिव्याप्यत्वम्, तत्रावच्छेद्यावच्छेदकभावेऽविनिगमश्चेत्यतिगौरवम्। न च घटसामग्रीत्वेन घटव्याप्यता, सामग्र्या एवानिरुक्तेः, तथाहि– न तावद् यावन्ति कारणानि सामग्री, क्रमिककारणसमुदायेऽतिव्याप्तेः, नाप्येकक्षणावच्छिन्नानि यावन्ति कारणानि, यागादेश्चिरातीतत्वेन स्वर्गादिसामग्र्यामव्याप्तेः। न च तादृशयावत्कारणसमवधानं सा, अस्ति च चिरातीतस्यापि हेतोर्व्यापाररूपसमवधानमिति वाच्यम्, विशकलिततावत्कारणसमवधाना(नासामग्री?)भावात्। न चेतरकारणविशिष्टचरमकारणमेव सा; न च विनिगमनाविरहः, कार्यैकदेशताया विनिगमकत्वादिति वाच्यम्, इतरेषामपि कयाचित् प्रत्यासत्त्या कार्यैकदेशत्वात्, अन्यथा चरमकारणे तद्वैशिष्ट्यानिरुक्तेः। न च चरमकारणमेव सा, तस्य संयोगत्वादिनाऽसामग्रीत्वात्; चरमत्वेन तत्त्वे वाऽव्यवहितपूर्ववर्तिना संबन्धेन फलविशिष्टोत्पत्तिकत्वं तदिति लाघवात् तेन संबन्धेन फलवत्त्वस्यैव सामग्रीत्वौचित्यात्। एवं च 'सामग्र्यभावात् कार्याभावः' इत्यत्र फलतः 'स्वाभावादेव स्वाभावः' इति सामग्रीभेदात् कार्यभेद इति; अत्र च फलतः स्वभेदादेव स्वभेद इत्यापतितमिति न किञ्चिदेतत्। एतेन 'प्रागभावेतरकादाचित्कयावत्कार-

---

१ ख. ग. घ. च. 'भेदे बा'।

णप्रागभावानाधारः कार्यप्रागभावाधारः क्षण एव सामग्री, नेयं कार्यजनिका, किन्तु तद्व्याप्या, कार्याधिकरणीभूतस्य क्षणस्य कार्यप्रागभावानधिकरणत्वात्, तदधिकरणीभूतस्य च कार्यानधिकरणत्वात्, अधिकरणीभूतानामेव च कालोपाधीनां हेतुत्वात्' इत्यपि निरस्तम्, एतस्यास्तत्र तदुत्पत्तिनियामकत्वादिति ।

मैवम्, सामग्र्याः समग्रव्यतिरिक्ता-ऽव्यतिरिक्तपरिणामविशेषरूपत्वात्, घनस्य विविच्यमानस्य भूतादाविव विविच्यमानायास्तस्या दण्डादौ विश्रामेऽप्यविविच्यमानायास्तद्वदेकत्वात् । अभिन्नकालकृतार्थान्तरभावेन च सा विभिन्नव्यवहारनिबन्धनम्, भिन्नकालकृतार्थान्तरभावेन च कार्योपधायिकेति तत्त्वम् । नैयायिकादिनापि हि मानसादौ चाक्षुषसामग्र्यादिप्रतिबन्धकतादिना लाघवादपि तस्या अर्थान्तरभूतायाः कल्पयितुं युक्तत्वात् । इति नैकान्तदोषेऽप्यनेकान्ते किमपि दूषणं पश्यामः । तत्र 'तत्कार्योत्पत्तौ तदवच्छिन्नयावत्कारणसमवधानरूपायाः सामग्र्या नियामकत्वम्' इत्यपरेषां शब्दान्तरम् । अधिकं स्वधियाऽभ्यूह्यम् ॥ ३० ॥

'परिणामात्' इति तृतीयहेतुं दूषयितुमाह—

**परिणामोऽपि नो हेतुः क्षणिकत्वप्रसाधने। सर्वदैवान्यथात्वेऽपि तथाभावोपलब्धितः ॥३१॥**

परिणामोऽपि– अतादवस्थ्यलक्षणः, नो हेतुः– न समर्थः, क्षणिकत्वप्रसाधने– निरन्वयनाशसाधने । कथम् ? इत्याह– सर्वदैव– सर्वकालमेव, अन्यथात्वेऽपि– बाल-कुमारादिभावेन घट-शरावादिभावेन च विभिन्नरूपत्वेऽपि, तथाभावोपलब्धितः–

देह-मृदादिभावोपलब्धेः। अयं भावः– चित्रज्ञाने नानाकारोपलम्भेऽप्येकरूपोपलम्भाद् यथा चित्रैकरूपताऽविरोधः, तथा परिणामित्वेन भेदसिद्धावपि 'सोऽयं देहः' इत्याद्यभेदोपलम्भाद् न स्थैर्यबाधः, अनुभवसिद्धयोर्भेदा-ऽभेदयोरपि समावेशात्। प्रपञ्चयिष्यते चेदमुपरिष्टात् ॥ ३१ ॥

इत्थं चैतदङ्गीकर्तव्यमित्याह—

**नार्थान्तरगमो यस्मात्सर्वथैव न चागमः। परिणामः प्रमासिद्ध इष्टश्च खलु पण्डितैः॥३२॥**

यस्मात् कारणाद् नार्थान्तरगमः– न सर्वथाऽर्थान्तरगमनम्, न च सर्वथैवागमः– एकान्तेनार्थान्तरागमनम्, परिणामः, प्रमासिद्धः– प्रमाणप्रतिष्ठितः। इष्टश्च खलु– निश्चितम्, पण्डितैः– "तद्भावः परिणामो यत् तत्तेन तथा भूयते" इति वचनात्। युक्तं चैतत्, सुवर्णं हि कुण्डलतया परिणममानं न सर्वथैव कुण्डलभावं भजते, सुवर्णरूपस्यापि परित्यागापत्तेः; न च सर्वथा न भजतेऽपि, अकुण्डलत्वप्रसङ्गात्। येन च रूपेण यत्र स्वकालीनस्वाभिन्नोत्पादप्रतियोगित्वं तेन रूपेण तत्र तत्परिणामत्वव्यवहारः, यथा 'कुण्डलं सुवर्णपरिणामः' इति, न तु 'सुवर्णं परिणामः' इति ॥ ३२ ॥

अत्र परोक्तानित्यतामपाकुर्वन्नाह—

**यच्चेदमुच्यते ब्रूमोऽतादवस्थ्यमनित्यताम्। एतत्तदेव न भवत्यतोऽन्यत्वे ध्रुवोऽन्वयः॥३३॥**

यच्चेदमुच्यते निरन्वयनाशवादिभिः। किम्? इत्याह– ब्रूमोऽतादवस्थ्यं भावानामनित्यताम्, परिणामित्व इष्टसिद्धि

स्तदस्माकमिति । अत्रोत्तरम्– एतत्– अतादवस्थ्यम्, तदेव न भवतीति– 'न तत्र किञ्चिद् भवति' इत्याद्युक्तेः, तथाचाभवनलक्षणमनित्यत्वं न वस्तुलक्षणम् । अतः– अस्मादभवनात्, अन्यत्वेऽतादवस्थ्यस्य, ध्रुवोऽन्वयः, तस्यैव तथाभवनादिति ॥ ३३ ॥

अतोऽभिन्नत्वे नायं दोष इत्याह–

**तदेव न भवत्येतत्तच्चेन्न भवतीति च । विरुद्धं हन्त किञ्चान्यदादिमत्तत्प्रसज्यते ॥ ३४ ॥**

तदेव न भवत्येतद् वाक्यम्, तच्चेद् न भवतीति च विरुद्धम्, भवनस्वभावस्याभवनत्वायोगात्, 'न भवति' इत्यतश्च त्वन्नीत्याऽभवनस्वभावत्वस्यैव प्रतीतेः 'घटोऽघटः' इति तुल्यत्वात् । 'हन्त' इत्युपदर्शने । 'किञ्चान्यत्' इति दोषान्तरख्यापने । तच्चेदमभवनमादिमत् प्रसज्यते, तदा भवनात्, इत्याद्युक्तपूर्वम् ॥ ३४ ॥

प्रकृतमेव समर्थयन्नाह–

**क्षीरनाशश्च दध्येव यद् दृष्टं गोरसान्वितम् । न तु तैलाद्यतः सिद्धः परिणामोऽन्वयावहः ॥**

दध्येव चोत्पद्यमानं, क्षीरनाशः– क्षीरनाशाभिन्नम्, गोरसान्वितम्– गोरसस्थित्यनुविद्धम्, न तु तैलादि तदनन्वितं तदत्यन्तभिन्नस्वभावम्, यद्– यस्मात्, दृष्टम्; अतः– अस्माद्धेतोः, परिणामोऽन्वयावहः– अन्वयाक्षेपकः, सिद्धः, उत्पादस्य



---

१ चतुर्थे स्तबके कारिका ३२ ।

व्यय-स्थित्यविनाभूतत्वात्। 'दध्न उत्पाद आद्यक्षणसंबन्धरूपो भाव इति कथं स एव दुग्धनाशः?' इति केषांचिदविचारिताभिधानम्, स्वयमेव प्रागभावनाशस्य प्रतियोगिरूपस्याभ्युपगमात्। यदपि केचिदभिमन्यन्ते- 'दुग्ध-दध्नोर्गोरसान्वयस्तैलादिव्यावृत्तो न द्रव्याविच्छेदरूपः किन्तु जात्यविच्छेदरूपः' इति। तदपि प्रत्यभिज्ञाप्रतिहतम्, गोरसानन्वये निराश्रयस्य दध्न एवानुत्पत्तेश्च। 'दुग्धोपादानान्येव दध्न आश्रयः' इत्युक्त्वा च नामान्तरेण गोरसान्वय एवाभिहितो भवति, त्यक्तोपात्तोभयरूपस्योभयोपादानस्य कथञ्चिदुभयापृथग्भूतत्वादिति दिग् ॥ ३५ ॥

एतदेव समर्थयन्नाह—

**नासत्सज्जायते जातु सच्चासत्सर्वथैव हि। शक्त्यभावादतिव्याप्तेः सत्स्वभावत्वहानितः ३६**

नासत्- एकान्ततुच्छम्, सज्जायते- अतुच्छं जायते, जातु- कदाचित्, शक्त्यभावादतिव्याप्तेः- तुच्छस्य प्रतिनियतातुच्छजननशक्त्यभावेन तदभावाविशेषात्, तद्वदन्यभवनापत्तेः। तथा, सर्वथैव हि सच्चासद् न जायते, सत्स्वभावत्वहानितः- असद्भवनस्वभावस्य सद्भवनस्वभावस्य विरोधात् सद्भावस्याप्यप्राप्तेः। निरूपिततत्त्वमेतत् ॥ ३६ ॥

प्रस्तुतमुपसंहरन्नाह—

**नित्येतरदतो न्यायात्तत्तथाभावतो हि तत्। प्रतीतिसचिवात्सम्यक्परिणामेन गम्यते।३७।**

अतः- असदादेः सदाद्यनापत्तेः, तत्तथाभावतः- तस्यैव तथाभवनेन, हि- निश्चितम्, तत्- वस्तु, परिणामेन

प्रतीतिसाचिव्यात्– अनुभवसध्रीचीनात्, सम्यग्– न्यायात्, नित्येतरद् गम्यते, नित्यं च तदितरच्चेति कर्मधारयः, इतरत्– अनित्यम् ।

अत्र वैशेषिकादयः– प्रत्यभिज्ञया तत्तेदंताविशिष्टयोरभेदलक्षणे स्थैर्ये सिद्धेऽपि कथमेकस्य नित्यानित्यरूपस्य वस्तुनः सिद्धिः, घटप्रतियोगिकत्वेन ध्वंसानुभवकाले समानसंवित्संवेद्यतया घटे ध्वंसप्रतियोगित्वलक्षणानित्यत्वानुभवेऽपि नित्यत्वाननुभवात्, ध्वंसप्रतियोगित्व-तदप्रतियोगित्वलक्षणयोर्नित्यत्वा-ऽनित्यत्वयोर्विरोधाच्च ? । अथ प्रतियोगिसत्त्वमात्रेण नाभावविरोधः, किन्तु प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिसत्त्वेन, अत एवैकघटवत्यपि द्वित्वावच्छिन्नतदभावः । न च 'घट-पटौ न स्तः' इति धीरेकवत्यन्याभावावगाहिनी, तदितरत्रैव चोभयावगाहिनी। न चैकैकाभावधियो 'द्वौ न स्तः' इति धियोऽवैलक्षण्यम्, शब्दादिना 'द्वौ न स्तः' इति निश्चयेऽप्येकैकाभावसंशयापत्तिः, विषयानुगमं विनाऽनुगताकारप्रत्ययायोगश्च । द्वित्वाधिकरणप्रतियोगित्वमात्रावगाहित्वे च तादृशद्वित्वाधिकरणव्यक्तिविशेषविरहिणि तथाविधोभयशालिनि 'तादृशौ द्वौ न स्तः' इति प्रत्ययापत्तिः; सामानाधिकरण्याद्यभावेऽपि प्रतीतेरनुगताकारत्वाच्च न तस्या द्वित्वविशेष्यतावच्छेदकावच्छिन्नत्वसंसर्गेण द्वित्वसमानाधिकरणविशिष्टाभावावगाहित्वम्, घटत्व-पटत्वाद्यन्यतरावच्छिन्नप्रतियोगिताकाभावविषयत्वं वा, द्वित्वाधिकरणयोरेव प्रतियोगित्वोल्लेखात् सपर्याप्त्यधिकरणसंबन्धेन द्वित्वाभावविषयत्वमपि न युक्तमिति वाच्यम्, द्वित्वावच्छिन्नप्रतियोगिताकत्वेन घटादिमति पटत्वावच्छिन्नप्रतियोगिताकाभावादिविषयतया, तत्तद्घटादिमति च तत्तद्घटान्यघटत्वावच्छिन्नाभावादिविषयतयोपपत्तेरिति वाच्यम्; अनन्ताभावे द्वित्वावच्छिन्नप्रतियोगिताकत्वकल्पने गौरवात्, एका-

भावसिद्धेः । एवं च घटस्य घटत्वावच्छिन्नध्वंसप्रतियोगित्वेऽपि द्रव्यत्वावच्छिन्नध्वंसाप्रतियोगित्वमुपपत्तिमत्, तदुक्तम्- "तद्भावाव्ययं नित्यम्" इति; इति चेत् । न, तद्भावेन व्ययस्याप्रसिद्धौ तदभावस्य वक्तुमशक्यत्वात्, असतोऽनिषेधात्; स्वीकृतं चैतदन्यैरपि- "असओ नत्थि निसेहो" इत्यादिना ।

किञ्च, 'घटो नास्ति' इति प्रतीत्याऽत्यन्ताभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वेऽपि ध्वंसस्य न तथात्वम्, 'कपाले घटध्वंसः' इत्यत्र प्रतियोगितामात्रेणैव घटस्य ध्वंसेऽन्वयात्; 'अन्तरा श्यामे घटे रक्तं नास्ति' इति प्रतीतौ च सामयिकरक्तात्यन्ताभावस्यैव विषयत्वात्; अन्यथा रक्ततादशायामपि तथाप्रत्ययापत्तेः । न च ध्वंस-प्रागभावयोरव्याप्य-वृत्तिरक्तत्वावच्छिन्नप्रतियोगिताकत्वकल्पनाद् रक्ततादशायां ध्वंसादेस्तदसत्त्वाद् न तथाप्रत्यय इति वाच्यम्; अनन्तध्वंस-प्रागभावेषु तादृशप्रतियोगिताकत्व-तदव्याप्यवृत्तित्वयोः 'रक्तं नास्ति' इत्यादिप्रतीतावनन्तध्वंसादिविषयकत्वस्य च कल्प-नामपेक्ष्यान्यत्र क्लृप्ततादृशप्रतियोगिकात्यन्ताभावस्यैवान्तरा श्यामादौ सामयिकसंबन्धस्य युक्तत्वात्, तत्कारणबाधेन भाविरक्तादिध्वंसाद्यसंभवाच्च । इत्थं च "तद्भावाव्ययं नित्यम्" इत्यस्य 'ध्वंसप्रतियोगितानवच्छेदकरूपवद् नित्यम्' इत्यर्थः, ध्वंसप्रतियोगितावच्छेदकरूपवच्चानित्यम्, इति नोभयासमावेशः, न चाप्रसिद्धिः; इत्यपि न सुष्ठु समाधानम् । अथ वृक्षे शाखा-मूलाद्यवच्छेदेन कपिसंयोग-तदभाववदेकत्रापि द्रव्यतया पर्यायतया च नित्या-नित्यत्वमुपपत्स्यते, गुञ्जाफलादौ श्यामता-रक्ततयोर्विभिन्नदेशावच्छेदरूपायाः खण्डशो व्याप्तेर्वैलक्षण्येनैवान्योन्यव्याप्तिव्यवस्थितेर्विभिन्नदेशानवच्छिन्नापृथग्भावस्यै-

---

१ तत्त्वार्थसूत्रे ५।३०। २ विशेष्यावश्यकभाष्ये प्रथमगणधरवादे गाथा २६ ।

व तदर्थत्वादिति चेत् । न, आश्रयन्यूनवृत्तेरेवावच्छेदकत्वेन घटत्वेन घटेऽनित्यतायाः, द्रव्यत्वेन च नित्यताया असंभवात् । न हि भवति शाखायां शाखात्वावच्छेदेन कपिसंयोगाभावः, वृक्षत्वावच्छेदेन च कपिसंयोग इति । किञ्च, एवं नित्यत्वादिज्ञानस्यानित्यत्वादिधीप्रतिबन्धकतायामव्याप्यवृत्तित्वज्ञानाद्युत्तेजकत्वं वाच्यमिति गौरवमिति ।

अत्र ब्रूमः– प्रत्यभिज्ञैव वस्तुनो नित्यानित्यत्वे मानम्, पूर्वोत्तरतत्तेदंतास्वभावभेदानुविद्धस्यैवोर्ध्वतासामान्याख्याभेदस्य तया विषयीकरणात् । न च तत्तेदंतोभयनिरूपितैकस्वभावमेव तत्, भिन्नकाले तदभावादेव च तदननुभव इति सांप्रतम्, 'इदानीं तत्तास्वभावमिदम्' इति व्यवहारप्रामाण्यप्रसङ्गात् । किञ्च, विशिष्टात्यन्ताभाववद् विशिष्टध्वंसोऽपि परेणाकामेनापि स्वीकर्तव्यः, 'शिखी विनष्टः' इति प्रतीतेरन्यथानुपपत्तेः । न च विशेष्य नाशसामग्र्यभावाद् विशिष्टनाशानुपपत्तिः, विशेषणाद्यत्यन्ताभावकृतविशिष्टात्यन्ताभाववद् विशेषणादिनाशकृतविशिष्टनाशसंभवात् । विशेषणनाशादेव परम्परासंबन्धेन तत्प्रतीत्युपपत्त्या विशिष्टनाशासिद्धौ च स्वपर्याप्त्यधिकरणसंबन्धेन द्वित्वाभावादिनैव 'द्वौ न स्तः' इत्यादिप्रतीत्युपपत्तौ द्वित्वावच्छिन्नाभावादेरप्युच्छेदप्रसङ्गः । एवं च क्षणविशिष्टध्वंसादस्थैर्यसंवलितं स्थैर्यं सिद्धम्, विशिष्टातिरिक्तत्ववादिनः सार्वभौमस्य मते च सुतराम् । न च तन्मते विशिष्टसत्तानिश्चयेऽपि सत्तासंदेहापत्तिः, परस्यापि विशिष्टसत्तानिश्चयस्य सत्तानिश्चयत्वशून्यतया विशिष्टसत्तानिश्चयत्वेन पृथक्प्रतिबन्धकतावश्यकत्वात् । न चानन्तविशिष्टपदार्थकल्पनापत्तिः, परस्यापि विशिष्टनिरूपिताधिकरणतानन्त्यकल्पनस्यावश्यकत्वात् । विना च विशिष्टातिरेकं 'शिखरविशिष्टे पर्वते न वह्निधीः' 'इति धीर्न सुघटा । वस्तुतः क्षणानामिदानीमिति धीव्यपदेशनियामकः संबन्धविशेषः क्षणेषु क्षणपरिणतेषु च द्वेधा परेण वक्तव्यः,

स्वस्मिन्नपि तथाधीव्यपदेशप्रवृत्तेः, तथा चान्तरङ्गत्वात् तादात्म्यनियत एव स उचितः । इति सिद्धं क्षणरूपतया जगतः पर्यायतया क्षणभङ्गुरत्वम्, तदुक्तं ग्रन्थकृतैव धर्मसंग्रहण्याम्– "[1]जं वत्तणादिरूवो कालो दव्वस्स चेव पज्जाओ" इति । "[2]किमेयं भंते ! कालो त्ति पवुच्चइ ? । गोयमा ! जीवा चेव, अजीवा चेव" इति पारमर्षमप्येतदर्थानुपाति । यस्मिन्नेव क्षणे घटस्तस्मिन्नेव पट इति तु शब्दमात्रम्, इति न साधारणातिरिक्तक्षणसाधकम् ।

प्रतियन्ति च लोका अपि नित्यानित्यत्वं वस्तुनः– 'घटरूपेण मृद्द्रव्यं नष्टं, मृद्रूपेण न नष्टम्' इति 'घटरूपेण घटो नष्टः, न तु मृद्रूपेण' इत्यादि; अत्र च 'दण्डत्वेन दण्डस्य घटहेतुत्वम्, न तु द्रव्यत्वेन' इत्यत्रेवावच्छिन्नत्वं तृतीयार्थः, स्वाश्रयन्यूनवृत्तेरेवावच्छेदकत्वमित्यस्य च प्रकृतदृष्टान्त एव भङ्गः । अथाऽन्यथासिद्धिनिरूपकतानवच्छेदकनियतपूर्ववर्तितावच्छेदकरूपवत्त्वं हेतुत्वं नाव्याप्यवृत्ति, इति दण्ड इति तत्र दण्डवृत्तित्वम्, दण्डत्वेनेति च दण्डत्वाभिन्नत्वम्, न द्रव्यत्वेनेति च द्रव्यत्वाभेदाभावो भासत इति चेत् । न, विशिष्टरूपेऽविशिष्टरूपाभेदान्वयस्य निराकाङ्क्षत्वात्; अन्यथा 'दण्डत्वं घटहेतुत्वम्' इत्यस्यापि प्रसङ्गात् । तथाप्येकविशेष्यकत्वानुरोधाद् 'न द्रव्यत्वेन' इत्यत्र द्रव्यत्वावच्छिन्नत्वाभाव एवार्थः । न हि 'दण्डत्वेन दण्डो घटहेतुर्न द्रव्यत्वेन' इत्यत्र दण्डवृत्तिघटहेतुत्वं दण्डत्वावच्छिन्नं, दण्डवृत्तिस्तदभावश्च द्रव्यत्वावच्छिन्न इति भिन्नाश्रयो बोधोऽनुभूयते; किन्तु दण्डवृत्ति घटहेतुत्वं दण्डत्वावच्छिन्नं द्रव्यत्वानवच्छिन्नं चेत्येकाश्रय एवेति चेत् । सत्यम्, तात्पर्यभेदेनोभयथापि बोधदर्शनात् 'मृद्रूपेण घटो (न) नष्टः' इत्यत्रापि कदाचिद् मृद्रूपानवच्छिन्ननष्टत्वबोधात्, नानापर्यायत्वाद् वस्तुनः । यदि

1 यद् वर्तनादिरूपः कालो द्रव्यस्यैव पर्यायः ।   2 क एष भगवन् ! काल इति प्रोच्यते ? । गौतम ! जीवश्चैव, अजीवश्चैव ।

च तत्र तदभावावच्छेदकत्वालम्बनः प्रत्ययस्तत्र तदवच्छेदकत्वाभावावलम्बनतयैवान्यथासिद्धः क्रियते, तदा संयोगाभावोऽप्य व्याप्यवृत्तिर्न स्यात्, 'मूले वृक्षे न कपिसंयोगः' इत्यस्यापि मूले वृक्षनिष्ठकपिसंयोगावच्छेदकत्वाभावविषयतयैवोपपत्तेः।

अथ 'कपिसंयोगाभावो न वृक्षवृत्तिः' इति बाधकाभावाद् मूलस्य वृक्षवृत्तिकपिसंयोगाभावावच्छेदकत्वम्, 'नष्टत्वाभावो न घटवृत्तिः' इति बाधकसत्त्वाच्च न घटवृत्तिनष्टत्वाभावावच्छेदकत्वं मृद्रूपस्येति चेत्। न, तत्र तद्वृत्तित्वाभावस्याप्यव्याप्यवृत्तित्वेन तद्धियस्तत्र तद्वृत्तिताधियोऽप्रतिबन्धकत्वात्। यत्तु– 'वृत्तित्वस्य नाव्याप्यवृत्तित्वम्, 'अग्रे वृक्षे न कपिसंयोगः' इत्यत्राग्रावच्छिन्नकपिसंयोगाभावे वृक्षवृत्तित्वस्य, 'गुणान्यत्वविशिष्टा सत्ता न गुणवृत्तिः' इत्यत्र गुणान्यत्वविशिष्टसत्ताभावे गुणवृत्तित्वस्य, 'घट-पटत्वोभयं न घटवृत्ति' इत्यत्र च घटत्व-पटत्वोभयाभावे घटवृत्तित्वस्य विषयत्वात्' इति; तत्तु 'मूले वृक्षे कपिसंयोगो न शाखायाम्' 'द्रव्ये गुणान्यत्वविशिष्टसत्ता न गुणे' इत्यादिधियामेकविशेष्यकत्वाननुरोधाद् न शोभते। नन्वेवं 'वृक्षे पटे न कपिसंयोगः' इत्यपि स्यादिति चेत्। न, देशनिष्ठावच्छेदकत्वस्य पटेऽभावात्, इतरावच्छेदकत्वविवक्षायां चेष्टत्वादिति दिग्। गौरवादिकं च नित्यत्वा-ऽनित्यत्वयोर्वास्तवेऽवच्छिन्नत्वे न दोषायेति। एवमनुभवसिद्धं नित्यानित्यैकरूपं वस्तु प्रतिक्षिपन् विरोधभीतो वैशेषिकश्चित्रपटे चित्रैकरूपमपि कथमभ्युपेयात्? इति संप्रदायः; तदाहुः—

"चित्रमेकमनेकं च रूपं प्रामाणिकं वदन्। यौगो वैशेषिको वापि नानेकान्तं प्रतिक्षिपेत्॥ १॥" इति।

अत्र नव्याः– 'चित्रपटेऽव्याप्यवृत्तीन्येव नील-पीतादीनि नानारूपाणि' 'एकं रूपम्' इति प्रतीतेः 'एको धान्यराशिः'

१ हेमचन्द्राचार्यविरचिते वीतरागस्तोत्रेऽष्टमप्रकाशे श्लो० ९।

इतिवत् समूहैकत्वविषयत्वात् । सविषयाव्याप्यवृत्तिवृत्तिजातेरव्याप्यवृत्तिवृत्तित्वविरोधस्त्वप्रामाणिक एव । अत एव

"लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः । श्वेतः खुर-विषाणाभ्यां स नीलो वृष उच्यते ॥ १ ॥"

इत्यादिकमुपपद्यते । तत्र चित्रैकरूपकल्पने तु गौरवम्; तथाहि– चित्रत्वावच्छिन्नं प्रति न नीलत्वादिना हेतुत्वम्, व्यभिचारात्; नापि रूपत्वेन, नीलमात्रारब्धेऽपि तदापत्तेः । [1]अथ नीलेतर-पीतेतररूपादेरपि तत्र हेतुत्वाद् न तदापत्तिः, यत्रैकावयवे नीलम्, अपरत्र च पीतजनकाग्निसंयोगः, तत्रावयवे पीतरूपोत्पत्त्यनन्तरमेवावयविनि चित्रोत्पत्तिस्वीकाराद् न व्यभिचारः । न च नीलाभावादिषट्कस्यैव समवायेन विजातीयचित्रं प्रति स्वाश्रयसमवेतत्वेन हेतुत्वमस्त्विति वाच्यम्, नील-पीतोभयकपालारब्धे घटे पाकनाशितावयवपीतस्वचित्रेऽवयवे व्याप्यवृत्तिनीलोत्पत्तिकाले चित्रोत्पत्त्यापत्तेः । न च कार्यसहभावेन नीलाभावादीनां तद्धेतुत्वाद् नायं दोष इति वाच्यम्, नील-पीत-श्वेतत्रितयकपालारब्धे पाकेन पीत-श्वेतयोः क्रमेण नाशे श्वेतनाशकालेऽपि तदापत्तेः । नील-नीलजनकतेजःसंयोगान्यतरत्वावच्छिन्नाभावत्वादिना हेतुत्वे तु गौरवम्; संयोगस्याव्याप्यवृत्तित्वेन प्रतियोगिव्यधिकरणत्वनिवेशे च सुतराम् । न चानवच्छिन्नविशेषणतया प्रतियोगितावच्छेदकाविशेषितोक्ताभावहेतुत्वसंभवः, प्रतियोगिकोटावुदासीनप्रवेशा-ऽप्रवेशाभ्यामविनिगमादिति चेत् । न, पाकमात्रादपि चित्रोत्पत्तेः । [2]अथ रूपजन्यतावच्छेदकं विजातीयचित्रत्वम्, अग्निसंयोगजन्यतावच्छेदकं चापरम्, अग्निसंयोगजचित्रं प्रत्यवच्छेदकत्वसंबन्धावच्छिन्नप्रतियोगिताका नीलजनकाग्निसंयोगादेरभावा उक्तप्रत्यासत्त्या हेतवः, रूपजनकविजातीयाग्निसंयोगोऽपि, इति न



१ अतः 'विनिगमात्' इति पर्यन्तोऽभ्यन्तरीकृताक्षेपपरिहारः पूर्वपक्षः । २ इतः 'स्वीकारात्' इत्यन्तो विहितपूर्वपक्षोत्तरपक्षः पूर्वपक्षः ।

वाय्वादौ तदापत्तिः। अस्तु वा तेजःसंयोगमात्रजन्ये विजातीयचित्रे, विजातीयतेजःसंयोगस्य पाकरूपोभयजन्ये विजातीयचित्रे चोभयोरेव हेतुत्वम्, रूपमात्रजातिरिक्त एव वा विजातीयतेजःसंयोगो हेतुः, फलबलेन वैजात्यकल्पनात्, अग्निसंयोगमात्रजातिरिक्ते रूपहेतुताया वक्तुमशक्यत्वात्, नीलेतरादिसमाजाभावात्, नीलाभावादिहेतुतावादिन एवात्र वैयग्र्यात्; पाकजचित्रे वा मानाभावः, पाकादवयवे नानारूपोत्पत्त्यनन्तरमेवावयविनि चित्रस्वीकारे लाघवात्। न चावयविनि चित्रजनकत्वाभिमतस्य पाकस्यावयवनील-पीतादिजनकत्वे नील-पीतादिजनकत्वावच्छेदकजातिसांकर्यम्, तत्र पाकनानात्वस्वीकारादिति चेत्। न, चित्रस्थले नीलादिसामग्रीसत्त्वाद् नीलाद्यापत्तिवारणाय नीलादौ नीलेतररूपादेः प्रतिबन्धकत्वकल्पने गौरवात्' इत्याहुः।

तन्नेति संप्रदायानुसारिणः– 'अव्याप्यवृत्तिनीलादिकल्पन एव गौरवात्; तथाहि– अवच्छेदकतासंबन्धेन नीलादिकं प्रति समवायेन नीलेतररूपादीनां प्रतिबन्धकत्वं वाच्यम्, अन्यथा पीतावयवावच्छेदेन नीलोत्पत्तिप्रसङ्गात्। न च नीलस्य स्वाश्रयावच्छेदेन नीलजनकत्वस्वाभाव्यादेव न तदापत्तिरिति वाच्यम्, विनैतादृशप्रतिबध्यप्रतिबन्धकभावं तथास्वाभाव्यानिर्वाहात्। ननु समवायेन नीलं जायत एव पीतावयवावच्छेदेनेत्यत्र चापादकाभाव इति चेत्। न, समवायस्येवावच्छेदकताया अपि कारणनियम्यत्वात्। एवं च नीलादौ नीलेतररूपादीनां, पीतेतररूपादौ वा नीलादीनां प्रतिबन्धकत्वे विनिगमकाभावः, मम तु नीलेतररूपादौ नीलादीनां न प्रतिबन्धकत्वम्, नील-पीतारब्धे नीलरूपत्वप्रसङ्गस्य बाधकत्वात्। अथ ममापि नीलत्वादिकमेव प्रतिबध्यतावच्छेदकम्, न तु पीतेतररूपत्वादिकम्, गौरवात्। न च नीलत्वेन प्रतिबन्धकत्वम्, न तु

नीलेतरत्वेन, गौरवात्, इत्येव किं न स्यात् ? इति वाच्यम्; प्रतिबन्धकतावच्छेदकगौरवस्यादोषत्वात् । अस्तु वाऽवच्छेदकतया नीलादौ समवायेन नीलादीनामेव हेतुत्वम् । न च नानारूपवत्कपालारब्धघटनीलस्य तत्कपालावच्छेदेनोत्पत्तिप्रसङ्गः, केवलनीलत्वादिनैव तद्धेतुत्वात् । समवायेन नीलादौ च स्वसमवायिसमवेतत्वसंबन्धेन नीलादीनां हेतुत्वम् । व्याप्यवृत्तिनीलस्थलेऽव्याप्यवृत्तित्ववारणाय चावच्छेदकतया नीलादौ स्वसमवायिसमवेतद्रव्यसमवायित्वसंबन्धेन नीलेतररूपादीनां हेतुत्वम्, इत्यष्टादश कार्यकारणभावाः । चित्ररूपेऽप्येतावन्त एव, चित्ररूपे नीलेतररूपादिषट्कस्य, नीलादौ नीलादिषट्कस्य हेतुत्वात्, नीलादौ नीलेतरादिषट्कस्य प्रतिबन्धकत्वाच्चेति नाधिक्यम् । वस्तुतोऽवच्छेदकतया नीलादावुक्तसंबन्धेन नीलेतररूपविशिष्टनीलत्वादिनैव हेतुत्वम् । न च नीलेतरत्वाद्यवच्छिन्नं प्रति नीलविशिष्टनीलेतरत्वादिना हेतुत्वे विनिगमकाभावः, नीलत्वापेक्षया नीलेतरत्वस्य गुरुत्वात् । एतेन 'उक्तसंबन्धेन नीलेतरादेर्नीलादिकं प्रति हेतुत्वम्, नीलादीनां नीलेतरादिकं प्रति वा, इति विनिगमनाविरहाद् द्वादशकार्यकारणभावापत्तिः' इत्यपास्तम् । इत्थं चातिनिष्कर्षादस्माकं द्वादशैव कार्यकारणभावाः, तव त्वष्टादशेति चेत् । न, ममापि नीलादौ नीलेतरादिप्रतिबन्धकत्वेनैव शुक्लावयवमात्रारब्धे नीलाद्यनुत्पत्तिनिर्वाहात्, नीलादौ नीलादिहेतुत्वाकल्पनात् कार्यकारणभावसंख्यासाम्यात्, अव्याप्यवृत्तिनानारूपतत्प्रागभावध्वंसादिकल्पनागौरवस्य च तवाधिकत्वात् ।

किञ्च, अव्याप्यवृत्तिरूपपक्षेऽवच्छेदकतासंबन्धेन रूप उत्पन्ने पुनस्तेनैव संबन्धेनावयवे रूपोत्पत्तिवारणायावच्छेदकतासंबन्धेन रूपं प्रत्यवच्छेदकतासंबन्धेन रूपं प्रतिबन्धकं कल्पनीयमिति गौरवम् । न चावयविनि समवायेनोत्पद्यमानमेवावयवे-

ऽवच्छेदकतयोत्पत्तुमर्हतीत्यवयविनि रूपस्य प्रतिबन्धकस्य सत्त्वेन रूपसामग्र्यभावादेव नावयवेऽवच्छेदकतया तदा रूपोत्पत्त्यापत्तिरिति वाच्यम्; एवं ह्यवयविनिष्ठरूपाभावोऽवच्छेदकतासंबन्धेन रूपं प्रति हेतुर्वाच्यः, तथा च नानारूपवत्कपालारब्धघटस्य नीलरूपादेर्नीलकपालिकावच्छेदेनानुत्पत्तिप्रसङ्गात्, तदवयविनि कपाले रूपसत्त्वात्। अपिच, नीलपीतवत्यग्निसंयोगात्, कपालनीलनाशात् तदवच्छेदेन रक्तं न स्यात्, समवायेन रूपं प्रति तेन रूपस्य प्रतिबन्धकत्वात्; तदवच्छिन्नरूपे तदवच्छिन्नरूपस्य प्रतिबन्धकत्वकल्पने चातिगौरवम्। अथावच्छिन्ननीलादौ नीलाभावादिषट्कमवयवगतमवयविगतं च हेतुः, रक्तनीलारब्धे रक्तनाशकपाकेन व्याप्यवृत्तिनीलोत्पत्तिदशायां चावयविनि न नीलाभावः, इति न तत्रावच्छिन्ननीलोत्पत्तिः, नीलमात्रारब्धे पाकेन क्वचिद्रक्तरूपोत्पत्तौ च प्राक्तननीलनाशादेवावच्छिन्ननीलोत्पत्तिरिति चेत्। न, नील-पीत-श्वेताद्यारब्धे श्वेताद्यवच्छेदेन नीलजनकपाके सति प्राक्तननीलनाशेन तत्तदवच्छिन्ननानानीलकल्पनापेक्षयैकचित्रकल्पनाया एव लघुत्वात्।

अथ व्याप्यवृत्तिरूपस्याप्यवच्छेदकस्वीकारादवच्छेदकतया नीलादिकं प्रत्येव समवायेन नीलादेर्हेतुत्वम्। न चैवं घटेऽपि तया नीलाद्यापत्तिः, अवयवनीलत्वेन द्रव्यविशिष्टनीलत्वेन वा तद्धेतुत्वात्। न च नीलमात्र-पीतमात्रकपालिकाद्वयारब्धनीलपीतकपाले तदापत्तिः, नीलकपालिकावच्छिन्नतदवच्छेदेन तदुत्पत्तेरिष्टत्वात्। अस्तु वा तया नीलादौ नीलेतररूपादेरेव विरोधित्वमिति चेत्। न, नीलादौ नीलेतररूपादिप्रतिबन्धकतयैवोपपत्तौ तत्र नीलादिहेतुतायां मानाभावेन नानारूपवदवयवारब्धे चित्ररूपस्यैव प्रामाणिकत्वात्, व्याप्यवृत्तेरवच्छेदकायोगात्, नीलेतरादौ नीलादेः प्रतिबन्धकत्वेऽविनिगमाच्च। यदि च स्वाश्रयसंबन्धेन नीलं प्रति स्वव्यापकसमवायेन नीलरूपं हेतुरुपेयते, नील-पीताद्यारब्धस्थले च

स्वाश्रयसंबन्धेन नीलरूपस्य पीतकपालेऽपि संभवेन व्यभिचाराद् रक्तसंबन्धेन हेत्वभावादेव न तत्र नीलोत्पत्तिरिति विभाव्यते; तदा नीलं प्रति नीलेतररूपादेः प्रतिबन्धकत्वं चित्ररूपवादिना न कल्पनीयमित्यतिलाघवम् । एवं च 'सामान्याधिकरण्यसंबन्धावच्छिन्नप्रतियोगिताको नीलेतराभावः समानावच्छेदकत्वप्रत्यासत्त्या नीलहेतुः' इत्यपि निरस्तम्, सामानाधिकरण्यस्य व्याप्यवृत्तित्वाच्च' इत्याहुः ।

केचित्तु- 'विजातीयचित्रं प्रति स्वविजातीयत्व-स्वसंवलितत्वोभयसंबन्धेन रूपविशिष्टरूपत्वेनैव हेतुत्वम् । स्ववैजात्यं च चित्रत्वातिरिक्तं यत्स्ववृत्ति तद्भिन्नधर्मसमवायित्वम् । स्वसंवलितत्वं च स्वसमवायिसमवेतद्रव्यसमवायिवृत्तित्वम् । न च स्वत्वाननुगमः, संबन्धमध्ये तत्प्रवेशात्' इत्याहुः ।

परे तु- 'नीलपीतोभयाभाव-पीतरक्तोभयाभावादीनां स्वसमवायिसमवेतत्वसंबन्धावच्छिन्नप्रतियोगिकानां, समवायावच्छिन्नप्रतियोगिताकानां च विजातीयविजातीयपाकोभयाभावादीनां यावत्त्वावच्छिन्नप्रतियोगिताक एकोऽभावश्चित्रत्वावच्छिन्नं प्रति हेतुः' इत्याहुः । 'रूपत्वेनैव चित्रं प्रति हेतुत्वम्, कार्यसहभावेन चित्रेतराभावस्य हेतुत्वेनानतिप्रसङ्गात्' इत्यन्ये । परे तु- 'चित्रत्वावच्छिन्ने रूपत्वेनैव हेतुत्वम्, नील-पीतोभयारब्धवृत्तिचित्रत्वावान्तरवैलक्षण्यावच्छिन्ने च नीलत्वेन पीतत्वेन च हेतुता, एवं त्रितयारब्धे तत्त्रितयत्वेन, नीलपीतोभयादिमात्रारब्धे च नील-पीतान्यतरादीतररूपत्वेन प्रतिबन्धकत्वाद् न त्रितयारब्धचित्रवति द्वितयारब्धचित्रप्रसङ्गः, न चैवं गौरवम्, प्रामाणिकत्वात् । वस्तुतः समवायेन द्वितयजचित्रादौ स्वाधिकरणपर्याप्तवृत्तिकत्वसंबन्धेनैव द्वितयादीनां हेतुत्वम्, नातः प्रागुक्तप्रतिबन्धकत्वकल्पनागौरवम्' इत्याहुः । उच्छृङ्खलास्तु-

'नील-पीत-रक्ताद्यारब्धघटादौ नील-पीत-रक्तादिभ्य एव नील-पीतोभय-पीतरक्तोभयजतत्त्रितयजादिचित्राणामुत्पत्तिः, सर्वेषां सामग्रीसत्त्वात्। न चैकमेव तदस्त्विति वाच्यम्, तत्तदवयवद्वयमात्रावच्छेदेनेन्द्रियसंनिकर्षे विलक्षणचित्रोपलम्भात्, जातेरव्याप्यवृत्तित्वे पुनरस्त्वेकमेव तत्, किञ्चिदवच्छेदेन तत्र नीलत्व-पीतत्व-रक्तत्वविलक्षणचित्रत्वादिसंभवात्' इत्याहुः।

परे तु- 'तत्र व्याप्यवृत्तीन्येव नील-पीतादीन्युत्पद्यन्ते, नीलादिकं प्रति नीलेतरादिप्रतिबन्धकत्व-नीलाभावादिकारणत्वकल्पनापेक्षया व्याप्यवृत्तिनीलपीतादिकल्पनाया एव न्याय्यत्वात्' इत्याहुः। तन्नेत्यन्ये- नीलकपालावच्छेदेन चक्षुःसंनिकर्षे पीतादेरुपलम्भापत्तेः, नीलाद्यवयवावच्छेदेन संनिकर्षस्य नीलादिग्राहकत्वकल्पने च गौरवात्। यत्तु- 'एतत्कपालावच्छिन्नसंयोगादिप्रत्यक्षानुरोधेनैतत्कपालानवच्छिन्नवृत्तिकत्वे सति यत्तन्नीलान्यत्तद्भिन्नं यदेतद् घटसमवेतं तस्यैतत्कपालविषयकसाक्षात्कारं प्रत्येतत्कपालावच्छेदेनैतद्घटचक्षुःसंनिकर्षस्य हेतुत्वाद् न पीतावयवावच्छेदेन संनिकर्षे नीलादिचाक्षुषापत्तिः' इति। तन्न, तथाहेतुतायामतिगौरवात्, तत्कपालावच्छिन्नप्रत्यक्ष एव तत्कपालावच्छिन्नसंनिकर्षस्य हेतुत्वात्। केचित्तु- 'नानारूपवदवयवारब्धो नीरूप एव घटः, स्वाश्रयसमवेतवृत्तित्वसंबन्धेनैव रूपस्य द्रव्यतत्समवेतचाक्षुषसाधारण्येन हेतुत्वादेतच्चाक्षुषात्' इत्याहुः। तन्नेत्यपरे- चित्रकपालिकास्थले तदसंभवात्। अन्ये तु- 'उद्भूतैकत्वस्यायोग्यव्यावृत्तधर्मविशेषस्यैव वा द्रव्यचाक्षुषहेतुत्वेन रूपं विनापि तादृशघटचाक्षुषत्वोपपत्तिः, घटाकाशसंयोगादीनां गुरुत्वादिवदयोग्यत्वादेव संयोगादिचाक्षुषे स्वाश्रयसमवेतत्वसंबन्धेन रूपाभावस्य प्रतिबन्धकत्वाकल्पनात्, तद्वृत्तिसंयोगादिप्रत्यक्षानुपपत्तेरभावात्' इत्याहुः।

इत्येवमस्मिन् बत चित्ररूपे मिथ्यादृशां दृक् तिमिरावृते(ति)। परोपकृत्यै सुधियोऽत्र चैतज्ज्योतिर्मयं तत्त्वमुदीरयन्ति ॥ १ ॥

तथाहि— चित्रावयविनो नीरूपत्वं तावदनुभवबाधितम्, तत्र रूपवत्ताधियः सार्वजनीनत्वात्। न च संबन्धविशेषेणावयवरूपमेव तत्र प्रतीयत इति वाच्यम्, अन्यत्राप्यवयवरूपस्यैवैकत्वपरिणामाख्यसंबन्धेनावयविगततया प्रतीतावसमन्मतप्रवेशात्। न चान्यत्रावयवगतेभ्योऽनेकरूपेभ्य एकस्यावयविगतस्य विलक्षणस्यैव रूपस्यानुभवादयमदोष इति वाच्यम्, अत्रैव तत्रापि घटवृत्तित्वावच्छेदेनैकत्वस्य, तदवयववृत्तित्वावच्छेदेन च नानात्वस्याविरुद्धत्वात्। एतेन 'सर्वैश्च नीलैरारब्धेऽवयविनि नीलाद् नीलं स्वस्वावच्छेदेनोत्पद्यमानं रूपमविरोधाद् व्यापकमेवोत्पद्यते, सजातीय-विजातीयेषु नानापदार्थेषु जायमानं समूहालम्बनमिवैकं ज्ञानम्' इति दीधितिकृदुक्तं निरस्तम्, समूहालम्बनेऽप्येकत्वस्य संख्यारूपस्य त्वयानभ्युपगमात्, आश्रयगतैकत्वस्य चातिप्रसङ्गात्, 'एकम्' 'एकम्' इत्यनुगतधिया सकलैकवृत्त्यतिरिक्तैकत्वस्वीकारे च द्वित्वादेरपि तादृशस्य स्वीकर्तुमुचितत्वेनैकत्व-द्वित्वाद्यविरोधात्, एवमेव घटज्ञान-पटज्ञानयोरैक्यमित्यत्र द्विवचनस्य सुघटत्वात्, भिन्नभिन्नावच्छेदेन तत्रैकत्व-द्वित्वोभयसमावेशसंभवात्, प्रयोगस्य च विवक्षाधीनत्वात्; उवाच च वाचकमुख्यः— "अर्पितानर्पितसिद्धेः" इति। एकत्व-द्वित्वयोर्वृत्तावच्छेदकौ च तद्व्यक्ति-तदंशौ। तथाप्येतद्व्यक्त्यवच्छेदेन 'इदमेकं ज्ञानम्' इत्येकत्वभानवद् घटे 'इदमेकं रूपम्' इत्युपपत्तावपि नानावयवरूपेष्वपि 'इदमेकं रूपम्' इति धीः स्यादिति चेत्। न, अभेदविवक्षायामिष्टत्वात्, भेदविवक्षायां च 'इदमुभयं नैकम्' इत्यत्रोभयत्वेनापृथक्कृतैतद्व्यक्तेः पृथक्कृतैकत्वानवच्छेदकत्ववत् पृथक्कृतैतद्व्यक्तेरपृथक्कृतैकत्वानवच्छेदक-

१ तत्त्वार्थसूत्रे ५। ३१।

त्वात्। 'इदमुभयात्मकम्' इत्युभयत्वविशिष्टेदंत्वस्यैकत्वपर्याप्त्यनवच्छेदकत्वेन न स्यात्, 'इदमेकं रूपम्' इति तु शुद्धेदंत्वस्यैकत्वपर्याप्त्यवच्छेदकत्वेन स्यादिति चेत्। स्यादेव यदि प्रदीर्घाध्यवसायिना तेनेदंत्वमेकत्वं च विविच्य न पर्यालोच्येतेति दिग्।

व्याप्यवृत्तिशुक्लादिनानारूपवदवयव्युपगमे च शुक्लाद्युपलम्भे नीलाद्युपलम्भापत्तिरेव दोषः; तदाह— सम्मतिटीकाकारः— "आश्रयव्यापित्वेऽप्येकावयवसहितेऽप्यवयविन्युपलभ्यमानेऽपरावयवानुपलब्धावप्यनेकरूपप्रतिपत्तिः स्यात्, सर्वरूपाणामाश्रयव्यापित्वात्" इति। चित्रैकरूपप्रतिपत्तिरप्यनुभवविरुद्धा, शुक्लादिरूपाणामपि निर्विगानं तत्र प्रतीतेः; यदाहुः- "न च चित्रपटादावपास्तशुक्लादिविशेषं रूपमात्रं तदुपलम्भान्यथानुपपत्त्याऽस्तीत्यभ्युपगन्तव्यम्, कथम्?, 'चित्ररूपः पटः' इति प्रतिभासाभावप्रसक्तेः" इति। किञ्च, एवं शुक्लावयवावच्छेदेनापि चित्रोपलम्भः स्यात्। न च चित्रत्वग्रहे परम्परयावयवगतनीलेतररूप-पीतेतररूपादिमत्त्वग्रहो हेतुः, अत एव 'त्र्यणुकचित्रं चक्षुषा न गृह्यते' इत्याचार्याः। न च नीलेतररूपत्वाद्यवच्छिन्नप्रकारताकग्रहो न हेतुः, नीलत्व-पीतत्वादिनाऽवयवगतनील-पीतादिग्रहेऽप्यवयविचित्रप्रत्यक्षादिति वाच्यम्; विलक्षणचित्रप्रत्यक्षे तेन तेन रूपेण तत्तद्ग्रहस्यापि हेतुत्वात्। वस्तुतो नीलेतररूपत्वादिव्याप्यत्वेन नीलेतररूपत्व-पीतत्वाद्यननुगमाद् न क्षतिरिति चेत्। न, त्र्यणुकचित्ररूपाग्रहे चतुरणुकचित्रप्रत्यक्षानुपपत्तेः; नीलेतररूप-पीतेतररूपादिमदवयवावच्छेदेनेन्द्रियसंनिकर्षस्यावयवनीलादिगतनीलत्वादिग्रहविरोधिदोषाभावानां च हेतुत्वे गौरवात्। अवयविनि साक्षान्नीलपीतादिग्रहस्य तद्ग्रहहेतुत्वे च तत्र नीलादिसिद्धिः, तद्ग्रहस्य भ्रमत्वायोगात्। ॥२०८॥

स्यादेतत्, अव्याप्यवृत्तिनीलादिकल्पे तादृग्नीलादिप्रत्यक्षे द्रव्यतत्समवेतप्रत्यक्षत्वावच्छिन्नं प्रति, अव्याप्यवृत्तिद्रव्यसमवेतप्रत्यक्षत्वावच्छिन्नं प्रति वा चक्षुःसंयोगावच्छेदकावच्छिन्नसमवायसंबन्धावच्छिन्नाधारतासंनिकर्षो निरूपकतया विषयनिष्ठो हेतुः संयोगादिप्रत्यक्षस्थले क्लृप्त एव। न च नीलकपालिकावच्छेदेन चक्षुःसंनिकर्षस्य तत्समवेतनील-पीतोभयकपालावच्छिन्नत्वनियमात् तदवच्छेदेन संनिकर्षे पीतादिग्रहापत्तिः, संयोगव्यक्तिर्यद्देशव्यापिनी तत्र परम्परया तद्देश एवावच्छेदको न तु संपूर्णोऽवयव इत्यभ्युपगमाद् न दोषः। नीलविशिष्टपीतादिना नीलपीतोभयादिना वाऽवान्तरचित्रधीसंभवाद् नावान्तरचित्रसिद्धिः, चित्रत्वेन समप्रवान्तरचित्रत्वसामानाधिकरण्यप्रत्ययस्यापि नील-पीतविशिष्टचित्रत्वसामानाधिकरण्यावगाहित्वात्, नीलाद्यविशेषितनीलादिभेदाश्रयरूपसमुदायेनानुगतचित्रप्रतीतिसंभवाच्चित्रत्वसामान्यमप्यासिद्धमेवेति।

मैवम्, अनुभवसिद्धस्य चित्रत्वस्योक्तरीत्यापलापे नीलादिप्रतीतेरपि भेदविशेषावगाहित्वेन नीलत्वादेरप्यपलापप्रसङ्गात्। अस्तु तर्हि तत्र तत्रावयविनि नीलत्वादितत्तच्चित्रत्वाश्रयमेकमेव व्याप्यवृत्तिरूपादिकं लाघवान्नीलत्वादिकमेव; तत्राव्याप्यवृत्तिगुणविशेषाणामिव जातिविशेषाणामप्यव्याप्यवृत्तित्वेऽविरोधात्, परस्परव्यभिचारिजात्योः सामानाधिकरण्यस्य बाधकविरहसत्तर्कप्रमाणसिद्धस्यानभ्युपगममात्रेण निराकरणायोगात्। अत एव ककारादिषु सर्वेषु ताराद्याकारानुगतमतिरुपपद्यते, एकस्यैव तारत्वादेः ककारादिवृत्तित्वात्, उपपद्यते न मार्त-पाषाण-सौवर्णघटादावनुगतानुगतमतिरिति स्वतन्त्र एव पन्था इति चेत्। सत्यम्, एवमप्येकानेकवस्तुरूपाव्याहतावपि सत्यामपि चित्रत्वग्राहकसामग्र्यां नीलभागावच्छेदेन 'इह न

१ ज. 'माद् नी'।

चित्रम्' इति प्रतीतेस्तत्तदवच्छेदेन पर्याप्तापर्याप्ततया स्वरूपतोऽपि तस्यैकानेकात्मकस्य युक्तत्वात् । एवं हि चित्रप्रतिभासे नीलपीतादिमत्त्वग्रहहेतुत्वमपि न कल्पनीयम्, पनसमात्रदेशावच्छेदेन 'वनम्' इति बुद्ध्यभावस्येव नीलभागमात्रावच्छेदेन चित्रप्रतिभासाभावस्य विषयाभावादेवोपपत्तेः, तद्देशेनाचित्रादिधियश्च नयाधीनत्वात् । तदिदमाह सम्मतिटीकाकारः– "अत एवैकानेकरूपत्वाच्चित्ररूपस्यैकावयवसहितेऽवयविन्युपलभ्यमाने शेषावयवाऽऽवरणे चित्रप्रतिभासाभाव उपपत्तिमान्, सर्वथा त्वेकरूपत्वे तत्रापि चित्रप्रतिभासः स्यात्, अवयविव्याप्त्या तद्रूपस्य वृत्तेः । न चावयवनानारूपोपलम्भसहकारीन्द्रियमवयविनि चित्रप्रतिभासं जनयति, इति तत्र सहकार्यभावाच्चित्रप्रतिभासानुत्पत्तिरिति वाच्यम्; अवयविनोऽप्यनुपलब्धिप्रसङ्गात् । न हि चाक्षुषप्रतिपत्त्याऽगृह्यमाणरूपस्यावयविनो वायोरिव ग्रहणं दृष्टम् । न च चित्ररूपव्यतिरेकेणापरं तत्र रूपमात्रमस्ति, यतस्तत्प्रतिपत्त्या पटग्रहणं भवेत्" इत्यादि । तदेवं चित्ररूपवत् सिद्धं नित्याऽनित्यत्वादिरूपेणैकानेकं वस्त्विति परिभावनीयं सुधीभिः । विस्तरस्तु स्याद्वादरहस्ये ॥ ३७ ॥

'क्षयेक्षणात्' इति तुर्यहेतुं दूषयन्नाह—

**अन्ते क्षयेक्षणं चाद्यक्षणक्षयप्रसाधनम् । तस्यैव तत्स्वभावत्वाद्युज्यते न कदाचन ॥३८॥**

अन्ते क्षयेक्षणं च– अन्ते नाशदर्शनं च, आद्यक्षणक्षयप्रसाधनं– प्रथमक्षणे वस्तुनः सर्वथा नाशस्यानुमापकं यदुक्तम्, तस्यैव– वस्तुनः, तत्स्वभावत्वात्– अन्त एव क्षयस्वभावत्वात्; न युज्यते कदाचन तत्, अन्यथाऽतत्स्वभावत्वापत्तेः॥३८॥

एतदेव समर्थयन्नाह—

आदौ क्षयस्वभावे च तत्रान्ते दर्शनं कथम् ? । तुल्यापरापरोत्पत्तिविप्रलम्भाद्यथोदितम् ३९

आदौ– प्रथमक्षण एव, क्षयस्वभावे च– नाशस्वभावे च, तत्र– वस्तुन्यभ्युपगम्यमाने, अन्ते दर्शनं कथम् ?– आदावेव किं न तद्दर्शनम् ? इति भावः । पराभिप्रायमाह– तुल्यापरापरोत्पत्तिविप्रलम्भात्– सदृशोत्तरोत्तरक्षणप्रतिरोधात् अन्त एव तद्दर्शनम् , नादौ, प्रतिबन्धकसत्त्वादिति । अत्र स्वाभियुक्तसम्मतिमाह– यथोदितं पूर्वग्रन्थे वृद्धैः ॥ ३९ ॥

किमुदितम् ? इत्याह—

'अन्ते क्षयेक्षणादादौ क्षयोऽदृष्टोऽनुमीयते । सदृशेनावरुद्धत्वात्तद्ग्रहाद्धि तदग्रहः' ॥४०॥

अन्ते क्षयेक्षणात्– अन्ते नाशदर्शनात् , आदौ– उत्पत्तिकाले, क्षयः– नाशः, अदृष्टोऽप्यनुमीयते, अनश्वरस्यान्तेऽपि तदयोगात् । कथं तर्हि प्राक् तदग्रहः ? इत्याह– सदृशेन– तुल्यक्षणेन, अवरुद्धत्वात् ; तद्ग्रहाद्धि– सदृशग्रहादेव, तदग्रहः– आद्यक्षयाग्रहः । अत्र 'घटोत्पत्तिक्षणो घटध्वंसाधिकरणः, घटध्वंसाधिकरणक्षणपूर्वक्षणत्वात्' इत्यनुमाने घटोत्पत्तिप्राच्यक्षणे व्यभिचारः, हेतौ घटोत्पत्त्यपूर्वत्वविशेषणे च संतानेन व्यभिचार इति दूषणं स्फुटमेवेति ॥ ४० ॥

तदग्रहहेतुं दूषयन्नाह ग्रन्थकारः—

---

१ ज. 'हृ ए' ।

**एतदप्यसदेवेति सदृशो भिन्न एव यत्। भेदाग्रहे कथं तस्य तत्स्वभावत्वतो ग्रहः?॥४१॥**

एतदपि- परोक्तम्, असदेव- अनुपपद्यमानार्थकमेव, यद्- यस्मात्, सदृशो भिन्न एव- भेदघटित एव। तद्भिन्नत्वे सति तद्वृत्तिधर्मवत्त्वं हि सादृश्यम्। तद्वृत्तिश्च धर्मो विधिरूपो निषेधरूपो वेत्यन्यदेतत्। ततः किम्? इत्याह- भेदाग्रहे सति, कथं तस्य- सदृशस्य, ग्रहः?। कुतः? इत्याह- तत्स्वभावत्वतः- भेदघटितस्वभावत्वात्। न च तद्घटितं तदग्रहे गृह्यते, जलत्वाग्रहे जलत्वस्वभावत्वाग्रहदर्शनात्॥ ४१ ॥

पराभिप्रायमाशङ्कते—

**तदर्थनियतोऽसौ यद्भेदमन्याग्रहाद्धि तत्। न गृह्णातीति चेत्तुल्यः सोऽपरेण कुतो गतिः?॥**

तदर्थनियतः- अधिकृतैकक्षणार्थविषय इत्यर्थः, असौ- ग्रहः सदृशपरिच्छेदः, यद्- यस्मात्, भेदं- नानात्वलक्षणम्, तत्- तस्मात्, अन्याग्रहाद्धि- तदा प्रतियोग्यग्रहणादेव, न गृह्णाति, तत्त्वतस्तस्यैव स वस्तुतः सदृशग्रहे। एवं हि तन्नाशग्रहप्रतिबन्धको दोषः। न तु सदृशत्वग्रहोऽप्यपेक्षितः। न हि शुक्तौ रजतसारूप्यग्रहोऽप्युल्लिखितरजतभेद एव रजतत्वभ्रमजनकः, रजतभेदग्रहे रजतत्वभ्रमस्यैवाभावात्; किन्तु स्वरूपत एव, तद्वदत्रापीति भावः। अत्र शुक्तौ रजतसहचरितचाकचिक्यादिधर्मवत्त्वग्रहादेव रजतभ्रमः, प्रकृते तु सदृशदर्शनं निर्विकल्पतयाऽसत्कल्पं न नाशग्रहविरोधि, अतिप्रसङ्गात्। अस्तु वा यथा कथञ्चिदेतत्, तथापि सादृश्यस्य दुर्ग्रहत्वात् तदुक्तेरेवानुपपत्तिः, इत्यभिप्रायवानुत्तरयति- इति चेत्- यद्युक्ताभिप्राय-

वानभवान्, तदा सः- गृह्यमाणः क्षणः, अपरेण- प्राग्गृहीतेन क्षणेन, तुल्यः- सदृशः । 'इति' इति शेषः, कुतो गतिः- कथं परिच्छित्तिः ?- उपायाभावाद् न कथञ्चिदित्यर्थः ॥ ४२ ॥

तदगतौ को दोषः ? इत्यत आह—

**तथागतेरभावे च वचस्तुच्छमिदं ननु । सदृशेनावरुद्धत्वात्तद्ग्रहाद्धि तदग्रहः ॥४३॥**

तथागतेः- भेदपरिच्छित्तेः, अभावे च सति, इदं- प्रागुक्तम्, भवतो वचः, 'ननु' इत्याक्षेपे, तुच्छं- असारम्, अन्वयावबोधकत्वात् । किम् ? इत्याह- यदुत 'सदृशेनावरुद्धत्वात् तद्ग्रहाद्धि तदग्रहः' इति ॥ ४३ ॥

दर्शने भेदानुल्लेखेऽपि विकल्पे तदुल्लेखात् सादृश्यविकल्पसंभवात् कथमुक्तवचसोऽनुपपत्तिः ? इत्याशङ्कायामाह—

**भावे वास्या बलादेकमनेकग्रहणात्मकम् । अन्वयि ज्ञानमेष्टव्यं सर्वं तत्क्षणिकं कुतः ? ॥४४॥**

भावे वाऽस्याः- भेदगतेः, बलात्- अस्वरसादपि, अनेकग्रहणात्मकं- पूर्वापरग्रहणरूपम्, एकमन्वयि ज्ञानमेष्टव्यम्, अन्यथा भेदग्रहदशायां प्रतियोगिग्रहाभावात् तद्ग्रहानुपपत्तेः, प्रदीर्घपर्यालोचनानुपपत्तेश्च । यत एवम्; तत्- तस्मात्, सर्वं क्षणिकं कुतः, उक्तज्ञानस्यैवान्वयैकत्वात् ? ॥ ४४ ॥

प्रसङ्गात् क्षणिकत्वे दोषान्तरमाह—

१ अत्रैव स्तबके कारिका ४० ।

**ज्ञानेन गृह्यते चार्थो न चापि परदर्शने। तदभावे तु तद्भावात्कदाचिदपि तत्त्वतः ॥४५॥**

न च परदर्शने– बौद्धमते, ज्ञानेनार्थोऽपि– नीलादिरपि, गृह्यते– ग्रहीतुं शक्यते, तत्त्वतः– परमार्थतः, कदाचिदपि। कुतः? इत्याह– तदभावे तु तद्भावात्– नीलाद्युत्पत्त्यनन्तरमेव ज्ञानोत्पत्तेः, अर्थ-ज्ञानयोर्हेतु-हेतुमद्भावाभ्युपगमात्, तस्य च पौर्वापर्यनियतत्वात्। एवं च वर्तमानसंबन्धित्वावगमोऽर्थस्य क्षणद्वयावस्थितत्वं विना दुर्घटः। न च जनकोऽर्थो वर्तमानकालतया नाक्षसंविदि प्रतिभाति, किन्तु तस्यां तत्समानकालभाव्याकारः, तस्य च तथावभासाद् वर्तमानार्थावगमोक्तिरिति वाच्यम्; ज्ञानकाले बहिरवभासमानस्य नीलादेर्ज्ञानाकारत्वासिद्धेः, अन्यथाऽन्तरवभासमानस्य सुखादेरप्यर्थाकारताप्रसक्तिः, इति ज्ञानसत्तैवोत्सीदेत्। न च न गृह्यमाणस्य ज्ञानसमानसमयस्य जनकता, जनकस्य च क्षणिकत्वेन वर्तमानतयाऽतीतस्य न प्रतिभासः, इति समारोपिताकारग्राहि सर्वमेव ज्ञानमिति सांप्रतम्; नील-द्विचन्द्रज्ञानयोरविशेषापत्तेः। न च बाह्यार्थवादिना तयोरविशेषोऽभ्युपगन्तव्यः, प्रमाणा-ऽप्रमाणविभागविलयप्रसक्तेः। न च ज्ञाना-ऽर्थयोरेकसामग्रीजन्ययोः सहभावित्वेन वर्तमानग्रहणं क्षणिकत्वेऽपि वैभाषिकमताश्रयणेनाभ्युपगन्तव्यम्, क्रियानियमस्य कर्मशक्तिनिमित्तत्वेन व्यवस्थापितत्वादिति ॥४५॥

अभ्युपगम्याप्यर्थग्रहं दोषान्तरमाह—

**ग्रहणेऽपि यदा ज्ञानमपैत्युत्पत्त्यनन्तरम्। तदा तत्तस्य जानाति क्षणिकत्वं कथं ननु? ॥४६॥**

ग्रहणेऽप्यर्थस्य यदा ज्ञानमुदेति तदा तद्– ग्राह्यम्, उत्पत्त्यनन्तरं– उत्पत्तिनाशकाले, अपैति– नश्यति। अतस्तस्य

क्षणिकत्वं कथं ननु ?– नैव जानाति, वस्तुत्वात् तस्य, ज्ञानस्य च वस्तुग्राहकत्वात् ॥ ४६ ॥

जानात्येव वस्तुदर्शनं क्षणिकत्वमपि, स्वरूपतोऽविकल्पस्वभावत्वात्, विकल्पयति तु न, इति पराशयमाह—

**तस्यैव तत्स्वभावात्स्वात्मनैव तदुद्भवात् । यथा नीलादि ताद्रूप्यान्नैतन्मिथ्यात्वसंशयात्॥४७॥**

तस्यैव–अर्थस्य, तत्स्वभावत्वात्– क्षणिकत्वस्वभावत्वात्, स्वात्मनैव– ज्ञानात्मनैव, जानाति क्षणिकत्वम् । कुतः ? तदुद्भवात्– क्षणिकस्वभावादर्थादुत्पत्तेः । निदर्शनमाह– यथा नीलादि जानाति, ताद्रूप्यात्– विषयसारूप्यात्, न तु विकल्पविधया, तथेदमपीति भावः । अत्रोत्तरम्– नैतद्– यदुक्तं परेण, तन्नीत्यैव मिथ्यात्वसंशयात्– क्षणिकत्वबोधे सांख्यानामालोचने शुक्ले पीतदर्शनादुत्तरकाले तत्र पीतानिश्चयात् । प्राक् पीतानालोचनमनुमीयते चेत् । क्षणिकत्वदर्शनेऽपि तुल्ययोगक्षेममेतदिति ॥ ४७ ॥

स्वानुमानतोऽपि न क्षणिकत्वबोध इत्याह—

**न चापि स्वानुमानेन धर्मभेदस्य संभवात् । लिङ्गधर्मातिपाताच्च तत्स्वभावाद्ययोगतः॥४८॥**

न चापि स्वानुमानेन जानाति क्षणिकत्वं, यथा मद्रूपमनित्यं तथाऽयमपीति । कुतः ? इत्याह– धर्मभेदस्य संभवात्– चेतनेतररूपधर्मभेदोपपत्तेः, किञ्चित्ताद्रूप्येऽपि तथा ताद्रूप्याभावेन साधारण्या व्याप्तेरविकल्पनात् । दोषान्तरमाह— लिङ्गधर्मातिपाताच्च– लिङ्गरूपातिलङ्घनाच्च तदात्मन एव स्वानुमानपक्षे । कुतः ? इत्याह– तत्स्वभावाद्ययोगतः– तस्यार्थस्य न

तज्ज्ञानं स्वभावः, नापि कार्यम्, न चान्येन गम्य इति यावत्, तद्रूपविशेषाभावात् । न चार्थक्रियालक्षणसत्त्वेन क्षणिकत्वानुमानमपि युक्तम्, ततः क्षणावस्थितिमात्रसाधने सिद्धसाधनात्, क्षणावस्थितिनिबन्धनत्वाद् बहुक्षणस्थितेः, क्षणादूर्ध्वमभावस्य च तेन सह प्रतिबन्धाग्रहेण साधयितुमशक्यत्वादिति भावः ॥ ४८ ॥

अथ नित्यस्यार्थक्रियाऽक्षमत्वात् पारिशेष्यात् क्षणिकत्वं सेत्स्यतीत्याशङ्क्याह—

**नित्यस्यार्थक्रियायोगोऽप्येवं युक्त्या न गम्यते । सर्वमेवाविशेषेण विज्ञानं क्षणिकं यतः ॥४९॥**

एवं सति नित्यस्यार्थक्रियाऽयोगोऽपि न गम्यते युक्त्या– नित्यस्यैवाज्ञानात् । अत्र हेतुमाह– यतः सर्वमेव विज्ञानमविशेषेण क्षणिकम् । एवं च बहुक्षणस्थायित्वरूपं नित्यत्वं कथं बहुक्षणाग्रहे सुग्रहम् ? इति भावः ॥ ४९ ॥

न चार्थक्रियाऽभावोऽप्यक्षणिके, इति वस्तुस्थितिमाह––

**तथाचित्रस्वभावत्वान्न चार्थस्य न युज्यते । अर्थक्रिया ननु न्यायात्क्रमाक्रमविभावनी ॥५०॥**

तथाचित्रस्वभावत्वात्– क्रमवत्परिणामानुविद्धाक्रमवद्द्रव्यरूपत्वात्, न चार्थस्य न युज्यतेऽर्थक्रिया– किन्तु युज्यते, ननु– निश्चितम्, न्यायात्– अनुभवसहितात् तर्कात् । कीदृशी ? इत्याह– क्रमाक्रमविभावनी– युगपदयुगपदुत्पत्तिका सुखदुःख ज्ञानजननजलाद्यानयनादिरूपा । तत्र च काचिदस्मदादिसंवेद्या, अन्या चातादृशी । तेन न येन घटेन कदापि जला-

१ ज. 'म्यत इ' । २ ज. ग्रहणे सा' । ३ ख.ग.घ.च.ज.'भावनी' । ४. ख. ग. घ. च. 'दाचिन्न' ।

नयनादि न कृतं तस्यार्थक्रियाकारित्वाभावादसत्त्वम्, अन्ततस्तथासिद्धज्ञानज्ञेयत्वादिपर्यायरूपाया अप्यर्थक्रियायास्तेन करणादिति द्रष्टव्यम् ॥ ५० ॥

इतस्ततो नोड्डयनं विधातुं पक्षी समर्थः सुगतात्मजोऽयम् । विसृत्वरस्तार्किकतर्कशक्त्या यतो विलूनः क्षणिकत्वपक्षः ॥१॥
निरीक्ष्य साक्षादवलम्ब्यमानं परैर्विशीर्णं क्षणिकत्वपक्षम् । स्याद्वादविद्यामवलम्बनं भोः श्रयन्तु विज्ञाः ! सुदृढं हिताय ॥२॥

क्षणिकत्ववादतात्पर्यविषयवार्तामाह—

**अन्ये त्वभिदधत्येवमेतदास्थानिवृत्तये । क्षणिकं सर्वमेवेति बुद्धेनोक्तं न तत्त्वतः ॥५१॥**

अन्ये तु– मध्यस्थाः, एवमभिदधति यदुत– एतदास्थानिवृत्तये– रागनिबन्धनविषयनित्यत्ववासनापरित्यागाय, 'क्षणिकं सर्वमेव' इति बुद्धेनोक्तम्, न तत्त्वतः– न यथाश्रुततत्त्वबोधनाभिप्रायेण । उच्यते चानित्यताभावनाभावनायैवमस्मदीयैरपि; तदुक्तम्—

"यत्प्रातस्तद् न मध्याह्ने यद् मध्याह्ने न तन्निशि । निरीक्ष्यते भवेऽस्मिन् हि पदार्थानामनित्यता ॥ १ ॥" इति ॥५१॥

विज्ञानवादतात्पर्यविषयप्रतिपादनायाह—

**विज्ञानमात्रमप्येवं बाह्यसङ्गनिवृत्तये । विनेयान् कांश्चिदाश्रित्य यद्वा तद्देशनार्हतः ॥५२॥**

एवं– क्षणिकत्ववत्, विज्ञानमात्रमपि, ज्ञानातिरिक्तस्यालीकत्वज्ञाने तन्मात्रप्रतिबन्धेन बाह्यसङ्गनिवृत्तये– धन-धान्यादि-

बाह्यार्थपरिष्वङ्गपरित्यागाय, सामान्यतो विनेयानाश्रित्योक्तम् । विशेषविषयमाह– यद्वा, अर्हतः– ज्ञाननयावधारणयोग्यान्, कांश्चिद् विनेयानतिनिपुणानाश्रित्य, तद्देशना– ज्ञानवाददेशना ॥ ५२ ॥

न चैतदुक्तं बुद्धाकूतं न युक्तमित्याह—

**न चैतदपि न न्याय्यं यतो बुद्धो महामुनिः। सुवैद्यवद् विना कार्यं द्रव्यासत्यं न भाषते ॥५३ ॥**

न चैतदपि– अनन्तरमुक्तम्, न न्याय्यं– न सांप्रतमिति वाच्यम्, यतो बुद्धो महामुनिः– विदिततत्त्वो निरुपधिपरदुःखप्रहाणेच्छामूलकदेशनाप्रवृत्तिशाली च परैरिष्यते, अतोऽयं सुवैद्यवत् कार्यं विना– परहितानुबन्धि प्रयोजनं विना, न भाषते द्रव्यासत्यम् । यथा हि सुवैद्यः कटुकमप्यौषधं कटुकौषधपानभीतस्य परस्य प्रवृत्तयेऽकटुकमपि वदन् नाऽनाप्तः स्यात्, तथा बुद्धोऽप्यक्षणिकैकरूपं ज्ञप्तिमात्रास्वभावं च विनेयमतिपरिष्काराय तथा वदन्नपि नाऽनाप्तः स्यात्; अन्यथा तु स्यादेव। तथा च तदाप्तत्वे तद्देशनाया अत्र तात्पर्यम्, अन्यथा तु तस्यानाप्तत्वमेवेति भावः ॥ ५३ ॥

वार्तान्तरमाह—

**ब्रुवते शून्यमन्ये तु सर्वमेव विचक्षणाः । न नित्यं नाप्यनित्यं यद्वस्तु युक्त्योपपद्यते ॥५४॥**

अन्ये तु विचक्षणाः– वितण्डापण्डिता माध्यमिकाः, सर्वमेव वस्तु शून्यं ब्रुवते । कुतः ? इत्याह– यद्– यस्मात्, वस्तु युक्त्या विचार्यमाणं न नित्यं नाप्यनित्यमुपपद्यते ॥ ५५ ॥

एतदेव प्रकटयन्नाह—

**नित्यमर्थक्रियाभावात्क्रमाक्रमविरोधतः। अनित्यमपि चोत्पादव्ययाभावान्न जातुचित् ॥५५॥**

क्रमाक्रमविरोधतः— क्रमवद्विज्ञानादिकार्यकारित्वे भेदप्रसङ्गात्, अक्रमवत्कार्यकारित्वे चैकदा सर्वकार्योत्पत्तेः, अर्थक्रियाऽभावाद् नित्यं वस्तु न युक्तम्। अनित्यमप्युत्पाद-व्ययाभावाज्जातुचिद् न युक्तम्। न हि तौ स्वतः, परतः, उभाभ्याम्, अनिमित्तौ वा संभवतः। आद्ये, कारणापेक्षाऽभावेन देशादिनियमाप्रसक्तेः। द्वितीयेऽपि, सत्त्वे कारणवदुत्पत्तिविरोधात्, असत्त्वे खरविषाणवदुत्पाद-नाशायोगात्, उभयस्वभावत्वे च विरोधात्। तृतीये चोभयदोषानुषङ्गात्, "प्रत्येकं यो भवेद् दोषो द्वयोर्भावे कथं न सः?" इत्युक्तत्वात्। चतुर्थे चानभ्युपगमात्। तदुक्तम्—

"न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः। उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन॥ १॥"[1] इति ॥ ५५ ॥

नन्वेवं कथं पुत्रोत्पादज्ञाने सुखम्, तद्ध्वंसे च ज्ञाते दुःखम्? इत्यत आह—

**उत्पाद-व्ययबुद्धिश्च भ्रान्तानन्दादिकारणम्। कुमार्याः स्वप्नवज्ज्ञेया पुत्रजन्मादिबुद्धिवत् ५६**

उत्पाद-व्ययबुद्धिश्च लौकिकी, परमार्थेन भ्रान्ता— न वस्तुसती। किंवत्? इत्याह— कुमार्याः स्वप्नवत्— स्वापदशायामकृतसंभोगायाः कन्यायाः संभोगानुभववत्। ईदृश्यपि साऽऽनन्दादिकारणम्, आदिना शोकग्रहः। किंवत्? इत्याह— पुत्रज-

[1] नागार्जुनविरचिते माध्यमिककारिकाग्रन्थे प्रत्ययपरीक्षाप्रकरणे श्लो० १।

न्मादिबुद्धिवत्, आदिना पुत्रमरणग्रहः, 'कुमार्याः स्वप्ने' इति योज्यते।

अत्रायममीषां संप्रदायः- नीलादयो न परमार्थसद्व्यवहारानुपातिनः, विशददर्शनावभासित्वात्, तिमिरपरिकरितदृगवभासीन्दुद्वयवत्। न च चन्द्रद्वयज्ञानं बाध्यत्वाद् भ्रान्तम्, नीलादिज्ञानं त्वबाध्यत्वाद् न तथेति सांप्रतम्, बाध्यत्वानुपपत्तेः; तथाहि- बाधकेन न विज्ञानस्य तत्कालभावि स्वरूपं बाध्यते, तदानीं तस्य स्वरूपेण प्रतिभासनात्। नाप्युत्तरकालम्, क्षणिकत्वेन तस्य स्वयमेवोत्तरकालेऽभावात्। नापि प्रमेयं प्रतिभासमानेन रूपेण बाध्यते, तस्य विशदप्रतिभासादेवाभावासिद्धेः। अप्रतिभासमानेन तु रूपेण स्वत एव बाधः। नापि प्रवृत्तिरुत्पन्ना बाध्यते, उत्पन्नत्वादेवासत्ताऽयोगात्; अनुत्पन्नायास्तु स्वत एव बाधः। किञ्च, बाधकं न बाध्यापेक्षया भिन्नसंतानम्, अतिप्रसङ्गात्। एकसंतानमपि न तदेककालम्, असंभवात्। नापि भिन्नकालमेकार्थम्, उत्तरघटज्ञानस्य पूर्वघटज्ञानबाधकतापत्तेः। नापि भिन्नार्थम्, उत्तरपटज्ञानस्य तथात्वापत्तेः। नाप्यनुपलब्धिर्बाध्यज्ञानसमानकाला तद्बाधिका, तस्या असिद्धेः। नाप्युत्तरकालभाविनी बाध्यज्ञानैकार्थविषया, एकविषयकस्य तदर्थसाधकत्वेनाबाधकत्वात्। नापि विभिन्नविषया, तस्यास्तदानीं स्वविषयसाधकत्वेन बाध्यज्ञानविषयाभावासाधकत्वात्। न च दुष्टकारणप्रभवत्वेनेन्दुद्वयधियोऽसत्यार्थविषयत्वावगमो बाध्यत्वम्, असिद्धेः, इन्द्रियेण दोषाग्रहणात्। न च समानसामग्रीकस्य नरान्तरस्य तदग्रहणादितरत्र दुष्टकारणानुमानम्, तिमिराभावाद् नरान्तरे सामग्रीसाम्यासिद्धेः। न च मिथ्यारूपत्वेन तत्र दुष्टकारणजन्यत्वानुमानम्, इतरेतराश्रयात्। न चेन्दुद्वयज्ञानस्य विसंवादित्वादसत्यत्वम्, समानजातीयतद्विज्ञानानुत्पत्तिरूपविसंवादस्य यावत्तिमिरमसिद्धेः, विजातीयज्ञानोत्पत्तेर्विसंवादत्वे च स्तम्भादिप्रतिभासेऽतिप्रसङ्गात्। ॥२१४॥

ततो न नील-द्विचन्द्रादिज्ञानयोः कश्चिद् विशेषः, द्विचन्द्रवद् नीलस्य विचार्यमाणस्यानुपपन्नत्वात् ।

न चैवं नीलादेर्भिन्नस्यानुपपत्तेरभेदस्य न्यायप्राप्तत्वाज्ज्ञानाद्वैतापत्तिः, न शून्यतेति वाच्यम्; नीलादेर्विचित्रस्य प्रतिभासे जगतोऽपि चित्रताप्राप्तेः; तदुक्तम्– "किं स्यात्सा चित्रतैकस्याम्" इत्यादि । न च नीलाद्यनुपरक्तं प्रकृतिपरिशुद्धज्योतिर्मात्रमेव तत्त्वमस्तु न शून्यतेति वाच्यम्; तथाभूतज्योतिर्मात्रस्य कदाचनाप्यप्रतिपत्तेः । नीलादेरवभासशून्यतापि न प्रतीयत इति चेत् । किं ततः ?, न हि वयं प्रतिभासविरतिलक्षणां शून्यतां ब्रूमः, किन्तु प्रतिभासोपमत्वं सर्वधर्माणाम्; उक्तं च– "प्रतिभासोपमाः सर्वे धर्माः" इति । प्रतिभासश्च सर्वो भेदा-ऽभेदशून्यः । न हि नीलस्वरूपं सुखाद्यात्मना भिन्नमभिन्नं वानुभूयते, अन्यापेक्षत्वात् तथानुभवस्य । न च भेदवेदनमेवैकत्वावेदनम्, एकत्वाविदनस्यैव भेदवेदनत्वप्रसङ्गात् । एतेन 'प्रतिभासे सति कथं शून्यता' इत्यपास्तम्, 'तस्यैकानेकस्वभावयोगतः शून्यता' इति प्रतिपादनात् । तदुक्तमाचार्येण–

"भावा ये न निरूप्यन्ते तद्रूपं नास्ति तत्त्वतः । यस्मादेकमनेकं वा रूपं तेषां न विद्यते ॥ १ ॥"

इति । ततो बाह्यमाध्यात्मिकं वा रूपं न तत्त्वम्, स्थूल-परमाण्वादिरूपानुपपत्तेः, किन्तु सांवृतमेव । संवृतिश्च त्रिधा– एका लोकसंवृतिर्मरीचिकादिषु जलभ्रान्तिरूपा, अपरा तत्त्वसंवृतिः सत्यनीलादिप्रतीतिरूपा, अन्या चाभिसमयसंवृतिर्योगिप्रतिपत्तिरूपा, योगिप्रतिपत्तेरपि ग्राह्य-ग्राहकाकारतया प्रवृत्तेः; उक्तं च भगवद्भिः– "कतमत् संवृतिसत्त्वं यावल्लोकव्यवहारः" इति । ततो मध्यमक्षणरूपा संविदेव सर्वधर्मरहिता परमार्थसतीति सिद्धम् । आह च––

" मध्यमा प्रतिपत् सैव सैव धर्मनिरात्मता । भूतकोटिश्च सैवेयं तथ्यता सैव शून्यता ॥ १ ॥ " इति ।

सा चाविभागरूपाप्यविद्यावशाद् विभक्तरूपेव भासते, तदुक्तम्—
" अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः । ग्राह्य-ग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥ १ ॥ "
इति । समस्ताविद्याविलये तु स्वच्छसंविन्मात्रमाभासते; तदुक्तम्—
" नान्योऽनुभाव्यो बुद्ध्यास्ति तस्य नानुभवोऽपरः । ग्राह्य-ग्राहकवैधुर्यात् स्वयं सैव प्रकाशते ॥ १ ॥ " इति ॥५६॥

एतन्निराकरणवार्तामाह—

**अत्राप्यभिदधत्यन्ये किमित्थं तत्त्वसाधनम् । प्रमाणं विद्यते किञ्चिदाहोस्विच्छून्यमेव हि ५७**

अत्रापि– शून्यतावादेऽपि, अन्ये– वादिनः, अभिदधति यदुत– किमित्थं तत्त्वसाधनं शून्यतातत्त्वसाधनम्, किञ्चित् प्रमाणं– वस्तुसद् विद्यते, आहोस्वित् शून्यमेव हि– न विद्यते प्रमाणम् ? इत्यर्थः ॥ ५७ ॥

पक्षद्वये दोषमाह—

**शून्यं चेत्सुस्थितं तत्त्वमस्ति चेच्छून्यता कथम् ? । तस्यैव ननु सद्भावादिति सम्यग्विचिन्त्यताम् ।**

शून्यं चेत् शून्यतायां प्रमाणं, तदा सुस्थितं– सम्यग् व्यवस्थितं, तत्त्वम्, अवस्तुसता प्रमाणेन प्रमेयव्यवस्थितेरित्युपहासः । अस्ति चेत् प्रमाणं तत्साधकम्, तदा कथं शून्यता, तस्यैव– प्रमाणस्य, सद्भावात्– तत्त्वरूपत्वात् सकलपदार्थाभावासिद्धेः, इति सम्यग् विचिन्त्यतां माध्यस्थ्यमवलम्ब्य ॥ ५८ ॥

अथ न शून्यता नाम काचिद् विविक्ता प्रतिभासते यस्यां प्रमाणान्वेषणं फलवत् स्यात्, किन्तु प्रतिभासोपमत्वं सर्वधर्माणामित्याशङ्क्याह—

**प्रमाणमन्तरेणापि स्यादेवं तत्त्वसंस्थितिः। अन्यथा नेति सुव्यक्तमिदमीश्वरचेष्टितम्॥५९॥**

प्रमाणमन्तरेणापि– विनापि व्यवस्थापकम्, एवं तत्त्वसंस्थितिः– सर्वधर्माणां मायोपमत्वव्यवस्थितिः, स्यात्; अन्यथा– अनुभूयमानानन्तधर्मात्मकत्वे च, न स्याद् व्यवस्थितिः। इदमीश्वरचेष्टितम्– स्वतन्त्राज्ञामात्रम्। सर्वधर्मराहित्येऽपि मानमवश्यमन्वेषणीयमिति भावः॥ ५९ ॥

पराशयमाशङ्क्य निराकुरुते—

**उक्तं विहाय मानं चेच्छून्यतान्यस्य वस्तुनः। शून्यत्वे प्रतिपाद्यस्य ननु व्यर्थः परिश्रमः॥६०॥**

उक्तं शून्यतासाधकं मानं विहाय चेद् यद्यन्यस्य वस्तुनः शून्यता, मानं पुनरशून्यमेवेति न दोष इति भावः, तदा प्रतिपाद्यस्य– यमुद्दिश्य शून्यतासाधकं मानं प्रयुज्यते, तस्य शून्यत्वे व्यर्थः परिश्रमः प्रकृतप्रयोगस्य; अन्यथा शशशृङ्गमुद्दिश्याप्येतत्प्रयोगं किं न कुरुषे ?। तथा च सुष्ठूक्तं भट्टेन—

"सर्वदा सदुपायानां वादमार्गः प्रवर्तते। अधिकारोऽनुपायत्वाद् न वादे शून्यवादिनः॥ १ ॥" इति ॥ ६० ॥

तदशून्यतायां दोषमाह—

**तस्याप्यशून्यतायां च प्राश्निकानां बहुत्वतः । प्रभूताशून्यतापत्तिरनिष्टा संप्रसज्यते ॥६१॥**

तस्यापि– प्रतिपाद्यस्यापि– अशून्यतायामभ्युगम्यमानायाम्, प्राश्निकानां– पर्यनुयोक्तॄणाम्, बहुत्वतः– बाहुल्यात्, प्रभूताऽशून्यतापत्तिः– बहूनां ताच्विकतापत्तिः, अनिष्टा तत्र, संप्रसज्यते– बलादापतति ॥ ६१ ॥

इदमेव स्पष्टयति—

**यावतामस्ति तन्मानं प्रतिपाद्यास्तथा च ये । सन्ति ते सर्व एवेति प्रभूतानामशून्यता ॥६२॥**

यावतां प्रमातॄणामस्ति तन्मानं– शून्यतासाधकं प्रमाणम्, तथा ये प्रतिपाद्यास्ते सर्वे एव सन्ति– परमार्थतो न तु शून्याः, इति हेतोः, प्रभूतानामशून्यतेति । ननु य एव परिशीलितसुगतश्रुतोपनिषद्दलितनिखिलाविद्याकलङ्कः, स एवाशून्यः, तस्यैव च निर्धर्मकसंविन्मात्रं मानमशून्यं, परमार्थसत्त्वात्; इतरेषां तु वादि-प्रतिवादिप्राश्निकानां व्यवहारत एव सत्त्वम् । तत एव च साध्य-साधन-दृष्टान्तादिभेदेनोक्तप्रपञ्चासत्यतानुमानसंभवः; तदुक्तमाचार्येण– "सर्व एवायमनुमानानुमेयव्यवहारः सांवृतः" इत्यादीति चेत् । न, तत्र तत्त्वज्ञानिनः शून्यतानुभवस्य त्वयैव श्रद्धाविषयत्वात् । अनुमानेन च प्रागुक्तेन न नीलादिज्ञाने द्विचन्द्रादिज्ञानतुल्यमसत्यत्वं साधयितुं शक्यम्, बाध्यत्वा-ऽबाध्यत्वाभ्यामुभयवैलक्षण्यात् । न च बाध्यबाधकभावो निराकृत एवेति वाच्यम्, व्यवहारसिद्धस्य तस्य निराकर्तुमशक्यत्वात्; बाधकेन ज्ञानस्य, स्वरूपस्य, विषयस्य, फलस्य वाऽबाधेऽपि बाध्यज्ञानेऽप्रामाण्यज्ञापनात्; तदुक्तं सूरिणा– "किन्तु ज्ञानस्यासद्विषयत्वम्, अर्थस्य चासत्प्रतिभासनं तेन ज्ञाप्यते" इति ।

अत्र ज्ञानस्यासद्विषयत्वं तदभाववति तत्प्रकारकत्वम्, अर्थस्यासत्प्रतिभासनं च स्वाभाववद्विशेष्यकज्ञानप्रकारत्वम्, तथाभानं च तदभावस्फूर्त्या मानसाध्यक्षोहादिना दीर्घाध्यवसायिनेति तत्त्वम्। कथं च बाध्यबाधकभावानभ्युपगमे स्कन्ध-संतानादि-विकल्पानां निर्विषयत्वोपवर्णनं युक्तिमत् स्यात्?, कथं वा बाध्यबाधकभावप्रतिषेधविधायियुक्त्युपन्यासो न व्यर्थः स्यात्?, समारोपव्यवच्छेदार्थं तदुपन्यासे तद्व्यवच्छेदस्य स्वरूपापहाररूपत्वे बाध्यबाधकभावोपगमप्रसङ्गात्?, उदयकाल एव तदपहारे तदर्थं शास्त्रप्रणयनानुपपत्तेश्च।

अथ शास्त्रादेः प्राक्तनसमारोपक्षणादुत्तरसमारोपक्षणजननासमर्थः क्षणः समुपजायत इति तन्निवृत्तिः, तर्हि बाधकाद् बाध्यनिवृत्तिरपि तथैव संपत्स्यत इति न तन्निराकरणं युक्तम्। ईदृशं बाध्यत्वमेव फलतो नीलादिज्ञाने साध्यत इति चेत्। न, प्रत्यक्षबाधात्। न हि द्विचन्द्रादिज्ञान इव सत्यनीलादिज्ञानेऽवतरति कस्यापि बाध इति। अथ द्विचन्द्रादौ बाधोऽपि लोकाभिमत एव, तत्र लोकसंवृतिसिद्धं सत्त्वम्, इति लोकानां सत्त्वाभिमानः, इति परमार्थतोऽसत्त्वं तत्र शास्त्रेण ज्ञाप्यते। एवं च नीलादौ परमार्थासत्त्वसाधने लोकबाध्यत्वाभावेऽपि न दोषः, 'प्रकाशस्य प्रकाशता' इत्यत्र लोकसिद्धस्यापि भेदस्य 'नीलादीनां स्वभावः' इत्यत्र चाभेदस्य विचारासहत्वेन परमार्थतोऽसत्त्वादिति चेत्। न, लोकसिद्धस्य साध्यस्य साधने लोकसिद्धस्य बाधस्य दोषत्वात्, अलौकिकस्य च साध्यस्याप्रसिद्धेः, परमार्थसत्त्वज्ञानं नास्त्येव नीलादौ लोकानाम्, सत्त्वमात्रमेव हि तैस्तत्रानुभूयते, तच्च न प्रकृतबाधकम्, घटज्ञानेऽपि नीलघटाभावज्ञानवत् सत्त्वज्ञानेऽपि परमार्थसत्त्वाभाव-ज्ञानोपपत्तेरिति चेत्। तर्हि द्विचन्द्रादावप्यसत्त्वमात्रमनुभूयते, न तु परमार्थतोऽसत्त्वम्, इति क्व साध्यसिद्धिः?।

किञ्च, सकलशून्यतापक्षस्य यथा स्वप्नेऽप्यप्रत्ययेन निरासः, तथा स्वच्छसंविदतिरिक्तशून्यतापक्षस्य द्रष्टव्यः, मध्यमक्षणस्थायिनः संविन्मात्रस्य कदाप्यनुपलम्भात्, स्वपरव्यवसायिन एव ज्ञानस्य स्फुटमुपलम्भात्। न चानुपलब्धप्रत्ययेनोपलब्धप्रत्ययबाधा सुघटा, अतिप्रसङ्गात्। न चासतां नीलाद्याकाराणां परिस्फुरणं न तु तुरङ्गशृङ्गादीनामित्यत्र बीजमस्ति। न च निर्धर्मके संविन्मात्रे क्षणिकत्वादिधर्मोऽपि घटते। इति वासनामात्रमेतत् परेषाम्। तस्माद् यथानुभवमेकानेकस्वरूपमेव वस्तु श्रद्धेयम्, तत्र विरोधस्य निरस्तत्वात्, निरसिष्यमाणत्वाच्चेत्यवसेयम् ॥ ६२ ॥

सौगत! प्रणयिनीव नितान्तं शून्यता तव न मुञ्चति चित्तम्। प्राज्ञपर्षदि न कश्चन हर्षस्तेन शून्यहृदयस्य तवास्ति ॥ १ ॥

मुग्धमाध्यमिक! मध्यमसंवित् किं सता बत समाश्रयणीया। उत्तमां सुविदितामिह चित्रां तामनाप्य न हताश! हतः किम्? ॥ २ ॥

अस्य विषयविभागाभिधित्सयाह—

**एवं च शून्यवादोऽपि सद्विनेयानुगुण्यतः। अभिप्रायत इत्युक्तो लक्ष्यते तत्त्ववेदिना ॥६३॥**

एवं च– उक्तरीत्याऽघटमानत्वे चेत्यर्थः, शून्यवादोऽपि, तद्विनेयानुगुण्यतः– शून्यताविषयविभागावधारणप्रवणशिष्यहितानुरोधात्, तत्त्ववेदिना– बुद्धेन, अभिप्रायतः– तत्प्रयोजनाभिप्रायात्, उक्तः, न तु तत्त्वाभिधित्सया, इति लक्ष्यते– संभाव्यते। विना तूपकारकं कारणं द्रव्यमृषाभाषित्वे बुद्धस्यानाप्तत्वप्रसङ्गादिति ॥ ६३ ॥

पूर्णा सुगतसुतमतवार्ता।

यस्यासन् गुरवोऽत्र जीतविजयप्राज्ञाः प्रकृष्टाशया भ्राजन्ते सनया नयादिविजयप्राज्ञाश्च विद्याप्रदाः ।
प्रेम्णां यस्य च सद्म पद्मविजयो जातः सुधीः सोदरस्तेन न्यायविशारदेन रचिते तर्के मतिर्दीयताम् ॥ १ ॥

इति पण्डितश्रीपद्मविजयसोदरन्यायविशारदपण्डितयशोविजयविरचितायां स्याद्वादकल्पलताभिधानायां शास्त्रवार्तासमुच्चयटीकायां षष्ठः स्तबकः ।

श्रमो ममोच्चैरियता कृतार्थः सन्तोऽत्र संतोषभृतो यदस्मात् ।
खलैः किमस्मिन्, भ्रमरस्य भोग्यं सौभाग्यमब्जस्य न वायसस्य ॥ १ ॥

॥ अर्हम् ॥

# अथ सप्तमः स्तबकः ।

चञ्चत्काञ्चनकान्तकान्तिरनिशं गीर्वाणजुष्टान्तिको विक्रान्तिक्षतशत्रुरस्तजननभ्रान्तिः सतां शान्तिभूः ।
शान्तिस्तान्तिमपाकरोतु भगवान् कल्याणकल्पद्रुमो धीरा यस्य सदा प्रयान्ति शरणं पादौ शुभप्रार्थिनः ॥ १ ॥

आसीद् यत्पदयोः प्रणामसमये शक्रस्य चक्रभ्रमो लोलन्मौलिमयूखमांसलरुचां विस्तारिणीनां रयात् ।
श्रीवामातनयस्य तस्य हृदये धत्तः पदौ चेत्पदं तत्किं नाम सुरद्रु-कामकलश-स्वर्धेनवो नान्तिके ? ॥ २ ॥

आगच्छत्रिपदीनदीसमुदयभङ्गभ्रमप्रोच्छलत्तर्कोर्मिप्रसरस्फुरन्नयरयस्याद्वादफेनोच्चयः ।
यस्याद्यापि विसृत्वरो विजयते स्याद्वादरत्नाकरस्तं वीरं प्रणिदध्महे त्रिजगतामाधारमेकं जिनम् ॥ ३ ॥

पीतेऽन्यवार्ताकलुषोदकेऽपि नोच्छिद्यते तत्त्वपिपासया वः ।
आकर्णयन्त्वार्हतशास्त्रवार्तां कर्णामृतं संप्रति तत् सकर्णाः ! ॥ ४ ॥

अज्ञानतिमिरध्वंसदीपिकां परमतत्त्वोपनिषद्भूतां हित-सुख-निःश्रेयसकरीमार्हतमतवार्तामाह—

अन्ये त्वाहुरनाद्येव जीवाजीवात्मकं जगत्। सदुत्पादव्ययध्रौव्ययुक्तं शास्त्रकृतश्रमाः ॥१॥

अन्ये तु शास्त्रकृतश्रमाः– कृतप्रवचनोपनिषदध्ययनभावना जैनाः, जगत्– जगत्पदप्रतिपाद्यम्, अनाद्येव– प्रवाहापेक्षया सदातनमेव, आहुः। एवकारो व्यवस्थायाम्, तेन नेश्वरादिकृतं, नवा प्रधानपरिणामादिकृतमिति लभ्यते। तथा, जीवाऽजीवात्मकं– जीवाश्चाजीवाश्च जीवा-ऽजीवास्त आत्मानः समुदायिनो यस्य तत्। तेन चिन्मात्रादिवादनिरासः। तथा, सदुत्पाद-व्यय-ध्रौव्ययुक्तम्– सन्ति पारमार्थिकानि यानि न तु कल्पितानि उत्पाद-व्यय-ध्रौव्याणि तद्युक्तं तन्मयम्। ''मौक्तिकादिसहिता माला' इतिवत् तत्सहितमित्यपि न दुष्यति' इत्यन्ये। अत्रोत्पादः 'उत्पन्नमिदम्' इति धीसाक्षिको धर्मः। स द्विविधः– प्रयोगजनितः, विस्रसाजनितश्च। पुरुषव्यापारजनित आद्यः। स च मूर्तिमद्द्रव्यारब्धावयवकृतत्वात् समुदयवादः। तत एव चासावपरिशुद्ध इति गीयते; तदुक्तम्—

''उप्पाओ दुवियप्पो[1] पओगजणिओ अ विससा चेव। तत्थ य पओगजणिओ समुदयवाओ अपरिसुद्धो[2] ॥ १ ॥'' इति।

अत्रापरिशुद्धत्वं स्वाश्रययावदवयवोत्पादापेक्षया पूर्णस्वभावत्वम्। न ह्यपूर्णावयवो घट उत्पद्यमानः कार्त्स्न्येनोत्पन्न इति व्यवह्रियत इति। ननु न प्रयोगजन्य उत्पादः, घटादेरेव प्रयत्नजन्यत्वात्, उत्पादस्य त्वाद्यक्षणसंबन्धरूपस्यातथात्वादिति चेत्। न, 'मुद्गरपाताद् नष्टो घटः' इति व्यपदेशाद् नाशे मुद्गरपातजन्यत्ववत् 'पुरुषव्यापारादुत्पन्नो घटः' इति व्यवहारादुत्पा-

१ उत्पादो द्विविकल्पः प्रयोगजनितश्च विस्रसा चैव। तत्र च प्रयोगजनितः समुदयवादोऽपरिशुद्धः ॥ १ ॥ २ सम्मतिसूत्रे गाथा १२९।

देऽपि पुरुषव्यापारजन्यत्वस्यावश्यकत्वात्; विविच्यानानुभूयमानत्वेनोत्पादापलापे च नाशस्याप्यपलापप्रसङ्गात्, उत्पत्तेराद्यक्षणसंबन्धेनान्यथासिद्धौ नाशस्यापि चरमक्षणसंबन्धनाशेनान्यथासिद्धेः सुवचत्वात्, अन्यत्र तदाधारताप्रत्ययस्योत्पस्याधारताप्रत्ययस्यैवावच्छेदकत्वेनोपपत्तेः। घटप्रतियोगिकत्वेन नाशो विलक्षण एवानुभूयत इति चेत् । तथोत्पादोऽपीति तुल्यम्। किञ्च, एवमाद्यक्षणे 'आद्यक्षणसंबन्धवान् घटः' इतिवत् 'आद्यक्षण उत्पन्नो घटः, इति प्रयोगो न सूपपदः स्यादिति न किञ्चिदेतत् ।

यत्तु– 'एवं नाशवदुत्पादस्य जन्यत्वेऽपि तत्र प्रतियोग्यतिरिक्तकृतविशेषाभावात्, भावेऽपि सर्वस्येश्वरप्रयत्नजन्यत्वात् प्रयोगजनितत्वं न विभाजकम्' इति । तत्तुच्छम्, नाशेऽपि सामान्यापेक्षया भावांशमादाय कारणकृतविशेषदर्शनादेव तदप्रत्यूहात्, ईश्वरस्य निरासाच्च; न चेदेवम्, व्यापारजन्यत्वमपोद्य यत्नजन्यत्वेन स्वयमेवोपपादितः कृताकृतविभागो घटा-ऽङ्कुरादौ दुर्घटः स्यात् । यत्नजन्यताविशेषेण तदुपपादने च व्यापारजन्यताविशेषेणापि तदुपपत्तेः, तथाऽप्रतिसंधानेऽपि विलक्षणस्वभावोत्पादानुभवसाम्राज्याच्च । अत एव देवकुलादावनुभूयमानं विलक्षणोत्पादवत्स्वरूपं[3] विशिष्टकार्यत्वमेव यत्नजन्यतानियतम्, न तु कार्यसामान्यम्, इति शिपिविष्टखण्डनेऽभिहितमिति ।

पुरुषव्यापाराजन्य उत्पादो द्वितीयः । पुरुषेतरकारकव्यापारजन्यत्वं तु स्वरूपकथनमस्य, न तु लक्षणम्, प्रायोगिकेऽतिव्याप्तेः । 'तन्मात्रन्यत्वं गुरुत्वादत्रैव विश्राम्यति, इति प्रायोगिकस्यापि द्रव्यापेक्षया स्वाभाविकत्वाद् नैतद्

१ ख. ग. घ. च. 'पन्ने घ'। २ ज. 'नादत्र त'। ३ ख. च. छ. ज. रूपवि'।

युक्तम्' इति त्वपरिणतनयस्याभिधानम्, तदपेक्षयोत्पादस्याभावादेव । प्रायोगिक-स्वाभाविकयोरुत्पादयोर्भेदे प्रायोगिककाले यत्नेतरकारणानां सत्त्वे स्वाभाविकोत्पादापत्तिवारणाय तत्र यत्नप्रतिबन्धकत्वादिगौरवात् कल्पित एवायामिति चेत् । न, अभ्रादौ विलक्षणोत्पादस्यानुभवसिद्धत्वेन तत्प्रतिबन्धकत्वादिकल्पनागौरवस्याबाधकत्वात्, यत्नेतरहेतूनां स्वभावोत्कर्षाभावेन प्रायोगिककाले स्वाभाविकानुत्पत्त्या तत्प्रतिबन्धकत्वाकल्पनाच्चेति ।

स च द्विविधः– समुदयजनितः, ऐकत्विकश्च । तत्र मूर्तिमद्द्रव्यावयवारब्धः समुदयजनितः, इतरश्चैकत्विकः । आद्योऽभ्रादीनामुत्पादः, घटादीनामप्यप्रथमतया विशिष्टनाशस्य विशिष्टोत्पादनियतत्वात् । न हि मूर्तावयवसंयोगकृतत्वं समुदयजनितत्वम्, विभागकृतपरमाण्वाद्युत्पादेऽव्याप्तेः, किन्तु मूर्तावयवनियतत्वम् । तच्च तदवस्थावयवस्याप्यवस्थाविशेषात् संभवीति । द्वितीयस्तु गगन-धर्मा-ऽधर्मास्तिकायानामवगाहक-गन्तृ-स्थातृद्रव्यसंनिधानतोऽवगाहन-गति-स्थितिक्रियोत्पत्तेरनियमेन स्यात्परप्रत्ययः, मूर्तिमदमूर्तिमदवयवद्रव्यद्वयोत्पाद्यत्वात्, अवगाहनादीनां स्यादैकत्विकः, स्यादनैकत्विकश्चेति भावः; तदुक्तम्—

"साभाविओ वि समुदयकउ व्व एगत्तिउ व्व होज्जाहि । आगासाईआणं तिण्हं परपच्चओ णियमा ॥१॥" इति ।

अथाकाशादीनां मूर्तिमद्द्रव्यानारब्धत्वे निरवयत्वमेव स्यादिति तन्नायमनेकान्त इति चेत् । न, प्रदेशव्यवहारस्याकाशेऽपि दर्शनेन तस्य सावयवत्वात् । न च 'आकाशस्य प्रदेशाः' इति व्यवहारो मिथ्या, आरोपनिमित्ताभावात् । न चाव्याप्यवृत्तिसंयोगाधारत्वकृतस्तदध्यारोपः, तथा सति तत्र तत्त्वस्यैवानुपपत्तेः, अवयविनि देशेन संयोगस्यावयवावच्छिन्नत्वनिय-

१ स्वाभाविकोऽपि समुदयकृतो वैकत्विको वा भविष्यति । आकाशादिकानां त्रयाणां परप्रत्ययो नियमात् ॥ १ ॥ २ सम्मतौ गाथा १३० ।

मात्, वृक्षादौ तथादर्शनात्, अन्यथा मूलादेरिवान्यस्याप्यवच्छेकत्वापत्तेः । नन्वेवं परमाणोरपि षड्दिक्संयोगात् षडंशता स्यादिति चेत् । स्यादेव, द्रव्यार्थतयैव तस्य निरंशत्वात्, पर्यायार्थतया तु सांशताया अप्यभ्युपगमात् । अत एव 'सावयवमाकाशम्, समवायिकारणत्वात्, पटवत्' इत्यपि प्रसङ्गापादनं संगच्छते । संगच्छते च 'सावयवमाकाशम्, हिमवद्-विन्ध्यावरुद्धभिन्नदेशत्वात्, तदवष्टब्धदेशभूभागवत्' इत्यादि । किञ्च, आकाशस्य सावयवत्वाभावे 'इह पक्षी' इति धीरनुपपन्ना स्यात् । न च 'इह' इत्यालोकमण्डलमेव प्रतीयत इति वाच्यम्, तदालोकव्यक्तेरन्यत्र गतावपि तद्दर्शनात् । न चालोकान्तरं तद्विषयः, 'तत्रैव' इति प्रत्यभिज्ञानात् । न चालोकत्वेनैव तदाधारत्वाद् न तदनुपपत्तिरिति वाच्यम्, आलोकाभावेऽपि 'तत्रैव' इति प्रत्यभिज्ञानात् । न च मूर्तद्रव्याभावाधारत्वेन तदुपपत्तिः, आलोके सति तदभावात् । न च निबिडमूर्तद्रव्याभावस्तदाप्यस्त्येवेति वाच्यम्, तस्यान्यत्रापि सत्त्वेनान्यत्र गतेऽपि पक्षिणि प्रत्यभिज्ञापत्तेः, देशविशेषमवच्छेदकं प्रतीत्यैव 'इह पक्षी' इति प्रयोगाच्च । न चाकाशदेशस्यातीन्द्रियत्वेनावच्छेदकप्रतीत्यनुपपत्तिः, अक्षबुद्धौ तादृशस्यापि क्षयोपशमविशेषेण विशेष्याकृष्टतया भावात् । एतेन 'पृथिवीभागोर्ध्वत्वादिभेदापेक्षया तत्रैव मूर्तद्रव्याभावे भेदाभेदव्यवहारोपपत्तिः, अत एवान्यत्र गतेऽपि पतत्रिणि पूर्वानुभूताधःस्थितपृथिव्यादियावद्भागोर्ध्वताभ्रमे 'तत्रैव पतत्री' इति भवति प्रत्यभिज्ञानम्' इति निरस्तम्, 'इह गगने पतत्री' इत्यत्र निरवच्छिन्नस्यैवावच्छेदकस्य स्फुरणात्, आकाशदेशभेदाभावे पृथिवीभागोर्ध्वतादिभेदस्यैवानुपपत्तेश्च । एवं च तत्तत्प्राच्यादिव्यवहारभेदेनाप्याकाशभेदसिद्धिः 'ततः प्राच्यामयम्' इत्यत्र तदपेक्षया संनिहितोदयाचलसंयोगावच्छिन्नाकाशवृत्तिरयम्' इत्यर्थात्, दिशोऽनतिरेकात्, तदपेक्षत्वस्य संनिहितत्वस्य च तथास्वभावविशेषत्वात् । 'प्रयागात्

प्राच्यां काशी' इत्यतः 'प्रयागनिष्ठोदयाचलसंयुक्तसंयोगपर्याप्तसंख्यापर्याप्त्यधिकरणोदयाचलसंयुक्तसंयोगशालिमूर्तवृत्तिः काशी' इत्यन्वयस्तूच्छृङ्खलानां कल्पनामात्रम्, तथाननुभवात्, अनुभव-प्रवचनाभ्यामाकाशस्यैव सर्वाधारत्वेन क्लृप्ततया दिक्त्वेन मूर्तस्यानाधारत्वाच्चेति दिग्।

व्ययोऽपि स्वाभाविकः प्रयोगजनितश्चेति द्विविधः। तद्द्वयातिरिक्तस्य वस्तुनोऽभावात्, पूर्वावस्थाविगमव्यतिरेकेणोत्तरावस्थोत्पत्त्यनुपपत्तेः। न हि बीजादीनामविनाशेऽङ्कुरादिकार्यप्रादुर्भावो दृष्टः। न चावगाह-गति-स्थित्याधारत्वं तदनाधारत्वस्वभावप्राक्तनावस्थाध्वंसमन्तरेण संभवतीति। तत्र समुदयजनित उभयत्रापि द्विविधः- समुदयविभागरूप एकः, यथा पटादेः कार्यस्य तन्त्वादिकारणपृथक्करणम्। अन्यश्चार्थान्तरभावगमनलक्षणः, यथा मृत्पिण्डस्य घटार्थान्तरभावः। नाशत्वं चास्याजनकस्वभावापरित्यागे जनकत्वायोगात्। न चैवं घटविनाशे मृत्पिण्डप्रादुर्भावप्रसक्तिः; पूर्वोत्तरावस्थयोः स्वभावतोऽसंकीर्णत्वात्, वस्त्वन्तररूपे वस्त्वन्तररूपस्यापादयितुमशक्यत्वात्। ऐकत्विकनाशश्चैकत्विकोत्पादवद् वैश्रसिकभेद एवेति; तदुक्तम्—

"विगमस्स वि एस विही[1] समुदयजणिअम्मि सो उ दुविअप्पो। समुदयविभागमेत्तं अत्थंतरभावगमणं वा[2] ॥ १ ॥"

इति स्थितिश्चाविचलितस्वभावरूपत्वाद् न विभज्यते। तद्युक्तत्वं च जगतः कथञ्चित्तद्रूपत्वात्; तथाहि- त्रयोऽप्युत्पादादयो भिन्नरूपावच्छेदेन भिन्नकालाः, घटोत्पादसमये घटविनाशस्य, घटविनाशसमये घटोत्पादस्य, तदुत्पाद-विनाशयोरुत्पत्ति-

१ विगमस्याप्येष विधिः समुदयजनिते स तु द्विविकल्पः। समुदयविभागमात्रमर्थान्तरभावगमनं वा ॥ १ ॥ २ सम्मतौ गाथा १३१।

विनाशानवच्छिन्नकालसंबन्धरूपायास्तत्स्थितेर्घटविनाशविशिष्टघटरूपमृत्स्थित्योर्वा विरोधात्। तथा, प्रत्येकमपि देश-कार्त्स्न्याभ्यां भिन्नकालता, उत्पद्यमानस्यापि पटस्य देशेनोत्पन्नत्वात्, देशेन चोत्पत्स्यमानत्वात्, प्रबन्धेन चोत्पद्यमानत्वात्; विगच्छतोऽपि देशेन विगतत्वात्, देशेन च विगमिष्यत्त्वात्, प्रबन्धेन च विगच्छत्त्वात्; तिष्ठतोऽपि देशेन स्थितत्वात्, देशेन च स्थास्यत्त्वात्, प्रबन्धेन च तिष्ठत्त्वादिति। एकस्वरूपाद् द्रव्यादर्थान्तरभूतादभिन्नकालाश्चैतेऽविशिष्टाः सन्तो भिन्नप्रतियोगिविशिष्टा वा, कुशूलनाश-घटोत्पाद-मृत्स्थितीनामेककालत्वादिति, ततोऽनर्थान्तरभूता अपीति। एवं चोत्पादादित्रयेण त्रैकाल्येन भेदा-ऽभेदाभ्यां भङ्गसंततिर्द्रव्यस्य भावनीया सूक्ष्मधिया, त्र्यात्मक-त्रिकालात्मकतयाऽनन्तपर्यायात्मकत्वादेकवस्तुनः। न चैवमनन्ते काले भवतोऽनन्तपर्यायात्मकैकद्रव्यस्योपपत्तावप्येकक्षणे कथं तदुपपत्तिः? इति शङ्कनीयम्, एकक्षणेऽप्यनन्तानामुत्पादानां, तत्समानां विगमानां, तन्नियतस्थितीनां च संभवात्; तथाहि– यदैवानन्तानन्तप्रदेशिकाहारभावपरिणतपुद्गलोपयोगोपजातरस-रुधिरादिपरिणतवशाविर्भूतशिरोऽङ्गुल्याद्यङ्गोपाङ्गभावपरिणतस्थूल-सूक्ष्म-सूक्ष्मतरादिभिन्नावयव्यात्मकस्य कायस्योत्पत्तिः, तदैवानन्तानन्तपरमाणूपचितमनोवर्गणापरिणतिलभ्यमनउत्पादोऽपि, तदैव च वचनस्यापि कायाकृष्टान्तरवर्गणोत्पत्तिप्रतिलब्धवृत्तिरुत्पादः, तदैव च काया-ऽऽत्मनोरन्योन्यानुप्रवेशाद् विषमीकृतासंख्यातात्मप्रदेशे कायक्रियोत्पत्तिः, तदैव च रूपादीनामपि प्रतिक्षणोत्पत्तिनश्वराणामुत्पत्तिः, तदैव च मिथ्यात्वा-ऽविरति-प्रमाद-कषायादिपरिणतिसमुत्पादितकर्मबन्धनिमित्तागामिगतिविशेषाणामप्युत्पत्तिः, तदैव चोत्सृज्यमानोपादीयमानानन्तानन्तपरमाण्वापादिततत्प्रमाणसंयोग-विभागाना-

१ ख.ग.घ.च. 'नन्तप्र'।

मुत्पत्तिः, तदैव च तत्तज्ज्ञानविषयत्वादीनामुत्पत्तिः, किं बहुना ? यदैवैकद्रव्यस्योत्पत्तिः, तदैव त्रैलोक्यान्तर्गतसमस्तद्रव्यैः सह साक्षात् पारम्पर्येण वा संबन्धानामुत्पत्तिः, सर्वद्रव्यव्याप्तिव्यवस्थिताकाश-धर्मा-ऽधर्मादिद्रव्यसंबन्धात् । ईदृशप्रतिपत्त्यभावश्चास्मदाद्यध्यक्षस्य तथा तथोल्लेखेन निरवशेषधर्मात्मकवस्त्वग्राहकत्वात्, त्रैलोक्यव्यावृत्तस्वलक्षणान्यथानुपपत्त्याऽनुमीयते तु निर्बाधमेव तथात्वम्, इतरप्रतियोगिकत्वेनेतराक्षिप्तपृथग्भूतानां व्यावृत्तीनां स्ववृत्तित्वेन स्वापृथग्भूतत्वात् । न चैवं घटे स्वोत्पादादितदन्योत्पादादिकमपि प्रमीयेतेति वाच्यम्, व्यावृत्तिद्वारेष्टत्वात्, अनुवृत्त्या तु तदभावादेव । अत एव 'स्व-परविभागोऽप्येवमुच्छिद्येत' इति निरस्तम्, स्ववृत्त्यनुवृत्तिप्रतियोगित्वेन स्वस्य, स्ववृत्तिव्यावृत्तिप्रतियोगित्वेन च परत्वस्य व्यवस्थितेः । अत एव परत्रापि स्वसंबन्धितामात्रव्यवहारो व्युत्पन्नानामबाध एव; उक्तं च भाष्यकृता[2]—

"जेसु अणाएसु तओ ण णज्जए, णज्जए अ णाएसु । किह ते ण तस्स धम्मा घडस्स रूवाइधम्म व्व ॥ १ ॥"[1] इति ।

तत्र च परपर्यायैर्विसदृशैः पटत्वादिभिर्नास्ति घटद्रव्यम्, सदृशैस्तु सत्त्व-द्रव्यत्व-पृथित्वादिभिर्व्यञ्जनपर्यायैरस्त्येव, साधारणासाधाणस्य सामान्यविशेषरूपस्य वस्तुनो गुण-प्रधानभावेन सदादिशब्दवाच्यत्वात्। अर्थपर्यायैस्तु ऋजुसूत्राभिमतैः सदृशैरपि नास्ति, अन्योन्यव्यावृत्तस्वलक्षणग्राहकत्वात् तस्य, स्वपर्यायैरपि प्रत्युत्पन्नैस्तत्समयेऽस्त्येव, विगत-भविष्यद्भिस्तु कथञ्चिदस्ति, कथञ्चिद् नास्ति, तत्काले तच्छक्त्या तस्यैकत्वात्, तद्रूपव्यक्त्या च भिन्नत्वादिति । प्रत्युत्पन्नैरप्येकगुणकृष्णत्वादिभिरनैकगमैर्भजनेति । एवं स्वतः परतो वाऽनुवृत्ति-व्यावृत्त्याद्यनेकशक्तियुक्तोत्पादादित्रैलक्षण्यलक्षणमनेकान्तात्मकं जगद्

१ येष्वज्ञातेषु ततो न ज्ञायते, ज्ञायते च ज्ञातेषु । कथं ते न तस्य धर्मा घटस्य रूपादिधर्मा इव ॥ १ ॥ २ विशेषावश्यकभाष्ये गाथा ४८५ ।

विभावनीयम् ॥ १ ॥

उत्पादादित्रयात्मकत्व उपपत्तिमाह—

**घटमौलिसुवर्णार्थी नाशोत्पादस्थितिष्वयम्। शोकप्रमोदमाध्यस्थ्यं जनो याति सहेतुकम्॥**

अयमधिकृतो जनः, सामान्यापेक्षयैकवचनम्, एकस्यैकदा त्रिविधेच्छाऽभावात्, कालभेदेनेच्छात्रयस्य च त्र्यात्मकैकनिमित्तत्वाप्रयोजकत्वादिति द्रष्टव्यम्; घट-मौलि-सुवर्णार्थी सन्—प्रत्येकं सौवर्णघट-मुकुट-सुवर्णान्यभिलषन्, एकदा तन्नाशोत्पाद-स्थितिषु सतीषु, शोक-प्रमोद-माध्यस्थ्यं सहेतुकं याति। तदैव हि घटार्थिनो घटनाशात् शोकः, मुकुटार्थिनस्तु तदुत्पादात् प्रमोदः, सुवर्णार्थिनस्तु पूर्वनाशा-ऽपूर्वोत्पादाभावाद् न शोको न वा प्रमोदः, किन्तु माध्यस्थ्यमिति दृश्यते। इदं च वस्तुनस्त्रैलक्षण्यं लक्षणं विना दुर्घटम्, घटनाशकाले मुकुटोत्पादानभ्युपगमे तदर्थिनः शोकानुपपत्तेः, घटादिविवर्तातिरिक्तसुवर्णद्रव्यानभ्युपगमे च सुवर्णार्थिनो माध्यस्थ्यानुपपत्तेः। न च सुवर्णसामान्यार्थिनो यत्किञ्चित्सुवर्णनाशेऽपि शोकाभावात्, अपूर्वेच्छाऽभावेन च प्रमोदाभावादर्थादुपपद्यते माध्यस्थ्यमिति वाच्यम्, तथापि घटनाशानन्तरमेव मुकुटोत्पादाभ्युपगमेऽन्तरा यावत्सुवर्णाभावे शोकस्यैव प्रसङ्गात्, दोषविशेषात् तदननुभवेन शोकाभावोऽपि विशेषदर्शिनो दुर्घटः। न च सुवर्णसामान्याभावोऽपि

सुवर्णसामान्येच्छाविघातकज्ञानविषय एकः परस्य युज्यते, अनुभवेन तदैक्याभ्युपगमे च तत्तद्विवर्तानुगतसुवर्णसामान्यस्याप्यनुभवसिद्धस्य प्रत्याख्यातुमशक्यत्वात्, गौणीकृतविशेषायास्तद्विषयकेच्छाया एव तद्विषयकप्रवृत्तिहेतुत्वादिति।

न च शोकादिकं निर्हेतुकमिति वक्तुं युक्तम्, नित्यं सत्त्वस्याऽसत्त्वस्य वा प्रसङ्गात्। न च युष्माकमपि तत्र घट-मुकुटोभयार्थिनो युगपच्छोक-प्रमोदोत्पाद इति वाच्यम्, एकत्रोभयार्थिप्रवृत्त्ययोगात्। एकत्र देशे तत्प्रवृत्तौ चोभयस्य कथञ्चित्प्रत्येकातिरेकेण दोषाभावात्, येन रूपेण यत्रेच्छा तेन रूपेण तन्नाशोत्पाद-स्थितिज्ञानानामेव शोक-प्रमाद-माध्यस्थ्य-हेतुत्वात्, अनेकान्तस्याप्यनेकान्तानुविद्धैकान्तगर्भत्वात्; तदुक्तम्—

"[1]भयणा वि हु भइयव्वा जह भयणा भयइ सव्वदव्वाइं। एवं भयणानियमो वि होइ समयाविराहणया[2] ॥ १ ॥ इति।

अत एव "[3]रयणप्पहा सिय सासया, सिय असासया" इत्यनेकान्तवाक्ये तदनुविद्धं "[4]दव्वट्ठयाए सिय सासया, पज्जवट्ठयाए सिय असासया" इति भगवद्वचनं व्यवस्थितम्। एतेन 'उत्पाद-स्थिति-भङ्गानामेकत्र समवायतः प्रीति-मध्यस्थता-शोकाः स्युर्न स्युरिति दुर्घटम्' इत्यभिप्रायापरिज्ञानविजृम्भितं मण्डनमिश्रकृतखण्डनमपास्तम्। न हि घट-मुकुटरूपापेक्षावुत्पाद-नाशावेव सुवर्णरूपापेक्षावपि, येनाव्यवस्था स्यादिति। न चानेकान्तवादे तत्सत्त्वेऽपि तदभावज्ञानात् प्रवृत्त्यव्यवस्थया प्रीत्याद्य-व्यवस्थापि, येन रूपेणेच्छा तेन रूपेण तदभावज्ञानस्यैव प्रवृत्तिविघातकत्वात्। एतेनापि

"नैकान्तः सर्वभावानां यदि सर्वविधा गतः। अप्रवृत्ति-निवृत्तीदं प्राप्तं सर्वत्र ही जगत् ॥ १ ॥"

---

१ भजनापि खलु भक्तव्या यथा भजना भजति सर्वद्रव्याणि। एवं भजनानियमोऽपि भवति समयाविराधनया ॥ १ ॥

२ सम्मतौ गाथा १२४। ३ रत्नप्रभा स्याच्छाश्वती, स्यादशाश्वती। ४ द्रव्यार्थतया स्याच्छाश्वती, पर्यायार्थतया स्यादशाश्वती।

इति सर्वस्वहानिजनित इव महान् मण्डनमिश्रगृहशोको निवारितः !। परिहरिष्यते च पूर्वपक्षोट्टङ्कितोऽनिश्चयप्रसङ्गः स्वयमेव ग्रन्थकृता । इति तत्रैवाधिकं विवेचयिष्यते ॥ २ ॥

एतदुपपत्तेरेव स्थलान्तरमाह—

**पयोव्रतो न दध्यत्ति न पयोऽत्ति दधिव्रतः । अगोरसव्रतो नोभे तस्मात्तत्त्वं त्रयात्मकम् ॥३॥**

पयोव्रतः– क्षीरभोजनव्रतः, न दध्यत्ति– न दधि भुङ्क्ते । यदि च दध्नः पयस एकान्ताभेदः स्यात् तदा तस्य दधि भुञ्जतोऽपि न व्रतभङ्गः स्यात् । तथा, दधिव्रतः– दधिभोजनव्रतः, पयः– दुग्धम्, अत्ति। पयसो दध्न एकान्ताभेदे च तद् भुञ्जतो न दधिभोजनव्रतभङ्गः स्यात् । ततो दधि-पयसोः कथञ्चिद् भेदः। तथा, अगोरसव्रतः– आलनालादिभोजनव्रतः, उभे– दुग्ध-दधिनी, नात्ति, इति गोरसभावेन द्वयोरभेदः; अन्यथा कृतगोरसप्रत्याख्यानस्य दुग्धाद्येकैकभोजनेऽपि न व्रतभङ्गः स्यादिति । तस्मात्– द्रव्यपर्यायोभयात्मकत्वात्, त्रयात्मकं– उत्पाद-व्यय-ध्रौव्यापृथग्भूतं वस्तु । तथाच समयपरमार्थवेदिनः—

"[1]दव्वं पज्जवविउअं दव्वविउत्ता य पज्जवा णत्थि । उप्पाय-ट्ठिइ-भंगा हंदि ! दवियलक्खणं एयं[2] ॥१॥" इति ।

ननु दुग्ध-दध्नोरेकान्तेन भेद एव, इति तस्योत्पाद-व्ययौ युक्तौ, ध्रौव्यं तु गोरसत्वसामान्यस्यैव न तु गोरसस्येति चेत् । न, इदमेव गोरसं दुग्धभावेन नष्टम्, दधिभावेन चोत्पन्नम्, इत्येकस्यैवैकदोत्पाद-व्ययाधारत्वलक्षणध्रौव्यभागितया

---

१ द्रव्यं पर्यायवियुतं द्रव्यवियुक्ताश्च पर्यवा न सन्ति । उत्पाद-स्थिति-भङ्गा हन्त ! द्रव्यलक्षणमेतत् ॥ १ ॥ २ सम्मतौ गाथा १२ ।

प्रत्यभिज्ञायमानस्य पराकर्तुमशक्यत्वात् ।

न च विशेषेभ्योऽत्यन्तव्यतिरिक्तं ध्रुवं सामान्यमस्ति, तदव्यवस्थितेः। तथाहि– "नित्यमेकमनेकसमवेतं सामान्यम्" इति तल्लक्षणमाचक्षते परे। 'अत्र 'एकम्' इति स्वरूपाभिधानं न तु लक्षणम्' इत्येके। 'नित्यमेकम्' इत्येकं लक्षणम्, लक्षणान्तरं वा, समवायित्वे सत्यनेकसमवेतत्वमिति सूचनायेदम्' इत्यन्ये। 'अनेकवृत्तित्वमनेकाधारकत्वम्, तच्चाभाव-समवाययोरपि, इत्यत उक्तम्– 'एकम्– असहायम्', अभाव-समवाययोश्च प्रतियोगिसंबन्धिनौ सहायौ' इत्यपरे । तत्र नित्यत्वं तावत् श्यामत्व-रक्तत्वाद्युपाधीनामिव दधित्व-दुग्धत्वादीनां साक्षादेवोत्पाद-विनाशानुभवादसिद्धम्। दुग्ध-दध्नोरेवोत्पाद-विनाशानुभवोऽस्ति, न दधित्व-दुग्धत्वयोरिति चेत्। तर्हि श्याम-रक्तयोरेव तदनुभवः, न तु श्यामत्व-रक्तत्वयोः, इति तयोरपि नित्यत्वं किं न स्यात् ?। 'श्यामाद्युत्पादाद्यनुभवो भ्रान्तः, तत्कारणबाधात्' इति तु न युक्तम्, दण्डादिकं विनापि खण्डदण्डादिवत् तदुत्पादादिसंभवात् । 'सहेतुकत्वाच्छ्यामरूपादेर्न नित्यत्वम्' इत्यत्रापि विवादकलह एव । भावकार्यस्य नाशनियमाद् न तत्र नित्यत्वमिति चेत्। अनुत्तरमेतदपि, कार्यत्वस्यैवेत्थमसिद्धेः। किञ्च, एवं लाघवाद् भावस्यैव नाशनियमाज्जातेरपि नित्यत्वक्षतिरस्तु। अनित्यत्वे सति प्रतिव्यक्ति भिन्नं सत् सामान्यं सामान्यरूपतां जह्यादिति चेत् । उपाधिरप्यनुगतव्यवहारनियामिकां तां किं न जह्यात् ?। उपाधावपि परम्परया जातिरेवानुगमिका, प्रमेयत्वादेरपि परम्परासंबन्धेन प्रमात्वादिरूपत्वादिति चेत्। न, घटे घटत्वादेरिव प्रमेयत्वादेरपि साक्षादेवानुभवात् ।

१ ज. 'दिति'।

एकत्वमपि न तत्र संख्यारूपम्, अनभ्युपगमात् । नाप्याश्रयभेदकृतभेदप्रतियोगित्वादिकम्, आश्रयभेदेन तद्भेदावश्यकत्वात्; अन्यथाऽव्वेकत्वादावप्याश्रयभेदकृतभेदे मानाभावादतिव्याप्त्यनिरासात् । असहायत्वरूपमेकत्वमपि तत्र प्रतिनियतव्यक्तिव्यङ्ग्यत्वाभ्युपगमाद् दुर्वचम् । अनेकसमवेतत्वमपि समवायनिरासाद् निरस्तमेव ।

किञ्च, सामान्यस्यैकव्यक्तावेकदेशेन वृत्तिर्भवेत्, सर्वात्मना वा? । सर्वात्मना वृत्तावेकस्मिन्नेव पिण्डे सर्वात्मना परिसमाप्तत्वाद् यावन्तः पिण्डास्तावन्ति सामान्यानि स्युः, न वा सामान्यम्, एकपिण्डवृत्तित्वात्, रूपादिवत् । एकदेशवृत्तावपि न सामान्यं स्यात्, सामान्यस्य निरंशत्वेनैकदेशासंभवात्, संभवेऽपि तस्य ततो भेदा-ऽभेदविकल्पानुपपत्तेः । न च सामान्यस्यानुवृत्तैकरूपत्वात् कार्त्स्न्यै-कदेशशब्दयोस्तत्राप्रवृत्तिः, निरवयवैकरूपेऽपि व्याप्त्य-ऽव्याप्तिशब्दयोर्भवतैवाभ्युपगमात्, तत्र च कृत्स्नै-कदेशपक्षोक्तदोषाणां समानत्वात् । एतेन 'किमनेन प्रसङ्ग आपाद्यते परस्य, आहोस्वित् स्वतन्त्रसाधनम्? इति । न तावत् प्रसङ्गसाधनम्, पराभ्युपगमेनैव तस्य वृत्तेः । न च परस्य कार्त्स्न्येन, एकदेशेन वा निरंशस्य वृत्तिः सिद्धा, किन्तु वृत्तिमात्रं समवायस्वरूपं सिद्धम्, तच्च विद्यत एव, समवायस्य प्रमाणतः सिद्धेः । तद् न प्रसङ्गसाधनमेतत् । स्वतन्त्रं तु साधनं न भवति, सामान्यलक्षणस्य धर्मिणोऽसिद्धेर्हेतोराश्रयासिद्धिप्रसङ्गात् । धर्मिसिद्धौ वा तत्प्रतिपादकप्रमाणबाधितत्वात् तदभावसाधकप्रमाणस्याप्रवृत्तिरेव' इति निरस्तम्, लोक-शास्त्रसिद्धकार्त्स्न्यै-कदेशवृत्तिविशेषनिषेधेन वृत्तिसामान्याभावस्य परं प्रत्यापादनात्, समवायवृत्तावपि संयोग-रूपादौ द्वैरूप्यस्य सिद्धत्वात् ।

अथ व्याप्यवृत्त्य-ऽव्याप्यवृत्त्योर्वृत्तित्वेऽनवच्छिन्नत्वमवच्छिन्नत्वं चेति कार्त्स्न्यै-कदेशविशेषो नापरः । तत्र च सामा-

न्यस्यापि व्याप्यवृत्तित्वादेकत्राप्यनवच्छिन्नवृत्तित्वरूपं कात्स्न्र्येन वृत्तित्वमुपगम्यत एव । न चैवं यावद्व्यक्तिभेदापत्तिः, ज्ञानेऽनेकविषयत्ववज्जातावनेकवृत्तित्वस्याप्यविरोधादिति चेत् । न, 'एकत्वमेकत्रैव पर्याप्तम्, न द्वयोः' इति धियैकत्व-द्वित्वयोरेकत्रोभयोश्च पर्याप्तिवद् 'घटत्वमत्र पर्याप्तम्' इति धिया घटत्वस्यापि प्रत्येकं पर्याप्तिस्वीकार एकत्व-द्वित्वावच्छिन्नपर्याप्तिकयोरेकत्व-द्वित्वयोरिव तत्तद्व्यक्तित्वावच्छिन्नपर्याप्तिकत्वेन तद्भेदस्याप्यावश्यकत्वात् । किञ्च, उत्पद्यमानेन पिण्डेन सह संबध्यमानं सामान्यं किमन्यत आगत्य संबध्यते, उत तत्पिण्डेन सहोत्पादात्, आहोस्वित् पिण्डोत्पत्तेः प्रागेव तद्देशावस्थानात् ? । नाद्यः, अमूर्तस्य पूर्वाधारवृत्तिस्वभावापरित्यागेनान्यत्रागमनासंभवात् । न द्वितीयः, अनुत्पन्नस्वभावत्वाभ्युपगमात् । न तृतीयः, घटदेशे घटत्वावस्थितौ तत्रापि 'घटः' इत्यनुगतधीव्यपदेशप्रसङ्गात् । तदुक्तम्—

" नायाति न च तत्रासावस्ति पश्चाद् न चांशवत् । जहाति पूर्वं नाधारमहो ! व्यसनसंततिः ॥ १ ॥ "

तथा,

" यत्रासौ वर्तते भावस्तेन संबध्यते न च । तद्देशं न च व्याप्नोति किमप्येतद् महाद्भुतम् ॥ १ ॥ " इति ।

'अनुत्पन्नेऽपि घटे घटपदवाच्यत्ववद् घटत्वसमवायसत्त्वात् तदुत्पत्तौ तदभिव्यक्तेर्न दोषः' इत्यप्यनालोचिताभिधानम्, द्रव्यार्थतया सत्त्वाभ्युपगमं विना 'अनुत्पन्नो घटः' इत्यभिधानस्यैव दुःशकत्वात्; यत एव निमित्तात् तावद्व्यक्तिषु तदाधारतानियमस्तत एव तदन्यथासिद्धेश्च । किञ्च, पिण्डेभ्योऽव्यतिरिक्तं यद्यनुस्यूतं सामान्यमभ्युपगम्येत तदैकपिण्डोपलम्भे तस्याभिव्यक्तत्वात् पिण्डान्तरालेऽप्युपलब्धिः स्यात् । न च तत्र तदुपलम्भहेतोश्चक्षुःसंयुक्तसंयोगस्याभावात् तदनुपलम्भ इति

सांप्रतम्, अन्तराले चक्षुःसंयोगे तदापादनात् । न च तत्र तदभावात् तदनुपलम्भः, तत्संबन्धसत्त्वे तदभावायोगात्, तत्र तदभावज्ञाने तत्र तद्विशिष्टबुद्ध्यनुत्पादेऽपि तदुभयसमूहालम्बनस्य दुर्निवारत्वाच्च । एतेन 'अन्तरालशब्देन किं पिण्डान्तरमश्वादिरूपमभिधीयते, आहोस्विद् मूर्तद्रव्याभावः, उताकाशादिप्रदेशः ? इति विकल्पाः । यद्यश्वादिपिण्डान्तराभिधानम्, तदा तत्र गोत्वसामान्यस्य वृत्तेरग्रहणमुपपन्नमेव । न हि यद् यत्र नास्ति तत्तत्र गृह्यत इति परस्याभ्युपगमः । एवं मूर्तद्रव्याभावा-ऽऽकाशादिदेशयोरपि तदग्रहणम्, अभावादेव' इति निरस्तम् । न च चक्षुःसंयोगावच्छेदकावच्छेदेन तस्यासमवेतत्वात् तदग्रहणम्, अव्याप्यवृत्तिद्रव्यसमवेतग्रह एव तथाहेतुत्वकल्पनात् । यैरपि 'समवायोऽपि नैकः, जलादेर्गन्धादिमत्ताप्रसङ्गात्' इत्यादिना समवायनानात्वं स्वीक्रियते, तेषामपि घटत्व-सत्त्वादिसमवायनानात्वाभावादयं दोषस्तदवस्थ एव ।

अपि च, अक्षणिकव्यापकैकस्वभावत्वे सामान्यं किं येनैव स्वभावेनैकस्मिन् पिण्डे वर्तते तेनैव पिण्डान्तरे, आहोस्वित् स्वभावान्तरेण ? । यदि तेनैव, ततः सर्वपिण्डानामेकत्वप्रसक्तिः, एकदेश-काल-स्वभावनियतपिण्डवृत्त्यभिन्नसामान्यस्वभावक्रोडीकृतत्वात् तेषाम्, प्रतिनियतदेश-काल-स्वभावैकपिण्डवत् । अथ स्वभावान्तरेण, तदानेकस्वभावयोगात् सामान्यस्यानेकत्वप्रसक्तिरिति न किञ्चिदेतत् । एतेन

"[1]पिण्डभेदेषु गोबुद्धिरेकगोत्वनिबन्धना । गवाभासैकरूपाभ्यामेकगोपिण्डबुद्धिवत् ॥ १ ॥
न शाबलेयाद् गोबुद्धिस्ततोऽन्यालम्बनापि वा । तदभावेऽपि सद्भावाद् घटे पार्थिवबुद्धिवत् ॥ २ ॥

१ श्लोकवार्तिकमुद्रितपुस्तके 'तस्मात् पिण्डेषु गो' इति पाठः ।

प्रत्येकसमवेतार्थविषया वापि गोमतिः । प्रत्येकं कृत्स्न[1]रूपत्वात् प्रत्येकव्यक्तिबुद्धिवत् ॥ ३ ॥
प्रत्येकसमेवतापि जातिरेकैकबुद्धितः । नञ्युक्ते[2]ष्विव वाक्येषु ब्राह्मणादिनिवर्तनम् ॥ ४ ॥
नैकरूपा मतिर्गोत्वे मिथ्या वक्तुं च शक्यते । ना[3]पि कारणदोषोऽस्ति बाधकः प्रत्ययोऽपि वा[4] ॥ ५ ॥"

इत्यादि कुमारिलोक्तमपास्तम्, उक्तरीत्या स्फुटदोषत्वात् । इत्थं च कार्यकारणताऽवच्छेदकतया जातिसिद्धिरप्यपास्ता, कार्य-कारणयोः कथंचिदैक्येनापि कार्यकारणभावनिर्वाहात् । किञ्च, एवं गगनादौ सत्तायां मानमन्वेषणीयं स्यादायुष्मतः, द्रव्यजन्यतावच्छेदकतया सिद्धस्य सत्त्वस्य तत्राभावात् । न च द्रव्यत्वादिना साङ्कर्यभिया तत्र सत्तास्वीकारः, सत्तया तद्व्यापरिज्ञानात् । न चोपाधिसांकर्यस्येव जातिसांकर्यस्यापि दोषत्वे बीजमस्ति, जात्योः सांकर्ये गोत्वा-ऽश्वत्वयोरपि तथात्वापत्तिस्तद्दोषत्वे बीजमिति चेत् । न, आपादकाभावात् । न हि सङ्कीर्णयोर्जातित्वं गोत्वा-ऽश्वत्वसामानाधिकरण्येन व्याप्तम् । तथापि शङ्का भविष्यतीति चेत् । सा यदि स्वरसवाहिनी, तदा लोकया[5]त्रामात्रोच्छेदकतया न दोषाय । यदि च जातित्वसाधारणधर्मदर्शनजन्या, तदा प्रत्यक्षायां गवि विरोधावधारणादेव निवर्तते; अन्यथोपाधिसांकर्यदर्शनजन्या सास्नाकेसरादिसांकर्यशङ्का दुरुच्छेदैव स्यात् ।

अथ जात्योः परस्परविरहसमानाधिकरणत्वस्य परस्परविरहव्याप्यतावच्छेदकत्वात् परस्परविरहसमानाधिकरणौ धर्मौ यदि जाती स्यातां, परस्परविरहव्याप्यौ स्यातामिति बाधकमिति चेत् । न, परस्परविरहसमानाधिकरणत्वस्यैकस्या-



१ श्लोक० 'त्स्नबुद्धित्वा'। २ श्लोक० 'क्तेष्वपि वा'। ३ श्लोक० 'नात्र का'। ४ श्लोकवार्तिके वनवादे कारिका ४४-४५-४६-४७-४९ । ५ ख.ग.घ.च.'यात्रो'।

भावेन गोत्वाभावसमानाधिकरणत्वे गोत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वादिकमेवाश्वत्वादौ विरोधितावच्छेदकं यथादर्शनं कल्पनीयमिति न संकीर्णयोस्तथात्वम्, मानाभावात्, सामानाधिकरण्यग्राहक[1]मानविरोधाच्च । किञ्च, संकीर्णयोरजातित्वे घटत्वमपि जातिर्न स्यात्, पृथिवीत्वेन परापरभावानुपपत्तेः । अथ पृथिवीत्वादिव्याप्यं नानैव घटत्वम्, कुलाल-स्वर्णकारादिजन्यतावच्छेदकतया तन्नानात्वस्यावश्यकत्वात्, अत एव घटत्वव्याप्यं पृथिवीत्वादिकमेव किं न स्यात्? इति नाविनिगमः, तन्नानात्वे तज्जन्यतावच्छेदकनीलत्व-गन्धत्व-भास्वरत्वादिनानात्वापत्तेः, अनुगतधीस्तु कथञ्चित्सौस(ा?)दृश्यादिति चेत् । न, नीलादौ नीलादेरसमवायिकारणत्वेनानतिप्रसङ्गे पृथिवीत्वेन तत्राहेतुत्वात्, भावकार्ये ससमवायिकारणकत्वनियमाभावात्, भावे वा जन्यसत्त्वावच्छिन्नं प्रति द्रव्यत्वेन हेतुतयैवोपपत्तेः; घटत्वस्य नानात्वे तज्जनकतावच्छेदकसंयोगनिष्ठजातिनानात्वस्याभिघातत्वादेस्तद्व्याप्यत्वस्य कल्पने चातिगौरवात् ।

न च जन्यद्रव्यजनकतावच्छेदिकैव संयोगनिष्ठा जातिरुपेयते, न तु घटादिजनकतावच्छेदिकापि, यत्र कपालयोः संयोगविशेषाद् द्रव्यान्तरं भवति तत्र कपालत्वस्यैवास्वीकारेण घटोत्पत्त्यनापत्तेरिति वाच्यम्; ताभ्यामेवोत्तरकालं संयोगविशेषेण घटारम्भदर्शनात् । न चोत्तरकालं द्व्यणुकादिलक्षणकिञ्चिदवयवापगमात् खण्डकपालान्तरमुत्पद्यते तत्रैव घटजनकतावच्छेदिका जातिरिति वाच्यम्; तत्र किञ्चिदवयवापगमात् खण्डकपालोत्पत्तिः, किञ्चिदवयवसंश्लेषाद् महाकपालोत्पत्तिर्वेति विनिगन्तुमशक्यत्वात्, ततः कपालान्तरोत्पत्तेरपि तत्र कपालत्वस्वीकारं विना दुर्घटत्वाच्च । हन्त! एवं घटत्वस्य नानात्वे

१ ख.ग.घ.च. 'मानावि' ।

घटसामान्ये कपालत्वेनापि हेतुत्वं भज्यत इति चेत् । भज्यताम्, किं वश्छिद्यते ?। न ह्यत्रार्थे वेदोऽस्ति । न च घटजनकसंयोगविशेषं प्रत्यपि कपालत्वेन हेतुत्वमुपेयमिति घटत्वनानात्वमावश्यकमिति वाच्यम्; कपालत्वेन तदुपादानत्वे घटत्व-घटजनकसंयोगनिष्ठजात्यादिनानात्वकल्पने गौरवात्, तदुपादानतावच्छेदिकाया एवैकस्याः स्वीकर्तुमुचितत्वात् ।

किञ्च, एवं सामयिकः शक्तिविशेषः, अभावविशेषो वा घटहेतुः स्यात्, स्याद् वा घटकुर्वद्रूपत्वेनैव घटहेतुत्वम्, प्रत्यभिज्ञानुरोधस्य त्वयैवोपेक्षितत्वात् । यदि चानुभवोऽनुरुध्यते, तदा भेदाभेदविचित्रशक्त्यनुविद्धसामान्यविशेषभावाभ्युपगमं विना दुर्घट एव हेतु-हेतुमद्भावः । एतेन 'घटत्व-दण्डत्वादिकमेकत्ववृत्ति कार्यकारणतयोरवच्छेदकम्, मृत्त्वादिकमेकमेव वैकत्ववृत्ति घटत्वादिकं तु सर्वत्रोपत्थम्भकपृथिवीवृत्ति, कार्यकारणभावानां बहूनां साक्षात्समानाधिकरणेनावच्छेदौचित्यात्, कुम्भकार-स्वर्णकारादेर्विजातीयकृतिमत्त्वेन, चक्रादि-वर्तुलादेश्च कथञ्चिद्विजातीयसंयोगव्यापारकत्वेन हेतुत्वम्, अन्यथा चक्रादिकं विना क्वचिद् मृदादिघटस्याप्युत्पत्तेर्व्यभिचारो दुर्वारः स्यात् । रूपादिवृत्त्येव तत् किं न स्यात् ? इति चेत् । रूपादौ नीलत्व-तिक्तत्व-सुरभित्व-कठिनत्वादिना सांकर्यात्, द्वित्व-द्विपृथक्त्वादेरनन्तत्वात्, आश्रयभेदाग्रहेऽग्रहाच्च; एकपृथक्त्वस्यावधिज्ञानव्यङ्ग्य-त्वेन विलम्बोपस्थितिकत्वात्, नव्यमते गुणत्वाभावाच्च' इत्यादि निरस्तम्; दोषादेकत्वाग्रहेऽपि घटत्वग्रहात्, घटे घटत्वस्या-संनिकर्षादग्रहप्रसङ्गात्, चक्षुःसंयुक्ते स्वाश्रयसंबन्धेन वृत्तित्वस्य संनिकर्षत्वे गौरवात्, एकत्वत्वग्रहापत्तेश्चेति न किञ्चिदेतत् ।

किञ्च, अतिरिक्तसामान्यवत् तत्संबन्धोऽपि वैशिष्ट्याख्योऽतिरिक्तः स्वीक्रियताम्, इति भावाभावसाधारणजात्यन-भ्युपगमे विनापसिद्धान्तं किं बाधकम् ?, कथं वा ध्वंसादावनुगतव्यवहारः ?, कथं वा तादात्म्येन जन्यसतः प्रतियोगितया

ध्वंसत्वं जन्यतावच्छेदकम् ? । न हि जन्याभावत्वं तत्, जन्यत्वस्य ध्वंसगर्भत्वेनात्माश्रयात् । न च कालिकेन घटत्व-पटत्वादिमत्त्वं तत्, अनन्तकार्यकारणभावप्रसङ्गात् । यदि चाखण्डोपाधिरूपमेव ध्वंसत्वादिकम्, तदा घटत्वादिकमप्यखण्डोपाधिरूपमेवास्तु, इति जातिविलय एवायातो देवानांप्रियस्य ! । यत्तु– 'घटत्वादेर्जातित्वे घटे समवायेन तद्वत्ताधीव्यपदेशादिकमिति लाघवम्, अखण्डोपाधित्वे तु स्वरूपसंबन्धेनेति गौरवम्' इति पद्मनाभादिभिरभिदधे । तत्तुच्छम्, स्वरूपसंबन्धस्याप्युपाधिरूपत्वेऽनुगतत्वेन लाघवापच्यवात्, समवायापेक्षया स्वरूपसंबन्धस्य गुरुत्वेऽननुगमस्यैव बीजस्य भवताभ्युपगमात् ।

यदपि 'जातावखण्डोपाधित्वापादने फलतोऽसमवेतत्वमेवापाद्यते, तच्चाशक्यम्, समवेतत्वस्य तत्र प्रत्यक्षसिद्धत्वात्' इति । तदपि न, समवेतत्वस्य त्वदतिरिक्तेनाननुभवात्, संबन्धांशे विलक्षणप्रतीतेरप्यसिद्धेः 'इह घटत्वम्' 'इह भावत्वम्' इति धियोर्वैलक्षण्यासिद्धेः । इष्यते च भावत्वमखण्डोपाधिरूपं नवीनैः, 'द्रव्यादौ सत्तादौ च 'भावः' 'भावः' इत्यनुगतधियः संबन्धांशे वैलक्षण्याननुभवेन समवाय-स्वाश्रयसमवायान्यतरसंबन्धेन सत्तैव भावत्वम्' इति प्राच्यमतस्य दूषणादिति न किञ्चिदेतत् । तस्मात् सामान्यविशेषरूपमेव वस्तु स्वीकर्तव्यम्, यदविशिष्टं प्रतिस्वमनुगतं, विशिष्टं च विशिष्टानुगतमविशिष्टस्व-परव्यावृत्तं स्वभावत एव चित्रक्षयोपशमवशाद् गुण-प्रधानभावेन परस्परकरम्बितं भासते । अत एव घटत्वांश इव घटांशेऽप्यनुगताकारा धीः, अत एव च महानसीयधूम एवाभिमुखीभूते सामान्यतो गृह्यमाणा व्याप्तिः पर्वतीयधूमेऽपि पर्यवस्यति, संवृतविशेषाकारे धूमसामान्य एव तद्ग्रहात् । न हि तदुत्तरं सामान्यप्रत्यासत्त्या सकलधूमविशेष्यकं व्याप्तिज्ञानं जायमानमनुभूयते, किन्तु प्रथममेव तथाक्षयोपशमवशात्, सामान्यप्रत्यासत्त्यादिकल्पनागौरवेणैकव्यक्तेरेव कथञ्चित्प्रतिनियतव्यक्त्यभेदस्य प्रत्यभिज्ञा-

सिद्धस्य स्वीकर्तुमुचितत्वादिति । तस्मात् सामान्यविशेषरूपतया गोरसदृष्टान्तेनोत्पाद-व्यय-ध्रौव्यात्मकं वस्तु सिद्धम् ॥ ३ ॥

अत्र परेषां पूर्वपक्षवार्तामाह—

**अत्राप्यभिदधत्यन्ये विरुद्धं हि मिथस्त्रयम् । एकत्रैवैकदा नैतद्घटां प्राञ्चति जातुचित् ॥४॥**

अत्रापि– त्र्यात्मकतत्त्ववादेऽपि, अन्ये– सौगतादयः, अभिदधति यदुत– विरुद्धं हि– विरुद्धमेव, मिथः– परस्परम्, त्रयम्– उत्पादादिः यत एवम्, अत एकत्रैव वस्तुनि, एकदा– एकस्मिन् काले, एतत्– त्रयम्, जातुचित्– कदाचित्, न घटां प्राञ्चति– न घटते ॥ ४ ॥

मिथो विरोधमेवोपदर्शयति—

**उत्पादोऽभूतभवनं विनाशस्तद्विपर्ययः । ध्रौव्यं चोभयशून्यं यदेकदैकत्र तत्कथम् ? ॥५॥**

उत्पादोऽभूतभवनम्– प्रागसतः सामग्रीबलादात्मलाभः, विनाशस्तद्विपर्ययः– भूतस्यानन्तरमभावः, ध्रौव्यं चोभयशून्यम्– उत्पाद-विनाशरहितम्, यत्– यस्मात्; तत्– तस्मात्, एकत्र वस्तुनि, एकदा– एकस्मिन् काले, कथम् ? ॥ ५ ॥

नन्वेकस्मिन्नेकदोत्पादादित्रयकार्यशोक-प्रमोद-माध्यस्थ्यदर्शनाद् न विरोधः, प्रमाणसिद्धेऽर्थे विरोधाप्रसरात्, इत्यत आह—

**शोक-प्रमोद-माध्यस्थ्यमुक्तं यच्चात्र साधनम् । तदप्यसांप्रतं यत्तद्वासनाहेतुकं मतम् ॥६॥**

यच्चात्र— त्र्यात्मकत्वे जगतः, शोक-प्रमोद-माध्यस्थ्यं साधनमुक्तम्, 'घट-मौलि-सुवर्णार्थी' इत्यादिना। तदप्यसांप्रतम्— अविचारितरमणीयम्, यत्— यस्मात्, तत्— शोकादिकम्, आन्तरवासनानिमित्तम्, मतम्— अभीष्टम्, न वस्तुनिमित्तम्, वस्तुदर्शनेनान्तरशोकादिवासनाप्रबोधादेव घटनाशादिविकल्पात् शोकाद्युत्पत्तेः। यदि च वस्तुनिमित्तमेव शोकादिकं स्यात् तदा राजपुत्रादिवदन्यस्याप्यविशेषेण तत्प्रसङ्गः ॥ ६ ॥

उपचयमाह—

**किञ्च स्याद्वादिनो नैव युज्यते निश्चयः क्वचित्। स्वतन्त्रापेक्षया तस्य न मानं मानमेव यत्।**

'किञ्च' इति दूषणान्तरे, स्याद्वादिनः क्वचित्— अधिकृते वस्तुनि, निश्चयो नैव युज्यते, यद्— यस्मात्, तस्य स्वतन्त्रापेक्षया— स्वसिद्धान्तापेक्षया, मानं— प्रमाणम्, मानमेव न— प्रमाणमेव न, अनेकान्तव्याघातात्। एवं चानेकान्तानुरोधादप्रमाणीभूतं प्रमाणं न निश्चायकं घटादिवत् ॥ ७ ॥

किञ्च,

**संसार्यपि न संसारी मुक्तोऽपि न स एव हि। तदतद्रूपभावेन सर्वमेवाव्यवस्थितम् ॥८॥**

संसार्यपि संसार्येव न, एकान्तप्रसङ्गात्; मुक्तोऽपि हि— निश्चितम्, स एव— मुक्त एव न, तत एव। एवं च सर्वमेव

---

१ प्रस्तुते स्तबके कारिका २।

तत्त्वम्, तदतद्रूपभावेन– तदतत्स्वभावत्वेन, अव्यवस्थितम्– अनिश्चितमिति ॥ ८ ॥

अत्र सिद्धान्तवार्तामाह—

**तयाहुर्मुकुटोत्पादो न घटानाशधर्मकः। स्वर्णान्न चान्य एवेति न विरुद्धं मिथस्त्रयम् ॥९॥**

ते– जैनाः, आहुर्यदुत– मुकुटोत्पादो न घटानाशधर्मकः– धर्मपदस्य स्वभावार्थत्वात्, नञ्व्यत्ययाच्च न घटनाशास्वभाव इत्यर्थः; तुल्यहेतुप्रभवयोर्द्वयोस्तयोरेकस्वभावत्वात् । न च स्वर्णात्– अन्वयिनः स्वाधारभूतात्, अन्य एव। इति हेतोः, मिथस्त्रयम्– उत्पादादिकम्, न विरुद्धम्, एकत्रैकदा प्रमीयमाणत्वादिति ॥ ९ ॥

एतदेव समर्थयन्नाह—

**न चोत्पादव्ययौ न स्तो ध्रौव्यवत्तद्धिया गतेः। नास्तित्वे तु तयोर्ध्रौव्यं तत्त्वतोऽस्तीति न प्रमा ॥**

न चोत्पाद-व्ययौ न स्तः– न विद्येते, कल्पितत्वादिति वाच्यम्। कुतः ? इत्याह–ध्रौव्यवत् तद्धिया– स्वबुद्ध्या, गतेः– परिच्छेदात्। तथापि नास्तित्वे तु– नास्तित्व एव तयोरुपगम्यमाने, ध्रौव्यं तत्त्वतः– परमार्थतः, अस्तीति न प्रमा, उत्पाद-व्ययप्रतीतितुल्ययोगक्षेमत्वाद् ध्रौव्यधियः। एतेन द्रव्यास्तिकमतं निराकृतम् ॥ १० ॥

पर्यायास्तिकमतं निराचिकीर्षन्नाह—

**न नास्ति ध्रौव्यमप्येवमविगानेन तद्गतेः। अस्याश्च भ्रान्ततायां न जगत्यभ्रान्ततागतिः।**

एवम्– उत्पाद-व्ययवत्, ध्रौव्यमपि नास्तीति न, अविगानेन– अबाधितत्वेन, तद्गतेः– ध्रौव्यपरिच्छेदात् । अस्याश्च– ध्रौव्यगतेश्च, भ्रान्ततायामुच्यमानायाम्, जगति– त्रैलोक्ये, अभ्रान्ततागतिः– अभ्रान्ततामकारः, नास्ति कश्चित् ।

ननु यद्येवं द्रव्यास्तिक-पर्यायास्तिकयोर्द्वयोरपि प्रत्येकं मिथ्यात्वम्, तदा सिकतासमुदाये तैलवत् तत्समुदायेऽपि सम्यक्त्वाभावात् कथं "[1]प्रमाण-नयैरधिगमः"? इति चेत् । सत्यम्, न ह्यत्र दलप्रचयलक्षणः समुदाय उच्यते, पर्यायस्यादलत्वात्, इतरेतरविषयापरित्यागवृत्तीनां ज्ञानानां समुदायाभावात्, क्वचित् क्रमिकतत्समुदायस्याव्यापकत्वाच्च; किन्त्वितरनयविषयीकृतरूपाव्यवच्छेदकत्वम्, तदेव चान्योन्यनिश्रितत्वं गीयते । इदमेव च प्रवृत्तिनिमित्तीकृत्य तत्र सम्यक्त्वपदं प्रवर्तते; तदिदमुक्तम्—

"[2]तम्हा सव्वे वि णया मिच्छद्दिट्ठी सपक्खपडिबद्धा । अण्णोण्णणिस्सिआ उण हवंति सम्मत्तसब्भावा[3] ॥ १ ॥" इति ।

ननु यद्येवम्, तदा यथा बहुमूल्यान्यपि रत्नान्यननुस्यूतानि 'रत्नावली' इति व्यपदेशं न लभन्ते, अनुस्यूतानि च तान्येव 'रत्नावली' इति व्यपदेशं लभन्ते, जहति च प्रत्येकसंज्ञाः, तथा नया अपि प्रत्येकं सम्यक्त्वव्यपदेशं न लभन्ते, समुदितास्तु तं लभन्ते, जहति च दुर्नयसंज्ञाः, इति कथं दृष्टान्तः? इति चेत् । निमित्तभेदेन व्यपदेशभेद एवायं दृष्टान्तः, न तु प्रत्येकसमुदायभाव इति दोषाभावात् । तथापि नयानां प्रमाणत्वे "[4]प्रमाण-नयैः०" इति पुनरुक्तं स्यात्, अप्रमाणत्वे चापरि-

१ तत्त्वार्थसूत्रे १।६। २ तस्मात् सर्वेऽपि नया मिथ्यादृष्टयः स्वपक्षप्रतिबद्धाः । अन्योन्यनिश्रिताः पुनर्भवन्ति सम्यक्त्वसद्भावाः ॥ १ ॥
३ सम्मतिग्रन्थे गाथा २१ । ४ ख. ग. घ. च. 'स्याद्वादप्र' ।

च्छेदकत्वं स्यादिति चेत् । न, नयवाक्ये तद्वति तत्प्रकारकबोधजनकत्वस्य समारोपव्यवच्छेदकत्वस्य निर्धारकत्वस्य वा, इतरांशाप्रतिक्षेपित्वस्य वा प्रमाणत्वस्य सत्त्वेऽप्यनेकान्तवस्तुग्राहकत्वरूपस्य प्रमाणवाक्यनिष्ठस्य प्रामाण्यस्याभावेन 'नय-प्रमाणैः' इति पृथगुक्तेः । एतेन 'घटोऽस्ति' इत्यादिवाक्ये लोकसिद्धं प्रामाण्यं परित्यज्य 'स्याद् घटोऽस्ति' इत्यादावेव प्रामाण्यं परिकल्पयतामपूर्वा चातुरी' इत्यव्युत्पन्नकल्पना निरस्ता । निरस्ता च शुक्तौ रजतभ्रमे इदमंशे प्रामाण्यवद् दुर्नयेऽप्यधिकृतांशे प्रमाणत्वेन नयत्वापत्तिः, लोकसिद्धप्रामाण्यापरित्यागादंशव्याप्तस्य प्रमाणत्वस्य प्रमाणावकाशसंभवेऽपि समूहव्याप्तस्य नयत्वस्यांशावकाशासंभवात् ।

ननु 'घट उत्पन्न एव' इति स्यादंशविनिर्मुक्तस्य दुर्नयस्यापि नयवत् स्वविषयावधारकत्वमस्त्येव, एवकारेणानुत्पन्नत्वाभावज्ञापनेऽप्युत्पन्नत्वप्रकाशनव्यापारापरित्यागात्, अनेकान्तबलादुभयोपपत्तेः, रक्ततादशायां घटे 'न श्यामः' इति बुद्धिवदिति चेत् । सत्यम्, इतरनयविषयविरोधावधारणे भजनां विना स्वविषयावधारणस्यैवाप्रवृत्तेः, प्राक् श्यामत्वेन ज्ञाते 'इदानीम्' इति विनिर्मोकेण 'न श्यामः' इति बुद्धिवत्, प्रवृत्तस्यापि च तस्यान्यथाविषयत्वरूपमिथ्यात्वोपस्थितेः । तदिदमुक्तम्—

"[1]णिययवयणिज्जसच्चा सव्वणया परविआलणे मोहा । ते उण ण दिट्ठसमओ विभयइ सच्चे व अलिए वा[2] ॥ १ ॥"

अस्यार्थः– निजकवचनीये स्वविषये परिच्छेद्ये सत्याः सम्यग्ज्ञानरूपाः सर्व एव नयाः संग्रहादयः, तद्वति तदव- ॥२३०॥

१ निजकवचनीयसत्याः सर्वनयाः परविचालने मोहाः । तान् पुनर्न दृष्टसमयो विभजते सत्यान् वाऽलीकान् वा ॥ ३ ॥ २ सम्मतिसूत्रे गाथा २८ ।

गाहित्वात् । परविचालने परविषयोत्खनने मोहा मुह्यन्तीति मोहा असमर्थाः, परविषयस्यापि सत्यत्वेनोन्मूलयितुमशक्यत्वात्[1], तदभावे स्वविषयस्याप्यव्यवस्थितेः, मिथो नान्तरीयकत्वात् । अतः परविषयस्याभावे स्वविषयस्याप्यसत्त्वात् तत्प्रत्ययस्य मिथ्यात्वमेवेत्यवधारयन् दृष्टसमयो ज्ञातानेकान्तः पुनस्तान् नयान् न विभजते सत्यानलीकान् वा, किन्त्वितरनयविषय-सव्यपेक्षतया 'अस्त्येव द्रव्यार्थतः' इत्येवं भजनया स्वनयाभिप्रेतमर्थं सत्यमेवावधारयति, यद् यत्र यदपेक्षयास्ति तस्य तत्र तदपेक्षया ग्राहकत्वेनैव नयप्रामाण्यात् । अत एव द्रव्यास्तिकादेः प्रत्येकमित्थंरूपतया सत्त्वम्, अनित्थंरूपतया चासत्त्वं परिभाषितम्—

"[2]दव्वट्ठिउ त्ति तम्हा णत्थि णओ णियमसुद्धजातीओ । न य पज्जवट्ठिओ णाम कोइ भयणाइ उ विसेसो[3] ॥१॥"

इति । अनेन हि विषयभेदकृतोऽनयोर्भेदः, द्व्यात्मकस्यैव प्रातिस्विकरूपेण द्वाभ्यां ग्रहात्, किन्तु भजनया विवक्षाभेद-कृतप्रतिभासभेदादित्युत्तरार्धतात्पर्यम् । तस्मात् पर्यायार्थिक उत्पाद-व्ययप्रतिभासे सत्यत्वमवगच्छति, ध्रौव्यप्रतिभासे त्व-सत्यत्वम्, न तु तत्प्रतिभासमेव प्रतिक्षिपति, अनुभूयमानतद्विषयताकेऽतद्विषयताकत्वस्य व्यवस्थापयितुमशक्यत्वात् । न खलु सहस्रेणापि बाधकैः 'इदं रजतम्' इति प्रतीतेरङ्गत्वावलम्बनत्वं व्यवस्थापयितुं शक्यते । द्रव्यास्तिकोऽपि ध्रौव्यप्रति-भासे सत्यत्वमवगच्छति, उत्पाद-व्ययप्रतिभासे त्वसत्यत्वम्; तदुक्तम्—

१ ज.'सत्त्वेनो' । २ द्रव्यास्तिक इति तस्माद् नास्ति नयो नियमशुद्धजातीयः । न च पर्यवास्तिको नाम कोऽपि भजनया तु विशेषः ॥१॥ ३ सम्मतौ गाथा ९ ।

"[1]दव्वट्ठियवत्तव्वं अवत्थु नियमेण होइ पज्जाए। तह पज्जववत्थु अवत्थुमेव दव्वट्ठियणयस्स ॥ १ ॥
उप्पज्जंति चयंति अ भावा निअमेण पज्जवनयस्स। दव्वट्ठियस्स सव्वं सया अणुप्पन्नमविणट्ठं[3] ॥ २ ॥" इति।
अयं च स्वविषयपक्षपातोऽयुक्तः, उभयप्रतिभासप्रामाण्यस्य तुल्ययोग-क्षेमत्वादित्युक्तम्। ततश्च त्र्यात्मकं वस्तु प्रमाणतः पर्यवसितमिति ॥ ११ ॥

उत्पादादिलक्षणाभिधानेन पूर्वपक्षितं विरोधं परिहरन्नाह—

**उत्पादोऽभूतभवनं स्वहेत्वन्तरधर्मकम्। तथाप्रतीतियोगेन विनाशस्तद्विपर्ययः ॥१२॥**

उत्पादोऽभूतभवनं– प्रागनुभूतरूपाविर्भवनम्, स्वहेत्वन्तरधर्मकं– स्वनान्तरीयकप्राक्पर्यायनाशरूपहेत्वन्तरस्वभावम्। कुतः? इत्याह– तथाप्रतीतियोगेन– अधिकृतरूपोत्पाद एव प्राक्तनरूपनाशप्रतीतेर्युक्तत्वात्, तदजनकस्वभावपरित्यागसमनियतत्वात् तज्जननस्वभावत्वस्य। तथा, विनाशस्तद्विपर्ययः– भूताभवनमन्यभवनस्वभावम्, प्रकृतरूपनाशस्येतररूपोत्पादनान्तरीयकत्वानुभवात्, दीपादिनाशेऽपि तमःपर्यायोत्पादानुभवस्य जागरूकत्वात्, एकसामग्रीप्रभवत्वाच्च तदतद्रूपनाशो-त्पादयोः। ये तु लाघवप्रणयिनोऽपि कपालोत्पादिकां भिन्नां सामग्रीम्, घटनाशोत्पादिकां च भिन्नामेव कल्पयन्ति, तेषां काचिदपूर्वैव वैदग्धी ॥ १२ ॥

---

१ द्रव्यास्तिकवक्तव्यमवस्तु नियमेन भवति पर्यायाः। तथा पर्यववस्तु अवस्त्वेव द्रव्यार्थिकनयस्य ॥ १ ॥
उत्पद्यन्ते च्यवन्ते च भावा नियमेन पर्यवनयस्य। द्रव्यास्तिकस्य सर्वं सदाऽनुत्पन्नमविनष्टम् ॥ २ ॥ ३ सम्मतौ गाथा १०-११।

**तथैतदुभयाधारस्वभावं ध्रौव्यमित्यपि। अन्यथा त्रितयाभाव एकदैकत्र किं न तत्?॥१३॥**

तथा, एतदुभयाधारस्वभावम्– उत्पाद-व्ययाधारस्वभावात्मकम्, ध्रौव्यम्, इत्यपि– इदमपि, 'तथाप्रतीतेस्तदुभयाविनाभूतम्, नान्यथाभूतम्' इति योज्यते। अन्यथा– उक्तानभ्युपगमे, त्रितयाभावः– त्रयमपि कथाशेषमापद्येत, परस्परानुविद्धत्वात् त्रितयस्य, अधिकृतान्यतराभावे तदितराभावनियमात्। तथाहि– न ध्रौव्यव्यतिरेकेणोत्पाद-व्ययौ संगतौ, सर्वदा सर्वस्यानुस्यूताकारव्यतिरेकेण विज्ञान-पृथिव्यादिकस्याप्रतिभासनात्। न चानुस्यूताकारावभासो बाध्यः, तद्बाधकत्वेनाभिमतस्य विशेषप्रतिभासस्य तदात्मकत्व एकबाधेऽपरस्यापि बाधात्, तद्व्यतिरिक्तत्वपक्षस्तु ध्रौव्यधियं विना स्थास-कोशादिप्रतिभासानुभवादनुपपन्नः। न च प्रथमाक्षसंनिपातानन्तरमन्वयप्रतिभासमन्तरेण विशेषप्रतिभास एव जायत इति वाच्यम्, तदा प्रतिनियतदेशस्य वस्तुमात्रस्यैव प्रतीतेः; अन्यथा तत्र विशेषावभासे संशयाद्यनुत्पत्तिप्रसक्तेः, विशेषावगतेस्तद्विरोधित्वात्। न च तदुत्तरकालभाविसादृश्यनिमित्तैकत्वाध्यवसायनिबन्धनेयं संशयाद्यनुभूतिः, प्राग् विशेषावगमे एकत्वाध्यवसायस्यैवासंभवाद् भेदज्ञानविरोधित्वात्। अनुभूयते च दूरदेशादौ वस्तुनि सर्वजनसाक्षिकी प्राक् सामान्यप्रतिपत्तिः, तदुत्तरकालभाविनी च विशेषावगतिः।

अत एवावग्रहादीनां कालभेदानुपलक्षणेऽपि क्रममभ्युपयन्ति समयविदः, अवग्रहादेरीहादौ हेतुत्वात्। यदि च मूल-मध्या-ऽग्रानुस्यूतस्थूलैकाकारप्रतिभासोऽपह्नूयते, तदा विविक्ततत्परमाणुप्रतिभासस्याप्यपह्नवात् शून्यताप्रसङ्गः। न चैकत्वप्रतिभासस्य तद्विषयस्य विकल्प्यमानस्याघटमानत्वाद् मिथ्यात्वम्, तस्यान्यानालम्बनत्वात्। संचितपरमाण्वालम्बनः स प्रतिभास

इति चेत्। न, संचयस्यैकस्य द्रव्यस्थानीयत्वात्। न चैवं परमाणुष्वपि परस्य मानमस्ति, प्रत्यक्षस्य विप्रतिपन्नत्वात्, उपलभ्यमानस्थूलैकस्वभावस्य चावस्तुत्वेन तत्कार्यत्वस्य परैरनभ्युपगमात्। न च वनादिप्रत्ययात् शिंशपाद्यवगतिवत् स्थूलावभासात् तत्प्रत्ययः, वनादेः शिंशपाधर्मत्वात्, स्थूलाकारस्य च परमाणुधर्मत्वानभ्युपगमात्। कथं च परः कल्पनाज्ञाने भ्रान्तसंविदि वा स्वसंवेदनापेक्षया विकल्पेतरयोर्भ्रान्तेतरयोश्च परस्परव्यावृत्तयोराकारयोः कथञ्चिदनुवृत्तिमभ्युपगच्छन्नध्यक्षां हेतु-फलयोर्व्यावृत्त्यनुविद्धामप्यनुवृत्तिं प्रतिक्षिपेत्?, संशयज्ञानं वा परस्परव्यावृत्तोल्लेखद्वयं बिभ्रद् यद्येकमुपेयते तदा किं न पूर्वापरक्षणप्रवृत्तमेकं स्वीकुर्यात् फलरूपं वस्तुहेतुम्, शब्द-विद्युत्-प्रदीपादीनामुत्तरपरिणामाप्रत्यक्षत्वेऽपि तत्सद्भावसाधनात्, पारिमाण्डल्यादिवत् संविद्ग्राह्याकारविवेकवद् वाऽध्यक्षस्यापि केनचिद् रूपेण परोक्षत्वाविरोधात्?। न च पारिमाण्डल्यादेः प्रत्यक्षता, शब्दाद्युत्तरपरिणामेऽप्यस्या वाङ्मात्रेण सुवचत्वात्। न च शब्दादेरनुपादानोत्पत्तिर्युक्तिमती, सुप्तप्रबुद्धबुद्धेरपि निरुपादानत्वप्रसङ्गात्। नापि निरन्वया संततिविच्छित्तिः, चरमक्षणस्याकिञ्चित्करत्वेनावस्तुत्वे पूर्वपूर्वक्षणानामपि तथात्वापत्तौ सकलसंतत्यभावप्रसक्तिरिति। तस्माद् दृष्टस्याप्यर्थस्य पारिमाण्डल्यादेः, ग्राह्याकारविवेकादेर्वांशस्य यथाऽदृष्टत्वं, तथोत्पन्नस्वभावस्यापि कस्यचिदंशस्यानुत्पन्नत्वम्। इति सिद्धं ध्रौव्यम्।

उत्पाद-व्ययव्यतिरेकेण ध्रौव्यमप्यसंगतम्; तथाहि– 'दुग्धादौ दध्यादिकं सदेव' इति सांख्यः, दुग्धादेरेव दध्यादिरूपेण व्यवस्थितत्वात्। 'तदव्यतिरिक्तं विकारमात्रमेव कार्यम्' इति सांख्यविशेषः। 'न कार्यं कारणे प्रागस्ति, किंतु ततः पृथग्भूतमेव सामग्रीतो भवति, न तु कारणमेव कार्यरूपेण व्यवतिष्ठते परिणमते वा' इति वैशेषिकादयः। 'न च कार्यं

कारणं वास्ति, ध्रुवमद्वैतमात्रमेव तत्त्वम्' इत्यपरः ।

तत्र 'दुग्धादौ दध्यादिकं सदेव' इति सांख्यमते कारणव्यापारवैफल्यम् । न हि तेन कार्योत्पत्तिः, तदभिव्यक्तिः, आवरणविनाशो वा कर्तुं शक्यते, तदुत्पत्त्य-ऽभिव्यक्त्योरपि सत्त्वे कारकव्यापारवैफल्यात्, असत्त्वेऽपसिद्धान्तात् । आवरणविनाशेऽपि न तत्साफल्यम्, असतो भावस्योत्पादवत् सतो भावस्य नाशाभावात् । न चान्धकारवत् तदावारकं तदा किञ्चिदुपलभ्यते । न च कारणमेव कार्यावारकम्, तस्य तदुपकारकत्वेन प्रसिद्धेः । किञ्च, अन्धकारवत् तद्दर्शनप्रतिबन्धकत्वेन तदावारकत्वे तद्दर्शनेऽपि तत्स्पर्शोपलम्भप्रसङ्गः । पटादिवद् व्यधायकत्वेन तदावारकत्वे च तद्ध्वंस इव मृत्पिण्डध्वंसेऽपि तदुपलब्धिप्रसङ्गः । क्षीर-नीरादिवदात्यन्तिकसंश्लेषेण तदावारकत्वे च तत्पृथग्भावं विना तदनुपलब्धिप्रसङ्गः । अपिच, कारणकाले कार्यस्य सत्त्वे स्वकाल इव कथमसौ तेनाव्रियते ?, कथं च मृत्पिण्डकार्यतया घटो व्यपदिश्यते, न त्वन्यथा, पटादिवत् ? । असत्त्वे च नावृत्तिः, अविद्यमानत्वादपसिद्धान्तश्च । विवेचितं चेदं चार्वाकवार्तायाम् । निरस्तश्च सत्कार्यवादः सांख्यवार्तायाम् । इति न किञ्चिदेतत् ।

एवं चानर्थान्तरभूतपरिणामवादोऽपि प्रतिक्षिप्त एव । न ह्यर्थान्तरपरिणामाभावे परिणाम्येव कारणलक्षणोऽर्थ एको युज्यते, पूर्वापरयोरेकत्वविरोधात् । न च परिणामानतिरेके परिणामित्वमपि व्यवतिष्ठते, विशेषणव्यवस्थाधीनत्वाद् विशिष्टव्यवस्थायाः । न ह्येकमेव विशेषणं विशेष्यं च । इति न किञ्चिदेतत् ।

यदपि 'कारणात् कार्यमत्यन्तपृथग्भूतमेव, तदाश्रितत्वेन तस्योत्पत्तेश्च न पृथगुपलम्भः' इति वैशेषिकादीनां मतम्;

तदपि समवायनिषेधात्, अन्यस्य च संबन्धस्याभावादनुपपन्नमेव। किञ्च, अवयवेभ्योऽवयविन एकान्तभेदे एकदेशरागे सर्वस्य रागः स्यात्, एकदेशावरणे च सर्वस्यावरणं भवेत्, रक्ता-ऽरक्तयोरावृता-ऽनावृतयोश्च भवदभ्युपगमेनैकत्वात्। यत्तु–'एकस्मिन् भेदाभावे सर्वशब्दप्रयोगानुपपत्तिः' इत्युद्द्योतकरेणोक्तम्; तत्तु 'स्वशस्त्रं स्वोपघातायैव' इति न्यायमनुसृतम्, अवयवानामवयविभाव एव 'सर्वं वस्त्रं रक्तम्' 'किञ्चिद् वस्त्रं रक्तम्' इति चित्रलोकव्यवहारसिद्धेः। न च वस्त्रपदस्य वस्त्रावयवे लक्षणया तत्र सर्वपदप्रयोगानुपपत्तिर्नेति वाच्यम्। अस्खलद्वृत्तित्वात् तत्प्रयोगस्य। यदपि शङ्करस्वामिनोक्तम्– 'वस्त्रस्य रागः कुङ्कुमादिद्रव्येण संयोग उच्यते, स चाव्याप्यवृत्तिः, तत एकत्र रक्ते न सर्वस्य रागः, न च शरीरादेरेकदेशावरणे सर्वस्यावरणं युक्तम्' इति। तदप्ययुक्तम्, पटादेर्निरंशस्यैकद्रव्यस्य कुङ्कुमादिना व्याप्ता-ऽव्याप्तांशाभावेन तत्र संयोगाव्याप्यवृत्तित्वस्यासंभवदुक्तिकत्वात्। तदारम्भकावयवस्यैव रक्तत्वे च न तस्य किञ्चिदव्याप्यवृत्तित्वं नाम, अवयवं व्याप्यैव रागस्य वृत्तेः, अवयविनश्चारक्तत्वादेव न च स्यादवयविनि रक्तत्वप्रतीतिः।

अथ तत्तदवयवे कुङ्कुमसंयोगाख्यो रागो जातस्तत्तदवयवावच्छेदेनावयविनि रागं जनयति, कारणा-ऽकारणसंयोगात् कार्याकार्यसंयोगोत्पत्तेः; अतस्तस्यावच्छिन्नत्वरूपमव्याप्यवृत्तित्वं युक्तमिति चेत्। न, तत्रावयवा-ऽवयविवृत्तिक्रमोत्पद्यमानरागद्वयानुपलम्भात्, संयोगजन्यसंयोग-तत्सामग्र्यादिकल्पने गौरवात्। तत्र रक्तरूपेणारक्तरूपस्याभिभवेऽन्यावयवेऽप्यरक्तानुपलम्भप्रसङ्गात्, तदनभिभवे च तदवयवेऽपि तदुपलम्भप्रसङ्गात्। न च तदवयवावच्छिन्नं रक्तत्वं तदवयवावच्छेदेनैवारक्तत्वाभिभावकमिति वाच्यम्; अरक्तत्वग्रहप्रतिबन्धकत्वरूपस्याभिभावकत्वस्यानवच्छिन्नत्वात्। न च रक्तावयवविषयक- ॥२३३॥

तद्रक्तत्वग्रहे तद्रागः प्रतिबन्धक इति वाच्यम्; गौरवात्, रक्तावयवावच्छेदेन चक्षुःसंनिकर्षे रक्तावयवाविषयकतद्रक्तत्व-प्रतीतिप्रसङ्गाच्च। किञ्च, 'किञ्चिद् वस्त्रं रक्तम्' इति प्रतीतौ 'किञ्चित्' इति 'सर्वम्' इति च वस्त्रविशेष एव प्रतीयते; न तु संयोगविशेषरूपरागे किञ्चिदवयवावच्छिन्नत्वं सर्वावयवावच्छिन्नत्वं च। 'मूले वृक्षः कपिसंयोगी' इत्यत्रापि 'मूलवृत्तिकपि-संयोगवान् वृक्षः' इत्येव स्वारसिकोऽर्थः। यदि च मूलेऽवच्छेदकत्वं भासते तदा तदपि वृक्षापेक्षमेव स्वनिरूपितैकत्वसंवलित-भेदप्रतियोगित्वरूपम्। अत एव नयभेदेन प्रामाण्याप्रामाण्यविभागः। एवं च 'अवच्छेदकभेदाद् न रक्तारक्तत्वादिविरोधः' इति निरस्तम्, अव्याप्यवृत्तिभेदाभ्युपगमप्रसङ्गाच्च।

न च रक्तत्वं पटे रञ्जकद्रव्यनिष्ठमेव परम्परासंबन्धेन प्रतीयते, अरक्तत्वं च समवायेन रक्तभेद एवेत्यपि युक्तम्, परम्परासंबन्धाप्रतीतेः, 'इह रक्तम्' 'नेह रक्तम्' इति विभागाप्रसङ्गात्, अरक्तावयवेऽपि परम्परासंबन्धेन रक्तत्वधीप्रसङ्गाच्च। अपिच, प्रतिनियतानावृतावयवोपलम्भे घटस्याऽपृथु-पृथु-पृथुतर-पृथुतमत्वाद्युपलम्भोऽवयवाभेदं विना दुर्घटः, अंशेष्वेव तद्वैचित्र्यसंभवात्। परिणामभेदेऽध्यक्षस्य भ्रान्तत्वे 'स्थूलाकारेऽपि भ्रान्तत्वमेव, इति स्वलक्षण एवाध्यक्षमभ्रान्तम्, अवयवी तु सांवृत एव' इति वदन् सौगत एव विजयेत। एतेन 'उपलभ्यमानोऽवयव्यनावृत एव, तद्गतपरिमाणग्रहोऽपीष्ट एव, तद्ग-तहस्तत्वादिजातिग्रहे तु यावदवयवावच्छेदेन संनिकर्षोऽपि हेतुः' इति लीलावतीकारप्रभृतीनामभिप्रायो निरस्तः, यावदव-यवावच्छेदेन संनिकर्षस्यासंभवाच्च। परभागमध्यावयवाद्यवच्छेदेन तदनुपपत्तेः, प्रतिनियतावयवावच्छेदेन संनिकर्षाद् हस्त-त्वादिग्रहे च प्रतिनियतावयवावभासे परिमाणभेदाद्यवभासोऽपि किं नाभ्युपेयते, चित्रप्रतिभासान्वितस्यैव वस्तुनो युक्त-

त्वात्, अधिकावयवापगमे तावत एव तस्य दर्शनात् ?। तदान्यदेव स्वल्पपरिमाणं द्रव्यमिति चेत्। प्रागपि तावदन्यदेव। नानात्व एकत्वानुपपत्तिरिति चेत्। तवैवायं दोषः। कथं चैवं प्रासादादावेकत्वप्रत्ययः ?। न हि प्रासादादिकमेकद्रव्यं भवद्भिरभ्युपगम्यते, विजातीयानां द्रव्यानारम्भकत्वात्। समूहकृतं तत्रैकत्वमिति चेत्। पटादावपि किं न तथा ?। न हि पटादौ प्रासादादौ च विलक्षणमेकत्वमनुभूयते। न स्यादेवं धान्यराशावप्येकत्वं पटाद्येकत्वाद् विलक्षणमिति चेत्। न स्यादेव, निश्चयतः सर्वस्यैव परमाणुसमूहकृतत्वात्। द्रव्यपरिणामकृतत्वात्तु व्यवहारतः स्याचेत्, व्यावहारिकमेकत्वमतिरिच्यताम्, का नाम हानिरनेकान्तवादिनामियता ?।

अपि च, अवयवेष्ववयवी एकदेशेन समवेयात्, कात्स्न्र्येन वा ?। आद्ये, तद्देशस्यापि देशादिकल्पनायामनवस्था। द्वितीये च प्रत्यवयवसमवेतावयविबहुत्वप्रसक्तिः। न च देश-कात्स्न्र्यातिरेकेणान्या वृत्तिरस्तीति विवेचितं प्राक्। द्वित्वस्य द्वयोः पर्याप्तत्ववद् यावदवयवेष्ववयविनः पर्याप्तत्वे यावदवयवाग्रहे तद्ग्रहो न स्यात्, प्रत्येकं पर्याप्तत्वे च प्रत्येकं पर्याप्तत्वव्यवहारः स्यादिति निष्कर्षः। किञ्च, एकस्य निरंशस्यावयविनः पृथुतरदेशावस्थानमयुक्तं स्यात्, न चेदेवम्, एकत्वाविशेषाद् दुर्घटः स्यात् सर्वत्र स्थूल-सूक्ष्मादिभेदः। अल्प-बह्वयवारम्भादिकृतोऽसौ विशेष इति चेत्। तर्हि तद्विशेषविशिष्टा अवयवा एवावयविव्यपदेशं भजन्ताम्, किमवयविपृथग्भावकल्पनाकष्टेन ?। अवयवादपृथग्भवन्नवयवी परमाणुसादभेदमश्नुवन्नध्यक्षो न स्यादिति चेत्। न, न ह्यवयविनोऽपि सर्वेऽध्यक्षा एव, वायु-पिशाचादावनेकान्तात्; किन्तु केचिदेव; तथा च परिणामविशेषनियता योग्यता परमाणुसादभेदेऽपि नासंभविनी। न च तत्र महत्त्वाध्यवसायोऽप्यनुपपन्नः, परमाणुसमूहेऽपि विशिष्टे महत्त्व-

परिणामाबाधात् । अत एव धान्यराशौ महत्त्वविशेषाध्यवसायः सूपपदः ।

किञ्च, अवयविनोऽवयवाभेदेऽनभ्युपगम्यमाने 'मृदेवेयं घटतया परिणता' 'तन्तव एवैते पटतया परिणताः' इत्यादयो व्यवहाराः, विभक्तेषु तन्तुषु 'त एवैते तन्तवः' इत्यादिप्रत्यभिज्ञा, अवयवगुरुत्वादेरवयविगुरुत्वाद्यविशेषादिकं च न घटेत । अवयवरूपादिसमुदायेनैवैकावयवरूपाद्युपपत्तिमुपेक्ष्य पृथगवयव्यनुरोधेन रूपादौ रूपादेर्नानाकार्यकारणभावादिकल्पने गौरवं चानिवारितप्रसरं स्यादिति । एतेन 'वस्तुगत्या विलक्षणसंस्थानावच्छेदेन संनिकर्षाद् यद्द्रव्यगतघटत्वादिग्रहस्तत्तद्व्यक्ते-रुत्पाद-विनाशभेदादिप्रत्ययान्यथानुपपत्त्याऽवयवी पृथगेवेति सिद्धम्' इत्यपि निरस्तम्, 'पृथगेव' इत्यसिद्धेः, उत्पाद-विनाश-भेदादेर्ध्रौव्याभेदादिसंवलितत्वसंभवात्, तथाप्रतीतिप्रामाण्यात्। एवं च 'पृथिव्यादयश्चत्वारः परमाणुरूपा नित्या एव, कार्यरू-पास्त्वनित्याः' इति तेषां प्रक्रियापि निरस्ता, परमाणूनामपि कार्याभिन्नतयाऽर्थान्तरभावगमनरूपस्य नाशस्य, विभागजातस्य चोत्पादस्य समर्थनात् । यथा हि बहूनामेकशब्दव्यपदेशनिदानं समुदयजनित उत्पादः, तथैकस्य बहुशब्दव्यपदेशनिदानं विभागजातोऽपि स किं नाभ्युपेयः ?। व्यवहरन्ति हि भग्ने घटे 'बहूनि कपालान्युत्पन्नानि' इति । एवं परमाणूनामप्येकनाशे युक्तो बहुत्वेनोत्पादः; तदाहुः—

बहुआण[1] एगसद्दे जइ संजोगाहि होइ उप्पाओ । णणु एगविभागम्मि वि जुज्जइ बहुआण उप्पाओ[2] ॥ १ ॥ इति ।

योऽप्याह– 'कार्यकारणातिरिक्तं ध्रुवमद्वैतमात्रं तत्त्वम्' इति । तन्मतमपि मिथ्या, कार्यकारणोभयशून्यस्याद्वैतस्य

१ बहुकानामेकशब्दे यदि संयोगाद् भवत्युत्पादः । नन्वेकविभागेऽपि युज्यते बहुकानामुत्पादः ॥ १ ॥ २ सम्मतिसूत्रे गाथा १३७ ।

व्योमोत्पलसगोत्रत्वात्। किञ्च,'अद्वैतम्' इति प्रसज्यप्रतिषेधः, पर्युदासो वा ? । प्रसज्यपक्षे प्रतिषेधमात्रपर्यवसानाद् नाद्वैतसिद्धिः, प्रधानोपसर्जनभावेनाङ्गाङ्गिभावकल्पनायां द्वैतप्रसक्तेः। पर्युदासपक्षेऽपि द्वैतप्रसक्तिरेव, प्रमाणप्रतिपन्ने द्वैते तत्प्रतिषेधेनाऽद्वैतासिद्धेः। द्वैतादद्वैतस्य व्यतिरेके पररूपव्यावृत्तस्वरूपाव्यावृत्तात्मकत्वेन द्विरूपत्वात्, अव्यतिरेके च सुतरामिति । किञ्च, प्रमाणादिसद्भावे न द्वैतवादाद् मुक्तिः, तदभावे च शून्यतापातादिति । अपिच, द्रव्याद्वैते रूपादिभेदाभावप्रसङ्गः। न च चक्षुरादिसंबन्धात् तदेव द्रव्यं रूपादिप्रतिपत्तिजनकमिति वाच्यम्; सर्वात्मना तत्संबन्धे सर्वदा तथैव प्रतीतिप्रसक्तेः, रूपान्तरस्य तद्व्यतिरिक्तस्याभ्युपगमे चाद्वैतव्याघातात्। प्रधानाद्वैतमपि महदादिविकाराभ्युपगमे न युक्तम्, विकारस्य विकारिणोऽत्यन्तमभेदे 'विकारी' इति व्यपदेशायोगात्, भेदाभेदेऽनेकान्तसिद्धेः, व्यतिरेके च द्वैतापत्तेः। निरस्तश्च प्रधानाद्वैतवादः सांख्यवार्तायाम्। ब्रह्माद्वैतवादोऽप्यनन्तरमेव निषेत्स्यते वेदान्तिवार्तायाम्।

शब्दाद्वैतमतमपि न युक्तम्, एवं हि तदनादि-निधनं शब्दब्रह्मैव जगतस्तत्त्वम्, तत्प्रकृतित्वात्, घटशरावादीनामिव मृत्। तदुक्तं भर्तृहरिणा--

"अनादि-निधनं ब्रह्म शब्दतत्त्वं यदक्षरम्। विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ १ ॥" इति ।

अत्रादिः– उत्पादः, निधनं– विनाशः, तदभावादनादि-निधनम्, प्रकृतेरविकृतैकरूपत्वात्। अक्षरमित्यकाराद्यक्षरस्य निमित्तत्वात्, अनेनाभिधानरूपो विवर्त उक्तः, 'अर्थभावेन' इत्यनेन त्वभिधेयरूपः। प्रक्रियेति भेदानामेव संकीर्तनम्। ब्रह्मेति विशुद्धस्वनामकीर्तनम्। शब्दब्रह्मैव खल्वेकमनवच्छिन्नम्, तच्चावच्छिन्नेषु स्वविकारेष्वनुस्यूतमवभासते, सर्वस्यैव प्रत्ययस्य ॥२३५॥

शब्दानुविद्धत्वात्; तदनुवेधपरित्यागे च प्रकाशरूपताया एवाभावप्रसङ्गात्। तदुक्तम्—

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं सर्वं शब्देन वर्तते ॥ १ ॥

वाग्रूपता चेद् व्युत्क्रामेदवबोधस्य शाश्वती। न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥ २ ॥"

सा चेयं वाक् त्रिविधा– वैखरी, मध्यमा, पश्यन्ती च। यत्र येयं स्थान-करण-प्रयत्नक्रमव्यज्यमानाकारादिवर्णसमुदायात्मिका वाक् सा 'वैखरी' इत्युच्यते। तदुक्तम्—

"स्थानेषु विधृते वायौ कृतवर्णपरिग्रहा। वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धना ॥ १ ॥"

अस्यार्थः– स्थानेषु– ताल्वादिस्थानेषु, वायौ प्राणसंज्ञे, विधृते– अभिघातार्थं निरुद्धे सति। कृतवर्णपरिग्रहेति हेतुगर्भं विशेषणम्। ततः ककारादिवर्णपरिणामाद् वैखरी– विशिष्टायां खरावस्थायां स्पष्टरूपायां भवा वैखरीति निरुक्तेः, वाक् प्रयोक्तॄणां संबन्धिनी, तेषां स्थानेषु वा, तस्याश्च प्राणवृत्तिरेव निबन्धनम्, तत्रैव निबद्धा सा, तन्मयत्वादिति। या पुनरन्तः संकल्प्यमाना क्रमवती श्रोत्रग्राह्यवर्णरूपाऽभिव्यक्तिरहिता वाक् सा मध्यमेत्युच्यते। तदुक्तम्—

"केवलं बुद्ध्युपादाना क्रमरूपानुपातिनी। प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते ॥ १ ॥"

अस्यार्थः– स्थूलां प्राणवृत्तिमतिक्रम्य– हेतुत्वेन वैखरीवदनपेक्ष्य, क्रमरूपमनुपततीत्येवंशीला, केवलं बुद्धिरेवोपादानं हेतुर्यस्याः सा, प्रवर्तते– संकल्प-विकल्पादिधारानुबन्धिनी भवति। मध्यमा वाक्– वैखरी-पश्यन्त्योर्मध्ये भावाद् मध्यमेति संज्ञा, मनोभूमाववस्थानमस्याः। या तु ग्राह्य भेद-क्रमादिरहिता स्वप्रकाशा संविद्रूपा वाक् सा पश्यन्तीत्युच्यते। तदुक्तम्—

"अविभागा तु पश्यन्ती सर्वतः संहतक्रमा। स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ॥ १ ॥"

पश्यन्ती– प्रत्यक्षस्वरूपा वागियम्। यस्यां वाच्य-वाचकयोर्विभागेनावभासो नास्ति, सर्वतश्च सजातीयविजातीयापेक्षया संहतो वाच्यानां वाचकानां च क्रमो देश-कालकृतो यत्र, क्रमाविवर्तशक्तिस्तु विद्यते। स्वरूपज्योतिः– स्वप्रकाशा वेद्यते, वेदकभेदातिक्रमात्। सूक्ष्मा– दूर्लक्षा, अनपायिनी, कालभेदास्पर्शादिति। अत एव शब्दार्थयोः संबन्धस्तादात्म्यमेव। न हि 'अयं घटः' इतीदमर्थे तटस्थघटपदस्योपरागोऽस्ति, किन्तु घटपदाभेद एव भासते। इति व्यवहारोऽपि सकलः शब्दानुविद्ध एव दृश्यते। न हि 'भोक्ष्ये' 'दास्यामि' इत्याद्यनुल्लिखितशब्दः कश्चिदपि स्वयं भोजन-दानाद्यर्थं प्रयतते; परं वा 'भुङ्क्ष्व' 'देहि' इत्यादिशब्दं विना प्रवर्तयति। जीवित-मरणस्वरूपाविर्भावोऽपि शब्दाधीन एव, सुषुप्तदशायामनुल्लिखितशब्दस्य मृताविशेषात्। तदुत्तरसमये च कुतश्चित् शब्दात् प्रबुद्धस्यान्तर्जल्पात्मना शब्देनैव जीवितानुसंधानात्। न चाद्वयरूपे तत्त्वे कथमाविर्भाव-तिरोभावादिरूपप्रपञ्चभेदप्रतिभासः? इति वाच्यम्; तिमिरतिरस्कृतलोचनस्य विशुद्धेऽप्याकाशे विचित्ररेखाभेदप्रतिभासवदनाद्यविद्योपप्लुतचित्तस्य प्रपञ्चभेदप्रतिभासात्। यथा च तिमिरविलये विशुद्धाकाशदर्शनं तथा निखिलाविद्याविलये शुद्धशब्दब्रह्मदर्शनम्। तच्चाभ्युदयनिःश्रेयसफलधर्मानुगृहीतान्तःकरणैः प्रणवस्वरूपमवाप्यत इति।

अत्र[1] च शब्दप्रत्ययादौ को नाम शब्दानुवेधः परस्याभिमतः? । न नाम संयोगः, समवायो वा, द्रव्ययोरेव संयोगात्; गुणादीनामेव च समवायात्। 'घटो नीलानुविद्धः' इत्यत्रेव तादात्म्येऽनुवेधपदप्रयोग इति चेत्। न, एकान्ताभेदे तदनुप-

१ ख. ग. घ. च. 'तत्र'।

पत्तेः। न हि 'घटो घटानुविद्धः' इति प्रयुञ्जते प्रामाणिकाः। विवक्षा-ऽविवक्षाभ्यां तथाप्रयोगा-ऽप्रयोगोपपत्तिः, यथा 'कुण्डे कुण्डस्वरूपम्' इति प्रयोगः, न तु 'कुण्डे कुण्डम्' इति, इति चेत्। न, तथापि शब्द-बोधयोरेकान्ततादात्म्ये शब्दस्य जडत्वाद् बोधस्यापि जडतापत्तेः, शब्दस्य बोधरूपत्वेन बोधमात्रवादापत्तेः। तथा चान्यस्यान्यबोधाबोद्धृवदन्यशब्दश्रोतृत्वं न भवेत्।-भावे वा सकलप्रमातृबोधाभिन्नशब्दग्राहित्वाद् निरुपायं सर्वस्य सर्वचित्तवित्त्वं स्यात्। तथाच समन्तभद्रः—

"बोधात्मता चेच्छब्दस्य न स्यादन्यत्र तच्छ्रुतिः। यद् बोद्धारं परित्यज्य न बोधोऽन्यत्र गच्छति॥ १॥

न च स्यात्प्रत्ययो लोके यः श्रोत्रा न प्रतीयते। शब्दाभेदेन सत्येवं सर्वः स्यात्परचित्तवित्॥ २॥" इति।

अतः शब्दानुविद्धः प्रत्ययो न जगतः शब्दमयत्वे साक्षी। किञ्च, शब्दमयत्वं जगतः शब्दपरिणामरूपत्वम्, नीलादिपरिणामश्च शब्दस्य स्वाभाविकशब्दस्वरूपपरित्यागे, तदपरित्यागे वा ?। आद्ये, अनादि-निधनत्वविरोधः। द्वितीये, नीलादिसंवेदनकाले बधिरस्यापि शब्दसंवेदनापत्तिः। स्थूलशब्दपरिणामपरित्यागेऽपि सूक्ष्मशब्दरूपापरित्यागात् प्रथमविकल्पे न दोष इति चेत्। न, सूक्ष्मस्य सततस्तादृशदलोपचयाभावे तादृशस्थूलरूपासंभवात्; सूक्ष्मस्य शब्दस्य तादृशार्थपरिणामः, सूक्ष्मस्याऽर्थस्य वा तादृशशब्दपरिणाम इति विनिगन्तुमशक्यत्वाच्च। घटादिरर्थो घटादिशब्दोपरागेणानुभूयत इत्यर्थ एव शब्दपरिणाम इति चेत्। न, 'अयं घटः' इत्यत्र हि 'अयं घटपदवाच्यः' इत्येवानुभवः, न तु 'अयं घटपदात्मा' इति। किञ्च, शब्दा-ऽर्थयोरेकान्ताभेदे खड्गादिशब्दोच्चारणे वदनविदारणमपि वैयाकरणस्य प्रसज्येत। यत्नेन मुखे निवेश्यमानस्य खड्गभागस्येव खड्गशब्दस्यावस्थाविशेषाद् न वदनविदारकत्वमिति चेत्। न, अद्वैतेऽवस्थाभेदस्यैवासिद्धेः। स्वयमेव विचित्रस्व-

भावं शब्दब्रह्मेति प्रत्यवस्थं भेदोपपत्तिः, स्वातिरिक्तभेदकाभावाच्च नाद्वैतव्याघात इति चेत्। हन्त! तर्हि जगद्वैचित्र्यस्यैव 'शब्दब्रह्म' इति नामान्तरकीर्तनमायुष्मतः। आविद्यकः सकलो भेदानुपाती प्रपञ्चः, इति तत्त्वतोऽभिन्नमेव शब्दब्रह्मेति चेत्। एवं तर्हि द्विचन्द्रादिवदसन् प्रपञ्च इति तत्प्रकृतित्वं शब्दब्रह्मणो न स्यात्। न हि सतोऽसत्प्रकृतित्वं नाम। एवं च

"अनुविद्धैकरूपत्वाद् वीचीबुद्बुदफेनवत्। वाचः सारमपेक्षन्ते शब्दब्रह्मोदकाद्वयम्॥ १॥"

इत्यभिधानमयुक्तं स्यात्, सारजलस्य स्वावस्थाविशेषबुद्बुदादितिरोभावक्षमत्वेऽपि शब्दब्रह्मणः स्वावस्थानाक्रान्तप्रपञ्चतिरोभावाक्षमत्वात्। अविद्यादशायां शब्दब्रह्मणस्तत्त्वा-ऽन्यत्वाभ्यामनुपाख्यः प्रपञ्चो भासते, तद्विलये तु न, इत्यद्वितीयशब्दब्रह्मावसाय इति चेत्। कस्यायमीदृगवसायः?। योगिन इति चेत्। स एव तर्हि संशयपथं पृच्छयताम्– किमसौ शब्दाद्वयमात्रं जगत् पश्यति, विचित्रस्वरूपं वेति। किञ्च, अविद्या ब्रह्मणो भिन्ना, अभिन्ना वा?। भिन्ना चेत्। वस्तुभूता, अवस्तुभूता वा?। न तावदवस्तुभूता, अर्थक्रियाकारित्वात्, ब्रह्मवत्। न च नार्थक्रियाकारित्वमप्यस्याः, तिमिरवद् भ्रमजनकत्वाभिधानात्, अवस्तुमाहात्म्याद् वस्तुनोऽन्यथाभावेऽतिप्रसक्तेः। वस्तुभूता चेत्। तदा ब्रह्म विद्या चेति द्वैतमापन्नम्। अभिन्ना चेत्। ब्रह्मवद् मिथ्याधीनिमित्तं न स्यात्। तस्मादिदानीं शब्दब्रह्मण आत्मज्योतीरूपेणाप्रकाशनं नाविद्याभिभूतत्वात्, किन्तु तथा सत्त्वादेवेति प्रतिपत्तव्यम्। एवं चास्य वैखर्यादिवाग्भेदकल्पनमपि न युज्यते, एक-द्व्यात्मकतत्त्वानुपगमे भेदपरिगणनस्याशक्यत्वात्।

१ अविद्याजन्य इत्यर्थः।

तस्माद् द्रव्य-भावभेदाद् द्विविधा वाक्। तत्राद्या द्विविधा— द्रव्यात्मिका, पर्यायात्मिका च। तत्र शब्दपुद्गलरूपा द्रव्यात्मिका, श्रोत्रग्राह्यपरिणामापन्ना च सैव पर्यायात्मिका। तामन्ये 'वैखरी' इति परिभाषन्ते। द्वितीयापि द्विविधा— व्यक्तिरूपा, शक्तिरूपा च। आद्या सविकल्पिका धीरन्तर्जल्पाकारप्रतिनियतशब्दोल्लेखजननी। तामन्ये 'मध्यमा' इत्यध्यवस्यन्ति। द्वितीया च सविकल्पबुद्ध्यावारककर्मक्षयोपशमशक्तिरूपा, तामन्ये पश्यन्तीमाचक्षत इति दिक्। तस्मादुत्पाद-व्ययाभावे ध्रौव्यस्याप्यसंभव इति युक्तमुक्तम्; अन्यथा त्रितयाभाव इति। तत्– तस्मात् कारणात्, एकदैकत्र किं नोत्पादादित्रयम्? । यदेव ह्युत्पन्नं तदेव कथञ्चिदुत्पद्यते, उत्पत्स्यते च। यदेव नष्टं तदेव नश्यति, नङ्क्ष्यति च। यदेवावस्थितं तदेवावतिष्ठते, अवस्थास्यते चेति ॥ १३ ॥

इदमेवोपसंहरन्नाह—

**एकत्रैवैकदैवैतदित्थं त्रयमपि स्थितम्। न्याय्यं भिन्ननिमित्तत्वात्तदभेदे न युज्यते ॥१४॥**

एकत्रैव– अधिकृतघटादिवस्तुनि, एकदैव– विवक्षितकाले, एतत् त्रयम्– उत्पाद-व्यय-ध्रौव्यलक्षणम्, इत्थम्– उक्तरीत्या, भिन्ननिमित्तत्वात्– भिन्नापेक्षत्वात्, अभूतभवन-भूताभवन-तदुभयाधारस्वभावत्वभेदादिति वा, न्याय्यं– घटमानम्, तदभेदे– निमित्ताभेदे, न युज्यत एकत्र त्रयम्, भिन्नापेक्षाणामेकापेक्षत्वायोगात्, एकस्य भेदायोगाद् वेति भावः ॥१४॥

परे पुनरित्थमनुभवन्तोऽपि प्रतिक्षिपन्तीति तेषामज्ञानमाविष्कुर्वन्नाह—

**इष्यते च परैर्मोहात्तत्क्षणस्थितिधर्मणि । अभावेऽन्यतमस्यापि तत्र तत्त्वं न यद्भवेत् ॥१५॥**

इष्यते च– अनुभूयते च, परैः– सौगतैः, मोहात्– अज्ञानात्, तत्– उत्पादादित्रयम्, क्षणस्थितिधर्मणि वस्तुन्यभ्युपगम्यमाने । कथम् ? इत्याह– अभावेऽन्यतमस्याप्युत्पादादीनां मध्ये, तत्र– वस्तुनि, तत्त्वं– क्षणस्थितिकत्वम्, यद्– यस्मात्, न भवेत् । तत्क्षणे भवनादुत्पन्नम्, अग्रिमक्षणेऽभवनाच्च नष्टम्, तदावस्थितेश्च ध्रुवमेव हि क्षणस्थितिस्वभावमुच्यमानं पर्यवस्येदिति, अग्रिमक्षणेऽन्यस्याभवने तदन्यथाभावाभावे क्षणिकत्वव्याघातादित्युपपादितचरम् । एवं च परैस्त्र्यात्मकं वस्त्वनुभूयमानमपि त्र्यात्मकत्वेन नाभ्युपगम्यते । तत्र च त्र्यात्मकत्वं विना स्वाभ्युपगमान्यथानुपपत्त्यैव त्र्यात्मकत्वं बलादेष्टव्यमिति भावः ॥ १५ ॥

पराभिप्रायमाशङ्क्य परिहरति—

**भावमात्रं तदिष्टं चेत्तदित्थं निर्विशेषणम् । क्षणस्थितिस्वभावं तु न ह्युत्पाद-व्ययौ विना १६**

भावमात्रं तद् वस्तु क्षणस्थितिकमिष्टम्, न तु क्षणस्थितिकत्वमपि तत्र तदतिरिक्तमस्तीति चेत् । इत्थं तद् वस्तु निर्विशेषणं जातम् । एवं च 'किंरूपं तत्' इति न निश्चयोऽद्यापि देवानांप्रियस्य । क्षणस्थितिस्वभावं तु तदुच्यमानं, हि– निश्चितम्, उत्पाद-व्ययौ विना न युक्तम्, क्षणोर्ध्वमस्थित्यपेक्षयैव क्षणस्थितिस्वभावत्वव्यवस्थितेः ॥ १६ ॥ ॥२३८॥

वाङ्मात्रेण तथाभ्युपगमे त्वाह—

**तदित्थंभूतमेवेति द्राङ्नभस्तो न जातुचित्। भूत्वाऽभावश्च नाशोऽपि तदेवेति न लौकिकम् १७**

तादित्थंभूतमेव– क्षणस्थितिकमेव, स्वभावात्, न त्वितरावध्यपेक्षयेति भावः, इति चेत् । न जातुचित्– कदाचित्, द्राक्– शीघ्रम्, परिणामिकारणं विना, नभस्तः– आकाशात्, उपपद्यते, प्रमाणाभावात् । नभस्त एव वा न व्यवतिष्ठते, भूत्वाऽभावश्च नाशोऽपि, तदेव– भावमात्रमेव, तदेव न भवतीति प्रतीतेः, इति न लौकिकमेतत्, किन्तु प्रामाणिकम् । एवं च भावाभावरूपत्वाद् वस्तुनो भिन्नकाले स्वकाले चोत्पादादित्रयात्मकत्वमेव । इत्थं च 'ये यद्भावं प्रत्यनपेक्षास्ते तद्भावनियताः, यथाऽन्त्या कारणसामग्री स्वकार्योत्पादने, विनाशं प्रत्यनपेक्षाश्च भावा इति विनाशनियतास्ते' इति परेषामभिधानमपि न प्रकृतबाधकम्, प्रत्युतानुकूलमेव, भावस्योत्तरपरिणामं प्रत्यनपेक्षतया तद्भावनियतत्वोपपत्तेः, पूर्वक्षणस्य स्वयमेवोत्तरीभवतोऽपरापेक्षाभावतः क्षेपायोगात्, उत्पन्नस्य चोत्पत्ति-स्थिति-विनाशेषु कारणान्तरानपेक्षस्य पुनः पुनरुत्पत्ति-स्थिति-विनाशत्रयमवश्यंभावि, अंशेनोत्पन्नस्यांशान्तरेण पुनः पुनरुत्पत्तिसंभवात् । इति सिद्धमेकदैकत्र त्रयम् ।

ये त्वाहुः– 'घटोत्पादकाले घटनाशाभ्युपगमे 'घटो नष्टः' इति प्रयोगः स्यात्, अन्यनाशे च घटस्योत्पन्नत्वैकान्त एव' इति । तेऽप्यतात्पर्यज्ञाः, स्यादुपस्यन्दनेन द्रव्यार्थतया घटपदस्य तथाप्रयोगस्येष्टत्वात्, अंशे तत्प्रतियोगित्वस्य, अंशे तदाधारत्वस्य च संभवात्; विरोधस्यापि तृतीयार्थावरुद्धस्यात्पदप्रतिरुद्धत्वात् । न खलु निःक्षेपतत्त्ववेदिनां क्वचन कापि प्रयोग-

व्यवहाराद्यव्यवस्था। तदिदमुवाच वाचकमुख्यः– "नाम-स्थापना-द्रव्य-भावतस्तन्न्यासः" इति। 'घटः' इत्यभिधानमपि घट एव, "अर्था ऽभिधान-प्रत्ययास्तुल्यनामधेयाः" इति वचनात्, वाच्य-वाचकयोर्भेदे प्रतिनियतशक्त्यनुपपत्तेश्च। इति नामनिःक्षेपः। घटाकारोऽपि घट एव, तुल्यपरिणामत्वात्; अन्यथा तत्त्वायोगात्, मुख्यार्थमात्राभावादेव तत्प्रतिकृतित्वोपपत्तेः। इति स्थापनानिःक्षेपः। मृत्पिण्डादिर्द्रव्यघटोऽपि घट एव, अन्यथा परिणामपरिणामिभावानुपपत्तेः। इति द्रव्यनिःक्षेपः। घटोपयोगः, घटनक्रियैव वा घटः, तस्यैव स्वार्थक्रियाकारित्वात्। इति भावनिःक्षेपः। एतद्विषयविस्तरस्तु विशेषावश्यकादौ।

अत्रेदं विचार्यते– ननु नामादीनां सर्ववस्तुव्यापित्वमुपगम्यते नवा? । आद्ये व्यभिचारः, अनभिलाप्यभावेषु नामनिःक्षेपाप्रवृत्तेः, द्रव्यजीव-द्रव्यद्रव्याद्यसिद्ध्याऽभिलाप्यभावव्यापिताया अपि वक्तुमशक्यत्वाच्च। अन्त्ये "[2]जत्थ वि य ण याणिज्जा चउक्कयं निक्खिवे तत्थ" इति सूत्रविरोधः, अत्र यत्तत्पदयोर्व्याप्त्यभिप्रायेणोक्तेरिति चेत्।

अत्र वदन्ति–– तत्तद्व्यभिचारस्थानान्यत्वविशेषणाद् न दोषः, संभवद्व्याप्त्यभिप्रायेणैव 'यत्र तत्र' इत्युक्तेः। तदिदमुक्तं तत्त्वार्थटीकाकृता– "यद्यत्रैकस्मिन् न संभवति नैतावता भवत्यव्यापिता" इति। अपरे त्वाहुः– 'केवलिप्रज्ञारूपमेव नामानभिलाप्यभावेष्वस्ति, द्रव्यजीवश्च मनुष्यादिरेव, भाविदेवादिजीवपर्यायहेतुत्वात्। द्रव्यद्रव्यमपि मृदादिरेव, आदिष्टद्रव्यत्वानां घटादिपर्यायाणां हेतुत्वात्' इति। एतच्च मतं नातिरमणीयम्, द्रव्यार्थिकेन शब्दपुद्गलरूपस्यैव नाम्नोऽभ्युपगमात्, मनुष्यादीनां द्रव्यजीवत्वे च सिद्धस्यैव भावजीवत्वप्रसङ्गात्, आदिष्टद्रव्यहेतुद्रव्यद्रव्योपगमे भावद्रव्योच्छेदप्रसङ्गाच्चेति।

१ तत्त्वार्थसूत्रे १।५। २ यत्रापि च न जानीयात् चतुष्कं निक्षिपेत् तत्र।

'गुण-पर्यायवियुक्तः प्रज्ञास्थापितो द्रव्यजीवः' इत्यन्येषां मतम् । तदपि न सूक्ष्मम्, सतां गुण-पर्यायाणां बुद्ध्याऽपनयस्य कर्तुमशक्यत्वात् । न हि यादृच्छिकज्ञानायत्ताऽर्थपरिणतिरस्ति । 'जीवशब्दार्थज्ञस्तत्रानुपयुक्तः, जीवशब्दार्थज्ञस्य शरीरं वा जीवरहितं द्रव्यजीव इति नाव्यापिता नामादीनाम्' इत्यपि वदन्ति ।

अत्र च पर्यायार्थिकस्य भावनिःक्षेप एवाभिमतः, द्रव्यार्थिकस्य तु चत्वारोऽपीति । यदाह भगवान् जिनभद्रगणिक्षमाश्रमणः– "भावं चिय सद्दणया सेसा इच्छंति सव्वणिक्खेवे" इति । अत एव चरणगुणस्थितस्य साधोः सर्वनयविशुद्धत्वे सर्वनयानां भावग्राहित्वं हेतुतयोद्भावितम् । अत एव नैगम-संग्रह-व्यवहार-ऋजुसूत्राणामपि चत्वारो निःक्षेपाः, तेषां द्रव्यार्थिकभेदत्वात् । शब्द-समभिरूढै-वंभूतानां तु भावनिःक्षेप एव, पर्यायार्थिकभेदत्वादेषाम् ।

'संग्रहः स्थापनां नेच्छति' इत्येके, संग्रहप्रवणेनानेन नामनिक्षेप एव स्थापनाया उपसंग्रहात् । न च "णामं आवकहियं होज्जा; ठवणा इत्तरिया वा होज्जा, आवकहिआ वा होज्जा" इति सूत्र एव तयोर्विशेषाभिधानात् कथमैकरूप्यम् ? इत्याशङ्कनीयम्, पाचक-याचकादिनाम्नामप्ययावत्कथिकत्वात् तदव्यापकत्वात्, स्थूलभेदमात्रकथनात् । पद-प्रतिकृतिभ्यां नाम-स्थापनयोर्भेद इति चेत् । कथं तर्हि गोपालदारके नामेन्द्रत्वम् ? । अथ नामेन्द्रत्वं द्विविधम्– इन्द्र इति पदत्वमेकम्, अपरं चेन्द्रपदसंकेतविषयत्वम् । आद्यं नाम्नि, द्वितीयं च पदार्थे, इति न दोष इति चेत् । तर्हि व्यक्त्याकृतिजातीनां पदार्थत्वेनेन्द्रस्थापनाया अपीन्द्रपदसंकेतविषयत्वात् कथं न गोपालदारकवद् नामेन्द्रत्वम् ?। नाम भावनिःक्षेपसांकर्यपरिहारायेन्द्रपदसंकेतविशेषविषयत्व-

१ भावमेव शब्दनयाः शेषा इच्छन्ति सर्वनिक्षेपान् । २ नाम यावत्कथिकं भवेत्; स्थापनेत्वरी वा भवेत्, यावत्कथिका वा भवेत् ।

मेव नामेन्द्रत्वं निरुच्यत इति चेत्। हन्त' तर्हि सोऽयं विशेषो नाम-स्थापनासाधारण एव संगृह्यतामित्येतन्निष्कर्षः।

अत्र वदन्ति– अनुपपन्नमेतद् मतम्, उपचाररूपसंकेतविशेषग्रहे द्रव्यनिःक्षेपस्याप्यनतिरेकप्रसङ्गात्, यादृच्छिकविशेषोपग्रहस्य चाप्रामाणिकत्वात्, पित्रादिकृतसंकेतविषयस्यैव ग्रहणाद् नाम-स्थापनयोरैक्यायोगात्। एवं च बहुषु नामादिषु प्रातिस्विकैकरूपाभिसंधिरेव संग्रहव्यापार इति प्रतिपत्तव्यम्। यदृच्छयैव संग्रहव्यापारोपगमे तु नाम्नोऽपि भावकारणतया कुतो न द्रव्यान्तर्भाव इति वाच्यम्?। द्रव्यं परिणामितया भावसंबद्धम्, नाम तु वाच्यवाचकभावेनेत्यस्ति विशेष इति चेत्। तर्हि स्थापनाया अपि तुल्यपरिणामतया भावसंबद्धत्वात् किं न नाम्नो विशेषः, उपधेयसांकर्येऽप्युपाध्यसांकर्यात्, विभाजकान्तरोपस्थितौ निःक्षेपान्तरस्येष्टत्वात् "जत्थ य जं जाणिज्जा[1] णिक्खेवं णिक्खिवे णिरवसेसं" इति सूत्रप्रामाण्यादिति पर्यालोचनीयम्।

स्यादेतत् षण्णां प्रदेशस्वीकर्तुर्नैगमात् पञ्चानां स्वीकारत इवात्रापि चतुर्निःक्षेपस्वीकर्तुस्ततस्तत्त्रयस्वीकारेणैव संग्रहस्य विशेषो युक्त इति। मैवम्, देशप्रदेशवत् स्थापनाया उपचरितविभागाभावेन संग्रहविशेषात्; अन्यथा यथाक्रमविशुद्ध्या एवंभूतस्य निःक्षेपशून्यत्वप्रसङ्गादिति न किञ्चिदेतत्। एतेन 'व्यवहारोऽपि स्थापनां नेच्छति' इति केषांचिद् मतं निरस्तम्। न हीन्द्रप्रतिमायां नेन्द्रव्यवहारो भवति, न वा भवन्नपि भ्रान्त एव, न वा नामादिप्रतिपक्षव्यवहारसांकर्यमस्ति, इत्यर्धजरतीयमेतद् यदुत– लोकव्यवहारानुरोधित्वम्, स्थापनानभ्युपगन्तृत्वं चेति।



---

१ यत्र च यज्जानीयाद् निक्षेपं निक्षिपेद् निरवशेषम्।

'ऋजुसूत्रो द्रव्यमपि नाभ्युपैति, अत एवाद्यास्त्रयो नया द्रव्यार्थिकभेदाः, अग्रिमाश्च चत्वारः पर्यायार्थिकभेदाः' इति वादी सिद्धसेनः । अस्मिन्नभ्युपगमे "उज्जुसुअस्स एगे अणुवउत्ते एगं दव्वावस्सयं पुहत्तं णेच्छइ" इति सूत्रविरोधः स्यादिति सिद्धान्तवृद्धाः । 'अतीतानागतपरकीयभेदपृथक्त्वपरित्यागात्, ऋजुसूत्रेण स्वकार्यसाधकत्वेन स्वकीयवर्तमानवस्तुन एवोपगमाद् नास्य तुल्यांशध्रुवांशलक्षणद्रव्याभ्युपगमः । अत एव नास्यासद्घटितभूत-भाविपर्यायकारणत्वरूपद्रव्यत्वाभ्युपगमोऽपि, उक्तसूत्रं त्वनुपयोगांशमादाय वर्तमानावश्यकपर्याये द्रव्यपदोपचारात् समाधेयम्, पर्यायार्थिकेन मुख्यद्रव्यपदार्थस्यैव प्रतिक्षेपात् । अध्रुवधर्माधारांशद्रव्यमपि नास्य विषयः, शब्दनयेष्वतिप्रसङ्गात्' इति केचन सिद्धसेनमतानुसारिणः । नैतत् कमनीयम्, नामादिवदनुपचरितद्रव्यनिःक्षेपदर्शनपरत्वादुक्तसूत्रस्य, न चेदेवम्, शब्दादिष्वपि कथञ्चिदुपचारेण द्रव्यनिःक्षेपप्रसङ्गात्, पृथक्त्वनिषेधेऽपृथक्त्वेन द्रव्यविधेरावश्यकत्वात्, एकविशेषनिषेधस्य तदितरविशेषविधिपर्यवसायित्वात्' इत्यादिस्तु जिनभद्रमुखारविन्दनिर्गलद्वचनमकरन्दसंदर्भोपजीविनां ध्वनिः ।

स्यादेतद् द्रव्यार्थिकेन नामादिचतुष्टयाभ्युपगमे द्रव्यार्थिकत्वव्याहतिः । द्रव्यं प्रधानतया, पर्यायं च गौणतयाऽभ्युपगच्छन् द्रव्यार्थिकोऽपि भावनिःक्षेपसह इति चेत् । हन्त ! तर्हि त्वदुक्तरीत्या शब्दनया अपि द्रव्यनिःक्षेपसहा इति कथमुक्तव्यवस्था ? । एतेन 'द्रव्यार्थिक-पर्यायार्थिकयोर्द्वयोस्तुल्यवदेवोभयाभ्युपगमः, परमाद्यस्य सर्वथाऽभेदेन, अन्त्यस्य तु सर्वथा भेदेन, इति द्रव्यार्थिकस्यापि पर्यायसहत्वम्' इत्यपास्तम्, एवं सति पर्यायार्थिकस्य शब्दादेरपि द्रव्यसहत्वापत्तेः, अत्यन्तभेदा-

१ ऋजुसूत्रस्यैकोऽनुपयुक्त एकं द्रव्यावश्यकं पृथक्त्वं नेच्छति । २ ख.ग.घ.च. 'कथं युक्त' ।

ऽभेदग्राहिणोर्द्वयोः समुदितयोरपि मिथ्यादृष्टित्वात्, अभेदे पर्यायद्रव्या(द्रव्या)सहोक्तिप्रसङ्गात्, भेदे पर्यायार्थिकेनापि द्रव्यग्रहे द्रव्यार्थिकस्यान्तर्गडुत्वप्रसक्त्यैतन्नयस्य भाष्यकृतैव निरस्तत्वाच्चेति ।

मैवम्, अविशुद्धानां नैगमादिभेदानां नामाद्यभ्युपगमप्रवणत्वेऽपि विशुद्धनैगमभेदस्य द्रव्यविशेषणतया पर्यायाभ्युपगमाद् न तत्र भावनिःक्षेपानुपपत्तिः, अत एवागमः– "[1]जीवो गुणपडिवन्नो णयस्स दव्वट्ठिअस्स सामइअं" इति । अत्र हि समतापरिणामविशिष्ट जीवे सामायिकत्वं विधीयत इति । न चैवं पर्यायार्थिकत्वापत्तिः, इतराविशेषणत्वरूपप्राधान्येन पर्यायानभ्युपगमात् । शब्दादीनां पर्यायार्थनयानां तु नैगमवदविशुद्ध्यभावाद् न नामाद्यभ्युपगन्तृत्वम् । वास्तवं तद्विषयत्वं तु नोक्तविभागव्याघाताय, स्वातन्त्र्येण पर्यायविषयत्वं त्वव्याहतमिति पर्यालोचयामः ।

ननु तथापि "[2]णामाइतियं दव्वट्ठियस्स भावो अ पज्जवणयस्स[3]" इति मङ्गलाधिकारेऽभिधाय, उपोद्घाते "[4]भावं चिय सद्दणया सेसा इच्छंति सव्वणिक्खेवे" इति वदतां भाष्यकृतां कोऽभिप्रायः? इति चेत् । अयमभिप्रायः– पूर्वं शुद्धचरणोपयोगरूपभावमङ्गलाधिकारसंबन्धाद् नैगमादिना जलाहरणादिरूपभावघटाभ्युपगमेऽपि घटोपयोगरूपभावघटानभ्युपगमात् तथोक्तिः, पृथग्निःक्षेपाच्च न प्रत्ययस्याभिधानतुल्यता । अग्रे तु व्यवस्थाधिकाराद् विशेषोक्तिः, इति 'द्रव्यार्थिकस्य नामादित्रयम्' इत्यत्र नावधारणम्, 'पर्यवनयस्य भावः' इत्यत्र चावधारणम्, इत्यनेन स्वातन्त्र्येण नामादित्रयविषयत्वमेव द्रव्यार्थिक-

१ जीवः गुणप्रतिपन्नो नयस्य द्रव्यार्थिकस्य सामायिकम् । २ नामादित्रिकं द्रव्यास्तिकस्य भावश्च पर्यायास्तिकस्य ।
३ विशेषावश्यकभाष्ये गाथा ७५ । ४ भावमेव शब्दनयाः शेषा इच्छन्ति सर्वनिक्षेपान् ।

स्येत्यभिप्रेत्य नयान्तरेण वा पूर्वं तथोक्तिः । अत एवोक्तं तत्त्वार्थवृत्तौ– अत्र चाद्या नामादयस्त्रयो विकल्पा द्रव्यार्थिकस्य, तथा तथा सर्वार्थत्वात्; पाश्चात्यः पर्यायनयस्य, तथापरिणति-विज्ञानाभ्याम्" इति । अत एव च

"नामं[1] ठवणा दविएं[2] त्ति एस दव्वट्ठियस्स णिक्खेवो । भावो[3] अ पज्जवट्ठिअपरूवणा एस परमत्थो ॥ १ ॥"

इति सम्मतिगाथायाम्[4] । अथवा, 'वस्तुनिबन्धनाध्यवसायनिमित्तव्यवहारमूलकारणतामनयोः प्रतिपाद्याधुनाऽध्यारोपिता-ऽनध्यारोपितनाम-स्थापना-द्रव्य-भावनिबन्धनव्यवहारनिबन्धनतामनयोरेव प्रतिपादयन्नाहाचार्यः' इति द्वितीयावतरणिका । इति दृढतरं सुधीभिर्विभावनीयम् ।

इत्येवं बुद्धनिक्षेपो मौढ्यक्षेपोद्यतः सुधीः । तथा तथा प्रयुञ्जीत यथा संधा न बाधते ॥ १ ॥ इति ॥ १७ ॥

यच्चोत्पादादित्रयात्मकत्वे शोक-प्रमोद-माध्यस्थ्योदयसाधकस्यान्यथासिद्धिर्वासनाविशेषेणेति पूर्वपक्षिणोक्तम्, तद् दूषयितुमाह—

**वासनाहेतुकं यच्च शोकादि परिकीर्तितम् । तदयुक्तं यतश्चित्रा सा न जात्वनिबन्धना ॥१८॥**

यच्च शोकादि वासनाहेतुकं परिकीर्तितम्, न तु भिन्नवस्तुनिमित्तकम् । तदयुक्तम्, यतश्चित्रा शोकादिजनकत्वेन

---

१ नाम स्थापना द्रव्य इत्येष द्रव्यास्तिकस्य निक्षेपः । भावश्च पर्यवास्तिकप्ररूपणैष परमार्थः ॥ १ ॥

२ मुद्रितसम्मतिमूलपुस्तके 'ए तिएसु द' इति पाठः । ३ मुद्रितमूलसम्मतौ 'वो उ प' इति । ४ 'नयकाण्डे षष्ठ्यां' इति शेषः ।

नानाप्रकारा, सा– वासना समनन्तरज्ञानक्षणलक्षणा, न जातु– कदाचित्, अनिबन्धना– निर्हेतुका ॥ १८ ॥

अत्र हेतुमाह—

**सदाभावेतरापत्तिरेकभावाच्च वस्तुनः। तद्भावेऽतिप्रसङ्गादि नियमात्संप्रसज्यते॥१९॥**

सदाभावेतरापत्तिः– अत्र भाव उत्पत्तिः, इतरपदार्थोऽनुत्पत्तिः, निर्हेतुकत्वे तस्या उत्पत्तिशीलत्वे सदोत्पत्त्यापत्तिः, अनुत्पत्तिशीलत्वे च सदानुत्पत्त्यापत्तिरित्यर्थः। चित्रवासनायां दोषान्तरमाह– एकभावाच्च– एकस्वभावाच्च वस्तुनः, तद्भावे– चित्रवासनोत्पादेऽभ्युपगम्यमाने, नियमादतिप्रसङ्गादि। आदिना विपर्यया ऽनेकस्वभावत्वादिग्रहः। तथाहि– एकस्माद् विचित्रवासनाभ्युपगमेऽधिकृतात् कुतश्चित् सकलव्यवहारनियामकवासनोत्पत्तौ तन्मात्रं जगदित्यतिप्रसङ्गः। जातिभेदाद् नियमोपपत्तेर्नायं दोष इति चेत्। न, जातेरवस्तुत्वात्। कल्पितश्च जातिभेदो न कार्यभेदनियामकः, अन्यथा कल्पितात् तदभेदात् कार्याभेदोऽपि स्यात्। अस्तु वा यत्किञ्चिदेतत्, मा भूत् तथापि रूपादे रसादिवासना, नीलादेः पीतादिवासना तु स्यात्, जातिभेदाभावात्। नीलादेः पीतादिवासनानां सजातीयानामप्यजननस्वभावत्वाद् नायं दोष इति चेत्। न, वाङ्मात्रत्वात्। नीलं हि नीलवासनामेव जनयति न तु भिन्नां पीतादिवासनामितिवद् घटोऽपि शोकवासनामेव जनयेद् न तु प्रमोदवासनामिति। एकस्यैव तस्य शोकादिनानावासनाजननस्वभावत्वाद् न दोष इति चेत्। हन्त! एवं येन स्वभावेन तस्य शोकजनकत्वं तेनैव प्रमोदजनकत्वे, शोकस्थलेऽपि प्रमोद इति विपर्ययः स्यात्; अन्यथा च स्वभावभेदापत्तिः। एतेन 'उपादा-

नभूतप्रातिस्विकमनस्कारभेदात् कार्यभेदः' इत्यपि निरस्तम्, एकस्य घटादेरनेकोपादान-सहकारित्वायोगात् । न च तथादर्शनादेव तथाभ्युपगमः, तस्य तथाभूतचित्रवस्तुनिमित्तत्वात्, अन्यथैकस्वभावत्वाभ्युपगमविरोधात् । व्यवस्थापितश्चायमर्थः

"यतः स्वभावतो जातमेकं नान्यत्ततो भवेत् । कृत्स्नं प्रतीत्य ते भूतिभावत्वात् तत्स्वरूपवत् ॥ १ ॥
अन्यच्चैवंविधं चेति यदि स्यात्किं विरुध्यते । तत्स्वभावस्य कार्त्स्न्येन हेतुत्वं प्रथमं प्रति ? ॥ २ ॥"

इत्यादिना ग्रन्थेन ग्रन्थकृतैवानेकान्तजयपताकादौ । एकानेकस्वभावे च वस्तुनि न किञ्चिद् दूषणमुत्पश्यामः । न हि शोकवासनानिमित्तस्वभावत्वमेव प्रमोदादिवासनानिमित्तस्वभावत्वमिति, व्ययो-त्पादादिशक्तिभेदात्, एकस्मादेव घटनाशादनेकेषां घटार्थिनां युगपच्छोकोत्पादेऽप्यनेकोपादानसंबन्धनिमित्ततास्वभावभेदात् । तदिदमुक्तम्– "न चैकानेकस्वभावेऽप्ययमिति, तथादर्शनोपपत्तेः" इति ॥ १९ ॥

'किञ्च स्याद्वादिनो नैव' इत्यादिनोक्तं दोषं परिहरन्नाह—

**न मानं मानमेवेति सर्वथाऽनिश्चयश्च यः । उक्तो न युज्यते सोऽपि यदेकान्तनिबन्धनः ॥२०॥**

'न मानं मानमेव' इत्यभिसंधाय सर्वथाऽनिश्चयश्च यः पूर्वपक्षवादिनोक्तः, सोऽपि न युज्यते, यत्– यस्मात्, एकान्तनिबन्धनः, सः– अनिश्चयः । तथाहि– न तावदस्माकं माने कथञ्चिदमानत्वसमावेशादप्रामाण्यसंशयादर्थानिश्चयः,

१ अस्मिन् स्तबके कारिका ७ ।

मानत्वा-ऽमानत्वयोः कथञ्चिदविरोधात्, अवधृतविरोधयोर्धर्मयोरेकत्र धर्मिणि प्रतिभासस्यैव संशयत्वात्, "स्वपर्युदास-परिकुण्ठितं चित्तम्" इति भाष्यप्रतीकेनैतदर्थलाभात्। धर्मयोर्विरोधावरणं च क्वचित् प्राक्, क्वचित् पश्चात्, क्वचिच्च सहैव। अत एव प्रागुपस्थितविरोधयोः स्थाणुत्व-पुरुषत्वयोर्विरोधानुल्लेखेनापि स्थाणौ प्रतिभासः; तथा, अत एव च श्यामत्वा-ऽश्यामत्व-योरेकत्र ग्रहेऽपि विरोधस्फूर्तौ तथात्वम्; अत एव च क्वचित् संसर्गशब्दादिना सहैव विरोधस्फूर्तौ तथात्वम्। इत्थं च नया एवेतरनयविषयविरोधावधारणे संशेरतेऽपि, तदुक्तम्– 'परविचारणे मोहाः' इति, न तु स्याद्वाद इत्यवधेयम्। ये तु– 'एकत्र तत्तदभावोभयप्रकारकज्ञानमेव संशयः, एकत्रेत्यस्यैकविशेष्यताकत्वार्थत्वाद् न समुच्चयेऽतिव्याप्तिः, तत्र तत्तदभावप्रकार-तानिरूपितविशेष्यताभेदात्' इति नैयायिकादयो वदन्ति; तेषां 'स्थाणुर्वा पुरुषो वा' इति संशयानुपपत्तिः। न च तत्र चतुष्कोटिक एव संशयः, द्विकोटिकस्यैवानुभवात्। 'समुच्चये प्रकारताभेदाद् विशेष्यताभेदो न तु संशये' इत्यत्र च शपथ-मात्रस्य शरणत्वादिति। येऽपि 'तत्-तदभाव-तत्तद्व्याप्यादिविषयता अन्यतमत्वेनानुगतीकृत्य तदघटितं संशयत्वमाचक्षते; तेषामप्यन्यापोहपर्यवसानम्।

इत्थं च विरोधः किमिह तद्वदवृत्तित्वम्, तद्वत्ताग्रहप्रतिबन्धकग्रहविषयत्वं वा?। तज्ज्ञानमपि प्रकारतया, संसर्ग-विधया वा?। नाद्यः, तद्वदवृत्तित्वलक्षणविरोधस्य तदभावव्याप्तिपर्यवसायिनः संशयेनास्पर्शात्, तदभावव्याप्य-वत्तानिश्चयस्य संशयप्रतिबन्धकत्वात्, तदभावस्य च कार्यसहभावेन हेतुत्वात्। तदभावव्याप्यवत्तानिश्चयत्वं च न तदभावाप्रकारकत्वघटितम्, गौरवात्; अन्यथा 'वह्न्यभावव्याप्यवान् वह्निव्याप्यवान् पर्वतः' इति परामर्शद्वयात् 'पर्वतो

वह्निमान्, तदभावव्याप्यवांश्च' इति संशयरूपानुमितेर्दुर्वारत्वात्, विरोधविषयकैकधर्मिकस्थाणुत्व-तदभावप्रकारकज्ञानेऽपि संशयव्यवहाराच्च; अन्यथा तस्य संशयान्यत्वे ततो निश्चयकार्यापत्तेः। अत एव न द्वितीयादिरपि। इति स्वतन्त्रनीत्या मुह्यन्तो ज्ञानविषयतया परस्परग्रहप्रतिबन्धकतावच्छेदकधर्ममेव विरोधपदार्थमाचक्षाणाः प्रतिक्षिप्ताः, क्वचिद् रूप-रसयोरपि तथात्वेनैकत्र तदुभयग्रहस्यापि संशयत्वापत्तेः, संशये तदभावव्याप्तिपर्यवसायिविरोधभानेऽपि तदभावव्याप्यवत्तानिश्चयत्वाभावात्, तदंशेऽवधारणात्मकविषयताया एव तदंशे निश्चयत्वात्; अन्यथाऽनध्यवसायेऽतिव्याप्तेः। न चानुत्कटैककोटिकः संशय एवानध्यवसायः, अनुत्कटत्वानिरुक्तेः, (अ)स्पष्टतावदवधारणाख्यानध्यवसायविलक्षणविषयतानुभवाच्चेति। अन्यत्र विस्तरः। एवकारप्रयोगानुपपत्तिरूपोऽनिश्चयोऽपि नास्माकम्, स्यात्कारगर्भत्वेन तदुपपत्तेः, चित्रे घटेंऽशापेक्षया 'कथञ्चिद् नील एव' इतिवत्; श्यामे घटे कालापेक्षया कथञ्चिद् 'न श्याम एव' इतिवत्, एतत्कालवृत्तौ स्वभावापेक्षया कथञ्चित् 'स एवायम्' इतिवदित्याद्यूह्यम्॥ २०॥

परस्य तु दुर्घटोऽयमित्युक्तमेव प्रकटयति—

**मानं चेन्मानमेवेति प्रत्यक्षं लैङ्गिकं ननु। तत्तच्चेन्मानमेवेति स्यात् तद्भावादृते कथम्॥२१॥**

मानं चेदधिकृतं मानमेव– सर्वथा प्रमाणमेव, इति हेतोः, सर्वथा प्रमाणत्वात्, 'ननु' इत्याक्षेपे, प्रत्यक्षं लैङ्गिकं स्यात्, तस्य सर्वथा मानत्वात्, मानसामान्यव्यापकस्वभावत्व एव तथात्वोपपत्तेः। पराशयमाशङ्क्याह– तत्– अधिकृतं मानं, तत्–

प्रत्यक्षं नानुमानम्, प्रत्यक्षस्वभावत्वाचेत् । एवं तद्भावादृते– अनुमानमानत्वमन्तरेण, कथं मानमेवेति स्यात्, प्रत्यक्षस्य स्वमानत्वेनैव मानत्वात्, अनुमानमानत्वेन चामानत्वात् ? इति ।

अत्र नैयायिकादयः– 'नन्वनुमानान्यत्वेऽपि प्रत्यक्षस्य, 'प्रत्यक्षं मानमेव' इति प्रयोगो न दुर्घटः । न हि 'मानमेव' इत्यत्र कात्स्न्र्यमेवकारार्थः, कस्याप्येकस्य कृत्स्नमानरूपत्वाभावात्; किन्त्वयोगव्यवच्छेदः, तत्र च व्युत्पत्तिवशाद् मानत्वावच्छिन्नप्रतियोगिताकायोगोपस्थितेर्न दोषः, प्रत्यक्षेऽनुमानत्वावच्छिन्नायोगसत्त्वेऽपि मानत्वावच्छिन्नायोगाभावादिति । अत्रेयमेवकारमर्यादा–– विशेष्यसंगतैवकारस्यान्ययोगव्यवच्छेदोऽर्थः, यथा 'पार्थ एव धनुर्धरः' इत्यादौ । विशेषणसंगतैवकारस्यायोगव्यवच्छेदोऽर्थः, यथा 'शङ्खः पाण्डुर एव' इत्यादौ । क्रियासंगतैवकारस्याऽत्यन्तायोगव्यवच्छेदोऽर्थः, यथा 'सरोजं नीलं भवत्येव' इत्यादौ । अत्र तत्तद्विशेष्यसंगतैवकारादेस्तत्तदन्ययोगव्यवच्छेदादौ शक्तिः ।'

नव्यास्तु– 'अत्यन्तायोगव्यवच्छेदो नैवकारार्थः । अत्यन्तायोगो हि न सर्वस्य तज्जातीयस्यायोगवत्त्वम्, तद्व्यवच्छेदस्य सिद्ध्यसिद्धिपराहतत्वात् । नापि तज्जातीये सर्वत्रायोगव्यवच्छेदः, 'सरोजं नीलं भवत्येव' इत्यादौ बाधात् । किन्त्वयोगे तज्जातीयावच्छिन्नत्वस्य व्यवच्छेदः । स च तज्जातीयस्य कस्यचिदयोगव्यवच्छिन्नत्वे पर्यवसित इत्ययोगव्यवच्छेद एव तज्जातीयैकदेशान्वयित्वेनात्यन्तायोगव्यवच्छेदो गीयते । अयोगव्यवच्छेदस्तु 'ज्ञानमर्थं गृह्णात्येव' इत्यादौ । स चान्वयितावच्छेदकावच्छेदेन प्रत्याय्यते, 'ज्ञानं रजतं गृह्णात्येव' 'नरो वेदानधीत एव' इत्याद्यप्रयोगात् । नियामकस्तु क्रियाविशेषयोगादिरेव । एवं चैवकारस्य द्वयमेवार्थः– अयोगव्यवच्छेदः, अन्ययोगव्यवच्छेदश्चेति ।

अन्ययोगव्यवच्छेद एव वार्थः, सर्वत्र शक्तिद्वयकल्पने गौरवात् 'शङ्खः पाण्डुर एव' इत्यादौ पाण्डुरत्वाद्यनुपस्थित्या पाण्डुरत्वाद्ययोगव्यवच्छेदस्य प्रत्याययितुमशक्यत्वात् ,पाण्डुरान्ययोगव्यवच्छेदस्यैव तत्रान्वयात् ; 'नीलं सरोजं भवत्येव' इत्यादावपि नीलाद्यन्ययोगस्य व्यवच्छेद्यत्वात् , अयोगव्यवच्छेदस्येवान्ययोगव्यवच्छेद्यस्यापि क्वचिदन्वयितावच्छेदकसामानाधिकरण्यमात्रेणान्वये क्रियाविशेषयोगादेर्नियामकत्वात् ; 'ज्ञानमर्थं गृह्णात्येव' इत्यादौ च तिङो धर्मिपरतयाऽर्थग्राहकाद्यन्ययोगव्यवच्छेदान्वयसंभवात् । अन्ययोगश्च प्रातिस्विकरूपेण तात्पर्यसमभिव्याहारविशेषवशाद् भासते। तेन गन्धादेः संयुक्तसमवायादिनाऽन्यवृत्तित्वेऽपि 'पृथिव्यामेव गन्धः' इत्यादेर्नानुपपत्तिः, अन्यसमवेतत्वादेर्व्यवच्छेदान्वयात् । अत्र च गन्धादौ तद्वृत्तित्वं तदन्यवृत्तित्वव्यवच्छेदश्चेति द्वयं प्रतीयते, इति 'पृथिव्यामेवाकाशम्' इत्यादेर्न प्रसङ्गः । 'चैत्रस्यैवेदं धनम्' इत्यादौ चैत्रान्यस्वत्वादेर्धने व्यवच्छेदः, न तु चैत्रादिस्वत्वाद्ययोगस्य, उभयस्वामिकादावपि 'चैत्रस्यैव' इत्यादेः प्रसङ्गात् । एवं 'शीतस्यैव स्पर्शस्य जलवृत्तित्वम्' इत्यत्र जलवृत्तित्वे शीतान्यस्पर्शसंबन्धस्य, 'चैत्रो जलमेव भुङ्क्ते' इत्यत्र चैत्रे जलान्यभक्षणकर्तृत्वस्य, 'चैत्रेणैवायं दृश्यते' इत्यत्रास्मिंश्चैत्रान्यवृत्तिदर्शनविषयत्वस्य, न तु दर्शने चैत्रान्यवृत्तित्वस्य, चैत्रदर्शनस्य तदन्यावृत्तित्वेनोभयदृश्यमानेऽपि तादृशप्रयोगप्रसङ्गात् । एवं च साधारण्यादन्यसंबद्धमेव व्यवच्छेद्यम्, अन्यसमवेतत्वादेरप्यन्यसंबद्धत्वात्, साक्षात् पारम्पर्येण विशेषात् । 'शङ्खः पाण्डुर एव' इत्यादौ पाण्डुरान्यतादात्म्यस्य व्यवच्छेदः, पाण्डुरान्यत्वस्यैव वा । इत्थं चान्यत्वे व्यवच्छेदे च शक्तिः, अन्यसंबद्धे लक्षणाव्यवच्छेद एव वा शक्तिः समभिव्याहारादिबलोपस्थिते च पार्थान्यत्वादौ लक्षणा, लक्ष्य-शक्ययोश्चैवकारार्थयोरेवकारानियन्त्रितव्युत्पत्तिविशेषात् परस्परमन्वयः ।

'गुणवदेव द्रव्यम्' इत्यादौ द्रव्यादावेव गुणवदाद्यन्यत्वस्य व्यवच्छेदः, न तु द्रव्यत्वादौ गुणवदाद्यन्यवृत्तित्वस्य, 'चैत्र एव पचति' इत्यादौ लक्षणयोपस्थिते तादृशकर्त्रादौ चैत्रान्यत्वादिव्यवच्छेदः । 'आत्मनैव ज्ञायते' इत्यादौ ज्ञानादावात्मान्यसमवेतत्वस्य व्यवच्छेदः । 'शीत एव स्पर्शो जलवृत्तिः' इत्यत्र जलवृत्तौ शीतान्यस्पर्शतादात्म्यस्य, जलवृत्तिस्पर्शे वा शीतान्यत्वस्य । 'जातिमत्येव सत्ता, इत्यादौ 'समवैति' इत्यध्याहारेण समवाये जातिमदन्यवृत्तित्वविशेषस्य व्यवच्छेदः । 'इह भवने मैत्रेणैव पक्ष्यते तेमनम्' इत्यत्र मैत्रान्यस्मिंस्तादृशकृतिव्यवच्छेदो लक्षणया बोध्यते, तत्रैतद्भवनवृत्तितेमनादौ मैत्रान्यपक्ष्यमाणत्वादेर्व्यवच्छेत्तुमशक्यत्वात् । एवं 'आत्मनैव तेमनं ज्ञायते, इष्यते', पच्यते, भुज्यते' इत्यादावात्मान्यज्ञेयत्वादेरप्रसिद्धत्वेन व्यवच्छेदासंभवादियमेव रीतिरनुसर्तव्या ।'

अपरे पुनः– 'एवकारस्यात्यन्ताभावः, अन्योन्याभावश्चार्थः । 'पृथिव्यामेव गन्धः' इत्यत्र पृथिवीपदे पृथिव्यन्यस्मिँल्लक्षणया गन्धे प्रकृत्यर्थान्वितविभक्त्यर्थस्य, लाक्षणिकार्थान्वितविभक्त्यर्थान्वितस्यैवकारार्थव्यवच्छेदस्य वाऽन्वयः । 'पार्थ एव धनुर्धरः' इत्यत्र शक्ये पार्थे विशेषणस्य धनुर्धरस्य तादात्म्येन, लक्ष्ये च पार्थान्यस्मिन् धनुर्धरान्योन्याभावस्याधाराधेयभावेन । 'शीत एव स्पर्शो जलवृत्तिः' इत्यत्र शीतपदोपस्थापितयोः शीत-तदन्ययोरभेदेन स्पर्शेऽन्वयः, शीतान्वितस्पर्शे जलवृत्तितादात्म्यम्, शीतान्यस्पर्शे च जलवृत्तेरन्योन्याभाववत्त्वं प्रतीयत इत्याद्यूह्यम् ।'

अन्ये तु– 'अन्यव्यवच्छेदश्चार्थः । व्यवच्छेदोऽपि च द्वयी– अत्यन्ताभावश्च, अन्योन्याभावश्च । एवकारे च प्रायेण

१ ख, 'ते भु' ।

समभिव्याहृतप्रातिपदिकसमानविभक्तिकत्वम्, विभक्तेरश्रवणं तु लुप्तत्वात्, स्वभाववैचित्र्याच्च। तदर्थेऽन्यस्यान्वयो न व्यवच्छेदस्य, समभिव्याहृतप्रातिपदिकार्थस्य चैवकारोपस्थितेऽन्यस्मिन्नप्यन्वयः। एवमन्वयान्तरनियमोऽपि, स्वीयैकार्थान्वितार्थान्तरबोधकत्वमपि तस्य स्वभाववैचित्र्यादेव। एवं च 'पृथिव्यामेव गन्धः' इत्यत्र पृथिव्यां गन्धः, 'पृथिव्यन्यस्मिन् न गन्धः' इत्यन्वयः। 'चैत्रो जलमेव भुङ्क्ते' इत्यत्र 'चैत्रो जलं भुङ्क्ते, जलान्यद् न भुङ्क्ते' इति। 'पार्थ एव धनुर्धरः' इत्यत्र 'पार्थो धनुर्धरः, पार्थान्यो न धनुर्धरः' इति। 'शङ्खः पाण्डुर एव' इत्यत्र 'शङ्खः पाण्डुरः, न पाण्डुरान्यः' इति' इति वदन्ति।

अत्र ब्रूमः– 'प्रत्यक्षं मानमेव' इत्यत्रास्तु मानत्वायोगव्यवच्छेदः, मानान्ययोगव्यवच्छेदो वा, तथापि प्रत्यक्षेऽनुमानत्वेन न मानत्वम्, 'प्रत्यक्षमनुमानत्वेन न मानम्' इति प्रतीत्या विशेषरूपेण सामान्याभावस्य, विशेषरूपेण सामान्यभेदस्य वा सिद्धौ न सर्वथा तद्व्यवच्छेदः शक्यः। शक्य एव मानत्वत्वपर्याप्तावच्छिन्नप्रतियोगिताकोऽयोगः, मानत्वापर्याप्तावच्छिन्नप्रतियोगिताको वाऽन्ययोगो व्यवच्छेत्तुम्, विशेषरूपेण सामान्याभावस्यातिरेके तस्य विशेषरूपपर्याप्तावच्छिन्नप्रतियोगिताकत्वात्, अनतिरेके च विशिष्टरूपपर्याप्तावच्छिन्नप्रतियोगिताकत्वादिति चेत्। न, तत्र विशिष्टानतिरेकेण शुद्धापर्याप्तस्य विशिष्टापर्याप्तत्वात्, अतिरिक्तपर्याप्तिकल्पने तत्र विशिष्टनिरूपितत्व-तत्संबन्धादिगवेषणायामनवस्थानात्, 'अनुमानत्वेन न मानत्वम्' इत्यत्रामानत्वस्य मानत्वावृत्तितया व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावपर्यवसानात्, अनुमानेऽपि तथाप्रयोगप्रसङ्गात्।

किञ्च, व्यधिकरणधर्मावच्छिन्नाभावस्य प्रामाणिकत्वाद् मानत्वावच्छिन्नप्रतियोगिकताकस्य घटाभावस्य प्रत्यक्षे सत्त्वात् कथं तद्व्यवच्छेदः?। मानत्वावच्छिन्नमाननिष्ठप्रतियोगिताकस्य सामान्यरूपेण विशेषाभावसत्त्वे वा तादृशतत्सामा-

न्यनिष्ठप्रतियोगिताकस्याभावस्य व्यवच्छेद्यत्वाद् न दोष इति चेत् । न, मानत्वेन मान-घटोभयाभावस्य तथात्वात् । मानमात्रनिष्ठप्रतियोगितोपादानाद् न दोष इति चेत् । न, तथापि 'प्रत्यक्ष-घटौ न मानम्' इति प्रतीतेः, प्रत्यक्ष-घटोभयत्वावच्छेदेन तादृशमानत्वावच्छिन्नाभावस्य सत्त्वात् तत्र तद्व्यवच्छेदायोगात् । प्रत्यक्षत्वावच्छिन्नाधिकरणताकस्य च तादृशाभावस्य सिद्ध्यसिद्धिपराहतत्वेन व्यवच्छेत्तुमशक्यत्वात् । अथ वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नाधिकरणताकाभावसत्त्वे तदन्यत्वमप्युपोदयमिति चेत् । न, 'य एव ह्रदे वह्न्यभावः स एव ह्रद-पर्वतयोः' इत्येकत्वप्रत्ययात्, व्यधिकरणधर्मावच्छिन्नाधिकरणताकाभावस्य सत्त्वाच्च । शुद्धाधिकरणताकत्वविशिष्टविशेषणतया तदन्यत्वस्य व्यवच्छेत्तुं शक्यत्वाद् न दोष इति चेत् । न, 'मानत्वेन घटो मानमेव' इति प्रसङ्गात् । तत्र निरुक्तविशेषणतयापि मानान्यत्वमस्तीति चेत् । तयैव तर्हि प्रत्यक्षेऽपि तदिति तदवस्थो दोषः, तदधिकरणवृत्तित्वान्तर्भावे च भावाभावकरम्बितैकवस्त्वापात इति दिक् ।

तस्मात् तत्तदपेक्षागर्भतत्तदनेकपर्यायकरम्बितत्वाद् वस्तुनस्तथा तथा प्रयोगे तत्तदपेक्षालाभार्थं स्यात्कारमेव प्रयुञ्जते सर्वत्र प्रामाणिकाः, अन्यथा निराकाङ्क्षमेव सर्वं वाक्यं प्रसज्येत । न च समभिव्याहारविशेषादपेक्षालाभः, इतरसमभिव्याहारबलात् किञ्चिद्वाक्यार्थापेक्षालाभेऽपि तत्तन्नय-निःक्षेपाद्यनुगतपदार्थापेक्षायाः स्यात्कारसमभिव्याहारं विनाऽलाभात् । इत्थं च 'स्यात्प्रत्यक्षं मानमेव' 'स्याद् न मानमेव' इत्याद्येव प्रयुज्यमानं शोभते, अनेकान्तद्योतकेन स्यात्पदेन तत्तदपेक्षोपस्थितेः; अन्यथा मानत्वस्य मानान्यत्वव्यवच्छेदस्य च सकलमानव्यक्त्यपृथग्भूतस्य सापेक्षप्रत्यक्षापृथग्भावप्रतीतौ तदपेक्षाऽविषयत्वरूपाप्रामाण्यापातात् । न चेदेवम्, पाकरक्ते घटे 'अयं श्याम एव' इति कुतो न प्रयोगः? कथं चैतद्-

प्रामाण्यं सकलसिद्धम् ? । न ह्यत्र न श्यामत्वाभावस्य श्यामान्यत्वस्य वा व्यवच्छेदः, श्यामान्यत्वस्याऽव्याप्यवृत्तित्वेऽपि प्राक् तदभावात्, व्याप्यवृत्तित्वे च सुतराम् । 'श्याम एव' इत्यत्र श्यामान्यरूपवान् व्यवच्छेद्यः, व्यवच्छेदश्चात्रान्योन्याभावः, स चाव्याप्यवृत्तिरिति न दोष इति चेत् । न, 'प्राक् श्याम एव' इत्यस्य साधुत्वापत्तेः । श्यामान्यरूपवत्त्वस्य व्यवच्छेद्यत्वे च साधुत्वापत्तिरेव 'अयं श्याम एव' इत्यस्य । न चात्रैतद्वृत्तिश्यामान्यरूपे एतत्कालवृत्तित्वव्यवच्छेदं लक्षणादिना प्रतियतोऽप्रामाण्यम्, अन्यस्य तु प्रामाण्यमेवेति वाच्यम्, स्वरसत एव तत्राप्रामाण्यव्यवहारात् ।

कथं च चित्रे घटेऽव्याप्यवृत्तिनानारूपसमावेशवादिनाम् 'अयं नील एव' इति न प्रयोगः ? । नीलान्यसमवेतत्वस्यैवात्र व्यवच्छेद्यत्वाद् नायं दोष इति चेत् । न, 'गगनं नीलमेव' इति प्रसङ्गात् । नीलसमवेतत्वमप्यत्र प्रतीयत इति चेत् । न, तथापि 'रूपं नीलमेव' इति प्रसङ्गात् । रूपत्वावच्छेदेन नीलसमवेतत्वाभावाद् न दोष इति चेत् । न, तथापि 'नीलं नीलमेव' इति प्रसङ्गात् । जायत एव 'नीलं नीलमेवेति' इति चेत् । यदि जायते तदा गुणवृत्तिना नीलपदेन, न तु द्रव्यवृत्तिना; आपाद्यते तु द्रव्यवृत्तिना तेनेति । नीलसमवेतद्रव्यत्वमप्यत्र प्रतीयत इति चेत् । न, अन्यत्र 'नील एव' इत्यतोऽनीलत्वव्यवच्छेदमात्रस्यैव प्रत्ययात् । प्रकृतेऽपि नीलावयवमधिकृत्य 'इह नील एव' इत्यप्रत्ययप्रसङ्गाच्च । तस्मात् तत्तत्काल-देशाद्यंशापेक्षयैव विधिः, व्यवच्छेदो वा प्रतीयते, इति सम्यगवहितैः परिभावनीयम् ॥ २१ ॥

यस्तु दुर्विदग्धः 'प्रत्यक्षस्य स्वमानत्वमेवाऽनुमानत्वेनामानत्वमिति न सर्वथा मानत्वक्षतिः' इत्याह, तं शिक्षयितुमाह—

**न स्वसत्त्वं परासत्त्वं तदसत्त्वविरोधतः । स्वसत्त्वासत्त्ववन्न्यायान्न च नास्त्येव तत्र तत्॥२२॥**

इह सर्वभावानामेव न स्वसत्त्वं परासत्त्वम्, किं तर्हि ? कथञ्चिदन्यत्। कुतः ? इत्याह– तदसत्त्वविरोधतः– अभिन्ननिमित्तत्वे सत्त्वस्यैवासत्त्वविरोधात्, भिन्ननिमित्तत्वे तु कथञ्चिद् भिन्नमुभयमेकरूपतामासादयेदपि, यथैकापेक्षयाऽण्वेवापरापेक्षया महदिति। यदवदाम प्रतीत्यसत्याधिकारे भाषारहस्ये—

"[1]भिन्ननिमित्तत्तणओ ण य तेसिं हंदि ! भण्णइ विरोहो। वंजय-घडयाईअं होइ णिमित्तं पि इह चित्तं॥१॥" इति।

अन्ये त्वाहुः– दृष्टान्त एवायमसिद्धः, भिन्नापेक्षयोरणुत्व-महत्त्वयोरेवाभावात्, महत्यपि महत्तमादणुव्यवहारस्यापकृष्टमहत्त्वनिबन्धनत्वेन भाक्तत्वात्, नित्यानित्ययोरणुत्वयोः परमाणु-द्व्यणुकयोरेव भावात्, एतत्त्रुटावेव विश्रामाद् नास्त्येवाणुत्वम्। त्रुटौ चापकृष्टं महत्त्वमेवाणुत्वव्यवहारनिबन्धनम्। तच्च नित्यमेव। गगनमहत्त्वावधिकस्त्वपकर्षो न बहुत्वजन्यतावच्छेदकः, त्रुटिमहत्त्वावधिकोत्कर्षेण सांकर्यापत्त्या तस्यानुगतस्याभावात्, त्रुटिमहत्त्वावधिकोत्कर्षस्य तज्जन्यतावच्छेदकत्वात्, गगनमहत्त्वादेरपि जन्यत्वापातात्। व्यञ्जकत्वं च जातिविशेषेण शक्तिविशेषेण वा, इति नेन्धनादिसंसर्गिणां सूक्ष्मवह्न्यादीनां महतां सतामन्धकारे इन्धनादिव्यञ्जकत्वापत्तिः, इति तु मीमांसकानुसारिणः।

ते भ्रान्ताः, 'अयमितो महान्, इतश्चाणुः' इति बुद्ध्यैकत्र भिन्नापेक्षयोरणुत्व-महत्त्वयोर्विलक्षणयोरेवानुभवात्। 'इतोऽणुः' इति प्रयोगं 'एतदपकृष्टमहत्त्ववान्' इत्युपचारेण विवृत्यैतदपेक्षाणुत्वपर्यायापलापे 'इतो महान्' इत्यपि 'एतदपकृष्टाणुत्ववान्' इति विवृत्य समर्थयतो महत्त्वमेव चापलपतः कः प्रतीकारः ? । महत्त्वमपेक्षां विनैव स्वरसतोऽनुभूयत इति चेत्।

१ भिन्ननिमित्तत्वतो न च तेषां हन्त ! भण्यते विरोधः। व्यञ्जक-घटकातीतं भवति निमित्तमपीह चित्रम्॥ १॥

सोऽयं स्वरसः परस्परमस्वरसग्रस्तः परिमाणमात्रमेव निरपेक्षमनुभूयते, महत्त्वा-ऽणुत्वे तु सापेक्षे एवेति पुनरनेकान्तेऽनुभवसिद्धो विवेकः। अथ महत्त्वापलापे तदाश्रयस्य प्रत्यक्षत्वं दुर्घटम्, महदुद्भूतरूपवद्द्रव्यस्यैव चाक्षुषत्वनियमात्, अणुत्वापलापे तु न किञ्चिद् बाधकमिति चेत्। न, लाघवादुद्भूताणुत्वस्यैव द्रव्यचाक्षुषहेतुत्वात्। उत्कर्षा-ऽपकर्षावपि परस्यापेक्षिकाणुत्व-महत्त्वातिरिक्तौ दुर्वचौ, सांकर्येण जातिरूपयोस्तयोर्वक्तुमशक्यत्वात्।

किञ्च, एवमणुत्ववत् परिमाणमात्रमेव काल्पनिकम्, इति 'महदादिपरिमाणं रूपादिभ्योऽर्थान्तरम्, तत्प्रत्ययविलक्षणबुद्धिग्राह्यत्वात्, सुखादिवत्' इत्यत्र यदि रूपादिविषयेन्द्रियबुद्धिविलक्षणबुद्धिग्राह्यत्वादिति हेत्वर्थः, तदा हेतुरसिद्धः, तथाव्यवस्थितरूपादिव्यतिरेकेण महदादिपरिमाणस्याध्यक्षप्रत्ययग्राह्यत्वेनासंवेदनात्। अथ 'अणु' 'महत्' इत्याकारतत्प्रत्ययविलक्षणकल्पनाबुद्धिग्राह्यत्वादिति हेतुः, तदा विपर्यये बाधकप्रमाणाभावादनैकान्तिकः। न ह्यस्याः किञ्चिदपि परमार्थतो ग्राह्यमस्ति। कल्पना त्वेकदिङ्मुखादिप्रवृत्तेषु विशिष्टरूपादिषूपलब्धेषु तद्विलक्षणरूपादिभेदप्रकाशनायासद्विषयिण्येव प्रवर्तत इति। युक्तं चैतत्, परपरिकल्पिततदभावेऽपि प्रासाद-मालादिषु महदादिप्रत्ययप्रादुर्भूतेरनुभवात्। न चायमौपचारिकः, अस्खलद्वृत्तित्वात्; तदुक्तम्—

"मालादौ च महत्त्वादिरिष्टो यश्चौपचारिकः। मुख्याविशिष्टविज्ञानग्राह्यत्वाद् नौपचारिकः॥ १॥"

इति वदन्तस्ताथागताः कथं प्रतिक्षेप्याः?। एकस्य स्वलक्षणस्य भिन्नपुरुषीयनानाकल्पनाहेतुसमनन्तरसहकारित्वे स्वभावभेदप्रसङ्गाद् वयमेव हि तान् प्रत्याचक्षाणाः शोभेमहि, न तु यूयमेकान्तेनानेककार्यजननैकस्वभावमेकं वाङ्मात्रेणाभ्युपयन्त

इति दिक्। एतेन मीमांसकानुसारिणोऽपि निरस्ताः, घटादिवत् त्रुटीनां दृश्यमानानां द्रव्यपर्यायत्वेन सूक्ष्मतदुपादानावश्यकत्वात्; अन्यथा घटादीनामप्युत्पादाद्यनुभवापलापेन संग्रहनयाश्रयणप्रसङ्गात्। इदमेवाशयतः प्राह– न च तत्– परासत्त्वम्, तत्र– स्वस्मिन्, स्वसत्त्वासत्त्ववद् नास्त्येव, न्यायाद् विचार्यमाणम्। स्वसत्त्वं हि स्वसत्त्वासत्त्वविरोधीति तत्र तद् न स्यात्, परासत्त्वविरोधि तु न तदिति तत् स्यादेव; प्रत्युत यदि तन्न स्यात् तदा तदभावनियतं परसत्त्वमेव स्यादिति भावः ॥२२॥

अत्रैवाक्षेप-परिहारावाह—

**परिकल्पितमेतच्चेन्नन्वित्थं तत्त्वतो न तत्। ततः क इह दोषश्चेन्ननु तद्भावसंगतिः॥२३॥**

एतत्– परासत्त्वम्, परिकल्पितम्; अतो न स्वसत्त्वव्याघातकमिति चेत्। नन्वित्थं तत्– परासत्त्वम्, तत्त्वतो नास्ति, शशशृङ्गवत्। ततः– परासत्त्वस्य तत्त्वत इह स्वस्मिन्नभावात् को दोषः? इति चेत्। ननु– निश्चये, तद्भावसंगतिः– परसत्त्वस्यापत्तिः।

अत्र नैयायिकादयः– ननु वयं 'शृङ्गे शशीयत्ववत् सत्त्वा-ऽसत्त्वयोः स्व-परापेक्षत्वं कल्पितम्' इत्येव ब्रूमः। न हि सत्त्वे स्वापेक्षत्वं पृथक्त्वादाविव सावधिकत्वरूपम्, निरवधिकत्वात् सत्तायाः। नापि घटाभावे घटापेक्षत्ववत् सप्रतियोगिकत्वरूपम्, निष्प्रतियोगिकत्वात्। भावस्य सत्ताभावस्य च सप्रतियोगिकत्वेऽपि सत्ताप्रतियोगिकत्वमेव न तु परप्रतियोगिकत्वम्, इति न परापेक्षत्वमस्ति। नापि वृक्षे संयोग-तदभावयोर्मूल-शाखाद्यवच्छिन्नत्ववद् घटे सत्त्वा-ऽसत्त्वयोः स्व-परावच्छेद्य-

त्वरूपं स्व-परापेक्षत्वम्, जातेरेवाव्याप्यवृत्तित्वाभावात्, किं पुनः सत्तायाः ? इति । ततः कथं 'स्वापेक्षया सत्त्वम्, परापेक्षया चासत्त्वम्' इत्यार्हतानामयं प्रवादः ? इति ।

अत्र ब्रूमः–

रूपं यदध्यक्षमवैति लोको वाचाट ! वाचा किमपह्नुषे तत् ।
वक्तुं न शक्तः किमुतासि मन्दो गुडस्य माधुर्यमिवातिमूकः ? ॥ १ ॥

तथाहि– त्वदभिमता सत्ता तावत् सत्तर्कताडिता दूरमेव पलायिता । न हि स्वरूपसतां भावानामतिरिक्तसत्तया कश्चिदुपकारोऽस्ति, स्वतो मधुराया इव सुधाया मधुरद्रव्यान्तरसंयोगेन । नापि स्वरूपासतां तेषां तया कश्चिदुपकारः, खलानामिव सकलार्थसिद्धिहेतुना विपश्चित्प्रपञ्चितकलालापेन । कथं च तव जात्यादिषु सद्व्यवहारः, तत्र सत्ताया अभावात् ? । एकार्थसमवायेन तत्र[1] स इति चेत् । न, 'सत्' 'सत्' इति प्रतीतेः सर्वत्रैकाकारत्वात् । संबन्धांशे तत्र तस्या वैलक्षण्यमेवेति चेत् । हन्त ! तर्हि प्रकारांशेऽपि तथात्वमेवास्तु । अस्तु वा 'हरिः[2]' 'हरिः' इत्यादौ हरिपदवाच्यत्वमिव सत्पदवाच्यत्वमेव सर्वत्रानुगतम् । सत्पदसंकेतविषयतावच्छेदकतयैव तत्सिद्धिरिति चेत् । न, तान्त्रिकाणां परस्परं तत्संकेतभेदात्, स्वसंकेतमात्रस्य चार्थाव्यवस्थापकत्वात् । 'घटः सन्' इत्यादावनुभवसिद्धैव सत्तेति चेत् । सिद्धैव सा, केवलं तस्या अतिरेकः, साधारण्यं च न सिद्धम् । 'द्रव्यजन्यतावच्छेदकतया तत्सिद्धिः' इति तु निरस्तमधस्तात् । तस्मादुत्पाद-व्यय-ध्रौव्य-

१ ज. 'त्र तत्र त' । २ ख. ग. घ. च. 'हरिरित्या' ।

योगरूपैव सत्ता युक्ता, नाऽन्या।

न चात्रापि 'यद्युत्पाद-व्यय-ध्रौव्ययोगादसतां सत्त्वम्, तदा शशशृङ्गादेरपि स्यात्। स्वतश्चेत्, स्वरूपसत्त्वमायातम्। तथा, उत्पाद-व्यय-ध्रौव्याणामपि यद्यन्यतः सत्त्वम्, अनवस्थाप्रसक्तिः। स्वतश्चेत्, भावस्यापि स्वत एव तद् भविष्यति, इति व्यर्थमुत्पादादिकल्पनम्' इत्यादिपर्यनुयोगावकाशः, एकान्तपक्षोदितदोषस्य जात्यन्तरात्मके वस्तुन्यप्रसरात्। न हि भिन्नोत्पाद-व्यय-ध्रौव्ययोगाद् भावस्य सत्त्वमस्माभिरभ्युपगम्यते, किन्तूत्पाद-व्यय-ध्रौव्ययोगात्मकमेव सदित्यभ्युपगम्यत इति। तत्र सत्त्वं सकलव्यक्त्यनुगतं व्यञ्जनपर्यायताम्, प्रतिव्यक्त्यनुगतं चार्थपर्यायतामास्कन्दति; इत्थमेव सादृश्यास्तित्व-स्वरूपास्तित्वमित्यपि गीयते। तच्च सत्त्वं सापेक्षमेव सर्वैरनुभूयते, 'मार्तत्वादिना घटः सन्, न तु तन्तुजनितत्वादिना' 'इदानीं घटः सन्, न तु प्राक्' इत्याद्यनुभवात्। बुद्धिविशेषकृतापेक्षयाप्यादेशापराभिधानया सापेक्षमेव तत्, यथा 'अयमेकः, अयं चैकः' इति कल्पनाकृतापेक्षया द्वित्वादीति।

एवं चेह सप्तभङ्गी प्रवर्तते, तामिदानीं दिङ्मात्रेण दर्शयामः; तथाहि- स्यादस्त्येव, स्यान्नास्त्येव, स्यादवक्तव्यमेव, स्यादस्त्येव स्यान्नास्त्येव, स्यादस्त्येव स्यादवक्तव्यमेव, स्यान्नास्त्येव स्यादवक्तव्यमेव, स्यादस्त्येव स्यान्नास्त्येव स्यादवक्तव्यमेव, इत्येतदुल्लेखः। अत्र सर्वत्रैवकारप्रयोगोऽनभिमतार्थव्यावृत्त्यर्थम्, इतरथा प्रतिनियतस्वार्थानभिधानेनानभिहिततुल्यतापत्तेः; तदुक्तम्—

"वाक्येऽवधारणं तावदनिष्टार्थनिवृत्तये। कर्तव्यम्, अन्यथानुक्तसमत्वात्तस्य कुत्रचित् ॥ १ ॥" इति।

स्यात्कारप्रयोगश्च सापेक्षप्रतिनियतस्वरूपप्रतिपत्तये। यत्रापि चासौ न प्रयुज्यते, तत्रापि व्यवच्छेदफलैवकारवदर्थात् प्रतीयते, तदुक्तम्—

"सोऽप्रयुक्तोऽपि वा तज्ज्ञैः सर्वत्रार्थात् प्रतीयते। यथैवकारोऽयोगादिव्यवच्छेदप्रयोजनः॥ १॥" इति।

तत्र स्वरूपेण घटादिनाऽस्तित्वविवक्षयाऽसत्त्वोपसर्जनसत्त्वप्रतिपादनपरः प्रथमो भङ्गः। पररूपेण पटादिना नास्तित्वविवक्षया च सत्त्वोपसर्जनासत्त्वप्रतिपादनपरो द्वितीयो भङ्गः। शब्दशक्तिस्वाभाव्यादेकोपसर्जनेतरप्रधानभावेनैव शाब्द्याः प्रतीतेः। यदा तु तद् वस्तु द्वाभ्यामपि धर्माभ्यां युगपदभिधातुमिष्टम्, तदा तृतीयो भङ्गः। न हि द्वयोर्धर्मयोर्युगपत् प्राधान्येन गुणभावेन वा प्रतिपादने किञ्चिद् वस्तु समर्थम्। तथाहि– न तावत् समासस्तथा, बहुव्रीहेरन्यपदार्थप्रधानत्वात्; अव्ययीभावस्य चोभयपदप्रधानत्वेऽप्यत्रार्थेऽप्रतीतेः, द्वन्द्वस्यापि द्रव्यवृत्तेः प्रकृतार्थाप्रतिपादकत्वात्, एकमनूद्य तदप्रवृत्तेः; गुणवृत्तेरपि द्रव्याश्रितगुणप्रतिपादकत्वेन प्रधानभूतयोर्गुणयोरप्रतिपाद्यत्वात्; तत्पुरुषस्याप्युत्तरपदप्रधानत्वात्, द्विगोः संख्यावाचिपूर्वपदत्वात्, कर्मधारयस्य गुणाधारद्रव्यविषयत्वात्, एकशेषस्य चासंभवात्, द्वन्द्वतुल्यत्वाच्च। न च समासान्तरसद्भावोऽस्ति, येन युगपद् गुणद्वयं समासपदवाच्यतामास्कन्देत्। अत एव न विग्रहवाक्यमपि तथा, तस्य द्वन्द्वभिन्नार्थत्वात्। न च केवलं पदं वाक्यं वाऽन्यल्लोकप्रसिद्धं तथा, तस्यापि परस्परापेक्षद्रव्यादिविषयतया तथाभूतार्थप्रतिपादकत्वायोगात्। न च सूर्याचन्द्रमसोः पुष्पदन्तपदवत्, शतृ-शानयोः सत्पदवद् वा सांकेतिकमेकं पदं तथा वक्तुं समर्थम्, तस्यापि क्रमेणार्थद्वयप्रत्यायकत्वात् "सकृदुच्चरितं पदं सकृदर्थं बोधयति" इति न्यायात्।

एकं पदमेकदैकधर्मावच्छिन्नमेवार्थं बोधयति' इत्येतन्न्यायार्थः। तेन नानार्थकशब्दस्थल एकपदादुभयोपस्थितावपि नोभयबोधः, पुष्पदन्तादिपदाद् रवि-चन्द्राद्युभयत्वेनोभयबोधस्तु सुघट एव, अन्यथा घटपदाद् घटत्वेनाखिलघटबोधोऽपि न स्यादिति चेत्। 'अस्त्वेतदापाततः, तथापि प्रातिस्विकरूपेणावक्तव्यत्वमेव। एतेन 'सत्' इति पदादेव शक्त्या सत्त्वस्य, लक्षणया चासत्त्वस्योपस्थितिरस्तु, शक्य-लक्ष्ययोर्युगपदन्वयस्तु 'गङ्गायां मत्स्य-घोषौ' इत्यादाविवोपपद्यते, इत्युच्छृङ्खल-वावदूकोक्तावपि न क्षतिः, क्रमिकभङ्गद्वयजन्यप्रतीत्यपेक्षया युगपदवक्तव्यत्वस्याबाधात्, श्रोतुस्तथा जिज्ञासयैव तथोक्तेः, एकत्र जनितापेक्षान्वयस्य स्यात्पदस्येतरत्र व्युपरताकाङ्क्षत्वेनोक्तवदन्वयायोगात्। अत एव न निजार्थान्तरैकताभ्युपगमेऽप्यर्थस्य तथा वाच्यता, तथाभूतस्य तस्यात्यन्तासत्त्वात्, सर्वथा सत्त्वेऽन्यतोऽव्यावृत्तत्वात्, महासामान्यवत्, घटार्थत्वानुपपत्तेः; अर्थान्तरत्वे पररूपादिवत् स्वरूपादपि व्यावृत्तेः, खरविषाणवदसत्त्वादवाच्यतैव' इति वदन्ति।

न च घटशब्दप्रवृत्तिनिमित्ते विधिरूपे सिद्धेऽसंबद्ध एव तत्र पटाद्यर्थप्रतिषेध इति वाच्यम्; पटादेस्तत्राभावाभावे घटशब्दप्रवृत्तिनिमित्तस्य घटत्वस्यैवासिद्धेः। शब्दानां चार्थज्ञापकत्वं न कारकत्वम्, इति तथाभूतार्थप्रकाशनं तथाभूतेनैव शब्देन विधेयम्, इति नासंबद्धस्तत्र पटार्थप्रतिषेधः। अथवा, 'सर्वं सर्वात्मकम्' इति सांख्यमतव्यवच्छेदार्थं तत्प्रतिषेधो विधीयते। न च तदभिमतार्थस्य सिद्ध्यसिद्धिभ्यां व्याहतो निषेध इति वाच्यम्; विकल्पतः सिद्धस्यापि तं प्रति व्यवहार-व्युदासाय निषेधौचित्यात्। विकल्पतः सिद्धिश्च खण्डशोऽखण्डशो वेत्यन्यदेतत्।

यद्वा, नाम-स्थापना-द्रव्य-भावभिन्नेषु घटेषु विधित्सिता-ऽविधित्सितप्रकारेण प्रथम-द्वितीयौ भङ्गौ। तत्प्रकाराभ्यां युगपद- ॥२५०॥

वाच्यः। यद्यविधित्सितरूपेणापि घटः स्यात् तदा प्रतिनियतनामादिभेदव्यवहाराभावप्रसक्तेरिति विधित्सितस्यापि नात्मलाभ इति सर्वाभाव एव भवेत्। यदि च विधित्सितप्रकारेणाप्यघटः स्यात् तदा तन्निबन्धनव्यवहारोच्छेदप्रसक्तिरेव। एकान्ताभ्युपगमे च तथाभूतार्थस्याप्रामाणिकत्वादवाच्यः। अथवा, स्वीकृतप्रतिनियतप्रकारे तत्रैव नामादिके यः संस्थानादिस्तत्स्वरूपेण घटः, इतरेण चाघटः, इति प्रथम-द्वितीयौ। ताभ्यां युगपदभिधातुमशक्तेरवाच्यः। विवक्षितसंस्थानादिनेव यदीतरेणापि घट स्यात्, एकस्य सर्वघटात्मकत्वप्रसक्तिः, अ(प्र?)थ विवक्षितेनाप्यघटः, पटादाविव घटार्थिनस्तत्राप्यप्रवृत्तिप्रसक्तिः। एकान्तपक्षेऽप्ययमेव दोष इत्यसत्त्वादवाच्यः।

अथवा, स्वीकृतप्रतिनियतसंस्थानादौ मध्यावस्था स्वं रूपम्, कुशूल-कपालादिलक्षणे पूर्वोत्तरावस्थे पररूपम्, ताभ्यां सदसत्त्वात् प्रथम-द्वितीयौ। युगपत्ताभ्यामभिधातुमसामर्थ्यात् तृतीयः। मध्यावस्थावदितरावस्थाभ्यामपि यदि घटः स्यात्, तस्यानाद्यनन्तत्वप्रसक्तिस्तदा स्यात्। यदि च मध्यावस्थारूपेणाप्यघटस्तदा सर्वदा घटाभावापत्तिः। एकान्तपक्षेऽप्ययमेव प्रसङ्ग इत्यसत्त्वादवाच्यः। अथवा, तस्मिन्नेव मध्यावस्थास्वरूपे वर्तमाना-ऽवर्तमानक्षणरूपतया सदसत्त्वात् प्रथम-द्वितीयौ। ताभ्यां युगपदनभिधेयत्वात् तृतीयः। यदि वर्तमानक्षणवत् पूर्वोत्तरक्षणयोर्घटः स्यात्, वर्तमानक्षणमात्रमेवासौ प्राप्तः, पूर्वोत्तरयोर्वर्तमानताप्राप्तेः। न च वर्तमानक्षणमात्रमपि पूर्वोत्तरापेक्षस्य, तदभावेऽभावात्। अथातीता-ऽनागतक्षणवद् वर्तमानक्षणरूपतयाप्यघटः, सर्वदा तस्याभावः स्यात्। एकान्तपक्षेऽप्ययमेव दोष इत्यसत्त्वादवाच्यः।

अथवा, क्षणपरिणतिरूपे घटे लोचनजप्रतिपत्तिविषयत्वा-ऽविषयत्वाभ्यां स्वरूप-पररूपाभ्यामाद्य-द्वितीयौ। ताभ्यां युगपदादि-

ष्टस्तृतीयः। यदीन्द्रियान्तरजप्रतिपत्तिविषयत्वेनापि घटः स्यात्, इन्द्रियसंकरः स्यात्। यदि च चक्षुर्जप्रतिपत्तिविषयत्वेनापि न घटः, तर्हि तस्यारूपत्वप्रसक्तिः। एकान्तपक्षेऽप्ययमेव दोष इत्यसत्त्वादवाच्यः। अथवा, दृश्यमान एव घटे घटशब्दवाच्यता स्वं रूपम्, कुटशब्दाभिधेयत्वं पररूपम्, ताभ्यां सदसत्त्वात् प्रथम-द्वितीयौ। युगपत्ताभ्यामर्पितोऽवाच्यः। यदि हि घटशब्द-वाच्यत्वेनेव कुटशब्दवाच्यत्वेनापि घटः स्यात्, तर्हि त्रिजगत एकशब्दवाच्यताप्रसक्तिः, घटस्य वाऽशेषपटादिशब्दवाच्यत्व-प्रसक्तिः, घटशब्दवाच्यताप्रतिपत्तौ समस्ततद्वाचकशब्दप्रतिपत्तिप्रसङ्गश्च। घटपदेनापि यद्यवाच्यः स्यात्, तदा घटशब्दोच्चार-णवैयर्थ्यप्रसक्तिः। एकान्ताभ्युपगमेऽपि घटस्यैवासत्त्वात् तद्वाचकशब्दसंकेताभावादवाच्य एव।

अथवा, घटशब्दाभिधेये तत्रैव घटे हेयोपादेया-ऽन्तरङ्गबहिरङ्गो-पयोगानुपयोगरूपतया सदसत्त्वात् प्रथम-द्वितीयौ। ताभ्यां युगपदादिष्टोऽवाच्यः। यदि हि हेयादिरूपेणाप्यर्थक्रियाक्षमादिरूपेणैव घटः स्यात्, पटादीनामपि घटत्वप्रसक्तिः। यदि चोपादेयादिरूपेणाप्यघटः स्यात्, अन्तरङ्गस्य वक्तृ-श्रोतृगतहेतु-फलभूतघटाकारावबोधकविकल्पोपयोगस्याप्यभावे घट-स्याभावः। एकान्ताभ्युपगमेऽयमेव दोष इत्यवाच्यः। अथवा, तत्रैवोपयोगेऽभिमतार्थावबोधकत्वा-ऽनभिमतार्थानवबोधकत्वतः सदसत्त्वात् प्रथम-द्वितीयौ। ताभ्यां युगपदादिष्टोऽवाच्यः। विवक्षितार्थप्रतिपादकत्वेनेवेतररूपेणापि यदि घटः स्यात्, तदा प्रतिनियतोपयोगानुपपत्तिः, एवं च विविक्तरूपोपयोगप्रतिपत्तिर्न भवेत्। तदुपयोगप्रतिनियतरूपेणापि यद्यघटः स्यात् तदा सर्वाभावोऽविशेषप्रसङ्गो वा, न चैवम्, तथाप्रतीतेः। एकान्तपक्षेऽप्ययमेव प्रसङ्ग इत्यवाच्यः।

अथवा, घटत्वं स्वं रूपं सत्त्वम्, असत्त्वं च पररूपे, ताभ्यां प्रथम-द्वितीयौ। अभेदेन ताभ्यां निर्दिष्टो घटोऽवक्तव्यः; ॥२५१॥

तथाहि– यदि सत्त्वमनूद्य घटत्वं विधीयते, तदा सत्त्वस्य घटत्वेन व्याप्तेर्घटस्य सर्वगतत्वप्रसङ्गः, तथाभ्युपगमे प्रतिभासबाधा व्यवहारविलोपश्च । तथाऽसत्त्वमनूद्य यदि घटत्वं विधीयते तदा प्रागभावादेश्चतुर्विधस्यापि घटत्वेन व्याप्तेर्घटत्वप्रसङ्गः । अथ घटत्वमनूद्य सदसत्त्वे विधीयेते, तदा घटत्वं यत् तदेव सदसत्त्वे इति घटमात्रं सदसत्त्वे प्रसज्येते, तथाच पटादीनां प्रागभावादीनां चाभावप्रसक्तिः । इति प्राक्तनन्यायेन विशेषणविशेष्यलोपात् 'सन् घटः' इत्येवमवक्तव्यः, 'असन् घटः' इत्येवमप्यवक्तव्यः स्यात् । अनेकान्तपक्षे तु कथंचिदवाच्य इति न कश्चिद् दोषः ।

यद्वा, घटोऽर्थपर्यायः स्वान्यत्राद्वृत्तेः स्वं रूपं, 'घटः' इति नाम व्यञ्जनपर्यायस्तदतद्विषयत्वात् पररूपम्, ताभ्यां प्रथम-द्वितीयौ । अभेदेन ताभ्यां निर्देशेऽवक्तव्यः, यतोऽत्रापि यदि व्यञ्जनमनूद्य घटार्थपर्यायविधिः, तदा तस्याशेषघटात्मकताप्रसक्तिः, इति भेदनिबन्धनतद्व्यवहारविलोपः । अथार्थपर्यायमनूद्य व्यञ्जनपर्यायविधिः, तथापि सिद्धविशेषानुवादेन घटत्वसामान्यस्य विधानादकार्यत्वादिप्रसङ्ग इति घटस्याभावादवाच्यः । अनेकान्तपक्षे तु युगपदभिधातुमशक्यत्वात् कथञ्चिदवाच्यः । यद्वा, सत्त्वमर्थान्तररूपं, तस्य विशेषयदेकत्वादनन्वयिरूपता, अत एव न तद् वाच्यम्, अन्त्यविशेषवत् । अन्त्यविशेषस्तु स्वं रूपं सोऽप्यवाच्यः, अनन्वयात् । प्रत्येकावक्तव्याभ्यां ताभ्यामादिष्टो घटोऽवक्तव्यः । अनेकान्ते तु कथञ्चित् तथा ।

अथवा, संद्रुतरूपाः सत्त्वादयो घट इत्यत्र दर्शने सत्त्वादयः पररूपं, संद्रुतरूपं स्वं, ताभ्यामादिष्टो घटोऽवक्तव्यः, यतः संद्रुतरूपस्य सत्त्व-रजः-तमस्सु सत्त्वे सत्त्व-रजः-तमसामभावप्रसक्तिः, तेषां परस्परवैलक्षण्येनैव सत्त्वादित्वात्, संद्रुतरूपत्वे च वैलक्षण्याभावादभाव इति विशेष्याभावादवाच्यः । असत्त्वे चासत्कार्योत्पादप्रसङ्गः । न चैतदभ्युपगम्यते । अभ्यु-

पगमेऽपि विशेषणाभावादवाच्यः। अनेकान्ते तु कथञ्चित्तथा। यद्वा, रूपादयः पररूपम्, असंद्रुतरूपत्वं स्वं रूपम्, ताभ्यामादिष्टोऽवक्तव्यः, यतो रूपादिव्यावृत्ता रूपादयः, एवं च रूपादीनां घटताऽवाच्या, अरूपादित्वाद् घटस्य। न हि परस्परविलक्षणबुद्धिग्राह्या रूपादय एकानेकात्मकप्रत्ययग्राह्यारूपादिरूपघटतां प्रतिपद्यन्त इति विशेष्यलोपादवाच्यः। अथाप्यरूपादिरूपा रूपादयः, नन्वेवं रूपादय एव न भवन्ति, इति तेषामभावे केऽसंद्रुतरूपतया विशेष्या येनासंद्रुतरूपरूपादयो घटो भवेत्? इत्येवमप्यवाच्यः। अनेकान्तवादे तु कथञ्चित्तथा।

यदि वा, रूपादयः पररूपं, मतुबर्थः स्वरूपम्, रूपाद्यात्मकैकाकारावभासप्रत्ययविषयव्यतिरेकेणापररूपसंबन्धयनवगतेर्विशेष्याभावाद् न रूपादिमान् घट इत्यवाच्यः। न चैकाकारप्रतिभासग्राह्यव्यतिरेकेणापररूपादिप्रतिभासः, इति विशेषणाभावादप्यवाच्यः। अनेकान्ते तु कथञ्चित् तथा। अथवा, बाह्यः पररूपम्, उपयोगस्तु स्वं रूपम्, ताभ्यामादिष्टोऽवक्तव्यः, तथाहि–य उपयोगः स घट इत्युक्तौ उपयोगमात्रमेव घट इति सर्वोपयोगस्य घटत्वप्रसक्तिः, इति प्रतिनियतस्वरूपाभावादवाच्यः। यो घटः स उपयोग इत्युक्तावुपयोगस्यार्थत्वप्रसक्तेरुपयोगाभावे घटस्याप्यभाव इति कथं नावाच्यः?। तदिदमुक्तम्—

"अत्थंतरभूएहि य णियएहि अ दोहि समयमाइट्ठं। वयणविसेसाईयं दव्वमवत्तव्वयं पडइ॥ १॥" इति।

यदा च देशोऽस्तित्वे नियम्यते, देशश्च नास्तित्वे; तदाऽवयवा-ऽवयविनोः कथञ्चिदभेदादवयवद्वारा 'कुण्ठो देवदत्तः' इत्यत्रेव तद्धर्माणामवयविनि व्यपदेशाच्चतुर्थभङ्गप्रवृत्तिः। अवयविनि त्वेकत्र तथाविवक्षायामवक्तव्यतायामेव पर्यवसानं स्यादिति

१ अर्थान्तरभूताभ्यां च नियताभ्यां च द्वाभ्यां समकमादिष्टम्। वचनविशेषातीतं द्रव्यमवक्तव्यतां पतति॥ १॥ २ सम्मतिसूत्रे गाथा ३६।

नातिप्रसङ्गः। अवयवेन च विशिष्टधर्मेण त्रिभङ्ग्यैकमादिश्यमानं सुप्रसिद्धमेव। यथैक एव पुरुषो विवक्षितपर्यायेण बालादिना परिणतः कुमारादिना चापरिणत इति। तदिदमुक्तम्—

"[1]अह देसो सब्भावे देसोऽसब्भावपज्जए णियओ। तं दवियमत्थि णत्थि य आएसविसेसिअं जम्हा[2] ॥ १ ॥" इति।

यदा च देशोऽस्तित्वेऽवक्तव्यत्वानुविद्धस्वभाव आदिश्यते, अपरश्च देशोऽस्तित्व-नास्तित्वाभ्यामेकदैव विवक्षितोऽस्तित्वानुविद्ध एवावक्तव्यत्वस्वभावे, तदा पञ्चमभङ्गप्रवृत्तिः, प्रथम-तृतीयकेवलभङ्गव्युदासोऽत्र विवक्षाभेदकृतो द्रष्टव्यः, प्रथम-तृतीययोः परस्परानुपरक्तयोः प्रतिपाद्येनाधिगन्तुमिष्टत्वात्, प्रतिपादकेनापि तथैव विवक्षितत्वात्, अत्र तु तद्विपर्ययात्, अनन्तधर्मात्मकस्य धर्मिणः प्रतिपाद्यानुरोधेन तथाभूतधर्माक्रान्तत्वेन वक्तुमिष्टत्वात्। तदिदमाह—

"[3]सब्भावे आइट्ठो देसो देसो अ उभयहा जस्स। तं अत्थि अवत्तव्वं च होइ दवियं विअप्पवसा[4] ॥ १ ॥"

यदा च वस्तुनो देश एकोऽसत्त्वेऽवक्तव्यत्वानुविद्धे निश्चितः, अपरश्चासत्त्वानुविद्धो युगपदुभयथा विवक्षितस्तदा तथाव्यपदेश्यावयववशादवयविनि षष्ठभङ्गप्रवृत्तिः, केवलद्वितीय-तृतीयभङ्गव्युदासः प्राग्वत्, प्रतिपाद्यजिज्ञासावशात्। तदिदमाह—

"[5]आइट्ठोऽसब्भावे देसो देसो य उभयहा जस्स। तं णत्थि अवत्तव्वं च होइ दविअं विअप्पवसा[6] ॥ १ ॥"

---

१ अथ देशः सद्भावे देशोऽसद्भावपर्यवे नियतः। तद् द्रव्यमस्ति नास्ति चादेशविशेषितं यस्मात् ॥ १ ॥ २ सम्मतिप्रकरणे गाथा ३७।

३ सद्भाव आदिष्टो देशो देशश्चोभयथा यस्य। तदस्त्यवक्तव्यं च भवति द्रव्यं विकल्पवशात् ॥ १ ॥ ४ सम्मतौ गाथा ३८।

५ आदिष्टोऽसद्भावे देशो देशश्चोभयथा यस्य। तद् नास्त्यवक्तव्यं च भवति द्रव्यं विकल्पवशात् ॥ १ ॥ ६ सम्मतौ गाथा ३९।

यदा च वस्तुनो देश एकः सत्त्वे नियतः, द्वितीयश्चासत्त्वे, तृतीयस्तूभयथाऽभिधित्सितस्तदा तथाभूतविशेषणाध्यासितस्यानेनैव प्रकारेण प्रतिपादनादीदृशेऽर्थेऽपरभङ्गविषयाप्रसरात् सप्तमभङ्गप्रवृत्तिः। तदिदमाह—

"[1]सब्भावासब्भावे देसो देसो अ उभयहा जस्स। तं अत्थि णत्थवत्तव्वयं च दविअं विअप्पवसा ॥१॥" इति।

अथानन्तधर्मात्मके वस्तुनि तत्प्रतिपादकवचनस्य सप्तधा परिकल्पनेऽष्टमोऽपि विकल्पः किं न स्वीक्रियते? इति चेत्। न, तत्परिकल्पनानिमित्ताभावात्, सावयवात्मकस्य निरवयवात्मकस्य चान्योन्यनिमित्तकस्य जिज्ञासायां चतुर्थादि-प्रथमादिविकल्पानामेव प्रवृत्तेः। किञ्च, क्रमेण धर्मद्वयं गुण-प्रधानभावेन प्रतिपादयन् प्रथम-द्वितीयावेव भङ्गावाददीत, युगपत्तु द्वयमभिधित्सुस्तृतीयमेव, क्रमेण प्राधान्येन द्वयमभिधित्सुराद्य-द्वितीयसंयोगनिष्पन्नं चतुर्थमेव, एकं विभज्यापरं चाविभज्याभिधित्सुः प्रथम-तृतीयसंयोगनिष्पन्नं पञ्चमम्, द्वितीय-तृतीयसंयोगनिष्पन्नं षष्ठं वा, द्वौ देशौ विभज्य तृतीयं चाविभज्याभिधित्सुराद्य-द्वितीय-तृतीयसंयोगनिष्पन्नं सप्तममेव, इति चतुरादिदेशोपादानेऽपि द्वित्र्यादीनामेकविभाजकोपरागविश्रामाद् न सप्तमाद्यतिक्रमः, एककरदण्डसंयोगे करद्वयदण्डसंयोगे वा दण्डित्वाविशेषात्। अनेकान्त उद्भूतद्वित्वादिविवक्षया स्यादेव विशेष इति चेत्। स्यादेव तर्हि भङ्गावान्तरभेदोऽपि। अत एव [2]मल्लवादिप्रभृतिभिरेते कोटीशो भवन्तो भेदा अभिहिताः। विभाजकोपाध्यनतिक्रमात्तु न विभागव्याघात इति तत्त्वम्।



१ सद्भावासद्भावे देशो देशश्चोभयथा यस्य। तदस्ति नास्त्यवक्तव्यं च द्रव्यं विकल्पवशात् ॥ १ ॥ २ सम्मतिप्रकरणे गाथा ४०।

इयं च सप्तभङ्गी प्रतिभङ्गं सकलादेशस्वभावा विकलादेशस्वभावा च[1]। प्रमाणप्रतिपन्नानन्तधर्मात्मकवस्तुनः कालादिभिरभेदवृत्तिप्राधान्यात्, अभेदोपचाराद् वा यौगपद्येन प्रतिपादकं वचः सकलादेशः[2]। तद्विपरीतो विकलादेशः[3]। अभेदवृत्तिप्राधान्यम्— द्रव्यार्थिकनयगृहीतसत्ताद्यभिन्नानन्तधर्मात्मकवस्तुशक्तिकस्य सदादिपदस्य कालाद्यभेदविशेषप्रतिसंधानेन पर्यायार्थिकनयपर्यालोचनप्रादुर्भवच्छक्यार्थबाधप्रतिरोधः। अभेदोपचारश्च— पर्यायार्थिकनयगृहीतान्यापोहपर्यवसितसत्तादिमात्रशक्तिकस्य तात्पर्यानुपपत्त्या सदादिपदस्योक्तार्थे लक्षणा।

कालादयश्चाष्टाविमे— कालः, आत्मरूपम्, अर्थः, संबन्धः, उपकारः, गुणिदेशः, संसर्गः, शब्द इति च। तत्र यत्कालमस्तित्वं तत्कालाः शेषानन्तधर्मा वस्तुन्येकत्रेति तेषां कालेनाभेदवृत्तिः। यदेव चास्तित्वस्य तद्गुणत्वमात्मरूपं तदेवान्यगुणानामपीत्यात्मरूपेणाभेदवृत्तिः। य एव चाधारोऽर्थो द्रव्याख्योऽस्तित्वस्य स एवान्यपर्यायाणामित्यर्थेनाभेदवृत्तिः। य एव चाविष्वग्भावः संबन्धोऽस्तित्वस्य स एवान्येषामिति संबन्धेनाभेदवृत्तिः। य एव चोपकारोऽस्तित्वेन वस्तुनः स्वप्रकारकप्रतीतिविषयत्वलक्षणः, स एवान्येषामित्युपकारेणाभेदवृत्तिः। य एव च गुणिनः संबन्धी देशः क्षेत्रलक्षणोऽस्तित्वस्य, स एवान्येषाम्, इति गुणिदेशेनाभेदवृत्तिः। य एव च वस्तुनः संसर्गोऽस्तित्वस्याधाराधेयभावलक्षणः, स एवान्येषाम्, इति संसर्गेणाभेदवृत्तिः। य एव च 'अस्ति' इति शब्दोऽस्तित्वधर्मात्मकस्य वस्तुनो वाचकः, स एवाशेषानन्तधर्मात्मकस्यापि, इति शब्देनाभेदवृत्तिः।

---

१ प्रमाणनयतत्त्वालोकालङ्कारे ४।४३। २ प्रमा० ४।४४। ३ प्रमा० ४।४५।

केचित्तु– 'अनन्तधर्मात्मकवस्तुप्रतिपादकत्वाविशेषेऽप्याद्यास्त्रय एव भङ्गा निरवयवप्रतिपत्तिद्वारा सकलादेशाः, अग्रिमास्तु चत्वारः सावयवप्रतिपत्तिद्वारा विकलादेशाः' इति प्रतिपन्नवन्तः । एते च सप्तापि भङ्गाः स्यात्पदालाञ्छिता अवधारणैकस्वभावा विषयासत्त्वाद् दुर्नयाः, स्यात्पदलाञ्छितस्त्वेतदन्यतमोऽपीतरांशाप्रतिक्षेपादेकदेशव्यवहारानिबन्धनत्वात् सुनय एव । 'अस्ति' इत्यादिकस्तु स्यात्कारैवकारविनिर्मुक्तो धर्मान्तरोपादानप्रतिषेधाकरणात् स्वार्थमात्रप्रतिपादनप्रवणः सुनयोऽपि न व्यवहाराङ्गमिति द्रष्टव्यम् ।

अयं च सप्तविधोऽपि वचनमार्गोऽर्थनयेऽविशिष्टः । तत्र प्रथमः संग्रहे सामान्यग्राहिणि, द्वितीयो व्यवहारे विशेषग्राहिणि, तृतीय ऋजुसूत्रे पृथक्त्वमनिच्छति, चतुर्थः संग्रह-व्यवहारयोः, पञ्चमः संग्रह-र्जुसूत्रयोः, षष्ठो व्यवहार-ऋजुसूत्रयोः, सप्तमः संग्रह-व्यवहार-र्जुसूत्रेषु । व्यञ्जननये च सविकल्पो निर्विकल्पश्च । प्रथमेऽर्थैकत्वेऽपि पर्यायशब्दवाच्यताविकल्पसद्भावात् प्रथमः सविकल्पः । द्वितीय-तृतीययोर्द्रव्यार्थनिर्गतपर्यायाभिधायकत्वाद् निर्विकल्पो द्वितीयः, शब्दादिषु तृतीयः । संयोगादन्ये ।

अथवा, वक्तृस्थप्रत्ययरूपेऽर्थनये सप्ताप्येते संभविनः । श्रोतृस्थप्रत्ययरूपे व्यञ्जननये तु शब्द समभिरूढयोः संज्ञाक्रियाभेदेऽप्यभिन्नार्थप्रतिपादनात् सविकल्पः प्रथमभङ्गः । एवंभूतस्तु क्रियाभेदाद् भिन्नमेवार्थं प्रतिपादयतीति तत्र निर्विकल्पो द्वितीयभङ्ग एव । अवक्तव्यस्तु शब्दाविषयत्वाद् नास्त्येवेति वदति, सद्भावाद्यर्पणया ऋजुसूत्राद् विशेषिततरार्थाभ्युपगमस्य शब्दनये भाष्यकृता पक्षान्तरमधिकृत्याभिहितत्वात्, तदपेक्षया तत्र सप्तापि सविकल्पाः, यथाश्रुते तु निर्विकल्पा इत्यप्यनुजानीमः ॥ २३ ॥

तदेवं सप्तभङ्ग्यात्मकप्रमाणेनानेकान्त एव निश्चयो युज्यते, नैकान्त इति निगमयन्नाह—

**अनेकान्तत एवातः सम्यग्मानव्यवस्थितेः। स्याद्वादिनो नियोगेन युज्यते निश्चयः परम् ॥**

अतः– उक्तयुक्तेः, अनेकान्तत एव– अनेकान्तमतमवलम्ब्यैव, सम्यग्मानव्यवस्थितेः– अविसंवादिप्रमाणव्यवस्थानात्, स्याद्वादिनो नियोगेन– नियमेन, निश्चयो युज्यते, परं–केवलम्। 'परम्' इत्यनेनैकान्ते मानस्यैवानवतार इति सूचितम्। तथाहि– न तावदध्यक्षादेकान्तसिद्धिः, अनेकान्तस्यैव सर्वैरध्यक्षमनुभवात्, एकस्यैव वस्तुनो वस्त्वन्तरसंबन्धाविर्भूतानेकसंबन्धिरूपत्वात्, पितृ-पुत्र-भ्रातृ-भागिनेयादिविशिष्टैकपुरुषवत्, पूर्वा-ऽपरा-ऽन्तरिता-ऽनन्तरित-दूरा-ऽऽसन्न-नव-पुराण-समर्था-ऽसमर्थदेवदत्त-चैत्रस्वामिकलब्ध-कृत-हृतादिरूपघटवद् वा। यत्पुनरुच्यते मण्डनेन–

"पित्रादिविषयेऽपेक्षा जननादिप्रभाविता। एकक्रियाविशेषेण व्यपेक्षा ह्रस्व-दीर्घयोः" ॥ १ ॥ इति।

तत्तु दृष्टान्त-दार्ष्टान्तिकयोरापेक्षिकपर्यायत्वपर्यवसानाद् नातिचतुरस्रम्। यदप्येतद् विदृण्वतोक्तम्– 'शब्दार्थस्तत्र सापेक्षो न वस्तु' इति। तदप्यशब्दार्थस्य वस्तुतः सिद्धौ शब्दस्य च कल्पनामात्रपर्यवसितत्वे शोभते। येषामपि मतम्– 'पितृत्व-पुत्रत्वादयो धर्मा एव तत्तन्निरूपिता भिद्यन्ते, धर्मी त्वेकस्वभाव एव'। तेषामपि 'एतदपेक्षयाऽयं पिता, एतदपेक्षया च न पिता' इत्यादिप्रतीत्यननुरोध एव, धर्मिभेदप्रतीतेर्धर्माभावावगाहितायां 'घटः पटो न' इत्यादावपि तथात्वापत्त्या च भेदकथैवोत्सीदे-

१ ज. 'तकृतचै'। २ ख. ग. घ. 'विना'।

दिति । येऽपि नगर-त्रैलोक्यादिवत् पितृ-पुत्रादिभावभाग् ज्ञानाकार एव' इति प्रतिपन्नवन्तः । तेऽपि शबलार्थानुपपत्तिभीताः शबलज्ञानमाश्रयन्तो व्याघ्रात् त्रस्यन्तः कूपान्तःपातिन इति दिग् ।

एवं चानुमानादिनापि नैकान्तसिद्धिः, अध्यक्षबाधितेऽर्थेऽनुमानादिप्रमाणाप्रवृत्तेः । किञ्च, साधर्म्यतः परः साध्यं साधयेत्, वैधर्म्यतो वा ? । उभयथापि तत्पुत्रत्वादेर्गमकत्वप्रसङ्गः, प्रकरणसम-कालात्ययापदिष्टयोर्हेत्वाभासत्वाभावेनाबाधकत्वात्, निश्चितस्वसाध्याविनाभूतहेतूपलम्भस्यैव साध्यधर्मिणि साध्यप्रतिपत्तिरूपत्वेन तयोस्तदप्रतिपन्थित्वात् । न च यथा तवात्राऽगमकत्वं तथा ममापीति शङ्कनीयम्, ममाक्षिप्तपरस्परस्वरूपाजहद्वृत्तिसाधर्म्यवैधर्म्यस्वभावनिबन्धनत्रैरूप्यनिश्चयाभावेन तस्यागमकत्वात्, परस्य च तथाऽनभ्युपगमात् ।

किञ्च, परस्य स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यसाध्याभाववदवृत्तित्वसाध्यसंबन्धितावच्छेदकरूपवत्त्वादिव्याप्तीनां नानात्वात् साधने साध्यव्याप्यत्वमपि दुर्ग्रहम् । न च सर्वासामपि वह्निनिरूपितव्याप्तीनां प्रत्येकं वह्न्यनुमित्यङ्गत्वमेव, कार्यतावच्छेदके तत्तदव्यवहितोत्तरत्वादिदानाच्च न व्यभिचार इति वाच्यम्, अनुगतहेतु-हेतुमद्भावं विनाऽनुगतव्यवहारप्रवृत्त्याद्यनुपपत्तेः, अनुमितिजनकतावच्छेदकतया सिद्धाया एकस्या एव व्याप्तेः प्रतिस्वं विभज्यानुभवाद् भेदमिश्रितत्वस्वीकारौचित्यात् । एवं विशिष्य तत्तद्धर्मावच्छिन्नकारणताश्रयेऽपि तत्तद्धर्मसामान्याधिकरण्येन सामान्यकारणताव्यपदेशसमर्थनमपि परेषां शब्दान्तरेण सामान्यविशेषभावमेव वस्तुनो द्रढयति, अर्पिताऽनर्पितासिद्धेः, इति द्रष्टव्यम्, "यत्सामान्ये यत्सामान्यं हेतुस्तद्विशेषे तद्विशेषोऽपि" इति न्यायोपपत्तेः, अर्थन्यायेना भावेनाप्रधानगुणभूतेऽपि प्रधानगुणभाव-

योगाच्चेति ।

किञ्च, परः साध्यं साधयन् न तावत् सामान्यं साधयेत्, केवलस्य तस्यासंभवात् । नापि विशेषम्, तस्याननुयायित्वेन साधयितुमशक्यत्वात् । न च सामान्योपरागेण विशेषस्याप्यनुयायित्वम्, समवायनिषेधेन तदुपरागासिद्धेः 'पर्वतो जातिमद्वान्' इत्यादावतिप्रसङ्गाच्च । नाप्युभयम्, उभयदोषानतिवृत्तेः । नाप्यनुभयम्, तस्यासत्त्वात्, इत्याद्यूह्यम् । तदिदमुक्तम्—

"[1]साहम्मओ व्व अत्थं साहिज्ज परो विहम्मओ वावि । अन्नोन्नं पडिकुंठा दो वि अ एए असव्वाया ॥१॥" इति ।[2]

अनेकान्ते तु न साध्यसिद्धिरनुपपन्ना, कथञ्चिद् वह्निमत्तायाः साध्यत्वेन 'पर्वतो द्रव्यवान्' इत्यादावनतिप्रसङ्गात्, वह्निमत्ताया द्रव्यवत्तासामान्यक्रोडीकृतत्वेऽपि कथञ्चिदतिरेकात्, विवादास्पदीभूतसामान्य-विशेषोभयात्मकसाध्यधर्माधारसाध्यधर्मिसिद्धेश्च; अन्यथा 'पर्वतसामान्यं वह्निमत्तयाऽनुमिनोमि' 'इमं पर्वतं वह्निमत्तयाऽनुमिनोमि' इत्यादि विभज्याध्यवसायाकारानुपपत्तेः, इतरत्र संशयानिवृत्तिप्रसङ्गाच्च । इत्यन्यत्र विस्तरः । तदिदमाह—

"[3]दव्वट्ठिअवत्तव्वं सामण्णं पज्जवस्स य विसेसो । एए समोवणीया विभज्ज वायं विसेसंति[4] ॥१॥" इति ।

तदेवं 'स्याद्वादिनो न क्वचिदपि निश्चयो युज्यते' इति पूर्वपक्षिणोक्तं निराकृतम् ॥ २४ ॥

---

१ साधर्म्यतो वार्थं साधयेत् परो वैधर्म्यतो वापि । अन्योन्यं परिकुण्ठौ द्वावपि चैतावसद्वादौ ॥ १ ॥ २ सम्मतिप्रकरणे गाथा १५३ ।
३ द्रव्यास्तिकवक्तव्यं सामान्यं पर्यवस्य च विशेषः । एतौ समोपनीतौ विभज्य वादं विशिंष्टः ॥ १ ॥ ४ सम्मतिप्रकरणे गाथा १५४ ।

इत्थं च 'संसार्यपि न संसारी' इत्याद्यप्यर्थतो निरस्तमेव, तथापि विशिष्य तद् निरसितुकामस्तत्र प्रयोजनमाह—

**एतेन सर्वमेवेति यदुक्तं तन्निराकृतम्। शिष्यव्युत्पत्तये किञ्चित्तथाप्यपरमुच्यते ॥ २५ ॥**

एतेन– अनन्तरोदितेन स्याद्वादसाधनेन, सर्वमेव यदुक्तं पूर्वपक्षिणा, तद् निराकृतम्, अधिकस्याप्युक्ततुल्ययोगक्षेमत्वात्। तथापि शिष्यव्युत्पत्तये– प्रपञ्चज्ञशिष्यमतिविस्फारणाय, किञ्चिदपरम्– अवशिष्टविषयम्, उच्यते ॥ २५ ॥

तथाहि—

**संसारी चेत्स एवेति कथं मुक्तस्य संभवः?। मुक्तोऽपि चेत्स एवेति व्यपदेशोऽनिबन्धनः ॥**

संसारी चेत् स एव– संसार्येव, एवकार एकान्ते, इति हेतोः, संसारिणः सर्वथा संसारित्वात्, कथं मुक्तस्य संभवः– संसारिण्ययं मुक्त इत्यादिव्यपदेशः?[1]। क्षणभेदस्त्वत्र न परिहारः, सर्वथाऽसारूप्यात्। स्यान्मतमन्येषाम्– स एव संसारी स एव च मुक्तः, न तु न संसारी न मुक्तश्च, संसारित्व-मुक्तत्वयोः संसारिमुक्तभेदविरोधित्वात्, प्रतियोगितावच्छेदकेन सहान्योन्याभावस्य विरोधे कालभेदानिवेशादिति। असदेतत्, 'इदानीमयं संसारी न मुक्तः 'इदानीं स मुक्तो न संसारी' इत्यादिव्यवहारात् संसारि-मुक्तयोरसंसार्य-ऽमुक्तयोश्च कालभेदेन विभिन्नतया व्यवस्थितेः। विभेदे कथमेकत्रोभयथा व्यवहार इति चेत्। सोऽयमेकान्तवादिन एव शिरसि प्रहारः। अथ नित्यज्ञानादिमद्भिन्नः संसारी, तद्भेदश्च न तत्रेति संसा-

1 अत्र स्तबके कारिका ८।

र्येव स इति चेत्। कथं तर्हि मुक्ते 'असंसारी' इति व्यवहारः ? । गौणः स इति चेत् । न, स्वेच्छामात्रानुरोधेऽपि लोक-शास्त्र-व्यवहारानुरोधात् । अत एवाह– मुक्तोऽपि चेत् स एव– मुक्त एव न संसारी, इति हेतोः प्रागप्यस्य संसारिस्वभावत्वाभावात्, अनिबन्धनः– निर्निमित्तः, व्यपदेशः– 'मुक्तः सः' इत्युल्लेखवान् ॥ २६ ॥

एतदेव स्पष्टयति—

**संसाराद् विप्रमुक्तो यन्मुक्त इत्यभिधीयते । नैतत्तस्यैव तद्भावमन्तरेणोपपद्यते ॥२७॥**

यत्– यस्मात्, संसाराद् विप्रमुक्तो मुक्त इत्यभिधीयते, मुचेरवधिसापेक्षत्वात् । एतत्– इत्थंभूतं मुक्तत्वम्, तस्यैव– संसारिण एव, तद्भावमन्तरेण– मुक्तभावाभ्युपगमं विना, नोपपद्यते । इष्यत एव तस्यैव तद्भावः, धर्मिण्येव धर्मोपगमात्, धर्मिणोऽपि कथञ्चित्परावृत्तिस्तु नेष्यत इति चेत् । न, संसारिस्वभावं परित्यज्य मुक्तस्वभावोपादानाद् धर्मिणोऽपि कथञ्चित्परावृत्तेः । विशिष्टधर्मिभेदेऽपि शुद्धधर्म्यभेदाद् न दोष चेत् । अयमेव द्रव्यतोऽभेदः, पर्यायतश्च भेद इत्यनेकान्तो यदि स्यात्पदानुविद्धः, तादृशभेदस्यापि तादृशभेदनान्तरीयकत्वात् । मुक्तेऽपि तदा संसारिभेदेऽपि प्राक् तदभेदात् । तत्कालापेक्षया तत्र तद्भेद एवेति चेत् । नैतावतैवापेक्षाविश्रामः, तत्कालेऽपि तदन्यकालाभेदादिकृतापेक्षाऽऽनन्त्यात् । तावदपेक्षानियतवस्तुप्रतीतिर्न कथमपि स्यादिति चेत् । सत्यम्, स्यात्पदमहिम्ना प्रधानो-पसर्जनभावेन तथाप्रतीत्युपपत्तेः, प्रत्यक्षेऽपि सम्यग्दर्शनगुणमहिम्ना तथाभावात्; मिथ्यादृशां तु सापेक्षयोर्धर्मयोरेकत्र निमित्तभेदं विना भानस्य संशयवद् दोष-

जन्यत्वनियमात् । अत एव 'सदसतोरविशेषणात् सर्वं ज्ञानं मिथ्यादृशो विपर्यस्तम्, सम्यग्दृशो च संशयादिकमपि तादृशदोषाजन्यत्वादविपर्यस्तम्' इति परिभाषन्ते । इत्यन्यत्र विस्तरः ॥ २७ ॥

फलितमाह—

**तस्यैव च तथाभावे तन्निवृत्तीतरात्मकम् । द्रव्य-पर्यायवद्वस्तु बलादेव प्रसिध्यति ॥२८॥**

तस्यैव च– संसारिणः, तथाभावे– मुक्तभावेऽभ्युपगम्यमाने, तद्– अधिकृतं वस्तु, निवृत्तीतरात्मकं निवृत्त्य-ऽनिवृत्ति-स्वभावम्, बलादेव– स्याद्वादसाम्राज्यादेव, द्रव्य-पर्यायवत् प्रसिध्यति, तस्यैव तथा भवनादिति ॥ २८ ॥

तदिदं लोकानुभवतोऽपि साधयन्नाह—

**लज्जते बाल्यचरितैर्बाल एव न चापि यत् । युवा न लज्जते चान्यस्तैरायत्यैव चेष्टते२९**

लज्जते बाल्यचरितैः– चौर्या-ऽसंस्पृश्यस्पर्श-क्रीडादिभिः, अतो बाल एव युवा, 'अहमेव पूर्वं चौर्याद्यनुष्ठितवान्' इति लज्जानिबन्धनाभेदप्रत्यभिज्ञानाद् बाल-यूनोरभेदसिद्धेः । न चाप्येकान्तो बाल एव यद् यस्माद् युवा, एवं हि 'अयमिदानीं युवा, न बालः' इति भेदप्रतिभासो नानुरुद्धः स्यात् । न च बालस्वभावापरित्यागे युवस्वभावपरिग्रहोऽपि स्यात्, उत्तरस्व-भावे पूर्वस्वभावपरित्यागस्य हेतुत्वात् । न च तत्काले यूनि बालसामान्यभेद एव, 'इदानीं युवा न बालः' इति प्रतीतेरिति वाच्यम्, यतो न चान्यः– भिन्नसंतानान्तरयुवा, तैः– बाल्यचरितैः, लज्जते, अतस्तत्र न तत्संतानीयबालभेद एव ।

तदेवमतीत-वर्तमानयोर्भेदाभेदो भावितः। एवमनागत-वर्तमानयोरपि, यत आयत्यैव- बाधके सुखहेतुधनाद्यर्थमेव, चेष्टते। अतो युव-वृद्धयोरभेदः। न ह्यन्योऽन्यार्थे चेष्टत इति ॥ २९ ॥

न चाप्यभेद एवेत्याह—

**युवैव न च वृद्धोऽपि नान्यार्थं चेष्टनं च तत्। अन्वयादिमयं वस्तु तदभावोऽन्यथा भवेत्॥३०॥**

न च युवैव वृद्धोऽपि- सर्वथा वृद्धपर्यायापन्न एव, 'इदानीमयं युवा न वृद्धः' इति प्रतीतेः। न च तत्काले तत्र यूनि तत्संतानीयवृद्धभेद एव, यतोऽन्यार्थं संतानानन्तरवृद्धवत्, न च चेष्टनं- कायव्यापाररूपम्। तत्- तस्मात्, वस्त्वन्वयादिमयं- आदिना व्यतिरेकग्रहादन्वय-व्यतिरेकशबलम्, अन्यथा, तदभावः- अधिकृतवस्त्वभावो भवेत्, सर्वथाऽसतसद्भावविरोधात्। तदिदमुक्तं सम्मतिकृता—

"[1]पडिपुन्नजोव्वणगुणो जह लज्जइ बालभावचरिएण[2]। कुणइ य गुणपणिहाणं अणागयसुहोवहाणत्थं ॥ १ ॥

ण य होइ जोव्वणत्थो बालो अन्नो वि लज्जइ न तेण। ण वि अ अणागयतग्गुणपसाहणं जुज्जइ विभत्ते[3] ॥२॥" इति।

यत्तु- 'बाल्याद्याः शरीरस्यैवावस्थाः, आत्मा तु बाल्याद्यवस्थाभेदाद् न निवर्तते, भिद्यते वा, नित्यैकरूपत्वात्तस्य;

---

१ प्रतिपन्नयौवनगुणो यथा लज्जते बालभावचरितेन। करोति च गुणप्रणिधानमनागतसुखोपधानार्थम् ॥ १ ॥
न च भवति यौवनस्थो बालोऽन्योऽपि लज्जते न तेन। नापि चानागततद्गुणप्रसाधनं युज्यते विभक्ते ॥ २ ॥

२ मुद्रितमूलसम्मतौ 'एहिं' इति पाठः।  ३ सम्मतिप्रकरणे गाथा ४३, ४४।

शरीरं तु परिणामभेदाद् भिद्यत एव' इति नैयायिकादीनां मतम्। तदसत्, 'अहं बालः' इत्यादिप्रतीत्या बालत्वाद्यवस्था-नामहंत्वसामानाधिकरण्यस्य 'प्राग् बाल आसम्, इदानीं युवास्मि' इत्यादिधिया चाहंतास्पदस्य बाल्य-यौवनादिभेदेनोत्पाद-नाश-स्थित्यात्मकस्य सिद्धेः; न चेदेवम्, बाल्यादिवद् मनुष्यत्वादेरपि 'शरीरमात्रनिष्ठत्वे मनुष्यत्वादिप्रयोज्यो गुणविशेष आत्मनि न घटेत। मनुष्यत्वादिकं संयोगादिवदुभयाश्रितमिति चेत्। बाल्यादिकमपि तथैव। न चैवं 'गौरोऽहम्' इत्या-दिधिया काया-ऽऽत्मनोरभेदः सिध्यंश्चार्वाकमतं न प्रतिक्षिपेदिति वाच्यम्; स्यात्कारस्यैव चार्वाक-नैयायिकयोरुभयोरपि वारणे समर्थत्वात्, मृगपतेरिव मृग-वारणयोः। 'शरीरस्यापि बाल्यादिभेदेन भेद एव' इति वदतामभेदप्रत्यभिज्ञाक्षतिः। न च विभिन्नपरिणामवत्त्वलक्षणवैधर्म्यज्ञानकालोत्पत्तिकायास्तस्यास्तज्जातीयाभेदविषयकत्वमेवेति वाच्यम्; घटे श्यामत्व-रक्तत्वयोरिव शरीरे विभिन्नपरिमाणयोर्विधर्मत्वेनाप्रतिसंधानात्। विशिष्टवैधर्म्यस्य शुद्धव्यक्त्यभेदाविरोधित्वं च समानम्।

येऽपि 'उक्तप्रत्यभिज्ञाभीता बाल्यादिभेदेऽपि शरीरमेकमेव' इत्येकान्तेऽभिनिविशन्ते, तदुक्तं पदार्थरत्नमालाकृता— 'परे तु— 'तत्राश्रय एक एव, प्रत्यभिज्ञानात्' इति मन्यमानाः परिमाणान्तरोत्पादमाहुः' इति। तेऽपि मन्दाः, अबाधितभेद-व्यवहारादिविलोपात्। अथ 'युवा न बालः' इत्यत्र यूनि बालवैधर्म्यमेव भासते। तत्र नञो वृत्तिमान् भिन्नं चार्थः, वृत्तिमति बालत्वविशिष्टविशेषणावच्छेदककालावच्छिन्नाधेयतया वृत्तिमान्, भिन्ने तत्रैव कालादिरप्यन्वेति; तथा च 'इदानीं न बालः' इत्यस्य 'बालत्वविशिष्टवृत्तिमद्भिन्नैतत्कालीनधर्मवान्' इत्यर्थः। युक्तं चैतत्, 'न पृथग्' इति प्रतीतेस्तदवधिकपृथक्त्वाभाव-वद्द्रव्यत्वेन तदन्योन्याभावाभावसिद्धेः। तदाहुर्न्यायाचार्याः— 'श्यामाद् रक्तो विधर्मा न तु पृथग्' इति चेत्। न, 'प्राग् न

बालः' इत्यस्याप्यापत्तेः, बाल्यकालावच्छेदेन बालवृत्तिभिन्नस्य सत्त्वादेः प्राक्कालवृत्तेर्यूनि सत्त्वात्, ईदृशश्यामवैधर्म्यस्य श्यामनिष्ठत्वात् 'श्यामो न श्यामः' इत्यादेरपि प्रसङ्गात् । प्रत्यक्षसिद्धभेदप्रतीतेरपह्नवे प्रत्यभिज्ञायामप्यनाश्वासात्, अभेदसिद्धावपि भेदाविरोधात्, भेदाभेद एव प्रत्यभिज्ञाया उपपादयिष्यमाणत्वाच्चेति दिग् । तदेवमन्वयादिमयमेव वस्त्विति सिद्धम् ।

न चैवमनेकान्ते 'षडेव जीवनिकायाः' इति श्रद्धानवतां सम्यक्त्वभङ्गः, विभागवाक्याद् न्यूनतालाभेऽनेकान्तव्याघाताद् मिथ्यात्वापत्तेरिति वाच्यम्; भावतस्तेषामनेकान्तपरिज्ञानशून्यानामसम्यग्दृष्टित्वादेव, जीवराश्यपेक्षया तेषां कायानामपि पुद्गलतया, जीव-पुद्गलप्रदेशानां च परस्पराविनिर्भागवृत्तितयैकत्वस्याश्रद्धानात्, द्रव्यत एव च 'भगवतैवमुक्तम्' इति जिनवचनरुचिस्वभावत्वेन सम्यग्दृष्टित्वात् । तदुक्तम्—

"[1]णिअमेण सद्दहंतो छक्काए भावओ ण सद्दहइ । हंदी अपज्जवेसु वि सद्दहणा होइ अविभत्ता ॥ १ ॥" इति ।

न चैवं तत्र सम्यग्दृष्टित्वव्यवहारेऽपि सम्यग्दर्शनप्रत्ययिकनिर्जरानापत्तिः, नय-निःक्षेपादिपरिच्छेदाधीनसकलसूत्रार्थपरिज्ञानसाध्यविशिष्टप्रवचनरुचिस्वभावभावसम्यक्त्वसाध्यनिर्जरानवाप्तावपि भावसम्यक्त्वसाधकतया द्रव्यसम्यक्त्वस्वरूपव्यवस्थितेर्मार्गानुसार्यवबोधमात्रानुषक्तरुचिजन्यनिर्जरानपायात् । इदं तु ध्येयम्– ज्ञान-दर्शन-चारित्राणां शिबिकावाहकपुरुषवद् मिलितानामेव मोक्षहेतुत्वाभिधानादगीतार्थे तदभावेन मोक्षानापत्तेः, अनेकान्तपरिच्छेदरूपस्य ज्ञानस्य गीतार्थे साक्षात्, अगीतार्थे च स्वाश्रयपारतन्त्र्येण हेतुत्वम् । निश्चयतस्तद्गतफले तद्गताध्यवसायस्यैव हेतुत्वेऽपि गीतार्थापेक्ष एवागीतार्थस्य प्रतिक्षणविल-

१ नियमेन श्रद्दधानः षट् कायान् भावतो न श्रद्दधाति । हन्तापर्यवेष्वपि श्रद्धानं भवत्यविभक्तम् ॥ १ ॥ २ सम्मतिसूत्रे १२५ ।

क्षणस्तथाभूतपरिणामः, नान्यथा। प्रकाशकमपेक्ष्यैव हि प्रकाश्यः प्रकाश्यस्वभावो न त्वन्धकारमाकाशादिकं वेति। एवं चापवादिक एकाकिविहारविधिरपि गीतार्थमपेक्ष्यैव, न त्वगीतार्थम्, तस्य गीतार्थपरतन्त्रस्यैव कर्ममात्रेऽधिकारित्वादिति विवेचितमेतदध्यात्ममतपरीक्षायाम्।

एवं 'गच्छति' 'तिष्ठति' इत्यादौ 'दहनाद् दहनः' 'पचनात् पचनः' इत्यादौ जीवद्रव्यमजीवद्रव्यं चेत्यादावप्यन्वय-व्यतिरेकव्याप्तिर्भावनीया, गति-स्थित्यादिपरिणतस्याप्यूर्ध्वगतिभूतलस्थित्याद्यपेक्षयैव गति-स्थितिमत्त्वात्; अन्यथाऽभिप्रेतदेशप्राप्तिस्थितिवदनभिप्रेतदेशप्राप्ति-स्थित्योरपि प्रसङ्गात्, तथास्वभावसत्त्वे कारणाभावस्याप्रयोजकत्वात्, कारणसमाजेन तथास्वभावस्यैवाक्षेपात्, अन्यथाऽतिप्रसङ्गात्। दहनादेरपि दाहादिपरिणामयोग्यापेक्षयैव दहनादित्वात्, अन्यथा चातथात्वात्, अदहनस्याप्युदकादिद्रव्यस्य स्वयमदहनत्वेऽपि पृथिव्याद्यदहनव्यावृत्ततया कथञ्चिदतथात्वात्, समयाविरोधेन भजनाप्रवृत्तेः; जीवा-ऽजीवयोरपि कुम्भाद्यपेक्षया जीवापेक्षया चातथात्वात्; अन्यथा सर्वस्य सर्वात्मकतापत्तेः। तदिदमाह—

"[1]गइपरिणयं गई चेव केइ णिअमेण दविअमिच्छंति। तं पि अ उड्ढगइअं तहा गई अण्णहा अगई ॥ १ ॥

गुणणिव्वत्तिअसण्णा एवं दहणादओ वि दट्ठव्वा। जं तु जहा पडिसिद्धं दव्वमदव्वं तहा होइ ॥ २ ॥

---

१ गतिपरिणतं गत्यैव केचिद् नियमेन द्रव्यमिच्छन्ति। तदपि चोर्ध्वगतिकं तथागतेरन्यथाऽगतेः ॥ १ ॥
गुणनिर्वर्तितसंज्ञा एवं दहनादयोऽपि द्रष्टव्याः। यत्तु यथा प्रतिषिद्धं द्रव्यमद्रव्यं तथा भवति ॥ २ ॥

[1]"कुंभो ण जीवदविअं जीवो वि ण होइ कुंभदविअं ति। तम्हा दो वि अदविअं अण्णोण्णविसेसिआ हुंति[2] ॥३॥" इति।

नन्वेवमजीवो जीवापेक्षया नाजीव इति जीवोऽपि स्यात्। नैवम्, अभावपरिणतेः परापेक्षत्वेऽपि भावपरिणतेः स्वापेक्षत्वात्। नन्वेवं जीवदेशो नाजीवो नवा संपूर्णजीव इति नोजीवः स्यात्; स्यादेवेति चेत्; कथं त्रैराशिकनिरासः स्यात्? इति चेत्। सत्यम्, एकान्तमाश्रयत एव त्रैराशिकस्य नयान्तरेण निरासात्; सैद्धान्तिकैस्तु नयमतभेदेन तथाभ्युपगमात्। तथाहि– 'जीवो नोजीवः अजीवो नोजीवः' इत्याकारिते नैगमदेश-संग्रह-व्यवहार-जुसूत्रसांप्रतसमभिरूढा जीवं प्रत्यौपशमिकादिभावग्राहिणः पञ्चस्वपि गतिषु 'जीवः' इति जीवद्रव्यं प्रतियन्ति, 'नोजीवः' इति च नोशब्दस्य सर्वनिषेधार्थपक्षेऽजीवद्रव्यमेव, देशनिषेधार्थपक्षे च देशस्याप्रतिषेधाज्जीवस्य देश-प्रदेशौ; 'अजीवः' इति चाकारस्य सर्वप्रतिषेधार्थत्वात् पर्युदासाश्रयणाच्च जीवादन्यं पुद्गलद्रव्यादिकमेव; 'नो अजीवः' इति च सर्वप्रतिषेधाश्रयणे जीवद्रव्यमेव, देशप्रतिषेधाश्रयणे चाजीवस्यैव देश-प्रदेशौ। एवंभूतस्तु जीवं प्रत्यौदयिकभावग्राहको 'जीवः' इत्याकारिते भवस्थमेव जीवं गृह्णाति, न तु सिद्धं, तत्र जीवनार्थानुपपत्तेः, आत्म-सत्त्वादिपदार्थोपपत्तेरात्म-सत्त्वादिरूपस्तु सोऽपि स्यादेव। 'नोजीवः' इति चाजीवद्रव्यं, सिद्धं वा; 'अजीवः' इति चाजीवद्रव्यमेव, 'नो अजीवः' इति च भवस्थमेव जीवम्, देश-प्रदेशौ तु न स्वीकुरुते संपूर्णवस्तुग्राहित्वादयम्। इत्यधिकं नयरहस्ये।

एतेन 'अन्वयादिमयत्वे वस्तुनो घटदेशो न घटो नाप्यघट इत्यवक्तव्यः स्यात्' इति प्रावादुकोक्तिर्निरस्ता। घट-

---

१ कुम्भो न जीवद्रव्यं जीवोऽपि न भवति कुम्भद्रव्यमिति। तस्माद् द्वावप्यद्रव्यमन्योन्यविशेषितौ भवतः ॥३॥ २ सम्मतिसूत्रे गाथा १२६,१२७,१२८।

पदस्य स्कन्धवृत्तित्वे तत्र 'अघटः' इत्यवोक्तेः,"यथा न खण्डं चक्रम्, सकलं चक्रम्, तथा न धर्मास्तिकायस्य प्रदेशो धर्मास्तिकायः" इति प्रवचनवचनात्। देशवृत्तित्वे च 'नोघटः' इत्येवोक्तेः, तद्देशत्वे सति तद्देशाभावस्य नोपदार्थत्वादिति। एकान्ततिमिरविलुप्तदृशां त्वत्रार्थे महानेवान्धकारः, तथाहि— प्रतीयते तावदयं तन्त्वादिर्न पटादेः पृथगिति सर्वैरविगानेन। तथा च तत्र पटावधिकपृथक्त्वाभाववद्द्रव्यत्वात् पटभेदाभावोऽप्यावश्यकः। न च तत्रान्यादृशमेवापृथक्त्वं प्रतीयते, न तु पृथक्त्वाभावरूपम्, भिन्नयोर्द्रव्ययोरपृथक्त्वायोगादिति वाच्यम्, तयोर्भेदसिद्धावुक्तप्रतीतौ मुख्यपृथक्त्वाभावानवगाहित्वसिद्धिः, तत्सिद्धौ च तयोर्भेदसिद्धिः, अन्यथा भेदधियस्तद्धियैव बाधनादित्यन्योन्याश्रयात्, 'न पृथग्' इति प्रतीतेः सर्वत्रैकाकारत्वेन विषयवैलक्षण्यायोगाच्च।

नन्वेवं क्षीर-नीरयोरपृथक्त्वादभेदः स्यादिति चेत्। किं न स्यात्?। स्वरूपे सांकर्यादिति चेत्। न, अनेकान्ते यथादर्शनं संकीर्णा-ऽसंकीर्णोभयरूपतोपपत्तेः, स्वभावभेदं विना संबन्धसंकरस्याप्यसंभवात्। यद्येवम्, अविभक्तयोः क्षीरनीरयोरपृथक्त्वमेव, तर्हि हंसचञ्चूविभक्तयोरपि तयोः पृथक्त्वं किं न स्यात्? इति चेत्। न, विभागे पृथक्त्वस्यैवोपपत्तेर्द्रव्यात्विच्छेदेऽपि पर्यायविच्छेदात्। यदि चैवमनुभवसिद्धमपि तन्तु-पटादीनामपृथक्त्वं प्रतिक्षिप्यते, तदा घटादावपि किं मानम्?। यश्चैतद्दोषभीतोऽवयवा-ऽवयविनोः स्वतन्त्रावेव भेदा-ऽभेदौ स्वीकरोति, तस्यापि पटैकदेशोऽपटः पटश्चेत्यवक्तव्यः स्यात्। तस्माद् 'न समुद्रोऽयं नाप्यसमुद्रः किन्तु समुद्रैकदेशः' इतिवत्, 'नायं पटो नाप्यपटः किन्तु पटैकदेशः' इति व्यवहारनिर्वाहार्थं परस्पराविनिर्भागवृत्त्यन्वय-व्यतिरेकवदेव स्वीकर्तव्यमिति स्थितम्॥ ३०॥

उक्तमेव स्पष्टयन्नाह—

**अन्वयो व्यतिरेकश्च द्रव्यपर्यायसंज्ञितौ। अन्योन्यव्याप्तितो भेदाभेदवृत्त्यैव वस्तु तौ॥३१॥**

अन्वयो व्यतिरेकश्चेत्येतावंशौ द्रव्य-पर्यायसंज्ञितौ– द्रव्यं पर्यायश्चेति द्रव्य-पर्यायपदवाच्यौ। एतेन 'द्रव्यं, गुणाः, पर्यायाश्च' इति विभागः केषाञ्चिदनभिज्ञस्वयूथ्यानां परयूथ्यानां वा निरस्तः, विभिन्ननयग्राह्याभ्यां द्रव्य-पर्यायत्वाभ्यामेव विभागात्। यदि च गुणोऽप्यतिरिक्तः स्यात् तदा तद्ग्रहार्थं द्रव्यार्थिक-पर्यायार्थिकवद् गुणार्थिकनयमपि भगवानुपादेक्ष्यत्, न चैवमस्ति, रूप-रस-गन्ध-स्पर्शानामर्हता तेषु तेषु सूत्रेषु "वण्णपज्जवेहिं" इत्यादिना पर्यायसंज्ञयैव नियमनात्। गुण एव तत्र पर्यायशब्देनोक्त इति चेत्। नन्वेवं गुण-पर्यायशब्दयोरेकार्थत्वेऽपि पर्यायशब्देनैव भगवतो देशना, इति न गुणशब्देन पर्यायस्य, तदतिरिक्तस्य वा गुणस्य विभागौचित्यम्। 'एकगुणकालः' 'दशगुणकालः' इत्यादौ गुणशब्देनापि भगवतो देशनाऽस्त्येवेति चेत्। अस्त्येव संख्यानशास्त्रधर्मवाचकगुणशब्देन, न तु गुणार्थिकनयप्रतिपादनाभिप्रायेण। येन च रूपेण विभिन्नमूलव्याकरणिनयग्राह्यता तेनैव रूपेण विभागः, अन्यथाविभागस्य संप्रदायविरुद्धत्वात्। अत एव "गुण-पर्यायवद् द्रव्यम्" इति सूत्रे गुण-पर्यायपदाभ्यां युगपद-ऽयुगपद्भाविपर्यायविशेषोपादानेऽपि न त्रैविध्येन सामान्यविभाग इति तत्त्वम्। तदिदमाहुः—

"रूव-रस-गंध-फासा असमाणग्गहणलक्खणा जम्हा। तम्हा दव्वाणुगया गुण त्ति ते केइ इच्छंति॥ १॥

---

१ तत्त्वार्थाधिगमसूत्रे ५। ३७। २ रूप-रस-गन्ध-स्पर्शा असमानग्रहणलक्षणा यस्मात्। तस्मादु द्रव्यानुगता गुणा इति तान् केऽपीच्छन्ति॥ १॥

दूरे ता अण्णत्तं गुणसद्दे चेव भावपारित्थं । किं पज्जवाहिए होज्ज पज्जवे चेव गुणसण्णा ॥ २ ॥
दो पुण नया भगवया दव्वट्ठिअ-पज्जवट्ठिआ णिअया । एत्तो अ गुणविसेसे गुणट्ठिअणओ वि जुज्जंतो ॥ ३ ॥
जं च पुण अरहया तेसु तेसु सुत्तेसु गोअमाईणं । पज्जवसण्णा णिअमा वागरिआ तेण पज्जाया ॥ ४ ॥
परिगमणं पज्जाओ अणेगकरणं गुण त्ति तुल्लट्ठा[2] । तहवि न गुण त्ति भण्णइ पज्जवणयदेसणा जम्हा ॥ ५ ॥
जंपंति अत्थि समए एगगुणो दसगुणो अणंतगुणो । रूवाइपरिणामो भन्नइ तम्हा गुणविसेसो ॥ ६ ॥
गुणसद्दमन्तरेण वि तं तु पज्जवविसेससंखाणं । सिज्झइ, णवरं संखाणसत्थधम्मो ण य गुणो त्ति ॥ ७ ॥
जह दससु दसगुणम्मि य एगम्मि दसत्तणं समं चेव । अहिअम्मि वि गुणसद्दे तहेव एयं पि दट्ठव्वं[3] ॥८'।" इति ।

---

१ दूरे तावदन्यत्वं गुणशब्द एव भावपारार्थ्यम् । किं पर्यवाधिके भवेत् पर्यय एव गुणसंज्ञा ॥ २ ॥
द्वौ पुनर्नयौ भगवता द्रव्यास्तिक-पर्यायास्तिकौ नियतौ । एताभ्यां च गुणविशेषे गुणास्तिकनयोऽपि युज्यमानः ॥ ३ ॥
यच्च पुनरर्हता तेषु तेषु सूत्रेषु गौतमादीनाम् । पर्यवसंज्ञा नियमाद् व्याकृता तेन पर्यायाः ॥ ४ ॥
परिगमनं पर्यायोऽनेककरणं गुण इति तुल्यार्थाः । तथापि न गुण इति भण्यते पर्यवनयदेशना यस्मात् ॥ ५ ॥
जल्पन्त्यस्ति समय एकगुणो दशगुणोऽनन्तगुणः । रूपादिपरिणामो भण्यते तस्माद् गुणविशेषः ॥ ६ ॥
गुणशब्दमन्तरेणापि तत्तु पर्यवविशेषसंख्यानम् । सिध्यति, नवरं संख्यानशास्त्रधर्मो न च गुण इति ॥ ७ ॥
यथा दशसु दशगुणे चैकस्मिन् दशत्वं सममेव । अधिकेऽपि गुणशब्दे तथैवैतदपि द्रष्टव्यम् ॥ ८ ॥
२ मुद्रितसम्मतौ 'एगट्ठा' इति पाठः । ३ सम्मतिप्रकरणे गाथा १०५, १०६, १०७, १०८, १०९, ११०, १११, ११२ ।

तौ- द्रव्य-पर्ययसंज्ञितावन्वय-व्यतिरेकौ, अन्योऽन्यव्याप्तितो हेतोः, भेदाभेदवृत्त्यैव- एकान्तभेदाभेदनियतसंबन्ध-व्यावृत्तया जात्यन्तरात्मिकया वृत्त्यैव, वस्तु- यथास्थितधीव्यपदेशनिबन्धनम्, अन्यथाऽन्योन्यव्याप्तत्वव्यवहारस्यैव तत्र दुर्घटत्वात् ॥ ३१ ॥

एतदेव विशदतरमाह—

नान्योऽन्यव्याप्तिरेकान्तभेदेऽभेदे च युज्यते। अतिप्रसङ्गादैक्याच्च शब्दार्थानुपपत्तितः॥३२॥

अन्योन्यव्याप्तिः- अन्योन्यव्याप्तत्वशब्दार्थः, एकान्तभेदे, अभेदे च- एकान्ताभेदे चेत्यर्थः, 'प्रतिपाद्ययोरभ्युपगम्यमाने' इति शेषः, न युज्यते- न घटते । कुतः ? इत्याह- अतिप्रसङ्गात्- एकान्तभेदेऽन्योन्यपदार्थोपपत्तावपि व्याप्तिपदार्थानुपपत्तेः, ऐक्याच्च- एकान्ताभेदे व्याप्तिपदार्थोपपत्तावप्यन्योन्यपदार्थानुपपत्तेश्च; शब्दार्थानुपपत्तितः- 'गुण-गुणिनावन्योन्यव्याप्तौ' इत्यादिप्रकृतवाक्यार्थानुपपत्तेः ॥ ३२ ॥

एतदेवान्वयमुखेनाह—

अन्योन्यमिति यद्भेदं व्याप्तिश्चाह विपर्ययम्। भेदाभेदे द्वयोस्तस्मादन्योन्यव्याप्तिसंभवः ३३

यत्- यस्मात्, 'अन्योन्यम्' इति पदं भेदमाह, तद्भिन्नतद्वृत्तित्वे सति तद्भिन्नतद्वृत्तित्वस्यान्योन्यपदार्थत्वात्, 'घट-पटावन्योन्यसंयुक्तौ' इत्यत्र 'घट-पटौ घटभिन्नपटवृत्तित्वे सति पटभिन्नघटवृत्तिर्यः संयोगस्तद्वृत्तौ' इत्यन्वयबोधदर्श-

नात्। व्याप्तिश्च– व्याप्तिपदं च, विपर्ययम्– अभेदम्, आह, 'घटो नीलव्याप्तः' इत्यत्र 'घटो नीलाभिन्नः' इति विवरणात्। तस्माद् द्वयोर्भेदाभेद एवाभ्युपगम्यमाने, अन्योन्यव्याप्तिसंभवः– अन्योन्यव्याप्तिशब्दार्थोपपत्तिः। एवं च गुण-गुण्यादिकमन्योन्यव्याप्तमिति शब्दादेव भेदाभेदसिद्धिः।

न च 'वह्न्यालोकावन्योन्यं व्याप्तौ' इतिवदत्र परस्परं व्याप्तिप्रत्यय एव समवायेन गुणादेस्तादात्म्येन गुण्यादिव्याप्तत्वात्, तादात्म्येन गुण्यादेश्च समवायेन गुणादिव्याप्तत्वादिति वाच्यम्; नील-घटयोरन्योन्यव्याप्तिप्रतीत्यनुपपत्तेः, क्षीर-नीरादिसाधारणान्योन्यव्याप्त्यभिप्रायेणैव तथाप्रयोगाच्चेति भावः। अपिच, 'घटो न नीलरूपम्' 'नीलरूपं न घटात् पृथक्' इति प्रत्यक्षतोऽपि गुण-गुण्यादावनुभूयेते एव भेदाऽभेदौ। न च 'नीलं न घटात् पृथक्' इत्यत्र घटावधिकपृथक्त्वाभाव एवार्थः, घटावृत्तिरूपे घटापृथक्त्वाप्रत्ययात्। न चात्र पृथक्पदस्यासमवेतत्वमर्थः, तथाच नीलं न घटासमवेतमित्यर्थ इति वाच्यम्; 'घटो न नीलात् पृथक्' इत्यस्यानुपपत्तेः, घटस्य नीलासमवेतत्वादेव, 'घटो घटत्वाद् न पृथक्' इत्यत्र घटत्वासमवेतत्वाप्रसिद्धेश्च।

किञ्च, 'घटो घटाद् न पृथक्' इत्यत्राभेदरूपमपृथक्त्वं प्रतीयते, इत्य[न्य]त्रापि तदेव। न हि पृथक्त्वं भेदादतिरिच्यते, 'घटः पटात् पृथक्' इत्यस्य 'पटाद् भिन्नः' इतिविवरणात्; पृथगादिपदयोगे पञ्चम्या आनुशासनिकत्वादेव 'घटान्न' इत्यादेरसंभवात्। तदेव चापृथक्त्वं तादात्म्यमिति गीयते, यत् प्रत्यभिज्ञानादिनियामकम्। अत एव पाकरक्ते घटे 'अयं न श्यामः' इति 'श्यामाद् न पृथक्' इति चोपपद्यते, अन्यत्वरूपभेदस्य, पृथक्त्वरूपभेदाभावस्य चान्योन्यानुविद्धस्यो- ॥२६२॥

पपत्तेः । न हि 'पृथक्त्वमन्यत्वमेव' इति नव्यनैयायिकानामिवास्माकमेकान्ताभ्युपगमः, येनानुपपत्तिः स्यात् । न च तेषामप्यत्र 'न पृथक्' इत्यस्य 'तत्तद्व्यक्तित्वावच्छिन्नभेदाभाववान्' इत्यर्थाद् नानुपपत्तिरिति वाच्यम्, सामान्यसंशयानिवृत्तेः, श्यामपदस्य लक्षणां विनापि यथाश्रुतार्थप्रतिसंधानाच्च ।

एतेन 'भेदा-ऽभेदयोरेकदैकत्र विरोध एव । न च भेदोऽन्योन्याभाव एव, अभेदस्तु तादात्म्यमिति न विरोधः, तादात्म्यस्याभेदव्यवहारेऽहेतुत्वात्' इति गङ्गेशाकूतं निरस्तम्; तादात्म्येनापि प्रकृते 'न पृथक्' इत्यभेदाभिलापरूपस्याभेदव्यवहारस्य जननादेव; 'प्रमेयमभिधेयम्' इत्यादावपि प्रमेयसामान्येऽभिधेयभेदस्तोमाभावविवक्षायां तदभेदव्यवहारोपपत्तेः, वने वनाभेदव्यवहारवत्; न चेदेवम्, प्रमेया-ऽभिधेययोस्तादात्म्यमपि दुर्घटं स्यात्, भेदाभेदविकल्पग्रासात् । अभिधेयतादात्म्यमभिधेयत्वमेव, अभिधेयवत्' इत्यादिधिया विशेषश्च । तत्र तादात्म्यस्यासंसर्गत्वात्, स्वरूपसंबन्धस्यैव संसर्गत्वादिति तु तुच्छम्, अभिधेयत्वा-ऽभिधेयस्वरूपाविशेषात् ।

एतेन 'तादात्म्यत्वादिसंसर्गतादिना विशेषः' इत्यपि निरस्तम्; अतिरिक्तमेव तादात्म्यत्वम्, इत्थमेव 'भूतलं संयोगि' भूतलं संयोगिमत्' इति ज्ञानयोर्वैलक्षण्यम्, आद्ये तादात्म्यत्वेन, अन्त्ये संयोगत्वादिना संयोगादेः प्रकारतावच्छेदकत्वस्वीकारात् । तादात्म्यमेव बाधिकम्, तत्तत्तादात्म्यत्वस्य तद्वृत्तिनानागुणादौ कल्पने, तत्र कारणतावच्छेदकत्वादिकल्पने च गौरवात् । इत्यपि न पेशलम्, अतिरिक्ततादात्म्यसंबन्धानुपपत्तेः, शबलवस्तुविशेषं विना धीविशेषानुपपत्तेः संयोगि-संयोगिमतोरेव कथञ्चिद्विशेषानुभवाच्चेति दिग् ।

किञ्च, अत्यन्तभिन्ना-ऽभिन्नाभ्यां व्यावृत्तं सामान्याधिकरण्यमपि भेदाभेदे प्रमाणम्, भेदाभेदोभयत्वेन साध्यत्वे साध्याप्रसिद्धेरभावात्। साध्यतावच्छेदकावच्छिन्नस्य हि प्रसिद्धिरपेक्षिता, न ह्येकत्र तत्प्रसिद्धिरपि, गौरवात्, घटे घटत्व-सत्तोभयानुमित्युच्छेदप्रसङ्गाच्च। एतेन 'एकान्तभेदाभेदान्यतराभावस्य भेदविशिष्टाभेदस्य वा साध्यतायां साध्याप्रसिद्धिः, प्रत्येकं साध्यतायां चासाधारण्यम्' इति निरस्तम्। न चोभयत्वमप्येकविशिष्टापरत्वमेवेत्युक्तदोषानतिवृत्तिरेवेति वाच्यम्, अविशिष्टयोरपि गोत्वा-ऽश्वत्वयोरुभयत्वप्रत्ययात्। न चैवं स्वतन्त्रभेदाभेदोभयसिद्धावपि मिलिततदुभयासिद्ध्योद्देश्यासिद्धेरर्थान्तरत्वम्, अन्तर्मुखव्याप्त्या मिलितत्वसिद्धेः; अन्यथा पर्वते वह्निसामान्यसिद्धावपि पर्वतीयवह्नेरसिद्धिप्रसङ्गात्। इत्यन्यत्र विस्तरः।

न च व्यतिरेकव्याप्तौ व्याप्याप्रसिद्धिः, प्रतियोगिमति तदभावायोगादिति वाच्यम्; तेन रूपेण प्रतियोगिमति तेन रूपेण तदभावस्यैवायोगात्। एतेन 'तत्रैव तत्-तदभावौ भिन्नावच्छेदेन वर्तेते, ज्ञायेते च; यथा वृक्षे मूल-शाखाद्यवच्छेदेन संयोग-तदभावौ, तदिह घटे घटत्वावच्छेदेन नीलत्वावच्छिन्नभेदो वर्ततां, ज्ञायतां वा, तदभावस्तु किमवच्छेदेन ?' इति निरस्तम्, अन्योन्यव्याप्तयोस्तयोर्देशभेदेनावृत्तावपि द्रव्यार्थता-पर्यायार्थतारूपभेदेनोपपत्तेः, यथेदंत्व-द्वित्वाभ्यामेकत्व-द्वितयोः। विचित्र-रूपत्वाच्च वस्तुनो नयभेदेन विचित्रा प्रतीतिः, यथा शाखावच्छेदेन संयोगः, तदभावश्च मूलादिनानावच्छेदेन; तथा घटे नीलभेदोऽपि घटत्वावच्छेदेन, तदभावस्तु तत्तद्व्यक्तित्वादिनानावच्छेदेन। एकप्रतियोगितावच्छेदकावच्छिन्नभेद-तदभावयोर्विरुद्धाधिकरणतावच्छेदकावच्छेदेन वृत्तित्वनियमस्त्वसिद्धः, विरुद्धत्वस्थले विभिन्नत्वस्यैव लाघवेन निवेशौचित्यात्, इत्यपि नयविशेषानुरुद्धं शुद्धमनुजानीमः।

अपि च, 'नील-घटयोरभेदः' इत्यादिप्रयोग एव भेदाभेदाभ्युपगमं विना न सुघटः, चार्थे द्वन्द्वानुशासनात्, भेदस्य च चार्थत्वात्। अथ द्वन्द्वेन भेदस्य संसर्गतया प्रकारतया वा भानम्, द्वन्द्वस्य परस्परान्वितपदार्थबोधकत्वाच्च 'चैत्र-चैत्रपुत्रौ' इत्यादौ द्वितीयस्यैव चैत्रपदस्य स्वार्थसंसर्गधीजनकत्वात्, नामार्थयोर्भेदेनान्वयात्, द्वयोः प्राधान्यानुभवविरोधाच्चेति चेत्। न, द्वन्द्वे भेदाभानेऽभेदभ्रमाद्यनिवृत्तिप्रसङ्गात्, भिन्नतया भानादेव, द्वयोः प्राधान्यानुभवाच्च। किञ्च, भेदं विना द्विवचनानुपपत्तिः, द्वित्वस्य भेदनियतत्वात्। न च 'षडेव पदार्थाः' इत्यादौ षट्त्वादिवदत्र विभिन्नधर्मप्रकारकबुद्धिविषयत्वरूपं द्वित्वं, तच्च प्रकृते न भेदनियतमिति वाच्यम्, द्विवचनाद् निरुपचरितस्यैव द्वित्वस्य प्रतीतेः 'एको द्वौ' इत्यप्रतीतेरेकत्वावच्छिन्ने द्वित्वाविवक्षयैवोपपत्तेः। विचित्रनयविवक्षया तु तत्र द्वित्वतो(नो)द्वित्वादिकं प्रतीयत एव।

'यद्यद्धर्मप्रकारकबुद्धिविषयत्वं गौणीकृतद्वित्वादिव्यवहारनिमित्तं तत्तद्धर्मावच्छेदेन पर्याप्तम्, तेन 'एको द्वौ' इत्यादेर्व्युदासः' इत्येकान्तस्तु न शोभते, 'रूप-रसवतोरभेदः' इतिवत् 'रूप-रसवान् द्वौ' इत्यस्य प्रसङ्गात्, अप्रसङ्गाच्च 'घटौ' इत्येकशेषस्य। तत्र घटत्वादेर्द्वित्वावच्छेदकत्वेऽन्यत्राप्येकत्र घटत्वेन द्वित्वबोधस्य प्रमाणत्वापत्तेः। किञ्च, पदार्थभेदनियतत्वादपि द्वन्द्वस्य नील-घटयोरभेदसंवलितो भेदः। 'प्रतिपाद्यभेदनियतत्वमेव तस्य, क्वचित् पदार्थभेदे, क्वचित् पदार्थतावच्छेदकभेदे तत्प्रवृत्तेः' इति त्वेकघटाभिप्रायकघटपदद्वयेऽपि द्वन्द्वापत्तेर्न शोभते।

अथैकपदप्रतिपाद्यत्वसामानाधिकरण्येनापरप्रतिपाद्यत्वावच्छिन्नभेदे एकपदजन्यप्रतिपत्तिविषयितात्वसामानाधिकरण्येनापरपदजन्यप्रतिपत्तिविषयितात्वावच्छिन्नभेदे वा द्वन्द्वः, इत्थमेव मेयवदभिधेयवद्बोधकतदादिपदद्वन्द्वानपवाद इति चेत्।

न, विषयिताया ज्ञानस्वरूपत्वे तदभेदे तदभेदात्, तदिदंपदाभ्यां द्वन्द्वानुपपत्तेश्च, ताभ्यां तद्व्यक्तेरेवोपस्थापनात्, तत्तेदंतयोः परेण व्यक्त्यतिरिक्तयोरनभ्युपगमात्, संस्कारज-प्रत्यक्षज्ञानाभ्यामेव तदिदंपदोल्लेखसमर्थनात् । यदि च विषयाभेदेऽपि ज्ञानविषयताभेदः, तदा साकारवादापत्तिरित्यादि सूक्ष्ममीक्षणीयम् । 'द्रव्य-पर्याययोर्वास्तवोऽभेद एव, संख्यासंज्ञालक्षणकार्यभेदात् त्वस्वाभाविको भेदः' इति केषांचिन्मतमरमणीयम्, भेदस्यास्वाभाविकत्वे संख्यादीनां निरालम्बनत्वप्रसङ्गात्, प्रमीयमाणत्वेनावास्तवत्वायोगाच्च । प्राधान्यमप्राधान्यं पुनराभिमानिकमेव । इति विवेचितमन्यत्र ॥ ३३ ॥

तदिदमखिलमभिप्रेत्योपसंहरन्नाह—

**एवं न्यायाविरुद्धेऽस्मिन्विरोधोद्भावनं नृणाम् । व्यसनं वा जडत्वं वा प्रकाशयति केवलम् ॥३४॥**

एवम्- उक्तदिशा, न्यायाविरुद्धे- प्रमाणाप्रतिषिद्धे, अस्मिन्- भेदाभेदे, नृणां- तार्किकपुरुषाणां, विरोधोद्भावनम्- 'विरुद्धौ भेदा-ऽभेदौ नैकत्र संभवतः' इत्यभिधानम्, व्यसनं- जानतामप्यभिनिवेशेन स्याद्वादमात्सर्यधीः, जडत्वं वा- सूक्ष्मार्थानुत्प्रेक्षित्वलक्षणं बुद्धिमान्द्यं वा, केवलं प्रकाशयति, तत्कार्यत्वादस्य, वस्तुतो विरोधासिद्धेः ॥ ३४ ॥

एतदेव स्पष्टयति—

**न्यायात्खलु विरोधो यः स विरोध इहोच्यते । यद्वदेकान्तभेदादौ तयोरेवाप्रसिद्धितः ॥३५॥**

न्यायात्- प्रमाणात्, यः खलु विरोधः- अनुभवबाधलक्षणः, स एह- प्रकृतविचारे, विरोध उच्यते लोकेन,

नान्यः । किंवत् ? इत्याह- यद्वत्- यथा, 'एकान्तभेदादावभ्युपगम्यमाने' इति शेषः, तयोरेव- द्रव्य पर्याययोरेव, अप्रसिद्धितः- स्वरसोदयदनुभवानुपपत्तेः ॥ ३५ ॥

कथम् ? इत्याह—

**मृद्द्रव्यं यन्न पिण्डादिधर्मान्तरविवर्जितम् । तद्वा तेन विनिर्मुक्तं केवलं गम्यते क्वचित् ॥३६॥**

मृद्द्रव्यं यद् यस्माद् न पिण्डादिधर्मान्तरविवर्जितं केवलं क्वचिद् गम्यते । तेन द्रव्यात्मकाभेदमात्राभ्युपगमे पिण्डादिभेदाप्रसिद्धिः। तद् वा- पिण्डादिधर्मान्तरं, तेन- मृद्द्रव्येण, विनिर्मुक्तं- केवलमाकारमात्रमेव, न क्वचिद् गम्यते। तेन पर्यायात्मकभेदमात्राभ्युपगमे मृद्द्रव्यादिभेदाप्रसिद्धिः ॥ ३६ ॥

ततः किम् ? इत्याह—

**ततोऽसत्तत्तथा न्यायादेकं चोभयसिद्धितः । अन्यत्रातो विरोधस्तदभावापत्तिलक्षणः॥३७॥**

ततः- तस्मात्, तत्- मृद्द्रव्यपिण्डादि, तथा- परस्परनिरपेक्षम्, न्यायात्- अननुभवलक्षणात्, असत्- असिद्धम्, एकं च- एकमेव मृद्द्रव्यपिण्डादि, 'असत्' इति योगः, उभयसिद्धितः- तथोभयोपलब्धेः । यत एवम्, अन्यत्र- केवलभेदपक्षेऽभेदपक्षे वा, अतो विरोधः, तदभावापत्तिलक्षणः- द्रव्य-पर्यायाभावप्रसङ्गलक्षणः, स्वानभिमतार्थोपलम्भे परस्य स्वेनैव स्वाभिमतार्थोपलम्भेऽपि परेणासद्विषयत्वस्य वक्तुमशक्यत्वात्, स्वतन्त्रधर्म-धर्मिस्वीकारेऽपि वैशेषिकादीनां तत्र भेदाभेद-

धियोरेकतरभ्रान्तत्वे तदितरभ्रान्तत्वस्य तुल्यत्वात् । ततः सामानाधिकरण्यानुभवबाधरूपो विरोधो न भेदाभेदयोरिति सिद्धम् ।

सहानवस्थाननियमादनयोर्बाधितमेव सामानाधिकरण्यमिति चेत् । न, तन्नियमासिद्धेः, वह्न्यादौ रूपस्य गन्धासामानाधिकरण्यदर्शनेऽपि पृथिव्यां तत्सामानाधिकरण्यवत् , पर्वत-महानसयोः पर्वतीय-महानसीयवह्न्यभावयोः परस्परासमानाधिकरण्यदर्शनेऽपि ह्रदे तदुभयसामानाधिकरण्यवद् भेदाभेदयोः प्रतियोगिविशेषितयोरन्यत्रासमाविष्टयोर्दर्शनेऽपि प्रकृते समावेशसंभवात् । नन्वेवं गन्ध-रूपयोरिव भेदा-ऽभेदयोरप्यनवच्छिन्नत्वं स्यादिति चेत् । अनवच्छिन्नयोरनवच्छिन्नत्वमेव, अवच्छिन्नयोश्चावच्छिन्नत्वमेवेति किं नावबुध्यसे ? । वस्तुतो न क्वचिदेकान्तः, रूप-गन्धयोरपि भिन्नस्वभावावच्छेदेन पृथिवीवृत्तित्वोपगमात् , अन्यथैकत्वापातात् , 'रूपस्वभावेन गन्धो न पृथिवीवृत्तिः' इति व्यवहाराच्चेति । एतेन परस्परग्रहप्रतिबन्धकग्रहविषयत्वरूपो विरोधोऽपि निरस्तः, भेदा-ऽभेदग्रहयोर्विलक्षणसामग्रीकत्वेनैकग्रहेऽपराग्रहात् ; तेन रूपेण च रूपवत्ताग्रहेऽपि गन्धवत्ताऽग्रहादिति द्रष्टव्यम् ॥३७॥

दोषान्तरनिराकरणायाह—

**जात्यन्तरात्मके चास्मिन्नानवस्थादिदूषणम् । नियतत्वाद्विविक्तस्य भेदादेश्चाप्यसंभवात् ३८**

जात्यन्तरात्मके च– अन्योन्यानुविद्धे च, अस्मिन्– भेदाभेदेऽभ्युपगम्यमाने, अनवस्थादि दूषणं न भवति– 'येन स्वभावेन भेदस्तेनाभेदः' इत्युक्तौ विरोधः, इति भिन्नाभ्यां स्वभावाभ्यां तदङ्गीकारे तयोरपि तत्र वृत्तौ स्वभावभेदगवेषणा-

यामनवस्था, आदिना ताभ्यां स्वभावाभ्यां भेदाभेदस्वभावयोः, भेदाभेदस्वभावाभ्यां च तयोः स्वभावयोर्वृत्तित्वे परस्पराश्रयः, स्वापेक्षितापेक्षितापेक्षायां चक्रकम्, स्वापेक्षायामेव चात्माश्रयः, येन स्वभावेन भेदस्याधिकरणं वस्तु तेनाभेदस्य, येन च स्वभावेनाभेदस्याधिकरणं तेन भेदस्य चेति संकर इत्यादि द्रष्टव्यम्। कथमेतद् दूषणं न भवति ? इत्याह– नियतत्वात्– स्वभावनियतत्वाद् भेदाभेदवस्तुनः, तथा चोत्पत्ति-ज्ञप्त्यप्रतिबन्धाद् नानवस्थादिकम्। तदुक्तम्– 'न चानवस्था, अन्यनिरपेक्षस्वस्वरूपत एव तथात्वोपपत्तेः' इति। अन्यैरप्युक्तम्– "मूलक्षयकरीं प्राहुरनवस्थां हि दूषणम्" इति। तथा, विविक्तस्य– अनुभवानुपातिस्वभावबहिर्भूतस्य, भेदादेश्च– एकान्तवादिपरिकल्पितस्य, असंभवात्, तेन न संकर इति भावः ॥ ३८ ॥

किञ्च, परेण प्रसङ्ग एव कर्तुं न शक्यते, भेदादिपदानां केवलभेदादेरदर्शनात्, तत्र शक्तिग्रहासंभवेन प्रयोगस्यैवानुपपत्तेरित्यभिप्रेत्याह—

**नाभेदो भेदरहितो भेदो वाऽभेदवर्जितः। केवलोऽस्ति यतस्तेन कुतस्तत्र विकल्पनम् ?॥३९॥**

नाभेदो भेदरहितः, भेदो वाऽभेदवर्जितः, केवलोऽस्ति, 'ज्ञायते वा' इति शेषः; यतस्तेन कुतः, तत्र– केवले भेदेऽभेदे वा, विकल्पनं– प्रसङ्गापादनम्, परस्य युज्यते, आश्रयस्यैवासिद्धेः ?। सिद्धौ वा शबलस्वभावस्य तस्य व्याघातेन परविकल्पानवतारात्, आभाससिद्धदूषणेन च वस्त्वदूषणादिति भावः ॥ ३९ ॥

इदमेवाह—

येनाकारेण भेदः किं तेनासावेव किं द्वयम् ?। असत्त्वात्केवलस्येह सतश्च कथितत्वतः॥४०॥

येनाकारेण- येन स्वभावेन, भेदः, किं तेनासावेव- भेद एव, उत द्वयम्- भेदश्चाभेदश्चेति ?; आद्य एकान्तः, द्वितीये व्यतिकर इति भावः; एतद् विकल्पनं 'कुतः' इति प्राक्तनेन योगः ?। कुतः ? इत्याह— इह प्रक्रमे, केवलस्य भेदस्यासत्त्वात्- असिद्धत्वात्, सतश्च- सिद्धस्य च, कथितत्वतः- उक्तशबलस्वभावत्वात्। ततो निर्विषयाः सर्वे विकल्पा इति भावः ॥ ४० ॥

उपचयमाह—

यतश्च तत्प्रमाणेन गम्यते ह्युभयात्मकम्। अतोऽपि जातिमात्रं तदनवस्थादिकल्पनम् ॥४१॥

यतश्च तत्- अधिकृतवस्तु, प्रमाणेन- प्रत्यक्षेण, हि- निश्चितम्, उभयात्मकं- जात्यन्तरापन्नभेदाभेदभाजनम्, गम्यते, अतोऽपि तत्- परोक्तम्, इहानवस्थादिकल्पनम्, जातिमात्रम्- निर्युक्तिकविकल्पमात्रम्, प्रत्यक्षबाधात्; अन्यथा घटादेरपि विकल्पविशीर्णतया शून्यतापातादिति ॥ ४१ ॥

दोषान्तरनिराकरणमप्यतिदिशन्नाह—

एवं ह्युभयदोषादिदोषा अपि न दूषणम्। सम्यग्जात्यन्तरत्वेन भेदाभेदप्रसिद्धितः॥४२॥

एवं हि– भेदाभेदात्मकवस्तुनः प्रत्यक्षसिद्धत्वे हि, उभयदोषादिदोषा अपि– उभयदोषाभ्यां साधारणाकारेण निश्चेतुमशक्यत्वात् संशयः, ततोऽप्रतिपत्तिः, ततो विषयव्यवस्थाहानिरित्यादयोऽपि, न दूषणम् । कुतः ? इत्याह– सम्यग्– नयप्रमाणोपयोगेन, जात्यन्तरत्वेन– अन्योन्यव्याप्तत्वेन, भेदाभेदप्रसिद्धितः– भेदाभेदनिश्चयात् । अयं भावः– प्रत्येकं नयार्पणया प्रत्येकरूपेण, युगपत्तदर्पणया चोभयरूपेण, सप्तभङ्ग्यात्मकप्रमाणाच्च प्रतिनियतसकलरूपैर्निश्चयाद् नोभयदोषादितः संशयादिकम् । दुर्नयवासनाजनितं संशयादिकं चेदृशविशेषदर्शननिरस्यमिति न मिथ्यात्वदोषात् तथाऽनिश्चीयमानमपि न तथा वस्त्विति स्मर्तव्यम् । न ह्ययं स्थाणोरपराधो यदेनमन्धो न पश्यतीति ॥ ४२ ॥

यदनेनापाकृतं तदुपन्यस्यति––

**एतेनैतत्प्रतिक्षिप्तं यदुक्तं पूर्ववादिभिः । विहायानुभवं मोहाज्जातियुक्त्यनुसारिभिः॥४३॥**

एतेन– अनन्तरोदितेन, एतत्– वक्ष्यमाणम्, प्रतिक्षिप्तं– निराकृतम्, यत्, अनुभवम्– अविगानेन प्रवृत्तं शबलाध्यक्षम्, मोहात्– कुतर्कवासनाजनितादज्ञानात्, विहाय– अप्रामाण्य-संशयादिविषयीकृत्य, जातियुक्त्यनुसारिभिः– असद्विकल्पमात्रकदाग्रहग्रहिलैः, पूर्ववादिभिः– देवबन्धुप्रमुखैः, उक्तम् ॥ ४३ ॥

तद्वचनमेवाह––

**'द्रव्य-पर्याययोर्भेदे नैकस्योभयरूपता । अभेदेऽन्यतरस्थाननिवृत्ती चिन्त्यतां कथम्' ? ४४**

द्रव्य-पर्याययोर्भेदेऽभ्युपगम्यमाने नैकस्य वस्तुन उभयरूपता, तयोर्भेदाभिधानात्, एवं चैकमुभयमित्यसिद्धम्। अभेदे पुनरभ्युपगम्यमाने कथमन्यतरस्थान-निवृत्ती– द्रव्यान्वय-पर्यायविच्छेदौ ? इति चिन्त्यताम्, एकस्य निवृत्ति-स्थित्यनुपपत्तेः ॥ ४४ ॥

अत्रैव हेतुमाह—

**'यन्निवृत्तौ न यस्येह निवृत्तिस्तत्ततो यतः। भिन्नं नियमतो दृष्टं यथा कर्कः क्रमेलकात्' ४५**

इह– जगति, यन्निवृत्तौ यस्य न निवृत्तिस्तदनिवर्तमानं, ततः– निवर्तमानात्, यतः– यस्मात्, नियमतः– सामान्यव्याप्तिबलात्, भिन्नं दृष्टं– भिन्नमनुमितम्। निदर्शनमाह– यथा कर्कः– अश्वविशेषः, क्रमेलकात्– उष्ट्राद् निवर्तमानात्, अनिवर्तमानो भिन्नो दृष्ट इति भावः ॥ ४५ ॥

निदर्शितार्थमेव प्रकृते योजयन्नाह—

**निवर्तते च पर्यायो न तु द्रव्यं ततो न सः। अभिन्नो द्रव्यतोऽभेदे-निवृत्तिस्तत्स्वरूपवत् ४६**

निवर्तते च पर्यायः– पिण्डादिः, न तु द्रव्यं– मृदादि। ततः सः– पर्यायः, द्रव्यतोऽभिन्नो न, किन्तु भिन्न एव, यतोऽभेदे तत्स्वरूपवत्– मृद्द्रव्यस्वरूपवत्, अनिवृत्तिः स्यात् पर्यायस्य। अथवा, नञोऽप्रश्लेषे निवृत्तिः स्याद् मृद्द्रव्यस्य, तत्स्वरूपवत्– पर्यायस्वरूपवदिति व्याख्येयम् ॥ ४६ ॥

यथैतत् प्रतिक्षिप्तं तथा योजयन्नाह—

**प्रतिक्षिप्तं च यद्भेदाभेदपक्षोऽन्य एव हि । भेदाभेदविकल्पाभ्यां हन्त ! जात्यन्तरात्मकः ४७**

प्रतिक्षिप्तं चेदम्, यद्– यस्मात्, अन्य एव हि– निश्चितं विलक्षण एव, भेदाभेदविकल्पाभ्यां– प्रत्येकभेदाभेदपक्षाभ्याम्, हन्त ! जात्यन्तरात्मकः– इतरेतरगर्भस्वात्मा, भेदाभेदपक्षः । 'हन्त' इति परानवबोधनिबन्धनखेदव्यञ्जकम् ॥ ४७ ॥

यदि नामैवं ततः किम् ? इत्याह—

**जात्यन्तरात्मकं चैनं दोषास्ते समियुः कथम् । भेदेऽभेदे च येऽत्यन्तजातिभिन्ने व्यवस्थिताः ?**

जात्यन्तरात्मकं चैनं– भेदाभेदविकल्पम्, ते– दोषाः, कथं समियुः– आगच्छेयुः, येऽत्यन्तजातिभिन्ने भेदेऽभेदे च व्यवस्थिताः– लब्धप्रसराः । एकान्तभेद एव ह्येकस्योभयरूपतानुपपत्तिदोषः, एकान्ताभेद एव चान्यतरास्थिति-निवृत्त्य-नुपपत्तिः । भेदाभेदे तु न कोऽपि दोषावकाश इति ।

अत्रायं संप्रदायः– प्रत्येकमुपढौकमानो दोषो न ढौकते जात्यन्तरतापत्तौ । दृष्टा हि कैवल्यपरिहारेण तत्प्रयुक्तायाः परस्परानुवेधेन जात्यन्तरभावमापन्नस्य गुड-शुण्ठीद्रव्यस्य कफ-पित्तदोषकारिताया निवृत्तिः; तदाहुः—

"गुडो हि कफहेतुः स्याद् नागरं पित्तकारणम् । द्वयात्मनि न दोषोऽस्ति गुडनागरभेषजे ॥ १ ॥" इति ।

अथोक्तदोषनिवृत्तिर्न जात्यन्तरनिमित्ता, किन्तु मिथोमाधुर्य-कटुकत्वोत्कर्षहानिप्रयुक्तेति चेत् । न, द्वयोरेकतरबलवत्त्व

एवान्यापकर्षसंभवात्, तन्मन्दतायामपि मन्दपित्तादिदोषापत्तेश्च। एतेनेतरेतरप्रवेशादेकतरगुणपरित्यागोऽपि निरस्तः, अन्यतरदोषापत्तेः, अनुभवबाधाच्च। अथ मिलितगुड शुण्ठीक्षोदेन नैकं द्रव्यमारभ्यते, विजातीयानां द्रव्यानारम्भकत्वात्, गुडत्व-शुण्ठीत्वसंकरप्रसङ्गात्; किन्तु कारणविशेषोपनीतरसविशेषवद् गुड-शुण्ठीक्षोदसमाजादेव धातुसाम्याद् गुणदोषनिवृत्तिरिति चेत्। न, समुदितगुड-शुण्ठीद्रव्यस्याप्येकत्वपरिणतिमत एवोपलम्भात्, धातुसाम्ये रसविशेषवद् द्रव्यविशेषस्यापि प्रयोजकत्वात्, द्रव्यादिवैचित्र्यादाहारपयोप्तिवैचित्र्योपपत्तेः, अनेकान्ते सांकर्यासंभवात्, नृसिंहत्ववदुपपत्तेः। अथ समुदितगुडशुण्ठीद्रव्यं प्रत्येकगुड-शुण्ठीभ्यां विभिन्नमेकस्वभावमेव द्रव्यान्तरम्, न तु मिथोऽभिव्याप्यावस्थितोभयस्वभावं जात्यन्तरमिति चेत्। न, तस्य द्रव्यान्तरत्वे विलक्षणमाधुर्य-कटुकत्वाननुभवप्रसङ्गात्, एकस्वभावत्वे दोषद्वयोपशमाहेतुत्वप्रसङ्गात्, उभयजननैकस्वभावस्य चानेकत्वगर्भत्वेन सर्वथैकत्वायोगात्, एकया शक्त्योभयकार्यजननेऽतिप्रसङ्गात्, विभिन्नस्वभावानुभवाच्च। तस्माद् माधुर्य-कटुकत्वयोः परस्परानुवेधनिमित्तमेवोभयदोषनिवर्तकत्वमित्यादरणीयम्।

ननु जात्यन्तरत्वेऽपि प्रत्येकदोषनिवृत्तिरिति न नियमः, पृथक् स्निग्धो-ष्णयोः कफ-पित्तकारित्ववत् समुदितस्निग्धोष्णस्यापि माषस्य तथात्वादिति चेत्। न, माषे स्निग्धो-ष्णत्वयोर्जात्यन्तरात्मकत्वाभावात्, अन्योन्यानुवेधेन स्वभावान्तरभावनिबन्धनस्यैव तत्त्वात्; अत्र च स्निग्धो-ष्णत्वयोर्गुञ्जाफले रक्तत्व-कृष्णत्वयोरिव खण्डशो व्याप्त्यावस्थानात्, जात्यन्तरात्मकस्निग्धोष्णत्वशालिनि च दाडिमे श्लेष्म-पित्तोभयदोषाकारित्वमिष्टमेव, "स्निग्धोष्णं दाडिमं हृद्यं श्लेष्म-पित्ताविरोधि च" इति वैद्यकवचनादिति। इदमिह तत्त्वम्- तद्भेदस्य तदेकत्वाभावादिनियतत्वेऽपि जात्यन्तरानात्मकस्यैव विलक्षणस्य तस्य

तथात्वात्, विलक्षणगुडत्वस्य कफकारितानियतत्ववद् न दोषः। एतेन 'मया भेदसामान्ये तन्नियमः कल्पनीयः, त्वया तु जात्यन्तरानात्मके तत्र, इति गौरवम्' इति निरस्तम्, प्रातिस्विकरूपेणैव तन्नियमोपपत्तेरिति दिग् ॥ ४८ ॥

देशयति—

**किञ्चिन्निवर्ततेऽवश्यं तस्याप्यन्यत्तथा न यत्। अतस्तद्भेद एवेह निवृत्त्याद्यन्यथा कथम्?॥**

तस्यापि– अधिकृतस्यापि वस्तुनः, किञ्चिदवश्यं निवर्तते, यदन्यत् किञ्चित् तथा न– न निवर्तत इत्यर्थः। अतः– निवर्तमानात्, तद्भेद एव– तस्यानिवर्तमानस्यांशस्य भेद एव, अन्यथा निवृत्त्यादि– निवृत्तिश्चानिवृत्तिश्चेति, कथम्? ॥ ४९ ॥

अत्रोत्तरम्—

**तस्येति योगसामर्थ्याद्भेद एवेति बाधितम्। अभिन्नदेशस्तस्येति यत्तद्व्याप्त्या तथोच्यते ॥**

तस्येति योगसामर्थ्यात्–'तस्य किञ्चिद् निवर्तते' इत्यत्र तस्येति षष्ठ्यर्थसंबन्धानुभवप्रामाण्यात्, भेद एवेति बाधितं परस्य वचनम्। ननु न बाधितमेतत्, 'चैत्रस्य धनम्' इत्यादौ भेद एव षष्ठ्यर्थसंबन्धदर्शनादित्याशङ्कायामाह– यत्– यस्मात्, 'तस्य' इति तद्व्याप्त्या– तत्स्वभावानुवेधेन, अभिन्नदेशः, तथा निवर्तत इति क्रियोपसंदानेन, उच्यते; तथा च 'तस्य' इत्यत्र 'राहोः शिरः' इतिवदभेदे षष्ठी, समवायनिरासात्, इतरसंबन्धानुपपत्तेरिति भावः ॥ ५० ॥

निगमयन्नाह—

अतस्तद्भेद एवेति प्रतीतिविमुखं वचः। तस्यैव च तथाभावात्तन्निवृत्तीतरात्मकम्॥५१॥

अतः- 'तस्य' इत्यस्याभेदं विनाऽनुपपत्तेः, 'तद्भेद एव' इति वचः, प्रतीतिविमुखं- प्रत्यक्षादिविरुद्धम्। कुतः ? इत्याह— तस्यैव च- वस्तुनः, तथाभावात्- तथापरिणमनात्, तद्- वस्तु, निवृत्तीतरात्मकम्- निवृत्तस्य-ऽनिवृत्तस्यात्मकं यत इति ॥ ५१ ॥

इत्थं चैतदङ्गीकर्तव्यमित्याह—

नानुवृत्तिनिवृत्तिभ्यां विना यदुपपद्यते। तस्यैव हि तथाभावः सूक्ष्मबुद्ध्या विचिन्त्यताम्॥५२

नानुवृत्ति-निवृत्तिभ्यां- प्रत्यक्षसिद्धाभ्यां स्वभावाभ्यां, विना, यद् वस्तु, उपपद्यते, तस्यैव- वस्तुनः, तथाभावः- तथापरिणमनम्, इति सूक्ष्मबुद्ध्या विचिन्त्यतामेतत् ॥ ५२ ॥

उपसंहरन्नाह—

तस्यैव तु तथाभावे तदेव हि यतस्तथा। भवत्यतो न दोषो नः कश्चिदप्युपपद्यते॥ ५३ ॥

तस्यैव तु तथाभावे सिद्धे सति, तदेव हि यतस्तथा भवति- कारणमेव कार्यतया परिणमत इत्युक्तं भवति। अतो न दोषो नः- अस्माकं, कश्चिदपि। एतदुक्तं भवति— कथञ्चिदनिवर्तमानाभिन्नस्वभावं सद् निवर्तते, तथा, निवर्तमानाभिन्नस्वभावं च कथञ्चिदवतिष्ठत इति प्रतीतिसिद्धमेतत्; 'तदेव मृद्द्रव्यं कुशूलात्मना निवर्तते' इत्यत्र च तदाऽनिवर्तमानाभि- ॥२६९॥

ऽस्वभावपरामर्शात्, 'तदेव मृदात्मनाऽवतिष्ठते' इत्यत्र च तदा निवर्तमानाभिन्नस्वभावपरामर्शात् ॥ ५३ ॥

ननु निवर्तमाना-ऽनिवर्तमानयोरेकेनाग्रहणात् कथं निवृत्त्य-ऽनिवृत्त्यात्मकैकग्रहः ? इत्यत आह—

**इत्थमालोचनं चेदमन्वयव्यतिरेकवत् । वस्तुनस्तत्स्वभावत्वात्तथाभावप्रसाधकम् ॥५४॥**

इत्थं च— उक्तयुक्त्या च, इदं— निवृत्त्य-ऽनिवृत्त्यात्मकवस्तुग्राहि, आलोचनम्, अन्वय-व्यतिरेकवत्— उपयोगात्मनाऽन्वयि, अवग्रहे-हा-ऽपाय-धारणात्मना च परस्परं व्यतिरेकि, वस्तुनस्तत्स्वभावत्वात्— अन्वय-व्यतिरेकिस्वभावत्वात्, तथाभावप्रसाधकम्— अन्वय-व्यतिरेकस्वभावग्राहकम् । एकेनैव ह्युपयोगेन तदेव वस्तु सामान्यतोऽवगृह्यते, ततो निवृत्त्य-ऽनिवृत्तिभ्यामीह्यते, ततः 'इत्थं निवृत्तमित्थं चानिवृत्तम्' इति निश्चीयते, ततस्तथैव धार्यते, न चैवमुपयोगैकत्वव्याघातः, श्याम-रक्तघटवदेकत्वाविरोधात् । अक्रमैकरूपमेव ज्ञानं संवेद्यते न तु क्रमवदपीति चेत् । न, क्वचिद् दोषात् क्रमासंवेदनेऽपि क्वचित् क्रमाक्रमस्य स्फुटमेव संवेदनात् । उपयुञ्जते हि लोकाः— 'घटमेव जानन्नहं प्राक् सामान्यतः 'किमिदम् ?' इत्यवगृहीतवान्, ततः 'किमनेन घटेन भाव्यमघटेन वा ?' इतीहितवान्, ततः 'कम्बुग्रीवादिमत्त्वाद् घट एवायम्' इति निश्चितवान्, ततः 'अयमित्थमेव' इत्यवधृतवान्' इति । अत्र हि प्रतिनियतोल्लेखात् क्रमः, 'जानन्' इत्यत्र शतृप्रत्ययाच्चाक्रमः स्फुट एव ।

यस्त्वक्रमिकांशमेकमेव ज्ञानमुपैति, तस्य घटसामान्यालोचनानन्तरम् 'अनेन घटेन भाव्यम्' इतीहैव दुर्घटा, बह्वर्थपरामर्शरूपत्वात् तस्याः । ''घटत्वव्याप्यकम्बुग्रीवादिमानयम्' इत्याकारिकेवेहा' इति तु 'कम्बुग्रीवादिकं घटत्वादिव्याप्यं,

तद्वांश्चायम्' इत्यादितोऽपि संशयनिवृत्तेर्न सर्वत्र संभवदुक्तिकम्। न चोक्ताकाराऽपीहा सहचारदर्शनादिकं विना व्याप्त्याद्यग्रहात् संभविनी । अव्यवहितनष्टं च तच्चिरतरनष्टतुल्यम् । उद्बुद्धतत्संस्कार एव तत्कार्यकारीत्युपगमे चोद्बुद्धसंस्कार एव ज्ञानमस्त्विति ज्ञानसत्त्वैवोत्सीदेत्, अनुभवविरोधश्चैवम्, इत्यादि विवेचितं ज्ञानार्णवे ॥ ५४ ॥

इत्थं च 'द्रव्य-पर्याययोर्निवृत्त्य-निवृत्तिभ्यां भेद एव' इति निरस्तम्, अथ 'भेदोऽपि' इत्युक्तौ न बाध इत्याह—

**न च भेदोऽपि बाधायै तस्यानेकान्तवादिनः । जात्यन्तरात्मकं वस्तु नित्यानित्यं यतो मतम्॥५५॥**

न च भेदोऽप्यधिकृतांशस्येतरांशात्, तस्य– वस्तुनः, बाधायै– अनेकान्तपक्षव्याघाताय, अनेकान्तवादिनः, यतः– यस्मात्, जात्यन्तरात्मकं– इतरेतरानुविद्धं सद् वस्तु, नित्यानित्यं मतम्, यत एव भिन्नमत एवानित्यम्, यत एव चाभिन्नमत एव नित्यमिति । न हि नित्यत्वमनित्यत्वं वा किञ्चिदेकरूपमस्ति, किन्तु यद् यदान्वीयते तत् तदा नित्यमिति व्यपदिश्यते, यदा च यद् व्यतिरिच्यते, यदा तदनित्यमिति । अत एव प्रागभावः प्राग् नित्यः, ध्वंसश्च पश्चाद् नित्यः, अत एव च नित्या मुक्तिरुपपद्यत इति ॥ ५५ ॥

एतदेव समर्थयन्नाह—

**प्रत्यभिज्ञाबलाच्चैतदित्थं समवसीयते । इयं च लोकसिद्धैव तदेवेदमिति क्षितौ ॥५६॥**



प्रत्यभिज्ञाबलाच्च– प्रत्यभिज्ञान्यथानुपपत्त्या च, एतत्– वस्तु, इत्थं– नित्यानित्यं, समवसीयते । इयं च–प्रत्यभिज्ञा,

क्षितौ– पृथिव्याम्, 'तदेवेदम्' इति– 'तदेवेदम्' इत्युल्लेखवती, लोकसिद्धैव– आगोपालाङ्गनं प्रसिद्धैव ॥ ५६ ॥

एतद्बलमेवाह—

**न युज्यते च सन्न्यायादृते तत्परिणामिताम्। कालादिभेदतो वस्त्वभेदतश्च तथागतेः५७**

न युज्यते च 'इयं प्रत्यभिज्ञा' इति शेषः, सन्न्यायात्– सत्तर्काद् विचार्यमाणात्, ऋते– विना, तत्परिणामितां– तस्य वस्तुनोऽन्वितविच्छिन्नरूपताम्। कथम्? इत्याह– कालादिभेदतः– तत्कालधर्मभेदतः, वस्त्वभेदतश्च, तथागतेः– 'तदेवेदम्' इति परिच्छित्तेः, अन्वयप्राधान्येन तदेतत्कालकृत-तदेतत्कालीनधर्मकृतभेदावभासात्, अन्वयप्रधानत्वाच्च प्रत्यभिज्ञोपयोगस्य न प्राधान्येन भेदावभासः; प्रधानोपसर्जनभावस्य ज्ञाने प्रतिविषयं स्वहेतुक्षयोपशमभेदेनोपपत्तेः। एतेन 'स्वरूपविरोधाभावादेकतरानिर्भक्तभागवद् नैकस्य नानात्वम्, बुद्धे रूपभेदाद् नानात्वम्, अंशे रूपाभेदाच्चैकत्वम्, इत्युपगमे च नानारूपबुद्ध्युपग्राह्यत्वाद् नानात्वमेव, न त्वेकत्वम्' इत्यादि निरस्तम्, नानैकरूपप्रत्यभिज्ञया नानैकरूपस्यैव वस्तुनो ग्रहात् ॥ ५७ ॥

एतदेव भावयति—

**एकान्तैक्ये न नाना यन्नानात्वे चैकमप्यदः। अतः कथं नु तद्भावस्तदेतदुभयात्मकम्५८**



एकान्तैक्ये पूर्वा-ऽपरयोः, न नाना, यत्– यस्मात् कथंचिदपि, नानात्वे च सर्वथा, एकमप्यदो 'न' इति वर्तते, अतः– अस्माद्धेतोः, कथं, 'नु' इति निश्चये, तद्भावः– 'तदेवेदम्' इति प्रत्यभिज्ञोपपत्तिः। ततस्तत्– प्रत्यभिज्ञेयं वस्तु, उभयात्मकम्–

नाना-ऽनानास्वभावम् ।

इदमिह हार्दम्– यैः पूर्वा-ऽपरकालीनघटादेरेकत्वमेव स्वीक्रियते तेषां स्वरूपतो विशिष्टभेदे, कालविशेषावच्छिन्नभेदे, श्याम-रक्तादिरूपावच्छिन्नभेदे वा कथं प्रत्यभिज्ञा ? । तद्व्यक्तित्वावच्छिन्नभेदाभावरूपस्यैकत्वस्य प्रत्यभिज्ञायमानस्याबाधाद् नानुपपत्तिरिति चेत् । न, परमाणु-द्व्यणुकादिदेशविगमेन खण्डघटादिसंभावनया तदनिश्चयात्, खण्डघटादिनिश्चयेऽपि तथा प्रत्यभिज्ञानाच्च । खण्डघटादौ तद्वृत्तिघटत्वावच्छिन्नभेदाभाव एव प्रत्यभिज्ञायत इति चेत् । न, तद्वृत्तिघटत्वस्य घटत्वापेक्षया गुरुत्वेन भेदप्रतियोगितानवच्छेदकत्वात्, घटत्वावच्छिन्नभेदाभावसंबन्धेन तस्यान्वये च व्यक्त्यन्तरेऽपि तथाप्रत्यभिज्ञाप्रसङ्गात् । शुद्धव्यक्त्यभेदेनैव तत्पदार्थस्येदंपदार्थे भानाद् व्यक्त्यन्तरे 'सोऽयम्' इति प्रत्यभिज्ञा भ्रान्तैवेति चेत् । व्यक्तिभेद एव देशभङ्गे न तु रूपभङ्ग इत्यत्र किं मानम्, श्याम-रक्तादिदशयोरिव खण्डा-ऽखण्डदशयोरपि विशिष्टभेदस्य सुवचत्वात्, विशिष्टनाशोत्पाद-रूपवैधर्म्यस्यापि तद्वदेवात्र शुद्धव्यक्त्यभेदाविरोधित्वात् ? इति ।

किञ्च, एकान्तैक्ये 'सोऽयम्' इति विशेषणविशेष्यभावस्यैवानुपपत्तिः, अन्यथा 'घटो घटः' इत्यपि स्यात्, 'घटो घटस्वभाववान्' इतिवत् । क्वचिदेव किञ्चित् स्वस्मिन् प्रकारीभूय भासत इति चेत् । तर्हि घटे घटत्वं स्वात्मकमेव भासताम् । व्यक्तेर्जातिर्विलक्षणैवानुभूयत इति चेत् । तत्तेदंतयोरपि किं न वैलक्षण्यमनुभवसि ?। एवं 'रजतमिदम्' इत्यत्रेदमर्थ-रजतयोरपि भेदः स्यादिति चेत् । स्यादेवेदन्त्व-रजतत्वाभ्याम्, स्वद्रव्यान्वयेन तु न स्यादिति न किञ्चिदेतत् । यैस्त्वेकान्ततो नानात्वमे-वाङ्गीक्रियते तेषामुक्तप्रत्यभिज्ञाया गन्धोऽपि नास्ति, पूर्वापरयोरेकत्वायोगात् । उक्तं चैतत् प्राक्, वक्ष्यते चानुपदमपि ॥५८॥ ॥२७१॥

स्वपक्षे तदुपपत्तिमाह—

**तस्यैव तु तथाभावे कथञ्चिद्भेदयोगतः। प्रमातुरपि तद्भावाद्युज्यते मुख्यवृत्तितः ॥५९॥**

तस्यैव तु– पूर्वस्यैव तु वस्तुनः, तथाभावे– तदन्वयस्वभावापरित्यागेनापरस्वभावोपादाने, कथञ्चिद् भेदयोगतः– तद्द्रव्यतोऽभेदेऽपि तत्पर्यायतो भेदात्, प्रमातुरपि– तत्परिच्छेदकप्रमाणपरिणतस्यात्मनोऽपि, तथाभावात्– ग्राह्यवद् ग्राहकस्य पूर्वा-ऽपरभावेनैका-ऽनेकरूपत्वात्, युज्यते मुख्यवृत्तितस्तद्व्यवहाराबाधेन यथोक्तप्रत्यभिज्ञा। न ह्यन्य एवानुभवति, अन्य एव च प्रतिजानीते, नवा तदनुभव-प्रत्यभिज्ञयोर्भिन्नैकाश्रयत्वमपि, संबन्धानुपपत्तेः, पूर्वा-ऽपरार्थवदनुभवितृ-प्रत्यभिज्ञातृस्वभावानुभवाच्चेति ॥५९॥

परमतं दूषयति—

**नित्यैकयोगतो व्यक्तिभेदेऽप्येषा न संगता। तदिहेति प्रसङ्गेन तदेवेदमयोगतः ॥६०॥**

व्यक्तिभेदेऽपि– बाल-युवादिशरीरभेदेऽपि, नित्यैकयोगतः– नित्यैकशरीरत्वसामान्यसंबन्धात्, एषा– उक्तप्रत्यभिज्ञा, न संगता। कुतः? इत्याह– भिन्नयोगाद् भूतले 'इह घटः' इतिवत्, 'तदिह' इति प्रसङ्गेन, नित्यैकस्य तत्पदार्थत्वात्; 'तदेवेदमित्यस्य' इति शेषः, अयोगतः– अनुपपत्तेः, नित्या-ऽनित्ययोस्तादात्म्याभावात्। तज्जातीयस्य तादात्म्याद् नायोग इति चेत्। तथा सति 'तज्जातीयोऽयम्' इति स्यात्, न तु 'सोऽयम्' इति। कथं च क्वचिद् नित्यस्य संबन्धः, क्वचिच्च

तद्गतस्तादात्म्यं भासते ?। अदृष्टभेदादिति चेत् । तत एव तर्हि शबलवस्तु तदा तदा तथा तथा भासताम्, एकस्य वैचित्र्यकल्पनाया न्याय्यत्वात्, 'धर्मी०' इति न्यायात् ॥ ६० ॥



न चेयं भ्रान्तिकारणादप्युत्पत्तुमर्हति परमत इत्याह—

**सादृश्याज्ञानतो न्याय्या न च विभ्रमबलादपि । एतद्द्वयाग्रहे युक्तं न च सादृश्यकल्पनम् ॥**

सादृश्याज्ञानतः– सादृश्यज्ञानाभावात्, विभ्रमबलादपि– भ्रमहेतुसामर्थ्यादपि, नैषा क्षणिकेषु विभिन्नेष्वेकत्वप्रत्यभिज्ञा न्याय्या । हेतुं समर्थयति– एतद्द्वयाग्रहे– सदृशद्वयस्य क्षणिकज्ञानेन ग्रहीतुमशक्यत्वे, न च सादृश्यकल्पनं युक्तम्, संयुक्तद्वयाग्रहे संयोगकल्पनवत् । न चासंयुक्तभागद्वयग्रहेऽपि संयोगाकल्पनात् संयुक्तभागद्वयग्रहसामग्र्या संयोगकल्पनवत् सदृशद्वयग्रहसामग्रीत एव सादृश्यकल्पनोपपत्तिः, क्रमिकसदृशद्वयग्रहसामग्र्या एकस्या अनुपपत्तेः, अनन्वयिनिरंशज्ञानोपगमे संयुक्तभागद्वयग्रहसामग्र्या अप्यनुपपत्तेः । निरस्तश्च सौगताभिमतः सामग्रीपक्षः प्रागेवेति ॥ ६१ ॥

उत्पद्यतां वा यथा कथञ्चिदेषा, तथापि बाधाभावाद् न भ्रान्तेत्याह—

**न च भ्रान्तापि सद्बाधाभावादेव कदाचन। योगिप्रत्ययतद्भावे प्रमाणं नास्ति किञ्चन॥६२॥**

न च भ्रान्ताप्युक्तप्रत्यभिज्ञा, कदाचन– कदाचिदपि, सद्बाधाभावादेव– सम्यग्बाधकप्रत्ययानवतारादेव । यद्धि भ्रान्तं ज्ञानं तत्र नियमतो बाधकावतारः, यथा शुक्तौ रजतज्ञाने। चेतनेऽचेतनभ्रमे नायं नियम इति चेत् । न, तत्रापि विशेष-

दर्शिनां बाधावतारात् । अत्रापि योगिनां बाधावतारोऽस्त्येवेत्याशङ्क्याह–– योगिप्रत्ययतद्भावे– योगिनां ज्ञानस्योक्तप्रत्यभिज्ञाबाधकत्वे, नास्ति प्रमाणं किञ्चन, श्रद्धामात्रशरणत्वात् ॥ ६२ ॥

एतदेव प्रकटयति—

**नाना योगी विजानात्यनाना नेत्यत्र[1] का प्रमा ?। देशनाया विनेयानुगुण्येनापि प्रवृत्तितः ६३**

नाना– प्रतिक्षणभिन्नम्, योगी विजानाति– साक्षात्करोति जगत्, न त्वनाना– अक्षणिकस्वभावम्, इत्यत्र का प्रमा– किं निश्चायकम् ? । "क्षणिकाः सर्वसंस्काराः" इति देशनैवात्रार्थे प्रमाणम्, यथादृष्टार्थस्य योगिना देशनादित्याशङ्क्याह– देशनाया उक्तलक्षणायाः, विनेयानुगुण्येनापि– विनाप्यर्थं श्रोत्रनुग्रहार्थमपि, प्रवृत्तितः– संभवात्, ब्राह्मणभार्यामृतत्वदेशनावत् ॥ ६३ ॥

प्रत्यभिज्ञाभासव्यावृत्ततयाऽस्याः प्रामाण्यमुपपादयति—

**या च लूनपुनर्जातनख-केश-तृणादिषु । इयं संलक्ष्यते सापि तदाभासा न सैव हि ॥६४॥**

या च लूनपुनर्जातनख-केश-तृणादिषु इयं– प्रत्यभिज्ञा, संलक्ष्यते–'स एवायं नखः' 'स एवायं केशः' 'तदेवेदं तृणम्' इत्याद्युल्लिख्यते, सापि तदाभासा– प्रत्यभिज्ञाभासा, न सैव हि– न प्रत्यभिज्ञाप्रमैव हि, लूनपुनर्जातत्वप्रतिसंधाने तत्र बाधा-

---

१ मुद्रितमूले 'त्र न प्र' इति पाठः ।

वतारात्; इयं च वैलक्षण्यात् प्रमैवेति भावः ॥ ६४ ॥

नन्वेवमपि लूनपुनर्जातनख-केशादिषु प्रत्यभिज्ञावत् प्रकृतप्रत्यभिज्ञाप्यप्रमाणं भविष्यतीति संशयात् कथमर्थनिश्चयः ? इत्यत आह—

**प्रत्यक्षाभासभावेऽपि नाप्रमाणं यथैव हि । प्रत्यक्षं, तद्वदेवेयं प्रमाणमवगम्यताम् ॥६५॥**

प्रत्यक्षाभासभावेऽपि– 'शुक्तौ रजतम्' इति मिथ्याप्रत्यक्षसद्भावेऽपि, यथैव हि नाप्रमाणं, प्रत्यक्षं– 'इदं रजतम्' इत्यादि समीचीनं प्रत्यक्षम्; तद्वदेवेयं– प्रत्यभिज्ञाभाससद्भावेऽपि, प्रमाणमवगम्यताम्– प्रमात्वेन निश्चीयताम्, भ्रमप्रमासाधारणप्रत्यक्षत्वदर्शनजनितस्य प्रत्यक्ष इव तादृशप्रत्यभिज्ञात्वदर्शनजनितस्य प्रकृतप्रत्यभिज्ञायामपि प्रामाण्यसंशयस्याबाध्यत्वविशेषदर्शनेन निवर्तनादिति भावः ॥ ६५ ॥

न चेयमतन्त्रसिद्धेत्याह—

**मतिज्ञानविकल्पत्वान्न चानिष्टिरियं यतः । एतद्बलात्ततः सिद्धं नित्यानित्यादि वस्तु नः ॥**

यतो मतिज्ञानविकल्पत्वाद् न चेयमनिष्टिः– प्रत्यभिज्ञाङ्गीकारो नापसिद्धान्त इत्यर्थः, वासनाधारणाफलत्वेन तदुपगमात्; तत एतद्बलात्— प्रत्यभिज्ञान्यथानुपपत्तेः, नः– अस्माकं, नित्यानित्यादि वस्तु सिद्धम्, आदिना सदसदादिग्रहः । तदेवं सिद्धो वस्तुयाथात्म्यपरिच्छेदप्रवणः स्याद्वादः । एतदेकदेशालम्बना एव परस्परनिरपेक्षाः प्रवर्तन्तेऽपरिमिताः परसम- ॥२७३॥

यास्तदुक्तम्—

" [1]जावइआ वयणपहा तावइआ चेव हुंति णयवाया। जावइआ णयवाया तावइआ चेव परसमया[2] ॥ १ ॥" इति।

अस्यार्थः— यावन्तो वचनपथाः— वक्तृविकल्पहेतवोऽध्यवसायविशेषाः, तावन्तो नयवादाः— तज्जनितवक्तृविकल्पाः शब्दात्मकाः, सामान्यतो नैगमादिसप्तभेदोपग्रहेऽपि प्रतिव्यक्ति तदानन्त्यात्। यावन्तश्च नयवादास्तावन्त एव परसमयाः, निरपेक्षवक्तृविकल्पमात्रकल्पितत्वात् तेषाम्। तथाहि— कापिलं दर्शनं निरपेक्षद्रव्यार्थिकनयविकल्पप्रसूतम्, बौद्धदर्शनं च निरपेक्षशुद्धपर्यायास्तिकनयविकल्पजनितम्, द्वाभ्यामपि च परस्परानिरपेक्षाभ्यां द्रव्यार्थिक-पर्यायार्थिकाभ्यां प्रणीतमौलूक्य-दर्शनम्। तदाह—

" [3]जं काविलं दरिसणं एयं दव्वट्ठिअस्स वत्तव्वं। सुद्धोअणतणयस्स उ परिसुद्धो पज्जवविअप्पो ॥ १ ॥

दोहि वि णएहि णीअं सत्थमुलूएण, तहवि मिच्छत्तं। जं सविसयप्पहाणत्तणेण अन्नुन्नणिरवेक्खं[4] ॥ २ ॥"

एवमौपनिषददर्शनादीनामपि संग्रहनयादेः प्रादुर्भूतिर्भावनीया। अत एव परदर्शनाभिमतेऽर्थे स्यात्कारमात्रेण स्वाव-धारणसंभवाद् भवति साम्यसंपत्तिः स्याद्वादिनः कर्मदोषादज्ञाननिमग्नं परं पश्यतः। परेषां तु स्वपक्षसिद्धावन्योन्यं कलहाय-

१ यावन्तो वचनपथास्तावन्त एव भवन्ति नयवादाः। यावन्तो नयवादास्तावन्त एव परसमयाः ॥१॥ २ सम्मतिप्रकरणे गाथा १४४।

३ यत् कापिलं दर्शनमेतद् द्रव्यार्थिकस्य वक्तव्यम्। शुद्धोदनतनयस्य तु परिशुद्धः पर्यवविकल्पः ॥ १ ॥

द्वाभ्यामपि नयाभ्यां नीतं शास्त्रमुलूकेन, तथापि मिथ्यात्वम्। यत् स्वविषयप्रधानत्वेनान्योन्यनिरपेक्षम् ॥२॥ ४ सम्मतिप्रकरणे गाथा १४५।१४६।

मानानां यावज्जीवमपि वक्तृविकल्पानुपरमेन द्वेषानुच्छेदाद् नास्त्येव साम्यवार्तापि, इति संसारहेतुत्वात् तेषां ज्ञानमप्यज्ञानमिति परिभाषन्ते परमप्रावचनिकाः । ततो मिथ्यादर्शनगरलव्यथानिवृत्तये स्याद्वादामृतपानमेव विधेयं विवेकिना ॥ ६६ ॥

व्यालाश्चेद् गरुडं प्रसर्पिगरलज्वाला जयेयुर्जवाद् गृह्णीयुर्द्विरदाश्च यद्यतिहठात् कण्ठेन कण्ठीरवम् ।
सूरं चेत् तिमिरोत्कराः स्थगयितुं व्यापारयेयुर्बलं बध्नीयुर्बत दुर्नयाः प्रसृमराः स्याद्वादविद्यां तदा ॥ १ ॥

नयाः परेषां पृथगेकदेशाः क्लेशाय नैवार्हतशासनस्य ।
सप्तार्चिषः किं प्रसृताः स्फुलिङ्गा भवन्ति तस्यैव पराभवाय ? ॥ २ ॥

एकश्छेकधिया न गम्यत इह न्यायेषु बाह्येषु यो देशप्रेक्षिषु, यश्च कश्चन रसः स्याद्वादविद्याश्रयः ।
यः प्रोन्मीलितमालतीपरिमलोद्गारः समुज्जृम्भते स स्वैरं पिचुमन्दकन्दनिकरक्षोदाद् न मोदावहः ॥ ३ ॥

अभ्यास एकः प्रसरद्विवेकः स्याद्वादतत्त्वस्य परिच्छिदाप्यः ।
कषोपलाद् नैव परः परस्य निवेदयत्यत्र सुवर्णशुद्धिम् ॥ ४ ॥

माध्यस्थ्यमास्थाय परीक्षमाणाः क्षणं परे लक्षणमस्य किञ्चित् ।
जानन्ति, तानन्तिमदुर्नयोत्था कुवासना द्राक् कुटिलीकरोति ॥ ५ ॥

५ श्रीजिनभद्रगणिक्षमाश्रमणा विशेषावश्यकभाष्ये 'सदसदविसेसणाओ भवहेउ' (गाथा ११५) इत्यादिना ग्रन्थेनेत्यर्थः ।

अतो गुरूणां चरणार्चनेन कुवासनाविभ्रमपास्य शश्वत् ।
स्याद्वादचिन्तामणिलब्धिलुब्धः प्राज्ञः प्रवर्तेत यथोपदेशम् ॥ ६ ॥

यस्यासन् गुरवोऽत्र जीतविजयप्राज्ञाः प्रकृष्टाशया भ्राजन्ते सनया नयादिविजयप्राज्ञाश्च विद्याप्रदाः ।
प्रेम्णां यस्य च सद्म पद्मविजयो जातः सुधीः सोदरस्तेन न्यायविशारदेन रचितस्तर्कोऽयमभ्यस्यताम् ॥ ७ ॥

इति पण्डितश्रीपद्मविजयसोदरन्यायविशारदपण्डितयशोविजयविरचितायां स्याद्वादकल्पलता-
भिधानायां शास्त्रवार्तासमुच्चयटीकायां सप्तमः स्तबकः ।



|| अर्हम् ||

# अथाष्टमः स्तबकः ।

समवसरणभूमौ यस्य गीर्वाणकीर्णा सुमततिरतिशोभां जानुदध्नी ततान ।
जितकुसुमशरास्त्रत्यागमर्थापयन्ती स जयति यतिनाथः शङ्करो वर्धमानः ॥ १ ॥

स्मरणमपि यदीयं विघ्नवल्लीकुठारः श्रयति यदनुरागात् संनिधानं निधानम् ।
तमिह निहतपापव्यापमापद्भिदायामतिनिपुणचरित्रं पार्श्वनाथं प्रणौमि ॥ २ ॥

हंसीव वदनाम्भोजे या जिनेन्द्रस्य खेलति । बुद्धिमांस्तामुपासीत न कः शुद्धां सरस्वतीम् ? ॥ ३ ॥

वार्तान्तरमाह—

**अन्ये त्वद्वैतमिच्छन्ति सद्ब्रह्मादिव्यपेक्षया। सतो यद्भेदकं नान्यत्तच्च तन्मात्रमेव हि ॥१॥**

अन्ये तु– वेदान्तिनः, सद् ब्रह्मैव– परब्रह्मैव, आदिः सकलव्यवहारकारणं तद्व्यपेक्षया तदाश्रयणेन, अद्वैतमि-

च्छन्ति– एकमेव तत्त्वमुपयन्ति, द्वाभ्यामितं द्वीतं, द्वीते भवं द्वैतं, न द्वैतमद्वैतमिति योगार्थः। कुतः ? इत्याह– यत्– यस्मात्, सतः– परमब्रह्मणः, अन्यत्– स्वातिरिक्तम्, न भेदकम् । तच्च– भेदकत्वाभिमतं नीलादि च, तन्मात्रमेव– ब्रह्ममात्रमेव, अनवच्छिन्नस्याकाशस्य घट-पटाद्युपाधिभिरिव, अनवच्छिन्नस्य ब्रह्मणो नीलादिभिर्भेदायोगात्।

किञ्च, भेदस्य वस्तुस्वभावत्वे तस्यैकस्यानेकवृत्तित्वाद् वस्तूनामपि भेदो न स्यात्, नैकस्मादभिन्नमभिन्नस्वभावं भिन्नं युज्यते। अर्थान्तरत्वे च तस्य वस्त्वरूपत्वात् स्वरूपेण भावा न व्यावृत्ताः स्युः। कल्पितात्तु भेदात् कल्पितमेव नीलादिनानात्वम्, न तु पारमार्थिकम्। अथ परापेक्षं वस्तुनो भिन्नत्वं, स्वरूपेण त्वेकत्वमिति न दोष इति चेत्। न, न हि वस्तु स्वहेतुबलोदितं स्वभावव्यवस्थितये परमपेक्षत इति पुरुषप्रत्ययधर्म एव परापेक्षत्वमिति न ततो वस्तुभेदः । यदि च भेदस्वरूपो भावः प्रतियोग्यपेक्षः स्यात्, स्वहेतोरविकलस्य तस्योत्पत्तिर्न स्यात्। स्वहेतोरेव प्रतियोग्यपेक्षभेदाख्यरूपस्तदनपेक्षस्वरूपश्च भाव उत्पन्न इति चेत्। ननु क इहापेक्षार्थः ?। न तावदुत्पत्तिः, स्वहेतुत एव तदुदयात् । नाप्यर्थक्रिया, प्रतियोग्यसंनिधानेऽप्यर्थक्रियादर्शनात्। प्रतीतिश्चेत्। तर्हि रूपादेः स्वरूपस्य चक्षुरादित इव भेदस्यापि ज्ञानात् प्रतियोगिनः प्रतीतावपि न सापेक्षस्वभावत्वम्। कथं तर्ह्येकत्रापि पितृत्वादयः ? इति चेत्। एकत्र ह्रस्वत्व-दीर्घत्वादिवत् कल्पिता एव।

स्यान्मतम्, अर्थक्रियाभेदाद् वस्तुभेदः स्यादिति। न, दाह-पाकविभागेनापि कृशानोरभेदात् तत्राऽदृष्टयाऽर्थक्रिययाऽर्थभेदः, यथा चक्षुष्मत्यपि बधिरेऽदृष्टया शब्दबुद्ध्येन्द्रियभेद इति चेत्। नाद्वैते किञ्चिदेकत्रादृष्टं नाम। ततश्च तत्रादृष्टार्थक्रियासिद्धौ तद्भेदसिद्धिः, सिद्धे च भेदे तत्रादर्शनमितीतरेतराश्रयः। अपिच, सन्मात्रे सर्वत्र प्रत्यक्षाद् निश्चिते तत्र भेदानवकाशः,

कालभेदाभावेन 'सोऽयम्' इत्यवमर्शाभावेऽपि निर्विकल्पकलब्धविधिरूपाबाधात्, अलब्धरूपस्य चानिषेधात्, खपुष्पादिनिषेधेऽपि सिद्धेषु खादिष्वेव पुष्पादीनां निषेधात्। 'कुतश्चिद् निमित्ताद् बुद्धौ लब्धरूपाणां तेषां बहिर्निषेधः' इत्यन्ये।

किञ्च, एकस्य अ्यात्मकस्याभावात्, भेदा-ऽभेदयोरेकतरस्य मिथ्यात्वनियमे भेदानामेवं तत्त्वकल्पनमुचितम्, सर्पादिप्रतीतौ दर्शनात्, न तु वस्तुमात्रस्य। अपिच, गन्धसमवायिकारणतावच्छेदकं यथा पृथिवीत्वमेवेति तत्रैव गन्धः, तत्संबन्धादेव च जलादौ गन्धवत्त्वव्यवहारः, तथा सत्त्वाश्रयतावच्छेदकमपि चित्त्वमेवेति चिदेव सती, तदधीनत्वात् सर्वव्यवहारस्य, तत्संबन्धादेव च प्रपञ्चे सत्त्वव्यवहारः।

अपिच, पराभिमतात्मविशेषादर्शनान्वय-व्यतिरेकानुविधायित्वात् प्रपञ्चप्रतिभासस्य भ्रमत्वम्। न च तदन्वय-व्यतिरेकयोर्देहतादात्म्यप्रतिभासेनान्यथासिद्धिः, विनिगमकाभावात्, मुक्तौ देहतादात्म्याप्रतिभासवत् प्रपञ्चाप्रतिभासनात्, संसारदशायां देहतादात्म्यप्रतिभासवत् प्रपञ्चप्रतिभासनाच्च। वस्तुत आत्मविशेषादर्शनजन्यतावच्छेदकं नात्म-देहतादात्म्यभ्रमत्वम्, गौरवात्; किन्तु दृश्यदर्शनत्वमेव, लाघवात्। अत एव ब्रह्मणः सकलप्रपञ्चविषयत्वं संयोगादिसंबन्धानिरूपणात् स्वरूपस्य च संबन्धत्वाभावात् काल्पनिकज्ञेयतादात्म्याश्रयणेनोपपद्यत इति युक्तम्।

अपिच, आत्म-खपुष्पवदुत्पत्त्ययोगात् सत्त्वा-ऽसत्त्वाभ्यामनिर्वचनीयः प्रपञ्चः, रज्जौ सर्पवत्। न हि सन्नेव सः, बाधानुभवात्। नाप्यसन्, अपरोक्षानुभवात्। देशान्तरे सन्नेवेति चेत्। न, मानाभावात्, तत्र प्रतीयमाने सर्पे देशान्तर-

१ ख. ग. घ. च. 'वचत'।

सत्त्वस्य प्रत्यक्षेणाप्रतीतेः। कल्प्यत इति चेत्। यत्र प्रतिपन्नं तत्रैव किमिति न कल्प्यते?। बाधानुभवादिति चेत्। बाधयोग्यं तर्हि कल्प्यताम्। युक्तं ह्येतद् यद् यथा प्रतीयते तत् तथैवाभ्युपगम्यत इति। सर्पसत्त्वे तुल्येऽपि कथमेको वाच्यो नापरः? इति चेत्। कथं प्रतीतितुल्यत्व एकत्र सत्त्वमपरत्रासत्त्वम्?। बाधप्रतीतेरिति चेत्। तुल्यं ममापि।

किञ्च, साधकतावच्छेदकत्वं न प्रमानुभवत्वम्, गौरवात्; किन्त्वनुभवत्वम्, लाघवात्। ततश्चावच्छेदकलाघवेन पुरोवर्तिनि सर्पसिद्धिः, तस्य च मिथ्यात्वमनुभवादेव 'मिथ्या सर्पः' इति। अज्ञानाद्युपादानकल्पनागौरवप्रसङ्ग एवमिति चेत्। न, अवच्छेदकलाघवेन तस्य फलमुखत्वात्। वस्तुतस्तु विपरीतमेव गौरवं परेषाम्, अत्र प्रतिपन्ने देशान्तरसत्त्वस्याप्रत्यासन्नस्यापरोक्षत्वस्य ज्ञानस्य प्रत्यासत्तित्वस्य दोषस्य तादृक्सामर्थ्यादेः कल्पनात्।

किञ्च, परैरपि विशेषादर्शनस्य भ्रमहेतुत्वमुपेयते। तत्र तैरभावत्वं कल्प्यते, अस्माभिस्तु भावत्वं लघुभूतम्। तैश्च निमित्तत्वं कल्प्यते, अस्माभिस्त्वन्तरङ्गमुपादानत्वम्, इति स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वरूपं कथं मिथ्यात्वम्?। सर्पस्य स्वाभावसामानाधिकरण्यविरोधादिति चेत्। न, पृथिव्यां रूपे गन्धसामानाधिकरण्याविरोधवद् रज्जौ सर्पे स्वाभावसामानाधिकरण्यस्याप्यविरोधात्। कथं तर्हि भ्रान्तित्वम्? इति चेत्। स्वाभावाश्रये सत्त्वात्। परेषां स्वाभावाश्रये सत्त्वावगाहित्वं भ्रान्तित्वप्रयोजकम्, अस्माकं तु स्वाभावाश्रये सत्त्वम्, इति लाघवम्। पुरोवर्तिनि सर्पसत्त्वे व्यवहारः स्यादिति चेत्। भ्रमदशायां स्यादेव; बाधदशायां तु बाधस्य प्रतिबन्धकत्वादेव, अन्यदा च सामग्रीविरहादेव न स्यादिति। तदेवमनिर्वचनीयस्य सर्पस्य रज्जुरिव, अनिर्वचनीयस्य प्रपञ्चस्य ब्रह्मैव तत्त्वम्।

तच्चाद्वितीयम्, प्रपञ्चासिद्ध्या विजातीयभेदशून्यत्वात्; अखण्डमपि, सजातीयभेदशून्यत्वात्; तथाहि– न तावच्चेतनभेदः प्रत्यक्षसिद्धः। न हि चेतना घटादय इव भेदेनानुभूयन्ते। तत्तच्छरीरप्रवृत्त्या भिन्नाः कल्प्यन्त इति चेत्। न, एकेनैव तत्तच्छरीरप्रवृत्त्युपपत्तावनेककल्पनानुपपत्तेः। सुख-दुःखादिवैचित्र्यादनेकत्वमिति चेत्। न, तस्याप्युपाधिभेदत एवोपपत्तेः। दृष्टं हि गगनस्यैकस्यैव भेरी-कर्णाद्युपाधिभेदेन शब्दविशेषहेतुत्व-शब्दग्राहकत्वादिवैचित्र्यम्। इष्यत एव चानेकात्मवादिभिरपि प्रतिचेतनमन्तःकरणे-न्द्रियादिभेदः। ततस्तदुपाधित एव सुख-दुःखादिवैचित्र्योपपत्तिः, भानाभानव्यवस्थापि तेनैवोपपद्यते।

किञ्च, घटादयः, शरीरादयः, बुद्ध्यादयः, तदाधारश्च स्फुरन्तीत्यविवादम्। स्फुरणं चोपाधिभेदं विनाऽविभाव्यमानभेदतया, लाघवेन चैकम्। ततश्च परेषामनुव्यवसायशब्दाभिधेयं स्फुरणं नित्यमेकमात्मेत्युच्यते। तच्च न सुखादिमत्, तद्विषयत्वात्, अननुभवाच्च। एवं च सुखादिवैचित्र्येण तदाधारभेदेऽपि न स्फुरणभेदः। इष्यते च नैयायिकैरपि व्यापकमेकं नित्यमीश्वरज्ञानम्। वस्तुतः कार्यमात्रोपादानतया नित्यैकज्ञानस्यैव सिद्धिः, न तु तदाश्रयस्यापि, तस्यैव च तत्तदुपाधिभेदप्रतिभाससंभवे सुखादिवैचित्र्यबद्धमोक्षादिव्यवस्थोपपत्तौ न पारमार्थिकभेदकल्पनावकाशः, जीवे-श्वरादिविभागस्याप्यज्ञानोपाधिकत्वात्।

अज्ञानं च माया-ऽविद्यादिशब्दाभिधेयम्। मानं च तत्र 'अहमज्ञः' 'मामन्यं च न जानामि' 'त्वदुक्तमर्थं न जानामि' 'शास्त्रार्थं न जानामि' इत्याद्यनुगतः प्रत्ययः, अनुगतविषयं विना तदनुपपत्तेः, अन्यथा सत्तादिसामान्योच्छेदप्रसङ्गात्। ज्ञानसामान्याभावोऽत्र विषय इति चेत्। न, आत्मनि तस्याभावात्, अर्थेन सहानुभवाच्च। 'अर्थं न जानामि' इत्यर्थगत-

संख्याज्ञानाभावो विषय इति चेत् । न, 'संख्यां न जानामि' इत्यत्रागतेः । तत्रापरोक्षज्ञानाभावो विषय इति चेत् । न, 'शास्त्रार्थं न जानामि' इत्यत्रानुपपत्तेः । क्वचित् संख्याज्ञानाभावः, क्वचिदपरोक्षज्ञानाभावः, क्वचिद् निश्चयाभावो विषय इति चेत् । न, अननुगमात् । 'तच्च चिन्मात्राश्रयविषयमिति विवरणाचार्याः, आश्रयविषयभेदकल्पनायां गौरवात् । कल्पितं चेदम्, तेनाखण्डत्वादेर्वस्तुतश्चिद्रूपत्वात्, चिद्रूपस्य चानावृतत्वाद् नानुपपत्तिः, 'चैतन्यं स्फुरति नाखण्डत्वादि' इत्येवं तेनावरणेन भेदकल्पनात् । आश्रयमेव कथमावृणोति तत् ? इति चेत् । सत्यम्, अन्धकारे तथादर्शनात् ।

अथ चैतन्यनिष्ठावरणे मानसत्त्वे तदसत्त्वे वावरणानिवृत्ति-तदसिद्धिप्रसङ्ग इति चेत् । न, साक्षिसिद्धत्वात् तस्य, 'अहं मां न जानामि' इत्यनुभवात्। अत्र च 'माम्' इति द्वितीयार्थस्य विषयत्वस्याऽज्ञानजन्यावरणरूपातिशयशालित्वस्योल्लेखात् । ननु चिन्मात्रनिष्ठ आवरणे 'घटोऽज्ञातः' इति कथम् ? । 'अस्ति' 'प्रकाशते' इति स्वतः स्फुरति चैतन्ये ब्रह्मण्यपि तथाव्यवहारप्रसक्तौ 'नास्ति' 'न प्रकाशते' इति व्यवहारार्थमेवावरणकल्पनात्; घटादौ तु स्वतोऽप्रकाशे तस्य व्यर्थत्वादिति चेत् ।

अत्राहुः- 'विषयैः सहाज्ञानस्य साक्षिचैतन्येऽध्यासात् प्रतिभासः' इति । अस्यार्थः- ईश्वरस्योपाधिवशाद् विष्ण्वादित्रैविध्यवत् साक्षिण एव ततो जीवे-श्वरभावेन द्वैविध्यात्, साक्षिणीश्वरत्वावच्छेदेन विषयाणामध्यासात्, अज्ञाना-ऽऽवरणयोरपि चिन्मात्राश्रयत्वेन तत्र सत्त्वाद् विषयनिष्ठतयाऽज्ञानावरणप्रतीतिः 'अज्ञातो घटः' इति; यथा लौहित्य-मुखयोः स्फटिकाचलप्रतिबिम्बितयोः 'लोहितं मुखम्' इति परस्परसंसर्गो भासते । तेन कुसुमादिनिष्ठलौहित्यसंसर्ग इव मुखे चिन्निष्ठावरणसंसर्गो

घटादावनिर्वचनीयः, अन्यथाऽन्यथाख्यात्यापत्तेः । अत एव घटादेरप्यज्ञानविषयत्वम्, अज्ञानजन्यावरणसंसर्गरूपातिशयशालित्वात् । स चायमावरणसंसर्गो घटज्ञानेन नश्यति, घटज्ञानदशायाम् 'अज्ञातो घटः' इत्यननुभवात् । अस्मिन् पक्षे मूलाज्ञानादेवोक्तविधया शुक्तिविषयाद् रजतोत्पत्तिः, शुक्तिज्ञानेन चावरणसंसर्गनाशे शुक्तिविषयता मूलाज्ञानस्य नष्टा, इति विशिष्टाज्ञाननाशात् सविलासाज्ञाननिवृत्तिरूपबाधव्यवहारः, न त्वज्ञाननिवृत्तिः ।

अथवा, तद्विषयवृत्त्यभाव एव घटोऽज्ञात इति ज्ञानविषयः । अस्मिन्नपि पक्षे मूलाज्ञानकार्यमेव रजतम्, शुक्तिविषयवृत्त्यभावस्त्वन्वय-व्यतिरेकाभ्यां मूलाज्ञानाद् रजतोत्पत्तौ फलोपधानावच्छेदकतया प्रयोजकः, न तु कारणम्, अभावस्य कारणत्वाभावात् । शुक्तिज्ञानेन रजताध्यासस्य स्वकारणे प्रविलयमात्रं क्रियते, नाज्ञाननिवृत्तिः, घटादिवृत्तिश्चिदुपरागार्था नावरणसंसर्गनिवृत्त्यर्था, घटेऽनिर्वचनीयावरणसंसर्गे मानाभावात्, जडत्वेन [illegible]रणाभावात् ।

यद्वा, 'मां न जानामि' इत्यनुभूयमानं मूलाज्ञानावरणं चैतन्यनिष्ठमन्यदेव 'तत्त्वमसि' आदिवाक्यजन्यतत्त्वज्ञाननिवर्त्यम्, अन्यच्च घटावच्छिन्नचैतन्यनिष्ठमावरणं मूलाज्ञानकृतम् । ततश्च घटावच्छिन्नचैतन्यस्य मूलाज्ञानजन्यावरणान्तरशालित्वात् तद्विषयत्वम्, घटत्वस्य तु जडत्वादावरणाभावेऽप्यदूरविप्रकर्षाद् विषयत्वम् । तस्मादावरणान्तरमादाय 'अज्ञातो घटः' इति प्रतीतिः । घटज्ञानेन चावरणान्तरनिवृत्तिः । अस्मिन्नपि पक्षे मूलाज्ञानकार्यमेव रजतम्, आवरणसंसर्गपक्षवद् बाधव्यवहारः ।

अथवा, 'अज्ञातो घटः' इति प्रतीतिस्तूलाज्ञानविषया, सविलासाज्ञाननिवृत्तिर्बाधः, अज्ञाननिवर्तकं ज्ञानं प्रमाणम्,

'इममर्थं पूर्वं ज्ञातवान्, इदानीं न जानामि' इत्यादिव्यवहारसौकर्याय तत्स्वीकारात् । तूलाज्ञानानि च मूलाज्ञानकार्याणि । 'तच्छक्तिविशेषा एव तानि, अत एवानादित्वात् तेषामनादिभावरूपं ज्ञाननिवर्त्यमज्ञानमिति लक्षणयोगात्' इत्यन्ये ।

'तन्न, तेषामावरणविक्षेपहेतुत्वेन शक्तत्वात्, शक्तौ शक्त्ययोगात्, अज्ञानत्वात् तदनादित्वे तदावरणस्याप्यनादित्वापत्तेः; इष्टापत्तौ घटबोधदशायामपि समयान्तरभाविज्ञाननिवर्त्यावरणप्रसङ्गात्, अनुभवविरोधात् । व्यवहारसौकर्याय तज्जन्यत्वाश्रयणे च तूलाज्ञानानामपि जन्यत्वस्याश्रयितुं युक्तत्वात्, भ्रमोपादनत्वस्यैवाज्ञानलक्षणत्वात्, प्रागुक्तस्याविद्यासंबन्धादावतिव्याप्तेः । किञ्च, घटबोधदशायामावरणाभावेऽनादेर्घटाज्ञानस्य निर्विषयत्वप्रसङ्गः, तज्जन्यावरणरूपातिशयाभावात् । न चाज्ञानं निर्विषयं संभवति, साक्षिभास्यं वा' इत्यपरे । तत् सिद्धं चिन्मात्राश्रयविषयं मूलाज्ञानम् ।

वाचस्पतिमिश्रास्तु– 'जीवाश्रयं ब्रह्मविषयं च तत् । न च जीवनिष्ठत्वेऽविद्याया जीवे प्रपञ्चोत्पत्त्यापत्तिः, अहंकारादिप्रपञ्चोत्पत्तेरिष्टत्वात्, आकाशादिप्रपञ्चोत्पत्तेस्तु विषयपक्षपातिन्याऽविद्ययेश्वर एव संभवात्, तस्य सर्वज्ञत्वश्रुतेः, अज्ञातायां शुक्तौ रजतोत्पादवज्ज्ञाते ब्रह्मण्याकाशादिसकलप्रपञ्चोत्पत्त्यविरोधात् । यद्यपि चित्त्वापेक्षया-ऽविद्योपहितचित्त्वस्याविद्याश्रयतावच्छेदकत्वे गौरवम्, तथापि 'अहमज्ञः' इति प्रतीतेः, ईश्वरे च तथाऽप्रतीतेः प्रामाणिकत्वाद् न दोषः । न च 'अहमज्ञः' इति प्रतीतेरन्तःकरणावच्छिन्नचैतन्यस्यैवाविद्याश्रयत्वम्, तस्य जन्यतयाऽनाद्यविद्याश्रयत्वायोगात्' इत्याहुः ।

तत्र माया-ऽविद्याशब्दद्वयनिमित्तं शक्तिद्वयम्– विक्षेपशक्तिः, आवरणशक्तिश्च । कार्यजननशक्तिर्विक्षेपशक्तिः, तिरोधानशक्तिरावरणशक्तिः; यथाऽवस्थारूपस्य रज्ज्वज्ञानस्य सर्पजननशक्तिः, रज्जुतिरोधानशक्तिश्च, एवं मूलाज्ञानस्याद्वितीय-

पूर्णानन्दैकरसंचिदावरणशक्तिः, आकाशादिप्रपञ्चजननशक्तिश्च; इति 'आवरणमेव शक्तिः' इत्यपव्याख्यानम्, तस्यात्मनिष्ठत्वात्, तच्छक्तेश्चाज्ञाननिष्ठत्वात्।

तत्रैवाज्ञाने प्रपञ्चस्य परमार्थव्यवहारप्रतिभाससत्त्वप्रतीत्यनुकूलास्तिस्रः शक्तयः। आद्या श्रवणाद्यभ्यासपरिपाकतः प्राक्, यया पश्यन्ति नैयायिकादयः 'पारमार्थिकोऽयम्' इति प्रपञ्चम्। द्वितीया तत्परिपाके तत्त्वज्ञानात् प्राक्, यया पश्यन्ति विदितवेदान्ताः 'व्यावहारिकोऽयम्' इति प्रपञ्चम्। तृतीया तु तत्त्वज्ञानोत्पत्तौ यावत् प्रारब्धमनुवर्तते। तस्याश्च कार्यं यद्यपि न प्रातिभासिकसत्त्वप्रतीतिः, व्यवहारवादे तथा वक्तुमशक्यत्वात्, व्यावहारिके प्रातिभासिकत्वप्रतीतौ तत्त्वज्ञानिनामत्यन्तभ्रान्तत्वप्रसङ्गात्, दृष्टिसृष्टिवाद एव वस्तुतः प्रातिभासिकस्याप्यन्यथाभासमानस्य शक्तित्रयेण क्रमेण तथाभानोपपत्तेः; तथापि व्यावहारिकस्यापि प्रपञ्चस्य तत्त्वज्ञानेन बाधितस्यापि प्रारब्धवशेन बाधितानुवृत्त्या प्रतिभासस्तत्कार्यम्।

प्राच्यशक्तेरुत्तरशक्तिकार्यप्रतिबन्धकत्वाच्च न युगपच्छक्तित्रयकार्यप्रसङ्गः। प्रारब्धक्षये चान्तिमतत्त्वज्ञानेन सहाज्ञाननिवृत्तिः। तथा च श्रुतिः– "तस्याभिध्यानाद् योजनात् तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः" इति। अयमर्थः– तस्य परमात्मनः, अभिध्यानात्– अभिमुखाद् ध्यानात्, श्रवणाद्यभ्यासपरिपाकादिति यावत्, विश्वारम्भकमायानिवृत्तिः, आद्यशक्तिनाशेन विशिष्टनाशात्। युज्यतेऽनेनेति योजनं तत्त्वसाक्षात्कारस्तस्मादपि[2], द्वितीयशक्तिनाशेन विशिष्टनाशात्। तत्त्वभावो विदेहकैवल्यं तस्मात्, अन्ते– प्रारब्धक्षये, तृतीयशक्त्या सह निःशेषमायानाशः, अभिध्यान-योजनाभ्यां शक्तिद्वयनाशेन

१ ख.ग.घ.व. 'सांविदार'। २ विश्वारम्भकमायानिवृत्तिरिति योगः।

विशिष्टनाशापेक्षया। भूयःशब्दोऽभ्यासार्थक इति। तदेवं निरूपितमज्ञानम्।

ततो जीवे-श्वरादिप्रपञ्चः। तत्र 'अविद्याप्रतिबिम्बितं चैतन्यं जीवः' इति विवरणाचार्याः। सिद्धं चैतत् "रूपं रूपं प्रति रूपी बभूव" इति श्रुतेः, "एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" इत्यादिस्मृतेश्च। न चामूर्तस्य प्रतिबिम्बायोगः, आकाशादेस्तद्दर्शनात्। नन्वविद्यावच्छिन्नं चैतन्यमेव जीवोऽस्तु। एवं सति सर्वनियन्तृत्वमीश्वरस्य न स्यात्, जीवभावेनोपाध्यवच्छिन्नस्य पुनरवच्छेदान्तरासंभवात्, घटाकाशादौ तथादर्शनात्, द्विगुणीकृत्य वृत्त्ययोगादिति चेत्। न, बिम्बचैतन्यस्यापीश्वरस्य प्रतिबिम्बान्तर्द्विगुणीकृत्य वृत्त्ययोगात्। न हि जलगते स्वाभाविकाकाशे सत्यपि बिम्बस्य दूरविशालाकाशस्य साभ्रनक्षत्रस्य जलान्तरवस्थानं संभवति, कल्पना तूभयत्र तुल्येति चेत्। अत्राहुः– बिम्बं शुद्धमेव चैतन्यम्, अज्ञानप्रतिबिम्बितं चैतन्यं साक्षी, आवरणशक्तिप्रतिबिम्बभूतो जीवः, विक्षेपशक्तिप्रतिबिम्बभूतश्चेश्वर इति न किञ्चिद् दूषणम्, उपाधिभूतस्य शक्तिद्वयस्य व्यापकतया तत्प्रतिबिम्बयोर्जीवे-श्वरयोरपि व्यापकत्वात्, जीवान्तर्यामित्वस्य ब्रह्मणः श्रुतिसिद्धस्याव्याहतत्वादिति।

'अज्ञानावच्छिन्नं चैतन्यं जीवः' इति वाचस्पतिमिश्राः। न चात्रेश्वरस्य सर्वान्तर्यामित्वानुपपत्तिः, अज्ञानोपाध्यवच्छिन्नं चैतन्यं जीवः, अज्ञानविषयतोपाध्यवच्छिन्नं चैतन्यं चेश्वर इत्युपाधेर्व्यापकत्वेनोपहितस्येश्वरस्यापि व्यापकत्वात्। न च तथाप्यज्ञानचैतन्यस्येश्वरत्वे 'अहं मां न जानामि' इत्यनुभवादीश्वरस्य प्रत्यक्षत्वापातः। न चाज्ञाततया सर्वस्य साक्षिभास्यत्वादिष्टापत्तिः, अनुभूयमानस्य 'अहम्' इत्यज्ञानचैतन्यस्येश्वरस्य स्वरूपतः प्रत्यक्षत्वापातात्। इष्यते च 'ईश्वरं न

जानामि' इत्येतावान्मात्रमेवेति चेत् । न, 'अहं मां न जानामि' इत्यत्राखण्डस्यैवं ब्रह्माधिष्ठानस्य चैतन्यस्यावभासनात् , अज्ञाततोपहितचैतन्यस्येश्वररूपस्यानवभासनात् , अज्ञाततारूपोपाधिस्फुरणेऽप्ययोग्यत्वेन तदुपहितास्फुरणात्, घटस्फुरणे घटोपहिताकाशास्फुरणवत् ।

आभासवादिनस्तु दर्पणादौ मुखान्तरोत्पत्तिं स्वीकुर्वाणाश्चैतन्याभासमज्ञानेऽभ्युपगच्छन्तस्तत्तादात्म्यापन्नं चैतन्यं जीवमाहुः। तत्स्वीकारश्च निरुपाधिकाध्यासमात्रे सादृश्यापेक्षणादाभासतादात्म्यापन्नेऽन्यासादृश्यापन्ने चैतन्ये तादृशाहङ्काराध्याससंभवाय । जन्याध्यास एव निरुपाधिके सादृश्यापेक्षणाच्च नाभासाध्यासेऽपि तदपेक्षायामनवस्थापत्तिः, तस्यानादित्वात् । न चाज्ञानाध्यासेन सादृश्यसिद्धिः, जाड्येन तदापत्त्यसिद्धेः । तद्धि जडतादात्म्यम् , न चाज्ञानं तादात्म्येनाध्यस्तम् , संसर्गेणाध्यस्तत्वात् 'अहमज्ञः' इति । अतोऽनाद्याभासतादात्म्याध्यासेन जाड्यापत्त्या सादृश्ये सत्यहङ्काराध्यासो युज्यत इति । न चाभासे मानाभावः, 'आदर्शे मुखम्' इति स्पष्टं मुखान्तराभासात् । 'एकत्र क्लृप्तमन्यत्रापि प्रतिसंधीयते' इति न्यायेनाज्ञानेऽपि चैतन्याभासाङ्गीकारात् । एवमन्तःकरणादावपि । अज्ञानगतचैतन्याभासस्तु जीवशब्दप्रवृत्तिनिमित्तम् , तत्तादात्म्यापन्नस्य जीवत्वादिति ।

प्रतिबिम्बवादे तु न मुखान्तरोत्पत्तिः, मुखेऽधिष्ठानभेदमात्रस्य द्वित्वापरपर्यायस्यादर्शस्थत्वस्य चानिर्वचनीयस्योत्पत्त्यैव निर्वाहात् । अधिष्ठाने मुखे कतिपयावयवावच्छेदेनेन्द्रियसंनिकर्षादपरोक्षभ्रमोपपत्तेः । नन्वादर्श एवाधिष्ठानमस्तु, तत्र

१ क. 'व भ्रमाधि' ।

मुखाभावाज्ञानेन यदि मुखमपरोक्षम्, तदा तत्संसर्गस्य, अन्यथा तस्यैवोत्पत्त्योपपत्तेः, मुखाधिष्ठानत्वस्यानुभवाननुसारित्वादिति चेत् । न, सोपाधिक-निरुपाधिकभ्रमव्यवस्थाविप्लवप्रसङ्गात्, 'लोहितः स्फटिकः' इत्यत्रापि शुक्त्यज्ञानाद् रजतभ्रमवज्जपाकुसुमत्वाज्ञानाल्लोहिते तस्मिन् स्फटिकतादात्म्यभ्रमस्य सुवचत्वात्; अधिष्ठानस्योपाधित्वे च सर्वभ्रमाणां सोपाधिकत्वप्रसङ्गः, प्रत्यभिज्ञानाच्च न मुखान्तरोत्पत्तिः। नन्वेवं ततोऽज्ञाननिवृत्तौ भेदभ्रमोऽपि निवर्तेतेति चेत्। न, सोपाधिकभ्रमनिवृत्तावुपाधिनिवृत्तेः पुष्कलकारणत्वात्, भेदाध्यासे दर्पणस्योपाधित्वात्, सत्यपि प्रत्यक्षप्रत्यभिज्ञाने यावदुपाधिभेदाध्यासानुवृत्तेः। तस्माद् मुखमधिष्ठानं, तत्र च भेदोऽध्यस्यत इति स्थितम्। एवं चाज्ञानादौ प्रतिबिम्बे सत्यपि नाभासान्तरम्, मानाभावात्, अज्ञानाध्यासेन परिच्छिन्नत्वापत्त्यैव सादृश्यसंभवादिति विशेषः।

'स च जीवोऽज्ञानबहुत्ववादे हिरण्यगर्भ-विराडादिभेदेन नाना, तदैक्येऽपि तच्छक्तिभेदात्, तज्जान्तःकरणभेदाद् वा नाना' इत्यप्याहुः। अज्ञानभेदे प्रत्यज्ञानमावरणविक्षेपशक्तिकल्पने गौरवम्, तदैक्ये त्वेकत्रैव तावच्छक्तिकल्पनाल्लाघवम्। न च तावत्यः शक्तय एव सन्तु किमज्ञानेन? इति वाच्यम्; तासां साश्रयत्वनियमात्। चैतन्यं च न तदाश्रयः, शक्तस्य प्रपञ्चोपादानत्वात्, तस्य च सत्यत्वेनातथात्वात्। ततः शक्तिभेदेन तदुपहितजीवभेदः, तत्तज्जीवगततत्त्वज्ञानेन जीवोपाधिशक्तिनाशाद् मुक्त्युपपत्तेः। एवमन्तःकरणभेदेऽपि भाव्यम्। केवलमत्र "तन्मनोऽकुरुत" इति श्रुतेरन्तःकरणस्य जन्यत्वाज्जीवस्य सादित्वप्रसङ्ग इति नातीव प्राज्ञानामादरः।

जीवभेद एव क्रममुक्तिफलानां हिरण्यगर्भाद्युपासनावाक्यानामुपपत्तिः। तथाहि– कश्चिद् वेदार्थाभिज्ञो नित्याद्यनु-

तिष्ठन्नामरणाभ्यस्यमानकेवलहिरण्यगर्भोपासनायाः परिपाके मरणकाले 'अहं हिरण्यगर्भः' इति प्रत्ययोद्रेके देहं विसृज्यार्चिरादिमार्गेण ब्रह्मलोकं गतो हिरण्यगर्भसायुज्यं गच्छति । सायुज्यमत्र 'सयुजो भावः' इति व्युत्पत्त्या भूतावेशन्यायेन हिरण्यगर्भशरीरे चतुर्मुखे उपास्योपासकयोरवस्थानम्' इति केचित् । 'तन्न, सायुज्यशब्दस्य तादात्म्ये रूढत्वात्, योगाद् रूढेर्बलीयस्त्वात् परिच्छिन्नलिङ्गस्योपासकस्यापरिच्छिन्नलिङ्गोत्पादः' इत्यन्ये । तदपि न, सारूप्यलक्षणापत्तेः, परिच्छिन्नलिङ्गनाशे मानाभावाच्च ।

परे तु– 'अपरिच्छिन्नमेकमेव समष्टिलिङ्गं पाप्मासङ्गादिदोषेण भ्रान्त्या परिच्छिन्नतां गतमुपासनया पाप्मादिनिवृत्तौ स्वरूपेणावतिष्ठते, तेन जीवस्य ब्रह्मभाववद् हिरण्यगर्भसायुज्यम्' इत्याहुः । तदपि न, लिङ्गस्यैकत्वेन तस्य हिरण्यगर्भान्तिमतत्त्वज्ञानेन नाशे क्रममुक्तिफलसमर्पकोपासनावाक्यप्रमाण्यादिह श्रवणाद्यनुपपत्तेः । क्रममुक्तिमात्राङ्गीकारे उपासनाविचारस्यैव कर्तव्यत्वेन ब्रह्मविचारस्याकिञ्चित्करत्वप्रसङ्गाच्च । अपरिच्छिन्नलिङ्गानेकत्वेऽपि सायुज्यशब्दस्य सारूप्ये लक्षणापत्तिः । परिच्छिन्नस्यापरिच्छिन्नेन तादात्म्यमिति चेत् । न, सर्वरूपे स्थितेऽन्यस्यान्यात्मतानुपपत्तेः, नाशे मानाभावाच्च । संकोच-विकाशपक्षस्त्वत्यन्ताप्रामाणिकः । तस्माद् यथावस्थितलिङ्गस्यैवोपासकस्योपासनाफलम् । 'समष्टिलिङ्गे हिरण्यगर्भे देहादाविवानिर्वचनीयं तादात्म्यम्, उपासनादशायाम् 'हिरण्यगर्भोऽहम्' इति प्रातिभप्रत्ययाद् विलक्षणस्य सायुज्यदशायामप्रातिभस्य तत्प्रत्ययस्य फलभूतस्य विषयः' इति वदन्ति ।

अन्यस्तूपासनाया अपरिपाके हिरण्यगर्भसालोक्यादि गच्छति, परस्त्विहैव श्रवणादिपरिपाकोत्पन्नज्ञानो मुच्यते,

अपरस्तु श्रवणादिपरिपाकेऽपि प्रारब्धप्रतिबन्धेनानुत्पन्नज्ञानस्तन्नाशे शरीरनाशाद् योऽन्यन्तरगतो गर्भस्थदेहाभिव्यक्तौ प्रथममेव 'अहं ब्रह्मास्मि' इति प्रत्ययं लभते, वामदेववत्। अन्यः पुनः साधनसंपन्नः श्रवणाद्यभ्यासे क्रियमाणे मध्ये मृतः श्रवणाद्यभ्याससामर्थ्योद्बुद्धपूर्वशुभकर्मफलानि बहुकालं भुक्त्वा शुचीनां श्रीमतां योगिनां वा कुल उत्पन्नः पूर्वाभ्यासवशेन पुनः प्रारब्धश्रवणाद्यभ्यासपरिपाकलब्धज्ञानो विमुच्यत इति। एवं विराडाद्युपासकानां विराडादिसायुज्यप्राप्तिः, प्रतीकोपासकानां च विद्युल्लोकप्राप्तिर्व्याख्येया।

अन्ये त्वज्ञानैक्यात् तदुपहितं जीवमेकमेवाङ्गीकुर्वन्ति। तेषामुपासकानां क्रममुक्तिफलश्रवणमर्थवादमात्रम्। चित्तैकाग्र्ये तूपासनोपयोगः, कर्मानुष्ठानवत्। न त्वन्तिमप्रत्ययोत्पत्त्या फलदमुपासनम्, जीवैकत्वेऽप्यन्तःकरणभेदेन प्रमातृभेदाद् वोपसनोपपत्तिः, केषाञ्चित् प्रमातॄणामनुष्ठितोपासनापरिपाके ब्रह्मलोकं गतानां यावत्कल्पमवस्थाय कल्पान्तर आवृत्तेः "इमं मानवमावर्तं नावर्तते" इति श्रुतौ 'इमम्' इति विशेषणादेतत्कल्प एवानावृत्तिपर्यवसानात्, अन्यथैतद्विशेषणानुपपत्तेः। वामदेवादीनां मुक्तत्वश्रवणं काल्पनिकाभिप्रायम्, नित्यमुक्तत्वाभिप्रायं वा। न चानाश्वासः, श्रुतेः प्रामाण्यात्, अनेकजीववादेऽद्य यावत् कस्यचिदमुक्तत्ववत्, एकजीववादे सर्वस्य तत्त्वोपपत्तेः। तदेवं निरूपितो जीवः।

तत्रान्तःकरणमध्यस्यते 'अहम्' इति, रज्ज्वामिव सर्पः। निरुपाधिकोऽयमध्यासः, उपाधेरनिरूपणात्। 'अहमज्ञः' इति त्वहंकारा-ऽज्ञानयोरेकचैतन्याध्यासात्, एवं वह्निसंबन्धाद् दग्धृत्वा-ऽयसोरिव 'अयो दहति' इतिप्रत्ययः। तच्चान्तःकरणं स्मृतिप्रमाणवृत्तिसंकल्पविकल्पाहंवृत्त्याकारेण परिणतं चित्त-बुद्धि-मनो-ऽहङ्कारशब्दैर्व्यवह्रियते। इदमेवात्मतादात्म्येनाध्य-

स्यमानमात्मनि सुख-दुःखादिस्वधर्माध्यासे उपाधिः, स्फटिके जपाकुसुममिव लौहित्यावभासे। एवं प्राणादयस्तद्धर्माश्चाशनीया-पिपासादयः, तथा, श्रोत्रादयो वागादयश्च तद्धर्माश्च बधिरत्वा-ऽन्धत्वादयोऽध्यस्यन्ते, तथा, देहस्तद्धर्माश्च स्थूलत्वादयः। तत्रेन्द्रियादीनां न तादात्म्याध्यासः, 'अहं श्रोत्रम्' इत्यप्रतीतेः, देहस्तु 'मनुष्योऽहम्' इति प्रतीतेस्तादात्म्येनाध्यस्यते।

ननु कथमज्ञानादीनामध्यस्ततया प्रतीतिः, न तावदध्यक्षा, इन्द्रियाजन्यत्वात्, नाप्यनुमितिः, लिङ्गाद्यननुसंधानेऽपि भावात्? इति चेत्। उच्यते, चिदात्मनोऽज्ञानोपहितस्य साक्षित्वेन तस्य भास्यसंसर्गमात्रमपेक्ष्याज्ञानादीनामाध्यासिकसंसर्गभासकत्वात् तदवभासः। तेन यावद् विषयसत्त्वं 'अहमज्ञः, सुखी, दुःखी, मनुष्यः' इति भासमानत्वाद् न कदापि संदेहः। स चापरोक्षैकस्वभावः, अध्यस्ता-ऽधिष्ठानयोरभेदेन संविदभिन्नत्वात्। संविदभेदो ह्यपरोक्षता नाम। स च नानिर्वचनीयतादात्म्यस्वरूपः, तादात्म्यसंसर्गादीनामपरोक्षत्वाभावप्रसङ्गात्, तत्र तादात्म्यान्तराभावात्, किन्तूक्तलक्षण एवेति।

नन्वेवं घटस्य संविदभिन्नत्वाभावात् परोक्षत्वमापद्यत इति चेत्। किमीश्वरस्य, जीवस्य वा? । नाद्यः, ब्रह्मण्यभेदेनाध्यस्तत्वाद् घटादीनाम्। नापि द्वितीयः, तथाहि– परिच्छिन्नजीवपक्षे तावदिन्द्रियद्वारा निःसृतान्तःकरणवृत्त्या संसृष्टो घटः, घटसंसृष्टा वा वृत्तिः प्रमातृचैतन्यस्य घटावच्छिन्नब्रह्मचैतन्यावरणनिवृत्तौ, तदज्ञाननिवृत्तौ वा, तदुभयाभावपक्षेऽनिवृत्तौ वा विषयचैतन्याभेदेनाभिव्यक्तिहेतुः संपद्यते। ततः स्वाध्यस्तो घटः सुखवदपरोक्षः। सुखं साक्ष्यपरोक्षम्, घटः प्रमाणापरोक्ष इत्येतावान् भेदः। अपरिच्छिन्नजीवपक्षेऽप्यसङ्गस्य जीवचैतन्यस्य घटोपरागार्था वृत्तिः। उपरागस्तु न संयोगादिः, मानाभावात्, किन्तु स्वाध्यस्तत्वमेव। तच्चात्र पक्षे व्यवहारसौकर्याय घटावच्छिन्नचैतन्येष्वावरणान्तराज्ञानान्तरास्वीकाराद्

वृत्तेस्तन्निवृत्त्यर्थत्वाभावेऽपि जीवचैतन्यस्यासङ्गत्वात् घटानधिष्ठानत्वाच्च न वृत्तेः प्राग् घटसंबन्धः । अन्तःकरणवृत्तिस्तु जीवेऽध्यस्तेति तया सह संबन्ध एव, इतीन्द्रियद्वारा निःसृतान्तःकरणवृत्त्या संसृष्टे घटे, घटसंसृष्टायां वा वृत्तौ जीवचैतन्यविषयाधिष्ठानचैतन्याभेदापत्त्येति ।

अथ ब्रह्माध्यस्तो घटः प्रमाणवृत्त्या जीवाध्यस्तो भवतीत्येवाभ्युपेयम्, किमुभयचैतन्याभेदापत्त्या ? इति चेत् । न, वृत्तेर्बहिर्निःसरणाभ्युपगमवैयर्थ्यप्रसङ्गात् । तदनुपगमे च बहिःस्थस्य घटस्य कथमन्तःकरणोपहिते जीवचैतन्येऽध्यासः ? । घटाव्यवहिततया घटावच्छिन्नजीवचैतन्यस्यासङ्गस्याध्यासिकघटसंसर्गार्थं तदुपगम इति चेत् । तथा सति ब्रह्माध्यस्तघटसंसर्गो जीवचैतन्ये उत्पन्नः प्रामाणवृत्त्येति स एव जीवापरोक्षः स्याद् न घटः । न हि देशान्तरीयरजततादात्म्योत्पत्तावपि रजतापरोक्षत्वं सिध्यति । लौहित्यस्य त्वपरोक्षदशायां संसर्गः स्फटिके जायते, गृह्यमाणारोपत्वादिति न संसर्गापरोक्षत्वेन संसर्गिणोऽपरोक्षत्वम् । किञ्च, उत्पद्यमानः संसर्गोऽनिर्वचनीयः प्रातिभासिको न प्रामाणिकः संभवति, विरोधात् । तस्माद् न जीवचैतन्ये घटोपरागः प्रमाणवृत्त्या जायते, किन्त्वाध्यासिकसंबन्धेन, घटस्फोरकघटाधिष्ठानचैतन्येन जीवचैतन्यस्योक्तोपाधावभेदोऽभिव्यज्यते । इत्येवं स्वाध्यस्ततया घटापरोक्षत्वम् ।

अथवा, आवरणाभिभवार्था वृत्तिः, सर्वगतेऽपि जीवचैतन्येऽखण्डावरणस्य स्वविषयचैतन्यगोचरप्रमात्रादिविस्पष्टव्यवहारप्रतिबन्धकेऽन्तःकरणाद्युपाधेरुत्तेजकस्थानीयत्वेन तत्प्रतिबध्यकार्योदयात् । किमर्थमस्मिन् पक्ष उभयचैतन्याभेदाभिव्यक्तिः ? प्रमातृचैतन्यमेव विषये परिणामसंसृष्टेऽभिव्यक्तं फलं भवद् घटं विषयीकुरुतामिति चेत् । ब्रह्माध्यस्तस्य तस्य संविद्-

भेदरूपापरोक्षत्वायैव । तदेवं घटादेरपरोक्षता, वह्न्यादेस्तु प्रमातृचैतन्यनिष्ठाज्ञानमात्रनिवृत्तावप्युभयचैतन्याभेदाभिव्यक्त्य-भावात्, वृत्तेश्चान्तरेवोत्पादात् परोक्षता । रजतादेश्च शुक्त्याद्यज्ञानसमुत्पन्नस्यानिर्वचनीयस्येदंवृत्त्या, इदमंशस्य घटादिन्याये-नापरोक्षत्वात्, प्रमातृचैतन्याभिन्नेदमंशचैतन्येऽध्यस्तत्वात् सुखादिवदपरोक्षत्वम् । इदमंशतादात्म्येनोत्पन्नत्वाच्च 'इदं रजतम्' इति प्रत्ययः । 'सत्' इति च तत्र शुक्तिसत्तैव भासते । न चान्यथाख्यातिः, तत्संसर्गस्यानिर्वचनीयत्वात् । न चैवं भ्रमानु-मित्यादौ वह्नेरिव देशान्तरीयरजतस्य संसर्गोत्पत्त्यैव निर्वाहः, वह्नेरिव रजतस्य परोक्षत्वापत्तेः । शुक्ति-सत्तयोस्त्वपरोक्षत्वं प्रमाणवृत्त्यैव, इदमंशवत् ।

अन्ये तु तत्रापि वह्न्यंशे शुक्तिसत्तांशे चान्यथाख्यातिर्मा भूदिति वह्न्युत्पत्तिं, रजते सत्तान्तरोत्पत्तिं चाचक्षते । तदु-क्तम्– "अथवा त्रिविधं सत्त्वम्" इति । नन्वेवं सुखादिवदपरोक्षत्वे रजताकारा वृत्तिर्न स्यात्, तत्र हीदमंशावच्छिन्नब्रह्म-चैतन्याभिन्ने प्रमातृचैतन्ये 'रजतम्' इति तत्प्रमातृचैतन्यमिदमाकारवृत्तिप्रतिफलिततयेदमंशे प्रमाणमपि, तत्रैव विषयेऽभिव्य-क्ततया फलमपि रजतांशे शुद्धसाक्षिरूपं, न तु प्रमाणं वा, फलं वा, प्रमाता वा, तदाकारप्रमाणवृत्त्यभावादेव, इति रजतवृत्तेः कोपयोगः ? इति चेत् ।

अत्र केचित्– साक्षिचैतन्यं स्वतः स्फुरदप्यसङ्गतया तत्तद्विषयावभासनायासमर्थं ज्ञानसंशब्दितवृत्तिप्रतिबिम्बितमेव विषयावभासकं भवति, इत्यज्ञान-सुखादीनामपि तदाकाराविद्यावृत्तिप्रतिफलितचिद्भास्यत्वमेव, केवलसाक्षिवेद्यत्वं तु प्रमाण-वृत्त्यनपेक्षत्वात्, इत्यावश्यकी रजतवृत्तिः । अन्यथा सदा विषयविशिष्टाज्ञानावभासप्रसङ्गः, साक्षिणि साक्षादध्यस्तत्वात्,

केवलाज्ञानास्फुरणाच्च। उक्तरीत्या तु नायं दोषः, वृत्तेरसदातनत्वात्, अत एवेश्वरस्यापि सर्वज्ञता सर्वाकारमायावृत्त्यैव। 'इयं च वृत्तिरन्तःकरणपरिणाम एव, अत एव स्वप्नस्य मनोवृत्तित्वम्' इति केचित्। अन्ये तु– 'सुषुप्तावन्तःकरणाभावादज्ञानसुखाद्याकाराविद्यावृत्तेरावश्यकत्वे तयैव साक्षिवेद्यत्वोपपत्तौ न तथा' इत्याहुः।

अपरे पुनः– 'वृत्तौ तादृशसामर्थ्ये मानाभावाद् वृत्तिभानप्रयोजकाध्यासिकसंबन्धस्यैवाज्ञानादिभानप्रयोजकत्वे तत्कल्पनानवकाशाद् नाज्ञानाद्याकारावृत्तिर्भानार्था। अज्ञानविशेषणतया सदा घटादिसर्वविषयभानं त्विष्टमेव, मनुष्यत्वाद्यभिमानवत्। अत एव स्वसत्तायामव्यभिचारिप्रकाशत्वमहंकारादीनामुक्तं ग्रन्थकारैः। रजतवृत्तिस्त्वावश्यकी। तथाहि– घटस्यापरोक्षत्वं न सुखादिवदन्तरवच्छेदेन, किन्तु बहिरवच्छेदेन। न हि बहिर्निःसृता वृत्तिर्घटं शरीरावच्छेदेन स्वाध्यस्तं संपादयति, बहिष्ठत्वात् तस्य, किन्तु घटावच्छिन्नब्रह्मचैतन्यप्रमातृचैतन्याभेदमभिव्यनक्ति। घटावच्छिन्नब्रह्मचैतन्यं च घटावच्छेदेनैव घटमपरोक्षीकरोति, नान्यावच्छेदेन, अन्यावच्छिन्नस्यान्यविषयीकरणे यत्किञ्चिदेकावच्छिन्नस्य सर्वज्ञत्वप्रसङ्गात्। तदेतदुभयचैतन्याभेदाभिव्यक्तिर्घटावच्छेदेन, न शरीरावच्छेदेन। अत एव विषयावच्छिन्नस्यैव फलत्वप्रवादः। ततः शरीरावच्छेदेन घटस्फुरणं वृत्तिविषयतयैव। द्वेधा हि तत्– एकं ज्ञाततयाऽज्ञाततया वा साक्षिविषयतया, अपरं च फलव्याप्यतया। आद्यं शरीरावच्छेदेन, द्वितीयं च घटावच्छेदेनेति।

कथं तर्हि 'घटं साक्षात् करोमि' इति शरीरावच्छेदेन प्रत्ययः, बहिरवच्छेदेनैव घटादेरपरोक्षत्वात्? इति चेत्। साक्षात्कारत्वस्य वृत्तिगतधर्मत्वात् तद् विषयापरोक्षत्वनिमित्तकम्, न तु वृत्तेः स्वाध्यस्तत्वकृतापरोक्षत्वकृतम्, वाक्यादावपि

तथाप्रसङ्गात्। तच्चानुमितित्ववत् साक्षिगम्यमिति। एवमिदमंशावच्छेदेनोत्पन्नं रजतमिदमंशावच्छेदेनैवापरोक्षम्, तत्तच्छरीरप्रदेशावच्छेदेन विद्यमानं सुखमिव तत्तदवच्छेदेन, इत्यतोऽन्तरवच्छेदेन तज्ज्ञानं वृत्तिमाक्षिपतीति। न चेदंवृत्तिविशेषणतयाऽन्तस्तदवभासः, तस्यास्तदाकारत्वाभावात्; ईश्वरे मायावृत्तिस्तु वर्तमानस्य स्वाध्यस्तस्य जीवे सुखादिवदपरोक्षत्वेऽप्यतीताऽनागतभानार्थं प्रतिकल्पं सर्वाकारैका कल्प्यते, श्रुत्युक्तजगत्कर्तृत्वनिर्वाहाय च, अन्यथा कार्यानुकूलज्ञानादिमत्त्वरूपतदनुपपत्तेः, स्वरूपज्ञाने भेदाभावेनाधाराधेयभावासंभवात्' इत्याहुः।

तदेवं केवलसाक्षिवेद्यत्वे तुल्येऽपि रजतादौ वृत्तिरपेक्षिता, नाज्ञानादौ देहपर्यन्ते। ननु कथं देहस्य केवलसाक्षिवेद्यत्वम्, घटादिवच्चक्षुर्ग्राह्यत्वेन प्रमाणवेद्यत्वात्? न च तत्र स्वप्नवच्चक्षुर्ग्राह्यत्वम्, घटादावप्यनाश्वासात्। न च प्रमाणवेद्य एव देहः, अज्ञानविषयत्वेन कदाचिद् 'अहं मनुष्यो न वा' इति संदेहापत्तेः। किञ्च, अस्य ब्रह्मण्यध्यस्तत्वे घटादिवद् न केवलसाक्षिवेद्यत्वम्, जीवाध्यस्तत्वे च सुखादिवदन्यापरोक्षत्वभङ्ग इति चेत्। अत्राहुः– एक एवायं जीवो देहत्वेन ब्रह्मण्यध्यस्तः, न जीवे, 'अहं देहः' इत्यप्रतीतेः। तादात्म्याभिनिविष्टमनुष्यत्वेन जीवेऽध्यस्तो न ब्रह्मणि, 'अहं मनुष्यः' इति प्रतीतेः। तेनैव च रूपेण केवलसाक्षिवेद्यत्वम्, प्रमाणवृत्त्यनपेक्षत्वात्, देहत्वेन तु प्रमाणवेद्यत्वम्। एवमन्तःकरणादिरपि तत्त्वादिना ब्रह्मण्यध्यस्तः, अहन्त्वादिना जीव इति सिद्धमज्ञानोपहितचैतन्यरूपसाक्षिवेद्यत्वं देहस्य।

ननु नाज्ञानं साक्षित्व उपाधिः, सुषुप्तेऽज्ञानसुखसाक्षिस्फूर्तेः पुरुषान्तरस्य 'सुखमहस्वाप्सम्' इति स्मरणप्रसङ्गात्;

---

१ ख. ग. घ. च. 'ज्ञानत्व'।

किन्त्वन्तःकरणमेव, यदन्तःकरणोपहिते संस्कारस्तत्रैव स्मरणनियमेनानतिप्रसङ्गादिति चेत्। न, सुषुप्तावज्ञानाद्याकारवृत्त्या परिच्छिन्नयान्तःकरणादिसंस्कारावच्छेदेनोत्पद्य नश्यन्त्या तदवच्छेदेन संस्काराधानात् तदवच्छेदेन स्मरणादनतिप्रसङ्गात्, जीवेश्वरसाधारण्येनाज्ञानस्य साक्षित्वोपाधित्वात्। तदुक्तम्– 'मोहसंक्रान्तमूर्तिः साक्षी' इति। अयमेव प्राज्ञ इति, आनन्दमय इति च गीयते, सुषुप्तेः प्रकर्षेणाज्ञत्वात्, आनन्दप्रचुरत्वाच्च 'न किञ्चिदवेदिषम्' इति 'सुखमस्वाप्सम्' इति परामर्शात्, तत्रान्तःकरणाद्युपाधिविरहात्, जागरापेक्षयानन्दाभिव्यक्तेः, न त्वानन्दमयः शुद्धः, अनात्मत्वेन निर्णीतान्नमय-प्राणमय-मनोमय-विज्ञानमयप्रायपाठात्। स्थूलदेहसंबन्धात् 'अन्नमयः' इति, प्राणपञ्चक-कर्मेन्द्रियपञ्चकसंबन्धात् 'प्राणमयः' इति, मनःसंबन्धाद् 'मनोमयः' इति, बुद्धि-ज्ञानेन्द्रियसंबन्धाद् 'विज्ञानमयः' इति च स एवानन्दमयोऽभिधीयते।

प्राणमयादिकोशत्रयस्यैव तैजसत्वव्यपदेशः। तत्रैव च विज्ञानमयो ज्ञानशक्त्या 'कर्ता' इत्युच्यते, मनोमय इच्छाशक्त्या करणम्, प्राणमयः क्रियाशक्त्या कार्यम्। एतेन परेषामिव नास्माकं प्रयत्नः, कोशद्वयनिष्ठज्ञाने-च्छाभ्यामनन्तरं प्राणक्रियाशक्त्यैव शरीरचेष्टासंभवात्, इष्टपदार्थज्ञानस्य 'इष्टं मे स्यात्' इतीच्छायाश्चानुभववत् प्रयत्नानुभवाभावाच्च, 'अहं प्रयते' इति चेष्टाविषयत्वात् प्रतीतेः, शब्देन च तदभिधानात्। एतेन जीवनयोनिः प्रयत्नो निरस्तः। इदमेव कोशत्रयं लिङ्गशरीरम्। तच्च द्विविधम्– समष्टि-व्यष्टिभेदात्। तत्र समष्टिर्नाम व्यापकं सूत्रमिव मणिषु सर्वलिङ्गशरीरेषु स्थूलेषु चानुस्यूतं हिरण्यगर्भाख्यं लिङ्गशरीरम्। तच्चोपासनाविशेषफलभूतं प्रभूतपुण्यस्य भोक्तुरुत्कर्षं गतस्यानन्दविशेषस्यायतनं 'ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मणः' इति श्रुतेः। एतस्य चोक्तविधानन्दभोगनियमनमस्थूलशरीरापेक्षया, ब्रह्माण्डाद् बहिरपि

भोगश्रवणात् । एतदुपासकानां चोक्तविधसायुज्यं गतानां विराडादिसृष्टिव्यापारवर्जं तादृशमेव भोगादि व्यष्टिर्नाम परिच्छिन्नम् । तच्च बहुविधं विराजादि पिपीलिकापर्यन्तम् । तत्र विराजोऽस्मदादिवत् परिच्छिन्नस्यैव सतः प्रभूतपुण्यभोक्तृविशेषस्य सकलस्थूलाभिमानिनः सत्यलोकाधिपतेश्चतुर्मुखभोगशरीरावच्छेदेन हिरण्यगर्भाच्छतगुणापकृष्टानन्दविशेषान् भुञ्जतः प्रजापति-वैश्वानर इत्यादयो व्यपदेशा भवन्ति । सकलस्थूलाभिमानित्वाच्च स्थूलसमष्टिरिति व्यपदिश्यते, हिरण्यगर्भस्यैव स्थूलसंबन्धाद् विराट्संज्ञा, तैजसस्यैव विश्वसंज्ञा, जीवान्तरकल्पने गौरवात् , इति न युक्तमुपासनाविधिशेषेभ्यः, देवताविग्रहन्यायेन तत्सिद्धेः । एवमग्न्यादयोऽपि श्रुत्यादिसिद्धा अवसेयाः ।

एतच्च समष्टि-व्यष्टिलिङ्गशरीरमपञ्चीकृतेभ्यो भूतेभ्य उत्पद्यते । तथाहि– मायाशबलाच्चिदात्मन आकाशः, तस्माद् वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी । एतानि सूक्ष्माणि व्यापकानि च सूक्ष्मत्वं विरलावयवत्वम् । एतान्येव 'तन्मात्राः' इति व्यपदिश्यन्ते । एतेभ्यश्च व्यस्तेभ्यः क्रमेण श्रोत्रादिपञ्चकं वागादिपञ्चकं च, समस्तेभ्योऽन्तःकरणं प्राणश्चोत्पद्यते । अत एव श्रोत्रं न परेषामिव कर्णशष्कुल्यवच्छिन्नं नभः, किन्तु तत्कार्यं व्यष्टिसमष्टिरूपम् , तेन नावश्यमन्तरेवोत्पन्नः श्रोत्रेण शब्दो गृह्यत इति नियमः, चक्षुर्वद् बहिर्गत्वा तेन बहिष्ठस्यापि शब्दस्य ग्रहणसंभवात् । ततश्चैक एव शब्दो यथाप्रतीति बहुभिः पुरुषैर्गृह्यत इति युक्तं समाश्रयितुम् । ततश्च न प्रतिपुरुषं शब्दान्तरग्रहणकल्पना, नापि शब्दैकत्वप्रतीतेः सजातीयनिमित्तक-भ्रमत्वकल्पना[1] ।

---

१ ख. ग. घ. च. 'क्ष्मत्ववि' ।

एतानि च श्रोत्रादीनि 'पञ्चभूतकार्यान्तःकरणात्मकानि' इति केचित्। 'स्वतन्त्राणि' इत्यपरे । 'एवमुत्पन्नलिङ्गशरीरेभ्योऽपञ्चीकृतेभ्यः पञ्चीकृतभूतोत्पत्तिः' इति केचित्। पञ्चीकरणं तु पञ्चानामर्धदशकं विधाय पञ्चानामर्धपञ्चके इतरार्धपञ्चकस्य प्रत्येकं चतुर्धा विभक्तस्य भागचतुष्टयस्य स्वस्वार्धपरित्यागेन योजनम् । अत्र चेश्वरस्यैव कर्तृत्वम् "नासमैकैकान्निवृत्तं करवाणि" इति श्रुतेः। पृथिव्यादिभागानां बहुत्वात्तु पृथिव्यादिव्यपदेशः।

सांप्रदायिकास्तु– न पञ्चीकृतानां कार्यान्तरत्वमिच्छन्ति, आकाशादिभ्यो वाय्वादिजन्मश्रवणवदपञ्चीकृतेभ्यः पञ्चीकृतजन्मश्रवणाभावात्, किन्तु तान्येव संयोगविशेषावस्थानि पञ्चीकृतान्युच्यन्ते। अत एव 'पटोऽपि न तन्तुभ्यः कार्यान्तरम्, किन्तु संयुक्तावस्थास्तन्तव एव' इति सिद्धान्तः। एतेभ्यः पञ्चीकृतेभ्यः पञ्चभ्योऽपि ब्रह्माण्डभूधरादिचतुर्दशभुवनचतुर्विधस्थूलशरीरोत्पत्तिः। कथं विजातीयेभ्य एककार्योत्पत्तिः? इत्याक्षिपतां तन्तुभ्यः पटकार्योत्पत्तिं स्वीकृत्य तन्तु-केशपट्ट-सूत्रादिभ्यः प्रतीयमानाऽऽसनादिविचित्रकार्याभावमङ्गीकुर्वतां कोशपानमेवैकशरणम्। चतुर्विधानि– जरायुजा-ऽण्डज-स्वेदजोद्भिज्जानि। तदेवं निरूपितो हिरण्यगर्भादिरुद्भिज्जान्तो जीवस्य संसारोऽविद्यामूलः ॥ १ ॥

निरवयवस्यापि ब्रह्मणोऽविद्यया विचित्रतयाऽभिव्यक्तौ दृष्टान्तमाह—

**यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः। संकीर्णमिव मात्राभिर्भिन्नाभिरभिमन्यते ॥२॥**

यथा विशुद्धं– वस्तुतोऽसंकीर्णम्, आकाशं, तिमिरोपप्लुतः– तिमिरदुष्टलोचनः, जनः– परिच्छेत्ता, भिन्नाभिः–

विचित्राभिः, मात्राभिः– केशमक्षिकादिरूपादिभिः, संकीर्णमिवाभिमन्यते– दोषात् पश्यति।

ननु कथमेतत् 'इदं रजतं' इत्यत्रेदमंशस्य प्रमाणतोऽपरोक्षत्वस्य, रजतांशस्य च रजताकाराविद्यावृत्त्या साक्ष्यपरोक्षत्वस्येव, अत्र केशादिसंकीर्णतांशेऽविद्यावृत्त्या साक्ष्यपरोक्षत्वेऽप्याकाशांशे घटवत्स्वावच्छिन्नब्रह्मचैतन्यप्रमातृचैतन्याभेदाभिव्यञ्जकवृत्त्यभावेन प्रमाणतोऽपरोक्षत्वाज्जीवेऽनध्यस्तत्वेन च सुखादिवत् साक्ष्यपरोक्षत्वायोगात्? इति चेत्। अत्र वदन्ति– यथा केवलसाक्षिगम्यस्याप्यज्ञानरजतादेः प्रामाणिकभावत्व-मिथ्यात्वादिधर्मपुरस्कारेण प्रमाणगम्यत्वम्, एवं प्रामाणिकस्यापि नभसः केवलसाक्षिवेद्यसंकीर्णताधर्मपुरस्कारेण केवलसाक्ष्यपरोक्षत्वम्, नभःसंकीर्णतावगाह्यैकाविद्यावृत्तिप्रतिफलितसाक्षिणा संकीर्णतायास्तदाश्रयतया नभसश्च विषयीकरणात्।

नन्वेवमविद्यावृत्तिविषयतया साक्षिविषयीकृतत्वाद् भ्रमानुमिताविवापरोक्षत्वं न स्यादिति चेत्। न, ईश्वरस्य मायावृत्तिविषयतयाऽतीता-ऽनागतानामपरोक्षत्ववत् प्रकृतेऽपि तथात्वात्, अभ्रमप्रमानुमित्यादावविद्यान्तःकरणवृत्तिविषयतया वह्नेः साक्षिसंबन्धेऽपि लिङ्गादिप्रतिसंधानापेक्षत्वादपरोक्षत्वव्यवहाराभावात्, अज्ञानविषयतया घटवह्न्यादेः साक्षिसंबन्धे तूक्तहेतोरभावात् तद्भावात्। ततो विषयपक्षपातितया नभोनिष्ठसंकीर्णताभावाज्ञानस्य नभोऽवच्छिन्नचैतन्यनिष्ठाऽपि संकीर्णता साक्षिणि स्वाकाराविद्यावृत्तिविषयतया स्वाध्यस्ता लिङ्गादिप्रतिसंधानाभावादपरोक्षैव व्यवह्रियते। अधिष्ठानज्ञानं विना कथं नभसि संकीर्णताभ्रमः, न च केवलस्याधिष्ठानस्याविद्यावृत्तिरूपं ज्ञानं संभवति, प्रामाणिकत्वात्? इति चेत्। न, तज्ज्ञानस्यानुमितिरूपत्वात्, भ्रमात् प्रागधिष्ठानस्य परोक्षत्वेऽपि भ्रमदशायामपरोक्षत्वात्, प्रागपरोक्ष एवाधिष्ठानेऽपरोक्षभ्रम इति नियमाभा-

वादिति । ततः स्थितमेतदाकाशमसंकीर्णमप्यविद्यावृत्त्या संकीर्णमिव पश्यतीति ॥ २ ॥

दार्ष्टान्तिकयोजनामाह—

**तथेदममलं ब्रह्म निर्विकल्पमविद्यया । कलुषत्वमिवापन्नं भेदरूपं प्रकाशते ॥३॥**

तथेदं– साक्षादपरोक्षम्, अमलं– सजातीयभेदरहितम्, निर्विकल्पं– विजातीयभेदविकल्पविकलम्, ब्रह्म, अविद्यया हेतुभूतया, कलुषत्वमिवापन्नं– सजातीयभेदभागिव भेदरूपं विजातीयभेदभागिव प्रकाशते । अविद्यानिवृत्तौ च शुद्धब्रह्मप्रतिपत्तिः, तथाहि– कश्चित् खलु नित्याध्ययनविधिना सम्यगधीतवेदान्तो वेदान्तवाक्यानामापाततोऽर्थमवगच्छति ।

ननु कथमध्ययनविधेर्नित्यत्वम्, स्वाध्यायाध्ययनस्यार्थबोधफलकत्वात् ? । न ह्यध्ययनस्यावघातादिवदुत्तरक्रत्वङ्गत्वम्, श्रुत्याद्यसत्त्वात् । तदवश्यं फले कल्पनीये न विश्वजिद्वत् स्वर्गः फलम्, स्वर्गोपस्थितेस्तस्य प्रकृतकर्मफलतायाश्च कल्पनायां गौरवात् । न चार्थवादिकं पितॄणां पयःकुल्याप्राप्त्यादि 'यद् वचोऽधीते' इत्याद्युक्तं तत्फलम्, तस्य ब्रह्मयज्ञार्थवादत्वात्, दृष्टे संभवत्यदृष्टकल्पनानुपपत्तेश्चार्थावबोधस्यैव फलत्वात् । न च विधिवैयर्थ्यम्, नियमविधित्वादुपदेष्ट्रादीनां साधनत्वेनाध्ययनस्य पक्षप्राप्तेः । तस्मात् काम्यत्वाद् न नित्यत्वमध्ययनस्येति चेत् ।

अत्र वदन्ति— काम्यत्वेऽपि फलतो नित्यत्वमविरुद्धम् । अत एव 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् भवति— यज्ञेन देवेभ्यः, प्रजया पितृभ्यः, ब्रह्मचर्येण ऋषिभ्यः' इति ऋणश्रुतिः ।

" योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ १ ॥ "

इति स्मृतेश्च । नन्वेवं स्वरूपत एव नित्यत्वमस्तु, तथाचाग्निहोत्रादिवत् काम्यत्वव्याघात इति चेत् । किमिदं स्वरूपनित्यत्वम् ? । यदि तावदवश्यकर्तव्यता, तदा तदुच्यत एव फलतः । अथाकरणे प्रत्यवायः, सोऽपीष्यत एव, अध्ययनाकरणे धर्मानवबोधेनोत्तरकर्माभावात् । अथ नैमित्तिकत्वम् । तदयुक्तम्, अग्निहोत्रादिवद् निमित्ताश्रवणात्, फलतो नित्यत्वेन ऋणश्रुत्याद्युपपत्तौ निमित्तकल्पनानवकाशात् । अत एवाध्ययनाकरणनिमित्तको न प्रत्यवायः । अथवा, तदकरणेऽपि प्रत्यवाय एव, 'विहितस्याननुष्ठानात्' इत्यत्रावश्यकत्वेनानुगतीकृतयोः फलतो नित्य-नैमित्तिकयोर्विहितपदेनोपादानात् अर्थावबोधफलकत्वं तु प्रकृतस्वाध्यायविधेरयुक्तम्, श्रवणादिविधेः साधनचतुष्टयसंपन्नाधिकामत्वश्रवणात्, अनन्तरदृष्टाहरहःकर्तव्यब्रह्मयज्ञाद्यर्थावाप्तेरेव तत्फलत्वात्, 'स्वाध्यायोऽध्येतव्यः' इत्यत्राध्ययनसंस्कृतेन स्वाध्यायेनार्थावबोधं भावयेदित्यर्थात्, संस्कारश्चावाप्तिः, इति श्रुतिपरित्यागायोगात्, क्षत्रियस्य निषादेष्ट्यादिवाक्याध्ययनेऽर्थावबोधस्य निष्प्रयोजनत्वेनावाप्तिफलत्वावश्यकत्वाच्चेति दिग् ।

आपातता च वेदान्तवाक्यार्थावगमस्य निःसामान्यविशेषब्रह्मावधारणरूपस्यापि संशयाविरोधितैव । यत्त्वेककोटिकानिश्चयरूपतैवाऽऽपाततेति । तन्न, अनिश्चयरूपस्यानेककोटिकत्वेन क्लृप्तत्वात् । अनिश्चयमपि किञ्चिदेककोटिकं कल्पयिष्याम इति चेत् । निश्चयमेव कश्चित् संशयाविरोधिनं कल्पन्ताम्, वेदानां स्वार्थे निश्चितप्रमाजनकत्वात् । वस्तुतः परेषामप्रामाण्यज्ञानस्थलेऽस्माकं दोषविशेषस्य लाघवादुत्तेजकत्वम् । अत एव व्यवसायसामर्थ्यात् तद्वत्त्वस्य तत्प्रकारक-

त्वस्य चानुपस्थितस्यापि 'जलमहं जानामि' इति ज्ञानेऽवश्यं भानात्, प्रामाण्यनिश्चयेऽप्यनभ्यासादिदोषात् तत्संशयः। दृश्यते च काशीस्थस्याप्यार्द्रमरिचप्रत्यक्षेऽसंभावनादोषात् तत्संशयः, तद्वदधीताद् वेदान्तवाक्यादब्रह्मबोधेनासंभावनादोषाद् युक्तः संशय इति। तदयमापातज्ञानवानिह जन्मनि जन्मातरे वाऽनुष्ठितकर्मभिर्विशुद्धान्तःकरणो नित्यानित्यादिविवेकं लभते।

ननु कथं कर्मणां तत्तत्फलसाधनानामन्तःकरणशुद्धिहेतुत्वम्? इति चेत्। अत्र वदन्ति– नित्यानां तावत् कर्मणां पापक्षयहेतुत्वमावश्यकम्, ज्ञानाज्ञानकृतानां सर्वपापानां पुरुषेषु सत्त्वात्, तत्क्षयस्य सर्वदा सर्वाभीप्सितत्वात्, दुःखवत् पापस्यापि द्वेष्यतया तन्निवृत्तेः काम्यत्वात्, अहरहःकर्तव्येनावगतानां नित्यानां तेनैव फलवत्त्वात्, स्वर्गादेर्नियतानुपस्थितिकत्वात्, प्रत्यवायप्रागभावस्य चासाध्यत्वादिति। तदुक्तम्- 'धर्मेण पापमपनुदति' इत्यादि। यद्वा, 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन' इत्यादिश्रुत्या तत्तत्फलसंयुक्तानामपि कर्मणां 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' इति न्यायाद् विविदिषासंयोगस्य ज्ञानसंयोगस्य चा (वा) विधानात्।

तत्रान्तःकरणशुद्धेर्द्वारत्वम्। न च प्रकरणान्तरे प्रयोजनान्यत्वमिति न्यायाद् तत्र प्रकरणान्तरमनुपादेयगुणश्च, यत्र मासमग्निहोत्रं जुहोति, आग्नेयं निर्वपेत् ऋद्धिकाम इत्यादाविव कर्मान्तरत्वनियमादत्रापि तत्प्राप्तिरिति वाच्यम्; यज्ञादिसंबन्धविधेरत्राश्रवणात्, प्रसिद्धानामाख्यातासमानाधिकरणव्यवहितपरामर्शसमर्थसुबन्तपरामृष्टानां कर्मणां फलसंबन्धमात्रविधा-

१ ज. 'बद्धवि'।

नोपपत्तावपूर्वविध्यकल्पनात् । अत एव 'सर्वेभ्यो दर्श-पूर्णमासौ' इत्यादौ सर्वसंबन्धमात्रपरत्वाद् न कर्मान्तरत्वम् । उक्तं च– "सर्वकामार्थता तस्मादप्राप्तेह[1] विधीयते" इति ।

ननु किमत्र पशुकामस्योद्भिच्चित्रादिष्विव विविदिषादिकामस्य यज्ञादिषु विकल्पः, उत स्वर्गकामस्याग्नेयादिष्विव समुच्चयः ? इति चेत् । अत्र केचित्– 'यज्ञादीनामेकवाक्यगतत्वेन दर्शादिवत् समुच्चयः' इति वदन्ति । तत्रैकवाक्यत्वमर्थैकत्वात्, यथा 'अग्निहोत्रं जुहोति' इति । 'अरुणयैकहायन्या' इत्यादौ सत्यप्यारुण्याद्यर्थभेदे विशिष्टक्रियाविधानादेकवाक्यत्वम् । सत्यपि च विशिष्टविधानस्य गौरवग्रस्तत्वेऽगत्या तदाश्रयणम् । क्रियायाः प्रकरणान्तरप्राप्तौ हि विशेषणमात्रविधानम्, यथा 'दध्ना जुहोति' इति; तत्राप्येकमेव विशेषणं विधातुं शक्यते, नानेकम्, वाक्यभेदप्रसङ्गात् । अप्राप्ता हि क्रियाऽनेकविशेषणान्युपसंगृह्णती विशिष्टा विधातुं शक्या, प्राप्तायां तु तस्यामनेकार्थविधाने विधिप्रत्ययावृत्तिलक्षणो वाक्यभेदः । तदुक्तम्– "प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः" इति । अत्र च 'कर्मणि' इत्युपलक्षणम्, प्राप्तमात्रमुद्दिश्यानेकविधानस्याशक्यत्वात् ।

अत एव 'ग्रहसमष्टि-' इत्यत्र ग्रहोद्देशेनैकत्व-संमार्गयोर्विधाने वाक्यभेद एकोद्देशेनानेकविधानवदनेकोद्देशेनैकविधानमप्यशक्यम्, यथाऽत्रैवैकत्वग्रहोद्देशेन संमार्गविधानम् । तदत्र 'विविदिषन्ति' इत्यत्र न तावदरुणादिवाक्यवदेकविशिष्टक्रियाविधायकत्वम्, असंभवात्, अनङ्गीकृतेश्च येन तद्वदेकवाक्यत्वम् । नापि 'दध्ना जुहोति' इतिवत् कस्यांचित् क्रियायामेक-

1 ख. ग. घ. च. झ. 'प्राप्त्येह' ।

विशेषणविधानम्, उक्तहेतोरेव। यज्ञदानादीन्युद्दिश्य विविदिषाफलसंबन्धविधाने एकत्वग्रहोद्देशेन संमार्गविधानवद् वाक्यभेदः, विविदिषाफलं चोद्दिश्य यज्ञदानादिविधाने ग्रहोद्देशेनैकत्वसंमार्गविधानवद् वाक्यभेदः।

'दर्श-पौर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्रैकस्वर्गोद्देशेन दर्श-पौर्णमासात्मकानेकयागविधानवदत्र विविदिषोद्देशेन यज्ञदानाद्यनेकविधानं किं न स्यात्? इति चेत्। न, तत्र 'व्रीहिभिर्यजेत' इत्यत्र व्रीहीणामिव षण्णामपि यागानां यज(ति?)नसमानाधिकरणैकपदोपात्तत्वेन वाक्यभेदाभावेऽपि प्रकृते 'यज्ञेन' 'दानेन' इत्यादौ तदभावात्। तेनैकस्य श्रोतव्यादिवाक्येष्वनुषङ्गवदेकस्य विविदिषन्तिपदस्यानुषङ्गः कल्प्यः- 'यज्ञेन विविदिषन्ति' 'दानेन विविदिषन्ति' इति।

कथं तर्हि समुच्चयः? इति चेत्। भिन्नवाक्यविहितानामपि सोमप्राप्त्यर्थानां क्रयाणामिव संभवत्समुच्चयो यज्ञादीनां नित्यवत्समुच्चये हि[1] क्रयाणां प्रत्येकविधिषु नियमविधित्वं न स्यात्। आर्थिकी हि तत्रेतरनिवृत्तिः, अरुणाक्रयेणैव सोमं भावयेदिति। संभवत्समुच्चये तु सोमप्राप्त्यर्थत्वात् क्रयाणां तत्रानतिद्वारस्यैकेनैव सिद्धौ न नियमभङ्गः। असिद्धौ तु प्रत्येकावगतं नियमं कार्यानुरोधेन परित्यज्य वाक्यान्तरविहितक्रयसापेक्षत्वं पूर्वक्रयस्य कल्प्यते। अत एव दध्यादिषु नासौ, होमनिष्पत्तेर्द्वारस्यैकेनैव सिद्धेः। एवमिहापि यज्ञादिनैकेनैवान्तःकरणशुद्धिद्वारासिद्धौ नान्यापेक्षा, अन्यथा तु स्यादेव। अत एव यज्ञानधिकारिणां ब्रह्मचारिणां वेदानुवचनेन केवलेनाप्यन्तःकरणशुद्धिद्वारा विविदिषासिद्धिः। तथा च स्मृतिः- "जपेनैव तु संसिध्येत्" इत्यादि। न च स्वर्गकामाग्निहोत्रवत् सेदनुष्ठाननियमः, तदनुष्ठानस्य साधनचतुष्टयसंपत्तिगम्यान्तःकरणशुद्धिपर्यन्तत्वात्।

१ ज. 'हि क्रिया'। २ क. 'सत्तद'।

यदि वा, 'जातः पुत्रः कृष्णकेशोऽग्नीनादधीत' इत्यत्राधाने जातपुत्रकृष्णकेशत्वविधाने वाक्यभेदात् ताभ्यामवस्था-विशेषलक्षणवदत्र यज्ञादिपदैः प्रसिद्धं कर्मसामान्यमुपलक्ष्य विविदिषादिफलोद्देशेन विधीयते। संभवति चैवं संभवत्समुच्चयः, न च वाक्यभेदः। लक्षणापि दोष एवेति चेत्। तथापि वाक्यार्थभेदे प्रधानविशिष्टवाक्यार्थभङ्गः, लक्षणायां तु गुणीभूतपद-शक्यार्थत्यागमात्रम्, इत्यत्रादरः। अत एव 'अर्धमन्तर्वेदि मिनोति, अर्धं च बहिर्वेदि' इत्यत्रापि वाक्यभेदो मा भूदित्यन्तर्वेदि-बहिर्वेदिशब्दाभ्यां देशविशेषलक्षणाश्रयणम्' इत्यपरे। यद्वा, ईश्वरार्पणबुद्ध्यानुष्ठितानां कर्मणामन्तःकरणशुद्धिः फलम्, 'यत् करोषि' इत्यादिस्मृतेः। तत् सिद्धमेतत्– कर्मभिः शुद्धान्तःकरणो नित्यानित्यविवेकादि लभत इति।

तत्र नित्यानित्यविवेकः 'इदं सर्वमनित्यम्, एतस्याधिष्ठानं किञ्चिद् नित्यम्' इत्येवमालोचनात्मकः। तत ऐहिक-पारलौकिकफलेच्छाविरोधिचेतोवृत्तिविशेषात्मको विरागः, ततः शमादिषट्कम्। तच्च शम-दमो-परति-तितिक्षा-समाधान-श्रद्धाः। अन्तःकरणनिग्रहः शमः। बाह्येन्द्रियनिग्रहो दमः। उपरतिः सन्न्यासः। द्वन्द्वसहिष्णुत्वं तितिक्षा। श्रवणादिप्रावण्यं समाधानम्। सांप्रदायिके विश्वासः श्रद्धा। ततो मोक्षेच्छा मुमुक्षा। तदेतत् साधनचतुष्टयं श्रवणाधिकारिविशेषणम्।

यत्तु– 'मुमुक्षैवाधिकारिविशेषणम्, तस्या एव निरपेक्षाधिकारनिमित्तत्वात्' इति। तन्न, सामर्थ्यादेरप्यधिकारनि-मित्तत्वात्। अथ कामनार्थिकं सामर्थ्याद्यपेक्षते न श्रुतमन्यत्, तत् किं श्रुत-लिङ्गयोर्लिङ्गं बलवत्?। तस्माद्[1] 'राजा राजसूयेन यजेत' इत्यादौ राजत्वादेरिव श्रुतस्य विवेकादेरप्यधिकारिविशेषणत्वं युक्तम्, मुमुक्षायाः सार्वत्रिकत्वात्, तच्चंविवेकादीनां

१ ख. ग. घ. च. 'द् राजसू'।

त्वेकैकशाखापर्यालोचितानां सर्ववेदान्तप्रत्ययन्यायबाधितत्वाद् न तथात्वमिति चेत् । न, सर्ववेदान्तप्रत्ययन्यायेन साधनान्तरोपसंहारेऽपि तत्तच्छाखोपस्थितैकैकसाधनाबाधात्, इतरसाधनाभावस्य शब्दादनुपस्थितेः, आर्थिकस्य तद्साधनताभावप्रत्ययस्य चानपायात् ।

नन्वेवं शान्तो दान्त उपरत इति पुरुषविशेषणत्वात् सन्न्यासोऽप्यधिकारिविशेषणं स्यात् । न चानङ्गभूतस्य[1] तस्य तथात्वम्, विहितत्वात् । नाप्यङ्गभूतस्य[2] तस्य, श्रवणाङ्गत्वे श्रुत्याद्यसत्त्वात् । न च प्रकरणात् तस्य तथात्वम्, आत्मनः प्रकरणात् संनिधानात्; तथात्वे च वैपरीत्येऽप्यविनिगमात्, फलवत्त्वस्योभयत्राविशेषेण समप्राधान्यात् । किञ्च, शान्तो दान्त इत्यादावुपरातिपदाभिधेयस्य सन्न्यासस्य शान्त्यादिपदोपस्थिततद्वत्कर्तृकविचारस्य च समुच्चयो विधीयते, अव्यभिचरितसंबन्धेन जुहुपदेन क्रतूपस्थितिवच्छान्त्यादिपदैस्तद्वत्कर्तृकविचारोपस्थितेः; अन्यथा ज्ञानस्य फलत्वेन विध्यगोचरत्वात्, ज्ञानोद्देशेन शान्त्याद्यनेकगुणविधाने वाक्यभेदप्रसङ्गात्, इति ज्ञानाङ्गत्वमेव सन्न्यासस्य । न 'च वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत्' इति वाक्यात् श्रवणाङ्गत्वम्, दर्श-पौर्णमासाभ्यामिष्ट्वा सोमेन यजेतेतिवत् कालसंयोगपरत्वात् तस्य । अत एव जन्मान्तरीयोऽप्ययमुपयुज्यते, ज्ञानप्रतिबन्धकदुरितनिवृत्तिद्वारानिष्पत्तेः । अत एव जनकादीनामपि ज्ञानश्रवणम्, 'यद्यातुरः स्याद् मनसा वाचा च सन्न्यसेत्' इत्यापत्सन्न्यासविधानं च, स्वस्था-ऽऽतुरसन्न्यासयोरेककर्मत्वेऽप्येकत्राल्पाङ्गताया अन्यत्र सर्वाङ्गतायाश्चोपपत्तेः, नित्येषु शक्त्यपेक्षया तथात्वादिति चेत् ।

१ ख. ग. घ. च. झ. 'स्व तथा'। २ क. 'स्य श्र'।

अत्राहुः– फलवत्त्वेन निर्णीतश्रवणसंनिधानफलस्य श्रुतत्वात् सन्न्यासस्य श्रवणाङ्गत्वम्, उपकार्योपकारकोभयाकाङ्क्षारूपस्यात्मप्रकरणान्यस्य प्रकरणस्याङ्गत्वावेदकत्वात्, प्रयाजादीनामिव । एवमप्यार्थवादिकफलकल्पने प्रयाजादीनामपि 'कर्म वैतद्यज्ञस्य' इत्यार्थवादिकफलकल्पनाप्रसङ्गात् । किञ्च, सन्न्यासस्य फलकल्पनेऽफलसबलान्यतराकाङ्क्षाङ्गत्वकल्पने तूभयाकाङ्क्षेति श्रुतिलिङ्गेत्यादिन्यायादुभयाकाङ्क्षारूपप्रकरणस्यान्यतराकाङ्क्षारूपस्थानाद् बलवत्त्वात् श्रवणाङ्गत्वमेव, फलश्रुतेरर्थवादत्वात् । ज्ञानाङ्गत्वं तु न, प्रकरणावगतत्वात् श्रवणाङ्गत्वस्य शान्त इत्यादिवाक्ये दूषणाभावेन स्वार्थापरित्यागात् । कृतेऽपि स्वार्थपरित्यागे ज्ञानोद्देशेन सन्न्यास-श्रवणयोर्विधाने वाक्यभेदापरिहारात्, समुच्चयस्य द्वयानतिरेकेणैकसमुच्चयो विधीयत इत्यस्यापि दुर्वचत्वात् ।

वस्तुतोऽत्र ये मध्यमास्तानग्रये दात्र इत्यत्रेव सामानाधिकरण्यात् शान्तत्वादिविशिष्टैककर्तृविधानात्, जातपुत्र इत्यादाविव शान्त्यादिपदोपलक्षितावस्थाविशेषविधानाद् वा पश्येदित्यत्र ज्ञानस्य विध्ययोगात्, प्रकृतेस्तत्साधनश्रवणलक्षकत्वात्, शान्त्यादिविशिष्टैकश्रवणाक्रियाविधानात्; 'सोमेन यजेत' इतिवद् वा न वाक्यभेदः । जन्मान्तरीयतदुपयोगस्तु नानिष्टः, द्वारस्य निष्पन्नत्वात् । श्रवणाङ्गत्वे जन्मान्तरीयप्रयाजादिवद् न तदुपयोगः स्यादिति चेत् । न, अध्ययनादावदृष्टस्यापि जन्मान्तरोपकारकत्वस्य श्रवणादाविव प्रयाजादावदृष्टस्यापि तस्य तदङ्गसन्न्यासादावविरोधात् ।

न चैतावता गृहस्थस्यापि श्रवणाधिकारः, विवेकादिवत् सन्न्यासस्याप्यधिकारविशेषणत्वात्, जन्मान्तरीयस्य च तस्या-

१ ख. ग. च. झ. 'णाङ्ग' ।

निश्चयात्। गृहस्थानामपि श्रवणं श्रूयत इति चेत्। न, 'वेदानिमम्' इत्यादिविधिविरोधेऽर्थवादालिङ्गस्य वाच्यत्वात्; 'ब्राह्मणो यजेत' इत्यादिविधिविरोध इव देवानां यागादिश्रवणे जनकस्य श्रूयत इति श्रद्धावन्तो मैत्रेय्याः 'श्रूयते' इति स्त्रीणामप्यधिकारं कल्पयेयुः। तस्मात् सन्न्यासिन एवाधिकारः। गृहस्थस्य तु प्रवृत्तस्य दृष्टार्थत्वात् श्रवणस्य प्रमाणसंभावनादृष्टं निष्पद्यत एव। नियमादृष्टं तु नोत्पद्यते, विधेरप्रवृत्तेः, यथा शूद्रानुष्ठितयागान्तर्गतावघातात्।

यच्चातुरसन्न्यासस्य ज्ञानार्थत्वमुक्तम्। तत्र 'यद्यातुर-' इत्यादिवाक्ये किं विधीयते ? न तावत् सन्न्यासः, तस्य पूर्ववाक्यविहितत्वात्। नापि दशाविशेषे तद्विधानम्, अविरक्तस्य तदनधिकारात्, विरक्तस्यातुरस्यापि पूर्ववाक्येनैव सन्न्यासप्राप्तेः। नापि मनो-वाचोर्विधानम्, तयोरपि पूर्वतः प्राप्तेः। नाप्यातुरे तद्विधानम्, अनातुरे तत्प्रापकेनैव प्राप्तेः। अथ प्राप्तपुनःसंकीर्तनमितराङ्गपरिसङ्ख्यार्थमित्यनेनेतराङ्गव्यावृत्तिः क्रियत इति चेत्। न, परिसङ्ख्यायास्त्रिदोषत्वात्। श्रुतहान्य-ऽश्रुतकल्पना-प्राप्तबाधास्त्रयो दोषाः। तस्मात् 'यद्यातुर-' इत्याद्यभ्यासाधिकरणन्यायेन कर्मान्तरमेव विशिष्टं विधीयते। तस्य च न पूर्वसन्न्यासप्रकृतित्वम्, मानाभावात्। न च तत्पूर्वसन्न्यासफलेन फलवत्, चोदकप्रवृत्त्यभावात्। नापि पूर्वसन्न्यासवत् श्रवणाङ्गम्, आतुरत्वसामर्थ्यस्य बलवत्त्वात्।

तदवश्यं फले कल्पनीये केचिदाहुः—

"वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद् यतयः शुद्धसत्त्वाः।



१ क. 'स्यापि'।

ते ब्रह्मलोके[1] तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे ॥१॥"

इति श्रुतेर्दग्धरथन्यायेनातुरसन्न्यासविषयत्वम्। न हि परिपक्वयोगस्य तत्र गमनम्। नापि 'प्राप्य पुण्यकृतान्' इत्यादेरातुरसन्न्यासविषयत्वम्, 'योगाच्चलितमानसः' इत्यादिनोपक्रान्तश्रवणादिविषयत्वेन प्रतीतेः। नापि कृतपापसन्न्यासिविषयत्वम्, कल्याणाभिधानात्। तस्मात् साधनसंपन्नस्योत्पन्नश्रवणादिप्रत्ययस्यापरिपक्वस्य 'प्राप्य पुण्यकृतान्' इत्यादिवचनविषयत्वम्, आतुरस्य शमाद्यसंपन्नस्याकृतश्रवणत्वेनानुत्पन्नप्रत्ययस्य 'वेदान्तविज्ञान-' इत्यादिवचनविषयत्वम्। परिपक्वयोगस्य तु नोभयविषयत्वमिति 'वेदान्त-' इत्यादिश्रुतेर्निर्गुणब्रह्मविषयत्वेन व्याख्यानेऽपि

"सन्न्यस्तमिति यो ब्रूयात् प्राणैः कण्ठगतैरपि। सोऽक्षयाँल्लभते भोगान् पुनर्जन्म न विद्यते ॥ १ ॥"

इत्यादिस्मृत्याऽऽतुरसन्न्यासिनो ब्रह्मलोकं गतस्य तत्रोपदेशे सत्युत्पन्नज्ञानस्य मुक्तिः, इत्युपदेशद्वारा मुक्तिसाधनब्रह्मलोकगमनकाम आतुरः सन्न्यसेदिति विधिर्विपरिणम्यत' इति।

अपरे तु- 'यदहरेव विरजेत् तदहरेव प्रव्रजेत्' इति वाक्यं 'यस्याहिताग्नेर्गृहानग्निर्दहेत् सोऽग्नये क्षामवतेऽष्टाकपालं निर्वपेत्' इतिवद् यदि वैराग्यनिमित्ते सन्न्यासविधायकम्, तदा निमित्ते विधानादेवाङ्गेष्वसमर्थस्यातुरस्य निरङ्गसन्न्यासप्राप्तेः 'यद्यातुर-' इत्यादेर्व्यर्थत्वाप(त्तेः)त्तिः। न हि यावज्जीवनिमित्ते विहितस्याग्निहोत्रस्यासमर्थं प्रत्यङ्गाभावबोधकं वचनान्तरमपेक्षितम्,

१ क. 'के तु प'।

यथाशक्तिन्यायेनैव सिद्धेः। यदि च विरक्तस्याधिकारिणस्तत्फलकामस्य सन्न्यासविधायकम्, तदाङ्गवाक्यपर्यालोचनयाङ्गेषु समर्थं प्रत्येवोक्तवाक्यप्रवृत्तिः। न ह्यङ्गेष्वसमर्थं प्रति स्वर्गकामाग्निहोत्रवाक्यं प्रवर्तते, अङ्गविकलस्याप्यधिकारापत्त्या तिर्यगधिकरणविरोधात्। तथा च प्रकृतेऽप्यङ्गासमर्थमातुरं प्रति 'प्रव्रजेत्' इति पूर्ववाक्यस्याङ्गवाक्यैकवाक्यतापन्नस्याप्रवृत्तेर्यथा(था)तुर इति वाच्यमङ्गासमर्थस्यातुरपदवाच्यस्य सन्न्यासकर्तव्यताविधायकं तद्विधिसामर्थ्यादेव चाङ्गाभावः। न ह्येतावता स एव सन्न्यास आतुरस्य विधीयते, 'वाचा मनसा वा' इत्यस्यापि विधेयस्य दर्शनात्। न चार्थप्राप्तानुवादः, अर्थप्राप्त्यपेक्षया श्रुतेः प्रवृत्तत्वात्, इति प्राप्ते सन्न्यासेऽनेकविधानस्याशक्यत्वात् सन्न्यासान्तरं विधीयते। तस्य चातुरत्वसामर्थ्यविरोधाद् न प्रकरणेन वाक्येन वा श्रवणसंबन्ध इति फलाकाङ्क्षायां पापक्षयः फलं कल्प्यते, "सन्न्यासेन द्विजन्मनाम्' इत्यादिस्मृतेः। यदि तु सन्न्यासं कृत्वा जीवितस्तदा श्रवणाधिकारिविशेषणत्वबोधकवाक्यप्रकरणबाधकं सामर्थ्यमपगतम्, इत्यधिकारिविशेषणत्वमेव सन्न्यासस्य भवति।

ब्रह्मलोकादिगमनं तु न सन्न्यासफलम्,'सन्न्यासाद् ब्रह्मणः स्थानम्' इत्यादेर्ब्रह्मलोकान्ते भोगविरक्तसन्न्यासविषयत्वात्, 'प्राप्य पुण्यकृतान्' इत्याद्युक्तस्य सन्न्यासपूर्वकानुष्ठितश्रवणादिसामर्थ्योद्बुद्धपूर्वशुभकर्मफलत्वात्। अत एव तदभावे " अथवा योगिनामेव कुले भवति धीमताम्" इत्युक्तेरातुरस्यापि सर्वतो विरक्तस्य तुल्यन्यायतया कदाचित् तत्सामर्थ्योद्बुद्धपूर्वशुभकर्मफलानि भुक्त्वा पुनर्जातस्य श्रवणादिना शीघ्रमुक्तिरेव; यथाश्रवणार्थसन्न्यासिनो दैवादर्वाक् श्रवणाद् मृतस्य नान्तरीयकफलाङ्गीकारे च सन्न्यासानां वैराग्यात् प्रकृतौ लय इत्यस्यापि प्रसङ्गात्, परिपक्वयोगस्यापि तत्प्रसङ्गाच्च। तत् सिद्धं

सन्न्यासः श्रवणार्थ एवेति । ततश्च सिद्धं साधनचतुष्टयसंपन्नः श्रवणाधिकारी श्रोत्रियं ब्रह्मनिष्ठं गुरुमनुसृतः श्रवणादि संपादयति ।

श्रवणादिकं तु श्रवणम्, मननम्, निदिध्यासनं चेति । श्रवणं नाम वेदान्तानां शक्तितात्पर्यावधारणानुकूलो व्यापारः। श्रुतस्यार्थस्य युक्तितोऽनुसंधानं मननम् । विजातीयप्रत्ययतिरस्कारेण सजातीयप्रत्ययप्रवाहीकरणं निदिध्यासनम् । एतेषां श्रवणं प्रधानम्, इतरे फलोपकार्यङ्गे, श्रोतव्यादिवाक्येषु प्राथमिकत्वात् श्रवणविधेरेवार्थवादिकफलकल्पनयेतरयोस्तत्कल्पना-क्लेशनिवृत्तेः । श्रवणस्य[1] तत्त्वज्ञाने प्रधानभूतशब्दप्रमाणस्वरूपनिर्वाहकतया प्राधान्यम्, अत्यन्तावतगार्थे गृहीतशक्तितात्पर्यस्यैव शब्दस्य प्रमाणत्वात् ।

ये तु श्रवणादिषु विधिरेव नास्तीति, मननस्यैव च तत्त्वज्ञानोत्पत्तिं मन्यन्ते; तेषां निदिध्यासनस्य मनःसहकारितया, श्रवणादेश्च तदर्थतया न श्रवणे प्राधान्यादादरः । विधिश्चात्र नियम एव, निर्विशेषात्मबोधेऽपि पुराणप्राकृतवाक्यश्रवणादेः प्राप्तत्वात्, वेदान्तश्रवणस्य नियमनात् । संभवति हि शूद्रादेः शमादिसंपन्नस्य पुराणश्रवणादिना तत्त्वबोधः । ब्राह्मणस्य तु न वेदान्तपरित्यागेन पुराणश्रवणमिति नियमविधेः फलम् । एतच्च श्रवणाद्यावृत्तं तत्त्वधीहेतुः, दृष्टार्थत्वात् । एवं बहुजन्मलब्धपरि-पाकवशादसौ 'तत्त्वमसि' आदिवाक्यार्थं विशुद्धं प्रत्यगभिन्नं परमात्मानं साक्षात् कुरुते ।

तत्र त्वंपदार्थः प्रसिद्ध एव संबोध्यो जीवः, तत्पदार्थश्चेश्वरः । स च 'बिम्बचैतन्यम्' इति केचित् । 'विक्षेपशक्ति-

१ ख. ग. घ. च. 'स्य तस्य त' ।

प्रधानाज्ञानप्रतिबिम्बितं चैतन्यम्' इत्यन्ये । 'जीवनिष्ठाज्ञानविषयभूतं चैतन्यम्' इत्यपरे । उक्तार्थयोश्च तत्-त्वंपदयोरत्र सामानाधिकरण्यं न 'सिंहो देवदत्तः' इतिवद् गौणम्, मुख्ये संभवति तस्यान्याय्यत्वात् । नापि 'मनो ब्रह्म' इतिवदुपासनार्थम्, श्रुतहान्य-ऽश्रुतकल्पनापत्तेः । मुख्यत्वेऽपि न नीलोत्पलादिस्थानीयम्, गुण-गुणिभावाद्यसंभवात्, 'निर्गुणाऽस्थूल-' आदिवचनविरोधाच्च । नापि 'यः सर्पः स रज्जुः' इतिवद् बाधीयम्, उभयोश्चिद्रूपतया बाधायोगात् । तस्मात् पदार्थयोः परस्परभेदव्यावर्तकतया विशेषण-विशेष्यभावप्रत्ययानन्तरं लक्षणया 'सोऽयं देवदत्तः' इतिवद् विशुद्धप्रत्यगभिन्नाखण्डपरमात्मप्रतीतिः ।

सा च लक्षणा पदद्वयेऽपि विशेषणांशत्यागेन चिन्मात्रे स्ववाच्यैकदेशे, अन्यथाऽखण्डार्थप्रतीत्यनुपपत्तेः, लक्षणाबीजविरोधसमाधानाच्च । इयमेव जहदजहल्लक्षणा, भागलक्षणा च गीयते । न चाभेदान्वयिचैतन्यांशोपस्थितिरपि शक्त्यैव, वैशिष्ट्यांशस्य त्वनुपपत्त्याऽनन्वय इति न लक्षणायाः प्रयोजनमिति वाच्यम्; जीवत्वे-श्वरत्वाभ्यामुपस्थितयोरभेदान्वयासंभवाद् विशेषांशमात्रोपस्थित्यर्थं तदादरात् । न च शक्तिजन्ययैवोपस्थित्या विरुद्धप्रकारांशपर्युदासेनान्वयः, 'गौर्नित्यः' इत्यादावपि भागलक्षणोच्छेदात् । तत्र विशेषणत्वेनोपस्थितस्य न नित्यत्वान्वययोग्यता चेत् । अत्रापि जीवत्वे-श्वरत्वाभ्यामुपस्थितयोर्नाभेदान्वययोग्यतेति तुल्यम् । 'गोत्वं नित्यम्' इति बोधानुरोधात् तत्र विशेष्यतयोपस्थित्यर्थं लक्षणादर इति चेत् । अत्रापि विशेष्यतयोपस्थितयोर्विशेष्यांशयोरभेदः संसर्गविधया भायात्, इष्टं चाखण्डार्थत्वम्, इति लक्षणयैव शुद्धवस्तूपस्थितिः । अत एव निर्विकल्पको वाक्यार्थबोधः, पदार्थस्यैव वाक्यार्थत्वात् । न च वाक्यवैयर्थ्यम्, पदस्याप्रामाण्यात्, वाक्योत्थबोध- ॥२९३॥

मन्तरेण भेदभ्रमानिवृत्तेश्च । न हि 'सः' इति 'अयम्' इति च देवदत्तस्वरूपमात्रविवक्षया प्रयुक्तपदजन्यबोधाद् भेदभ्रमनिवृत्तिः, 'सोऽयम्' इति वाक्याच्च भवति सेति ।

तदिदमात्मज्ञानमुत्पन्नमात्रमेवानन्तजन्मार्जितकर्मराशिं विनाशयति, "क्षीयन्ते चास्य कर्माणि" इति श्रुतेः । तेन कर्मक्षयार्थं न कायव्यूहकल्पना, 'स एकधा भवति' 'स त्रेधा' इत्यादिवाक्यानामुपासकविषयत्वात् । न च देहनाशप्रसङ्गः, प्रारब्धप्रतिबन्धात् तस्य, न चेदेवम्, चिरयावद् न विमोक्षः ; 'अथ संपत्स्ये' इति श्रुत्या कर्मविपाकेन प्रारब्धनिवृत्तावपि तस्य ज्ञानानिवर्त्यत्वाभिधानात् । तस्यां चावस्थायां प्रारब्धफलं भुञ्जानः सकलसंसारं बाधितानुवृत्त्या पश्यन् स्वात्मारामो विधिनिषेधाधिकारशून्यः संस्कारमात्रात् सदाचारः प्रारब्धक्षयं प्रतीक्षमाणो 'जीवन्मुक्तः' इत्युच्यते । अस्य च प्रारब्धतो जन्मान्तरमपि । अत एव सप्तजन्मविप्रत्वप्रदे कर्मणि प्रारब्धे उत्पन्नतत्त्वज्ञानस्य पुनर्देहान्तरं, प्रारब्धस्य ज्ञानानाश्यत्वादिति केचित् ।

संप्रदायस्तु– नैवम्, कर्म हि नैकमेव प्रारब्धतां भजते, एकेन कर्मणा भोजनादिक्षुधादिजन्यसुख-दुःखभोगानुपपत्तेः । 'भोजनादिजन्यसुखादेर्न कर्मजन्यत्वम्, स्वाभाविकत्वात्' इति तु न युक्तम्, दृष्टहेतुनिष्पादनेनैन कर्मणां सुखादिहेतुत्वात्, कर्मविशेषाभावादेव भोजनाद्यभावे सुखाभावात् । तस्मात् तत्तत्क्षणवर्तिबह्वल्पसुख-दुःखहेतुगुरुलघुकर्मणामनेकेषां प्रायणकालोद्बुद्धवृत्तिकानां प्रारब्धता वाच्या । इत्युत्पन्नज्ञानस्य देहान्तरस्वीकारे ज्ञानोत्पादकदेहनाशकाल एव कर्मणां प्रारब्धतापत्तेः प्राक् संचितावस्थानां तेषां ज्ञानेन नाशाभावे संचितकर्मनाशकताबोधकोक्तश्रुतिबाधः । नाशे वा कथं मनुष्यदेहान्तरोत्पत्तिः,

---

१ क. 'द् भ्र' । २ ख. ग. घ. 'कार्यव्यू' ।

तस्य प्रतिक्षणवर्तिक्षुधादिदुःखबहुलत्वात् ? । तस्मात् सर्वेषां संचितानां नाशात् सप्तजन्मप्रदस्याप्यन्तिमतत्त्वबोधेनाज्ञान-तत्कार्यनिवृत्तौ निवृत्तिरिति न तस्य देहान्तरम् । इन्द्रादीनां तु ज्ञानिनां देहान्तरम्, प्रारब्धेनैव तन्नाशाभावात् । न च प्रकृतेऽपि तथा, उत्पन्नज्ञानस्य प्रतिक्षणभोगप्रदतत्तत्कर्मणां प्रारब्धत्वे मानाभावात्, इन्द्रादीनां तु देहश्रवणस्यैव मानत्वात्, देहान्तरस्य तादृक्सामर्थ्यस्य कल्पने गौरवाच्च ।

ततश्च ज्ञानिदेहारम्भकेष्वनेकजन्मप्रदेष्वनेकेषु सुकृत-दुष्कृतेषु सत्स्वपि न जन्मान्तरमेतस्य सुवचम्, सति देहे देहान्तरायोगात् । तन्नाशानन्तरं तदुपगमे च "यं यं चापि स्मरन् भावम्" इति स्मृतेर्देहान्तरविषयान्तिमप्रत्ययस्यावश्यकत्वाज्ज्ञानिनामपि तदापातात् । ततः प्रायणकाले उत्पादितदेहान्तरविषयान्तिमप्रत्ययत्वं प्रारब्धत्वम्, इति ज्ञानिदेहारम्भकाणां तज्जन्मभोगप्रदत्वावच्छेदेनैव प्रारब्धत्वात्, तज्जन्मभोगसमाप्तावज्ञाननिवृत्तेर्न देहान्तरम्, न चेदेवम्, उत्क्रमणस्यावश्यकत्वाद् 'न तस्य प्राणा उत्क्रामन्ति' इति श्रुतिसंकोचः । इति न ज्ञानिनो जन्मान्तरम्, किन्तु प्रारब्धक्षयेऽज्ञाननिवृत्तौ चिन्मात्रमेवावशिष्यत इति ।

अयं वेदान्तिनां सर्वः संप्रदायो निरूपितः । स्वैरं यत्राग्रहग्रस्ताः पतन्त्येते तपस्विनः ॥१॥३॥

एतन्निराकरणवार्तामाह—

**अत्राप्यन्ये वदन्त्येवमविद्या न सतः पृथक् । तच्च तन्मात्रमेवेति भेदाभासोऽनिबन्धनः ॥४॥** ॥२९४॥

अत्रापि– अद्वैतपक्षे, अन्ये– वादिनः, वदन्ति यदुत– अविद्या न, सतः– ब्रह्मणः, पृथक्– तत्त्वान्तरम्, द्वैतापत्तेः। तच्च– सच्च, तन्मात्रमेव– सन्मात्रमेव, इति हेतोः, भेदाभासः–भेदाध्यवसायः, अनिबन्धनः– जनकविषयाभावादकारणः ॥४॥

पराशयं परिहरति—

**सैवाथाभेदरूपापि भेदाभासनिबन्धनम्। प्रमाणमन्तरेणैतदवगन्तुं न शक्यते ॥५॥**

अथ सैव– अविद्या, अभेदरूपापि– सन्मात्राभिन्नापि, भेदाभासनिबन्धनम्– अविद्यमाननीलादिप्रतिभासकारणम्। एतत्– परोक्तम्, प्रमाणमन्तरेण– एतदर्थनिश्चायकप्रमाणं विना, अवगन्तुं न शक्यते, प्रमेयव्यवस्थितेः प्रमाणाधीनत्वात् ॥५॥

तद्भावा-ऽभावयोरुभयतो दोषमाह—

**भावेऽपि च प्रमाणस्य प्रमेयव्यतिरेकतः। ननु नाद्वैतमेवेति तदभावेऽप्रमाणकम् ॥६॥**

भावेऽपि च– उपगमेऽपि च, प्रमाणस्य– उक्तार्थनिश्चायकस्य, प्रमेयव्यतिरेकतः– तस्य प्रमेयभिन्नत्वाद् हेतोः, ननु– निश्चितम्, अद्वैतमेवेति न, प्रमाण-प्रमेयद्वैविध्यव्यवस्थानात्। तदभावे– प्रमाणानभ्युपगमे, अप्रमाणकमद्वैततत्त्वम्, तथा च को नाम विनोन्मत्तं श्रद्दधीत ? ॥ ६ ॥



नन्वयमनुक्तोपालम्भः, अविद्यायाः पृथक्त्वस्य, प्रमाण-प्रमेयादिविभागेन व्यावहारिकभेदस्य च प्रागुक्तरीत्याऽभ्युपगमादेव; परमार्थतस्तु 'तत्त्वमसि' इत्यादिनोक्तमखण्डमेव सत्, इत्यत आह—

विद्या-ऽविद्यादिभेदाच्च स्वतन्त्रेणैव बाध्यते। तत्संशयादियोगाच्च प्रतीत्या च विचिन्त्यताम् ॥

विद्या-ऽविद्यादिभेदाच्च, स्वतन्त्रेणैव– स्वाभ्युपगतप्रामाण्येन शास्त्रेणैव, बाध्यतेऽद्वैतम्; तथाहि—"विद्यां चाविद्यां च यस्तद्वेदोभयं सहाविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इति श्रुतौ विद्या-ऽविद्ययोरमृताप्ति-मृत्युतरणफलयोः स्फुटमेवोक्तो भेदः, स चाद्वैतेन विरुध्यते। नन्वत्राविद्यया श्रवणादिलक्षणया मृत्युं तीर्त्वाऽविद्यामेव निवर्त्य विद्ययोपलक्षितममृतमश्नुते, स्फटिकमणिरिवोपाधित्यागादन्तरेण प्रयत्नान्तरं स्वरूपेऽवतिष्ठत इत्यर्थः। अविद्ययैवाविद्यानिवृत्तिश्च यथा पयः पयो जरयति, स्वयं च जीर्यति, यथा विषं विषान्तरं शामयति, स्वयं च शाम्यति, यथा वा कतकक्षोदादिरजो रजोन्तराणि संहरत् स्वयमपि संहृतं भवति तथेति। न चासत्याद् न किञ्चित् कार्यम्, मायायाः, प्रीतेः, भयस्य, रेखाङ्कादेश्च सत्यप्रतिपत्तेर्दर्शनात्, इत्यत आह— तत्संशयादियोगाच्चेति, किमत्रोक्तार्थेन 'तत्त्वमसि-' आद्युक्ताद्वैताबाधः, उत विद्या-ऽविद्यापदार्थाभ्यां ज्ञान-कर्मभ्यामतिरिक्तमुक्तिसाधनत्वबोधात् तद्बाधः? इति संशयात्; एवं "द्वे ब्रह्मणी वेदितव्ये परं चापरं च" इत्याद्युक्तो भेदः सत्यः, उत प्रागुक्तोऽभेदः? इति संशयः; तथा "परं चापरं च ब्रह्म यदोङ्कारः" इत्याद्युक्तं शब्दब्रह्माद्वैतम्, प्रागुक्तं निर्गुणब्रह्माद्वयं वा? इत्यपि।

न च "परं च०" इत्यादावुपासनार्थं सामानाधिकरण्यम्, निर्गुणब्रह्मण उपासितुमशक्यत्वात्, एतदालम्बने "ब्रह्मोपासि-तव्यम्" इति प्रतीकोपदेशात्, यथा देवतायाः साक्षात् पूजाया असंभवात् तल्लाञ्छने दारुण्यश्मनि वा पूजाविधानं तद्वु- ॥२९५॥

द्धेति वाच्यम्; "तत्त्वमसि-" इत्यादावेवोपासनार्थं तद् भविष्यति, जीवे-श्वरयोरभेदश्रुतेरिति संशयाविगमात् । एवं "तेनेदं पूर्णं पुरुषेण सर्वम्" इति श्रुतेः सर्वस्य ब्रह्मात्मकत्वं वा, "सर्वगन्धः, सर्वरसः०" इत्यादिश्रुतेर्ब्रह्मणः सर्वात्मकत्वं वा ? इत्याद्यूह्यम् । किञ्च, अनाकलितनयानां परेषां न क्वापि निश्चायिका श्रुतिः, तत्र तत्र प्रदेशे विरुद्धार्थाभिधानात्, नानासंप्रदायाभिप्रायव्याकुलतयैकव्याख्यानाव्यवस्थितेश्च । ननु युक्तिसिद्ध एवार्थे सुसंप्रदायेन श्रुति-शक्तितात्पर्यमवधार्यते, अन्यत्र 'यजमानः प्रस्तरः' इतिवदुपचार एव, युक्तिश्च प्रपञ्चासत्य एवोपदर्शितदिशा, इत्यद्वैतश्रुतीनां प्रामाण्यम् । अत एवानधिष्ठानस्य शून्यस्याध्यासायोगेन ब्रह्मरूपेण रूपवत्त्वात्, सर्वस्य ब्रह्मात्मकत्वेऽपि ब्रह्मणो न सर्वात्मकत्वम्, सर्वस्वभावस्य सर्वस्माद् वियोजयितुमशक्यत्वेनानिर्मोक्षापातादिति । अत आह– प्रतीत्या च– अनुभवेन च, विचिन्त्यतां यदुत— 'नाद्वैतम्' इति; तथाहि– अनुभूयन्ते तावदविगानेन घटादयो भावा मृद्-घटादिरूपेण भेदा-ऽभेदात्मका अवग्रहाद्यात्मनोपयोगेन । तत्र च स्वयमेकमेव चैतन्यं प्रमाण-फलरूपम्, एकामेव च पदशक्तिं पदार्थांशे ज्ञातामन्वयांशे चाज्ञातां स्वीकुर्वाणः परः कथमेकमर्थं द्विरूपमनुभवन्नपि प्रत्याचक्षीत ? । यदि च त्रपां परित्यज्य 'अभेदस्यैवालोचनम्' इति परापेक्षतया भेदस्य मिथ्यात्वं ब्रूयात्, तदा प्रत्यक्षं चक्षुर्व्यापारसमनन्तरभाविवस्तुभेदमधिगच्छदेवोत्पद्यते यतो भेदो भावस्वभाव इति भावमधिगच्छता कथं नाधिगम्येत ? । न च भेदः 'इदमस्माद् व्यावृत्तम्' इति कल्पनाविषय एव, अभेदस्यैव 'इदमनेन समानम्' इति कल्पनाविषयत्वात्; भेदस्य विविक्तपदार्थस्वरूपस्य परासंमिश्रितत्वात्, स्वस्वरूपव्यवस्थितानां भावानां कल्पनाज्ञानमन्तरेण योजनाभावात्, अन्यथा व्यवहारानिर्वाहात्; तदुक्तम्— "अनलार्थ्यनलं पश्यन् न तिष्ठेद् नापि प्रतिष्ठेत" इति ।

एतेन "आहुर्विधातृ प्रत्यक्षम्" इत्यादि निरस्तम्; विधातृत्वं हि भावस्वरूपग्राहित्वमिति प्रतिनियतार्थप्रतिभासादेव भेदग्रहणाविरोधात्। भिन्नत्वेन ग्रहणं त्वभिन्नत्वेनेव परापेक्षमौत्तरकालिकं न विरोत्स्यते। एतेन च 'इतरेतराभावरूपत्वाद् न भेदः प्रत्यक्षविषयः' इत्यप्यपास्तम्, भावस्वरूपग्रहणे तत्प्रतिभासनात्। वस्तुनो देश-कालादिभेदाद् भेदेऽनवस्थाद्यभिधानं त्वभेदेऽपि समानम्, एकस्य ह्यात्मकत्वायोगादन्यतरमिथ्यात्वावश्यकत्वे भेदानामेव मिथ्यात्वमिति तु विपरीतम्, नानाभेदानां मिथ्यात्वकल्पनापेक्षयैकस्याभेदस्यैव तत्कल्पनौचित्यात्; अन्यथा सर्वत्र सन्मात्राभेदनिश्चये कालभेदाभावेन 'सोऽयम्' इत्यवमर्शाभावेऽपि तद्भेदे घट-पटयोः 'सोऽयम्' इत्यवमर्शप्रसङ्गात्। न च देशान्तरस्थघटादिभेदानुगतत्वात् सद्रूपतायाः पारमार्थिकत्वम्, भेदानां तु प्रच्यवाद् न तथात्वमिति, तत्प्रच्युतिं परिगतस्यानुगतत्वस्य तद्भानेऽभानात्; प्रातिभासिकस्यानुगतत्वस्योभयत्र तुल्यत्वात्; प्रत्यभिज्ञानादपि नान्वयि सद्रूपत्वम्, तन्निरासात्, इत्यादि वदता पर्यायास्तिकनयानुसारिणा गले गृहीतः कांदिशीकः कां दिशमनुसरेत्?।

किञ्च, सद्रूपत्वं ज्ञाने घटादिना सहैवानुभूयते, तत्र प्रमाणत्वेन ज्ञानस्यैव सत्त्वाश्रयत्वे विषयं विना ज्ञानस्वरूपाप्रतिभासनाद् विषये[1] एव सत्त्वं किं नोपेयते?। ज्ञानस्य सर्वत्रानुगतत्वेन[2] स्वसत्तास्फोरकत्वे विषयस्यापि सामान्यतस्तथात्वेन तत्त्वस्य[3] सुवचत्वात्, नीलाद्याकारेणाननुगतत्वस्य चोभयत्र तुल्यत्वात्। एवं विषयं विनाऽभासमानस्य ज्ञानस्योपाधिभेदं विना विभाव्यमानभेदत्वकल्पनेऽपि विषये तथाकल्पनं सुवचम्। प्रतीतिपरित्यागेन लाघवानुरोधे तु निराश्रयमेव सत्त्वं कल्प्यताम्,

१ सप्तम्यन्तम्। २ सर्वत्रानुगतत्वेन। ३ विषयसत्तास्फोरकत्वस्य।

प्रपञ्चप्रतिभासस्य मुक्तावभावात् । तस्यात्मविशेषादर्शनजन्यत्वेन भ्रान्तत्वात् प्रपञ्चस्यासत्त्वमित्यपि न रमणीयम्, मुक्तौ विषयास्फुरणे ज्ञानस्यैवाभावप्रसङ्गात्, सविषयस्यैव ज्ञानस्य दृष्टत्वात्, निर्विषयस्य तस्य कल्पनायां दृष्टविपरीतकल्पनाप्रसङ्गात् । अत एव "सर्वविषयत्वं ब्रह्मणः काल्पनिकतादात्म्याश्रयणेन" इत्यपि निरस्तम्, सर्वविषयताया ज्ञानत्ववद् मुक्तज्ञानस्वभावत्वात् । सर्वापेक्षा सर्वविषयता न तत्स्वभावेति चेत् । सर्वापेक्षं सर्वभिन्नत्वमपि न तत्स्वभाव इति कुतोऽद्वैतसिद्धिः ? । क्लृप्तसर्वतादात्म्याभाव एव सर्वभिन्नत्वमिति चेत् । संसारेऽपि तदबाधितमिति नित्यमुक्ततापातः ।

किञ्च, काल्पनिकसर्वतादात्म्येन सर्वज्ञत्वे रथ्यापुरुषस्यापि सर्वज्ञत्वाभिमानिनस्तव योगितुल्यत्वं स्यात् । योग्यऽयोगिवृत्तिविशेषोऽपि स्वभावभेदं विना दुर्वचः । मिथ्यास्वभावविशेषाद् विशेष इति तु 'मिथ्या च स्वभावश्च' इत्यत्यन्तव्याहतम् । एतेन "रज्जौ सर्प इव सत्त्वासत्त्वाभ्यामनिर्वचनीयत्वाद् मिथ्या प्रपञ्चः" इति निरस्तम्, भ्रान्तिविषयत्वातिरिक्तस्य मिथ्यात्वस्यानुभवात् । "मिथ्यार्थानङ्गीकारे मिथ्याज्ञानस्याप्यङ्गीकर्तुमशक्यत्वे प्राभाकरो न निराक्रियेत" इति तु मन्दप्रलपितम्, मिथ्याज्ञानस्थलीयप्रवृत्त्यन्यथानुपपत्त्यैव तन्निराकरणादित्यन्यत्र विस्तरः । यदि च ज्ञानगतं मिथ्यात्वं साक्षादेवार्थेऽङ्गीक्रियते, तदा ज्ञानविषयसंकरः स्यात्, रजतज्ञानस्यार्थमिथ्यात्वं निमित्तमिथ्यात्वे च मिथ्यारजतमनुभूतमिति बाधेऽपि मिथ्यात्वं स्यादिति भ्रान्त-भ्रान्तिज्ञसंकर इति न किञ्चिदेतत् ।

स्वाभावसामानाधिकरण्यरूपं मिथ्यात्वं तु घटेऽपि तुल्यम्, स्वाधिकरणेऽपि परापेक्षया स्वाभावात् । सर्वथा स्वाभावसामानाधिकरण्यं तु विरुद्धमेव, गन्ध-रूपयोरपि स्वभावभेदमपेक्ष्यैव सामानाधिकरण्यात्, घ्राणग्राह्यतानियतगन्धस्वभावेन

द्रव्यस्य चक्षुर्ग्राह्यतानियतस्वभावरूपाधारतायोगात् । एतेन "अनुभवत्वस्यैव लाघवेन साधकतावच्छेदकत्वात् पुरोवर्तिनि सर्पसिद्धिः" इत्यपास्तम्; अनुभवस्यार्थसाधकत्वं हि नार्थोत्पादकत्वम्, किन्त्वर्थग्रहणपरिणामः, इति तत्र सर्पज्ञानसिद्धावपि सर्पोत्पत्त्यसिद्धेः । न च तत्रानुभूयमानस्यान्यत्र सत्त्वादिकल्पने गौरवम्, तत्रैव तदुपादानाज्ञानस्याऽन्तरवच्छेदेन तदनुभवाय तदाकारवृत्तेः, रज्जुसत्त्वस्य तत्र भावेऽन्यथाख्यात्यापत्तिभिया तत्संसर्गोत्पत्त्यादेश्च कल्पने गौरवात् ।

किञ्च, तत्र सत्त्वसंसर्गोत्पत्तिस्वीकारेऽपि सत्त्वांशेऽन्यथाख्यातिभिया सत्त्वान्तरोत्पत्तिरेव युक्ताऽभ्युपगन्तुम्; तथा च स्वयमसति तत्रोत्पद्यमाना सत्ता स्वसंबन्धोत्पत्तिमपेक्षते; सोऽपि स्वसंबन्धान्तरोत्पत्तिमित्यनवस्था । सत्स्वभावस्य च तस्य सत्यरजतवदुत्पत्तौ किमनिर्वचनीयत्वम् ? । स्वानुपादाने समुत्पन्नत्वात् तत्त्वं चेत् । अहो ! व्याहताभिधायी देवानांप्रियः, यद् भावकार्यं स्वानुपादानोत्पन्नमङ्गीकुरुषे । अत्र प्रसिद्धोपादानत्यागादयं विशेषश्चेत् । उपादानत्वाविशेषे कः प्रसिद्ध्यप्रसिद्धिकृतो विशेषः ? । किञ्च, एवं दण्ड-घटादौ दान-स्वर्गादौ च लोक-शास्त्रप्रसिद्धः कार्यकारणभावो भज्यते, भज्येत च कार्यात् कारणानुमानम्, कारणाच्च कार्यानुमानादिकम्, अनिर्वचनीये व्यभिचारात् । विलक्षणदण्डत्वघटत्व-दानत्वस्वर्गत्वादिना कार्यकारणभावे चातिगौरवम्— वेदादौ दान-स्वर्गादिपदानां सामान्यतो दानत्व-स्वर्गत्वाद्यवच्छिन्नोपस्थापकानां विलक्षणदानत्व-स्वर्गत्वाद्युपस्थितये लक्षणापत्तिः, नानार्थत्वे च दानादिपदानां प्रतिपदं तात्पर्यग्रहाय प्रकरणाद्यपेक्षापत्तिः । किञ्च, एवं बाधेऽपि व्यवहारापत्तिः, अनिर्वाच्यरजताभावज्ञानेऽपि रजतसामान्याभेदभ्रमानिवृत्ते रजतविशेषस्य 'इदं रजतम्' इति भ्रमविषयत्वे तद्रजतभ्रमेऽपि 'इदं रजतम्' इत्युल्लेखापत्तेः । किञ्च, एवमिदंवृत्त्या चैत्रापरोक्षे इदमंशे उत्पन्नं रजतं तया तत्र मैत्रा-

परोक्षे मैत्रस्याप्यपरोक्षं स्यात्। मैत्र-चैतन्याभेदेनानुत्पन्नत्वाद् नायं दोष इति तु रिक्तं वचः, इदंवृत्त्या स्वाभिन्ने इदमंशचैतन्येऽध्यस्तत्वेन तस्य तदभिन्नत्वात्। अविद्यावृत्त्या तदभेदोऽपेक्षित इति चेत्। तादृशतदभेदस्याविद्यानिवृत्तिनियम्यत्व आत्माश्रयः। इदमंशावच्छेदेन चैत्रीयरजत इदमंशावच्छेदेन चैत्रीयाज्ञानहेतुत्वकल्पने चातिगौरवम्, सामान्यत एवेदंविशेष्यकरजतत्वप्रकारकभ्रमं इदंविशेष्यकशुक्तित्वप्रकारकज्ञानाभावस्य हेतुत्वौचित्यात्।

एवं भ्रमानुमितावपि पर्वते वह्नेस्तत्संसर्गस्य वोत्पत्तौ शुक्तौ रजतवत् तत्र तदपरोक्षत्वापातः। दृश्यमानप्रदेशावच्छेदेन वह्न्यनुत्पत्तेर्न दोष इति चेत्। न, शुक्तित्वानवच्छेदेनेदंत्वावच्छेदेन च शुक्तौ रजतोत्पादात् 'शुक्तिं रजतं साक्षात्करोमि' इत्यप्रत्ययेऽपि शुक्तित्वपरित्यागेन 'इदं रजतं साक्षात्करोमि' इति प्रत्ययवद्दृश्यमानदेशावच्छेदपरित्यागेन प्रकृते पर्वतत्वावच्छेदमादाय 'पर्वते वह्निं साक्षात्करोमि' इति प्रसङ्गात्। पर्वतत्वविषयिणी वृत्तिरिदंत्वाविषयिण्यपि, इदंत्वं च दृश्यमानप्रदेशावच्छिन्नत्वम्, तथा चेदं पर्वतत्वं वह्न्युत्पत्तिं कथमवच्छिन्द्यात्? इति चेत्। नन्वेवं 'अयं पर्वतो वह्निमान्' इत्युल्लेखादेतद्देश एव वह्न्युत्पत्तिर्वाच्येत्यति संकटम्। एतेन "पर्वतत्वेन ज्ञानादधिष्ठानज्ञानासिद्धिः, पक्षतापि पर्वतत्वेन" इति निरस्तम्, 'अयं पर्वतो वह्निमान्' इति स्फुटमनुभवात्।

अपि च, 'इमे रजत-शुक्ती' इत्यत्र संनिकृष्टशुक्ति-रजतयोरन्योन्यतादात्म्योत्पत्तावविनिगमः, धर्म्यंश इव प्रकारांशेऽपि प्रमाणतापत्तिः; संनिकर्षसत्त्वेऽन्यथाख्यातिस्वीकारे चान्यत्राप्येकत्र क्लृप्तत्वेन तत्स्वीकारापत्तिः; तत्रारजतादिस्वीकारेऽपि

१ सप्तमी।

'इदमेव रजतं शुक्तित्वेनाज्ञासिषम्' इत्याद्यनुभवविरोधः; एवमन्यत्र 'असदेव रजतमत्रान्वभवम्' इत्याद्यनुभवविरोधः; तस्य भ्रान्तत्वे बाधकत्वापत्तिः, मिथ्यारजतस्य तत्रासत एवोपगमे चासत्ख्यात्यापत्तिः। तत्र 'असदेव' इत्यस्य तन्निष्ठात्यन्ताभावाप्रतियोगित्वमर्थः, अविरुद्धं च तत् सति तत्रासति च तत्रेति चेत्। कथं तर्हि तत्र सत्त्वा-ऽसत्त्वाभ्यां निरुक्तिविरहः?। बाधा-ऽबाधदशयोः सत्त्वा-ऽसत्त्वाभ्यां निरुक्तावप्येकदा तथा निरुक्तिविरहोपगमाद् न दोष इति चेत्। न, तुल्यन्यायेन घटादावप्येवमनिर्वचनीयतापत्तेः। अत एवैकपदेन तथाऽप्रतिपाद्यत्वाज्जगत एव तथात्वं व्यवस्थापितमवक्तव्यभङ्गके।

अथ नाशक्यनिरुक्तिकत्वमनिर्वचनीयपदार्थः, किन्तु निरुक्तिनिमित्तविरह इति चेत्। ननु किं तद् निमित्तं ज्ञानं वा, विषयो वा ?। नाद्यस्य विरहः,

"रजतं भाति यद् भ्रान्तौ तत् सदेके, परे त्वसत्। अन्येऽनिर्वचनीयं तदाहुस्तेन विचार्यते ॥ १ ॥"

इति स्वयमेव तद्ज्ञानाभ्युपगमात्। सत्यस्थल इवात्रेदं-रजतयोरेकवृत्त्यनङ्गीकाराद् न दोष इति चेत्। अयमपरस्तत्र दोषः– 'इदं च, रजतं च' इति समूहालम्बनम्, व्यावृत्तविशिष्टज्ञानस्यैकवृत्तिं विनाऽनुपपत्तेः। नापि द्वितीयस्य विरहः, सद्रूपस्यासद्रूपस्य वा विषयस्यासत्त्वेऽसत्ख्यातेः सत्ख्यातेश्च प्रसङ्गात्; उभयरूपस्य निवृत्तेश्च लोकेऽप्रतीतेः, एकनिषेधेऽन्यविधिनियमात्, अलौकिकतन्निवृत्तेश्चाकिञ्चित्करत्वादिति दिग्।

एवं स्वप्नरथादयोऽपि नानिर्वचनीयाः, निद्रादोषेण स्वप्नेऽसंनिहितरथादीनामेव संनिहितत्वादिना भानात्; परेषां तु महत्यनुपपत्तिः; तथाहि— न तावद् मूलाज्ञानकार्यं स्वप्नः, संसारदशायां बाधात्, रजतभ्रमस्य शुक्त्यज्ञानान्वय-व्यति- ॥२९८॥

रेकानुविधायित्ववज्जाग्रत्प्रपञ्चाज्ञानान्वय-व्यतिरेकानुविधायित्वाच्च । न च जाग्रत्प्रपञ्चाज्ञानमेव तदारम्भकम् , शुक्तौ रजतोत्पत्तिवज्जाग्रत्प्रपञ्चे स्वाप्निकरथाद्युत्पत्त्यापत्तेः । न चेष्टापत्तिः, तत्सामानाधिकरण्येन स्फुरणाभावात् , यद्धि यदज्ञानेनोत्पद्यते तत् तत्सामानाधिकरण्येन स्फुरति' इति नियमात् ; अत एवान्तःकरणावच्छिन्नचैतन्याज्ञानं न तदारम्भकम् , साक्षिवेद्येऽन्तःकरणेऽज्ञानासंभवाच्च ।

यत्तु "चिन्मात्रनिष्ठमूलाज्ञानमेवेश्वरत्वावच्छेदेन गगनादि सर्वमारम्भमाणं जीवत्वावच्छेदेनाप्यहङ्कारस्वप्नादिचित्सामानाधिकरण्येन स्फुरदारभते, जाग्रत्प्रपञ्चाज्ञानान्वय-व्यतिरेकानुविधानं तु स्वप्नारम्भकनिद्रादोषेणान्यथासिद्धम् , संसारदशायां बाधस्तु सविलासाज्ञाननिवृत्तिरूपो नेष्ट एव, अभावबोधो बाधस्तु स्वप्नारम्भकाज्ञानानिवृत्तावपि तूलाज्ञानानङ्गीकारपक्षे रजतादाविव संभवी, स्वप्नारम्भकनिद्रादोषनिवृत्त्याऽऽरोप्याभावज्ञानोपपत्तेः" इति । तद् न, मूलाज्ञानजन्यत्वे स्वप्नरथादेर्घटादेरिव निवृत्तावपि मिथ्यात्वप्रतीत्यनुपपत्तेः, तज्जन्यमिथ्यात्वप्रतिपत्तावाद्यशक्तेः प्रतिबन्धकत्वात् , सामान्यतो मिथ्यात्वधीप्रतिबन्धिकायां तस्यां तत्तद्दोषनिवृत्तेरुत्तेजकत्वे विनश्यदवस्थदोषजनिते रजतादौ तदानीमेव मिथ्यात्वप्रतिपत्त्यापत्तेः, एकदोषनिवृत्तावन्यमिथ्यात्वबुद्ध्यापत्तौ तत्तन्मिथ्यात्वबुद्धौ तत्तद्दोषनिवृत्तिहेतुत्वावश्यकत्वाच्च । न च तथापि निद्रादोषनिवृत्तौ स्वप्नावगतार्थमिथ्यात्वधीः, शुभादृष्टोपनीतजागरसंवादिभाव्यर्थदर्शनेन तदसिद्धेः, हेतुविशेषं विना निद्राविशेषानुपपत्तेश्च । अपिच, एवं जाग्रद्दशायामिव स्वप्नदशायामपि मोदकभक्षणजन्यं सुखं समानं स्यात् , स्वाध्यस्तत्वाविशेषात् ; तथा चायातोऽयं न्यायः—

“ आशामोदकतृप्ता ये ये चास्वादितमोदकाः । रस-वीर्य-विपाकादि तुल्यं तेषां प्रसज्यते ॥ १ ॥”



इति । जागर-स्वप्नसुखयोः स्वाध्यस्तत्वेन तुल्यत्वेऽपि सत्या-ऽसत्यमोदकभक्षणजन्यत्वेन विशेष इति चेत् । न, तुल्याज्ञानजन्यत्वेन द्वयोस्तुल्यत्वात्, तत्र बहिरन्तर्विभागस्यापि स्वप्ने मोदकादेर्बहिष्ट्वेनानुभवेन तुल्यत्वात् । तत्र बहिष्ट्वमध्यस्तमिति चेत् । अन्यत्रापि तदध्यस्तत्वं सुवचम् । एकस्यैव सत्यमोदकस्य बहिर्बहुभिरनुभवात् तत्र बहिष्ट्वं नारोपितमिति चेत् । स्वप्नेऽपि सुवचमेतत् । स्वप्ने प्रतिसंतानमनुभूतानां नानात्वे च जागरेऽपि प्रतिसंतानमनुभूतानामेकत्वे का प्रत्याशा ?। दृग्दृश्यसंबन्धायोगादनन्तानिर्वचनीयानां काल्पनिकतादात्म्याश्रयणापेक्षया तत्तदाकारदृगुत्पत्तेरेव लघुत्वेन वक्तुं युक्तत्वात् । ‘इष्टमेवेदं दृष्टिसृष्टिवादे; तथाहि– नास्मिन् मते चैतन्यातिरिक्तपदार्थानामज्ञातसत्त्वमस्ति, मिथ्यात्वस्य स्वप्नादिदृष्टान्तसिद्धत्वात्, तादृशस्यैव सत्त्वस्याङ्गीकारात् । एवं च ‘घटादीनां यदा प्रतीतिस्तदा सत्त्वं नान्यदा, इति न दण्डादिजन्यत्वम्, किन्त्वज्ञानमात्रजन्यत्वं, स्वप्नवच्च दण्डाद्युपादानम्; अज्ञानदेहादिकं तु भासमानमेव तिष्ठति; अभावनिश्चयाभावाच्च पुत्राद्यभावकृतरोदनाद्यप्रसङ्गः; प्रत्यभिज्ञानमपि भ्रम एव; ततश्चाकाशादिक्रमेण सृष्टिः पञ्चीकरणं ब्रह्माण्डाद्युत्पत्तिः’ इत्यादिकं मतान्तरे देवताविग्रहन्यायसिद्धमपि नास्मिन् मते दृष्टिव्यतिरेकेण सिध्यति । अत एवार्थानां नानेकप्रमाणवेद्यत्वम्, किन्तु ‘चक्षुषा पश्यामि’ इत्यादिव्यवहारस्य स्वप्नतुल्यत्वात् सुखादिवत् केवलसाक्षिवेद्यत्वम् । कथं तर्हि घटादेरपरोक्षत्वम्, वह्न्यादेश्च परोक्षत्वम्, अज्ञानजन्यत्वस्य साक्षिण्यध्यस्तत्वस्य च तुल्यत्वात् ? इति चेत् । वह्न्यादौ परोक्षत्वस्याप्यध्यस्तत्वाद् विशेषसिद्धेः । न च बौद्धमतप्रवेशः अधिष्ठानस्य स्थायित्वात्, अबाधितत्वाच्च, अज्ञानस्याप्यनादेः सकलदृष्टिहेतोरङ्गीकारात्’ इति चेत् । न, अधिष्ठा- ॥२९९॥

नस्य स्थायित्वासिद्धेः; नीलाद्याकारेणास्थायित्वदर्शनात्। नीलाद्याकाराः स्वाध्यस्ता अतिरिक्ता एव, साक्षी तु चिद्रूपः स्थायीति चेत्। न, नीलादिविनिर्मुक्तस्य चिद्रूपस्याभासमानत्वेनासत्त्वात्। नीलपीतादिभानानुगतं चिद्रूपमेव स्थायीति चेत्। तर्हि नीलादिरूपमपि प्रातिभमात्रनुगतं स्थायीभवेत्। संतानभेदाद् नीलादिभेदश्चेत्। नीलाद्याकारभेदाच्चिद्रूपस्यापि किं न भेदः ?। अज्ञानमपि नानादिसकलदृष्टिहेतुः, नित्यस्य क्रमिकनानादृष्टिहेतुत्वानुपपत्तेः, कारणान्तरविलम्बाभावादेकस्मादेकदैव सर्वोत्पत्तिप्रसङ्गात्। तज्जनितक्रमिकाज्ञानेभ्यः कार्यभेदनिर्वाह इति चेत्। न, एकस्य तस्य जन्यनानाऽज्ञानजननेऽप्यस्य प्रसङ्गस्य तुल्यत्वात्। कालभेदात् ततो भिन्नभिन्नकार्योत्पत्तिसंभव इति चेत्। कालभेदादेव तर्हि कार्यभेदनिर्वाहे दत्तोऽज्ञानाय जलाञ्जलिः। न चैकस्य स्वभावभेदं विना कालभेदस्यापि सहकारः, स्वभावभेदे च गतमनादित्वेनेति।

किञ्च, एवं लोकसिद्धदण्ड-घटादिकार्यकारणभाववत् शब्दसिद्धयागस्वर्गाद्य-ऽगम्यागमननरकादिसाध्यसाधनभावस्यापि स्वाप्निकतुल्यत्वात्, वेदान्तेष्वप्यनाश्वासप्रसङ्गाच्च वेदान्तिनां यथेष्टाचरणप्रसङ्गात्। यदि हि विहितात् स्वर्गः, निषिद्धाद् नरको वा न स्यात्, किमर्थं तर्हि विहितमनुतिष्ठन्तः, निषिद्धं चावर्जयन्तः क्लिश्येरन्? इति। अपि च, अनात्मदृष्टिसृष्टेरनवसानप्रसङ्गः। न चाधिष्ठानज्ञानात् तदवसानम्, तद्धेत्वभावात्। अज्ञानं तद्धेतुरिति चेत्। ज्ञानतोऽसत्यपि दण्डादौ घटाद्युत्पत्तिवत् शमाद्यसत्त्वेऽपि तत एवाधिष्ठानज्ञानोत्पत्तेः शमाद्यननुष्ठानप्रसङ्गात्। भ्रान्त्या तदनुष्ठानमिति चेत्। न, सकृद्वेदान्तार्थश्रवणवतां तदभावप्रसङ्गात्। न च प्राथमिकघटप्रतिभासे दण्डाद्यपेक्षावत् प्राथमिकाधिष्ठानज्ञाने शमाद्यपेक्षोपपत्तिः, क्वचित् तावत्प्रतिभासहेतूपनिपातेऽपि नियमासिद्धेः।

किञ्च, भ्रमहेतोरज्ञानाद् नाधिष्ठानज्ञानोत्पत्तिरन्यत्र दृष्टा । न हि शुक्त्यज्ञानाद् रजतभ्रमः, तत एव च शुक्तिज्ञानमिति । अविद्यया मृत्युं तीर्त्वा शास्त्रात् तथा कल्प्यत इति चेत् । न, शास्त्रस्य स्वप्नतुल्यत्वात्, शमाद्यनुपसंग्रहानुद्धाराच्च । अथ लोकेऽज्ञानातिरिक्तकारणाभावेऽपि वेदे यागादौ स्वर्गादिसाधनता संमतैव । ततश्च यागादेः स्वर्गादिसाधनत्वं प्रतीत्य यागमनुतिष्ठतामुत्पन्नस्य स्वर्गसूक्ष्मरूपस्य यागसूक्ष्मरूपस्य वाऽपूर्वस्य स्वर्गजनकत्वम्, अन्यथाऽव्यवस्थाप्रसङ्गात्; ततश्च वेदान्तेष्वप्याश्वासात् शमादिसंपत्त्या ब्रह्मज्ञानसिद्धिरिति चेत् । न, लोकसिद्धकार्यकारणभावपरित्यागे वेदेऽप्यनाश्वासात् । न हि स्वप्रयोजनमपेक्ष्यैकं प्रमाणम्, अपरं चाप्रमाणं भवितुमर्हति । न च बलवत्त्वाद् वेदः प्रमाणम्, न तु प्रत्यक्षादिकमिति वाच्यम्, प्रत्यक्षादिबाधितेऽर्थे वेदाप्रामाण्येन प्रत्यक्षादीनामेव बलवत्त्वात् ।

किञ्च, याग-स्वर्गादिहेतुहेतुमद्भावं प्रतिपादयन् वेदः स्वप्नयाग-स्वर्गयोरपि हेतु-हेतुमद्भावं किं न बोधयेत् ? । तत्र वेदाप्रामाण्यादिति चेत् । कुत्र तर्हि तत्प्रामाण्यम् ? । तद्विलक्षणयाग-स्वर्गयोरिति चेत् । न, आभासमानसत्त्वानङ्गीकारे तद्वैलक्षण्यासिद्धेः, सिद्धौ वा दण्ड-घटादेरपि कार्यकारणभावः सिध्येत् । किञ्च, अपूर्वमपि साक्ष्यसिद्धत्वात् कथमभ्युपेयम् ? । अज्ञानकारणत्वात् साक्षिसिद्धमेव तत्; उक्तं हि संस्कारस्य साक्षिसिद्धत्वमभियुक्तैः—

"सुप्तेऽस्मिन् विषयग्रामे योऽसुप्तो लुप्तदृष्टितः ।
वासनारूपकान् पश्यन् प्राणान् प्राणिति वायुना ॥
भावनाकारकेक्षित्वादात्मैकः कारकायते ॥"

इत्यादाविति चेत्। न, सूक्ष्मरूपेण साक्षिसिद्धत्वे तस्य श्रद्धामात्रात्; अन्यथा घटादिज्ञानोत्तरमपि सूक्ष्मरूपेण तज्ज्ञानोपगमप्रसङ्गात्। किञ्च, अस्मिन् पक्षे परचित्ताग्रहणे परं प्रति पर्यनुयोगाप्रसङ्गः, तद्ग्रहणं च स्वाध्यस्ततत्त्वेनेति स्व-परचित्तसंकरप्रसङ्गः। स्वचित्ते परकीयत्वमध्यस्य कथाया त्वव्यवस्था। तस्माद् दृष्टिसृष्टिवादोऽपि वेदान्तिनां शून्यतावादाद् न विशिष्यते। तथाच सुष्टूपहसितमेतत्—

"प्रत्यक्षादिप्रसिद्धार्थविरुद्धार्थाभिधायिनः। वेदान्ता यदि शास्त्राणि बौद्धैः किमपराध्यते ?॥ १॥" इति।

अपि च, अविद्यायामेव मानाभावाद् विशीर्यते सर्वं तन्मूलं वेदान्तिमतम्। न च 'न जानामि' इत्यनुगतः प्रत्ययस्तत्र मानम्, 'अहम्-अहम्' इत्यनुगतमत्याऽहंत्वस्याप्यनुगतस्य सिद्ध्यापत्तेः। न च 'जानामि' इत्यत्रानुगतविषयानुपपत्तिरप्यस्मान् प्रति सिद्धा, सर्वात्मना स्वरूपज्ञानाभावस्य सर्वत्रानुगतत्वात्, सर्वात्मना स्वरूपज्ञानस्यानुवृत्ति-व्यावृत्तिपर्यायद्वारा सर्वज्ञाननियतत्वाद् विना सर्वज्ञं कुत्राप्यर्थे तदनुपपत्तेः। तदयमाचाराङ्गे परस्परसमनियमाभिप्रायः परमर्षिवचनोद्गारः—
५१ "[1]जे एगं जाणइ से सव्वं जाणइ, जे सव्वं जाणइ से एगं जाणइ" इति। घटज्ञानादिनिवर्त्यमपि मिथ्याज्ञानरूपं सम्यग्ज्ञानप्रागभावरूपं वाऽज्ञानं त्वतिरिक्तम्। परेषां तु घटादिज्ञानात् तदज्ञाननिवृत्तिप्रसङ्गः, अनुगताज्ञानस्य मुक्तावेव निवृत्तेः। न च घटज्ञानाद् (द?)घटविषयतामात्रस्य निवृत्तिर्नाज्ञानस्य, यथा परेषां घटनाशे घटसंबन्धनाशः सत्ताया इति वाच्यम्, दृष्टान्तस्यै-

---

१ य एकं जानाति स सर्वं जानाति, यः सर्वं जानाति स एकं जानाति।

वासंप्रतिपत्तेः; न हि घटनाशे स्वरूपात्मकघटसंबन्धनाशो न तु सत्तानाश इति जैनाः प्रतिपद्यन्ते; न वोत्पाद-व्यय-ध्रौव्यपरिगतरूपबहिस्कृतां सत्तामेव प्रमाणयन्तीति। न च घटविषयतानिवृत्तिरपि सुवचा, स्वभावभूताया घटसंसृक्तावरणजनकतारूपायास्तस्या निःस्वभाववतोऽनिवृत्तौ निवर्तयितुमशक्यत्वादिति। विषयास्फुरणप्रयोजकतयापि न तत्सिद्धिः, विषयस्फुरणस्वभाव एवात्मन्यभ्युपगम्यमाने परनिमित्ततदस्फुरणस्वभावनिर्वाहाय तत्प्रतिबन्धकज्ञानावरणकर्मकल्पनौचित्यात्। तदस्फुरणस्वभावे तु किं स्फुरणप्रतिबन्धकेन ? । न हि प्रतिबन्धकनिवृत्त्यापि तदस्फुरणस्वभावस्य तत्स्फोरकत्वं नाम, मणिनिवृत्तावपि दाहकस्य दहनस्यैवादाहकस्याम्भसो दाहकत्वादर्शनादिति।

एतेन 'विवादगोचरापन्नं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत्। अत्रातीतत्वज्ञानं घटादिज्ञानं चोक्तसाध्यवदिति वेदान्तिनः, नेत्यपरे, इति विवादविषयतापन्नज्ञानानां पक्षत्वात् सुखादिज्ञाने विवादाभावेनापक्षत्वाद् न बाधः। नापि धारावाहिकज्ञाने बाधः, एकस्या एव वृत्तेरेतावद्दूरमवस्थानासंभवेन तदभावात्; भावे वोक्तविवादगोचरत्वाभावेन पक्षताया अभावात्। न च घटादिज्ञाने स्वविषयस्य घटादेर्जडत्वेन तदावरणाभावाद् बाधः, घटावच्छिन्नचैतन्यस्यैव वृत्तिरूपघटादिज्ञानविषयत्वात्, अज्ञानेन तत्रावरणजननात्, अज्ञानविषयत्ववज्ज्ञानेनापि तत्रैव तन्निवृत्तिजननाऽज्ञानविषयत्वोपपत्तेः, ज्ञाना-ऽज्ञानयोः समानविषयत्वप्रसिद्धेः, अदूरविप्रकर्षेण घटादेरुभयविषयत्वव्यपदेशात्। नाप्यनुमितिज्ञाने बाधः, तस्याप्यज्ञाननिवर्तकत्वात्। न च ॥३०१॥

१ ख. ग. घ. 'नादिति ज्ञा'।

परोक्षज्ञानादज्ञाननिवृत्तावपरोक्षभ्रमनिवृत्तिप्रसङ्गः, इष्टापत्तेः, 'रज्जुरियं न सर्पः' इत्याप्तोपदेशे तद्दर्शनात्। न च 'पीतः शङ्खः' इत्यादौ श्वैत्यानुमित्या तदज्ञाने नष्टे भ्रमनिवृत्तिप्रसङ्गः, अस्य भ्रमस्य सोपाधिकत्वे उपाधेरेवाज्ञाननिवृत्तौ प्रतिबन्धकत्वात्। यदि च रविरश्मिभिः सह पित्तधातोः शङ्खदेशं यावद् गमने शङ्खसंपृक्तस्य च तस्य चाक्षुषयोग्यत्वे दोषवशेन च द्रव्याग्रहणेऽपि रूपमात्रग्रहणे मानाभावाद् गौरवाच्च, भ्रमस्य च पीतत्वसंस्कारादेव पित्तदोषसहितादुपपत्तेर्नायं पित्तोपाधिकः, तदा पित्तदोषस्यैव तथात्वादिति। रजतज्ञानेऽपि न बाधः, तस्य सुखादिज्ञानवत् पक्षत्वाभावात्। साध्ये ज्ञानप्रागभावव्यावृत्त्यर्थमाद्यं विशेषणम्। न च स्वनिवर्त्यपदेन तद्व्यावृत्तिः, तन्निवृत्तेः स्वानतिरेकादिति वाच्यम्; 'सादिरनन्तो ध्वंसः' इति मते तदतिरेकात्। उत्तरज्ञाननिवर्त्यपूर्वज्ञानेन भिन्नविषयेण सिद्धसाधनवारणाय स्वविषयावरणेति। यस्मिन् सति ज्ञानविषयो न स्फुरति तत् स्वविषयावरणम्, न च पूर्वज्ञानं तथा, तस्योत्तरज्ञानविषयस्फुरणाभावाप्रयोजकत्वात्। असंभावनाविपरीतभावनात्मकादृष्टव्यावृत्तये तृतीयं विशेषणम्। प्रमातृनिष्ठाज्ञानसिद्ध्यर्थं स्वदेशगतेति। मिथ्याज्ञानं व्यावर्तयितुं वस्त्वन्तरेति। हेतावपि द्वितीयादिधारावाहिकज्ञाने व्यभिचारवारणायाऽप्रकाशितेति। अप्रकाशितप्रकाशशब्देन स्वविषयावरणनिवृत्तिरूपो व्यवहारो विवक्षितः। न च धारावाहिकद्वितीयादिज्ञाने तद्धेतुत्वमस्ति, स्वविषयावरणनिवृत्तेराद्यज्ञानकार्यत्वात्। न च हेत्वसिद्धिः, साध्योपात्तस्वविषयावरणनिवृत्तेरप्रकाशितार्थव्यवहारशब्देन विवक्षितत्वात्। न च चक्षुरादौ व्यभिचारः, तस्य ज्ञानजननेनान्यथासिद्धत्वात्। न च साधनवैकल्यं दृष्टान्तस्य, स्वविषयावरणान्धकारनिवृत्तिहेतुत्वात्। न च सुखादिज्ञाने व्यभिचारः,

१ ख. ग. 'तदर्श'। २ ख. ग. घ. 'क्षुपायो'।

तस्य स्वविषयावरणनिवृत्तिहेतुत्वाभावात्। न च स्मृतौ व्यभिचारः, तस्याः स्मृतिप्रागभावरूपस्वविषयावरणनिवर्तकत्वादिति वाच्यम्; तस्य स्वविषयावरणत्वाभावात्, तत्सत्त्वेऽप्यनुभवदशायां तद्विषयस्फुरणात्। न चैवं प्रमाणज्ञानप्रागभावस्यापि स्वविषयावरणत्वाभावात् तद्व्यावृत्त्यर्थस्याद्यविशेषणस्य वैयर्थ्यम्, अत्यन्तापूर्वार्थज्ञानप्रागभावस्य तथात्वात्। आद्यज्ञानस्य पक्षत्वाद् न तत्र व्यभिचारः। हेतुत्वं च पुष्कलहेतुत्वम्, तेन नेश्वरादौ प्रतियोगिनि चावरणे व्यभिचारः। न चासंभावनादिनिवर्तके श्रवणादौ व्यभिचारः, असंभावनादेः स्वविषयावरणत्वे साध्यसद्भावात्। न च तेनैव सिद्धसाधनम्, तस्य ज्ञानानिवर्त्यत्वात्। दृष्टान्तेऽपि सवितृकिरणस्थासु द्वितीयाद्यासु च दीपप्रभासु साध्यसाधनवैकल्यपरिहाराय विशेषणद्वयोपादानम्' इति स्वगृहविचारपरिष्कृतमनुमानमपास्तम्, निरुक्तस्वविषयावरणत्वस्वनिवर्त्यत्वाभावेनास्माद् मूलाज्ञानस्यासिद्धेः, विशिष्टतथात्वस्य चातिप्रसक्तत्वात्, तूलाज्ञानसाधनेऽपि शैत्यानुमित्यादेः पक्षीकरणे बाधात्, तद्बहिर्भावे च व्यभिचारात्। तत्पक्षीकरणेऽप्यसति स्वनिवृत्तिप्रतिबन्धके 'तद्विषयस्फुरणाभावप्रयोजकत्वं तद्विषयावरणत्वम्' इत्युक्तौ न दोष इत्यस्यापि येषां पक्षीकृतज्ञानानामावारके स्वनिवृत्तिप्रतिबन्धकासिद्धिः, तत्र साध्यासिद्ध्या वक्तुमशक्यत्वात्; हेतोरपि स्वविषयावरणनिवर्तकत्वरूपस्योपादानेऽसिद्धेः, अप्रकाशितप्रकाशशब्देन तदुपादानेऽपि तदपरिहारात्, न खलु शब्दान्तरोपादानेनाप्याच्छादनं भवति। स्वविषयावरणनिवर्तकत्वव्यपदेशविषयत्वस्य हेतुत्वे तु सुखादिज्ञाने द्वितीयादिधारावाहिकेषु च मिथ्याज्ञाननिवर्तकत्वव्यपदेशविषयेषु व्यभिचारो दुर्निवारः। दृष्टान्तेऽपि साध्यगतज्ञानविषयतायाः प्रभाविषयतासाधारणत्वाभावेन साध्यवैकल्यम्। उपाधिश्चात्र चेतनत्वादि। न चात्रानुकूलतर्कोऽपि कश्चिदस्ति, अप्रकाशितार्थप्रकाशकेऽपि प्रकाशितार्थप्रकाशक

इवोक्तवस्त्वन्तरपूर्वकत्वं विनापि विषयस्फोरकत्वोपपत्तेराद्यत्वस्य चानियम्यत्वादिति न किञ्चिदेतत् ।

एवं च जीवे-श्वरादिविभागोऽप्यनुपपन्न एव । न च प्रतिबिम्बवादे, आभासवादे वा दृष्टान्तोऽपि दृष्टः, मुखे द्वित्वस्य, आदर्शस्थत्वस्य चानिर्वचनीयस्योत्पत्तौ 'आदर्शे द्वे मुखे' इति प्रतीतिप्रसङ्गात्; आदर्शे मुखान्तरोत्पत्तौ च 'तदेवेदं मुखं यदादर्शस्थत्वेन दृष्टम्' इति प्रत्यभिज्ञाबाधात् । अथ प्रतिबिम्बवाद आदर्शस्थत्वस्य मुखे द्वित्वावच्छेदेनानुत्पत्तेः 'आदर्शे द्वे मुखे' इति न प्रतीतिः; आभासवादे च 'तदेवेदम्' इति भ्रम एवेति चेत् । न, 'आदर्शे मुखप्रतिबिम्बम्' इति प्रतीतिप्रामाण्यात् तत्र बिम्बाख्यद्रव्यस्यैवोत्पत्तेः स्वीकर्तुं युक्तत्वात्, द्वित्वाख्यस्य प्रतिबिम्बस्यादर्शे भावात्, अनिर्वचनीयमुखोत्पत्तौ च प्रतिबिम्बप्रतीतेः प्रामाण्यानुपपत्तेः । कथं तर्हि तत्र भ्रमव्यवहारः ? इति चेत् । बिम्ब-प्रतिबिम्बयोरभेदप्रतीतेः । अत एव न 'तदेवेदम्' इति प्रत्यभिज्ञापि दुरुपपदा, प्रतिबिम्बाभेदभ्रमविषयस्य तदर्थस्येदमर्थेऽभेदाबाधादिति । अधिकं सांख्यवार्तायां विवेचितम् । ततः प्रतिबिम्बस्य रूपवत एव भावाद् नेश्वर-जीवयोर्बिम्ब-प्रतिबिम्बादिभावः । न चाकाशस्यामूर्तस्यापि प्रतिबिम्बं दृश्यत इति युक्तम्, आकाशस्यायोग्यत्वे तत्प्रतिबिम्बस्य सुतरामयोग्यत्वात्; जले प्रभामण्डलाद्यवच्छिन्नयोग्यदेशस्यैव प्रतिबिम्बोपपत्तेः । 'अमूर्तेऽपि ज्ञाने विषयप्रतिबिम्बाभ्युपगन्त्रा कथममूर्ते बिम्बप्रतिबिम्बभावः शक्यः प्रतिक्षेप्तुम् ?' इत्यप्यज्ञानविजृम्भितम्, विषयग्रहणपरिणामस्यैव प्रतिबिम्बत्वेनाभ्युपगमात्, इत्थमेव विषयाकाराप्रतिसंक्रमादिना ज्ञानस्य प्रतिबिम्बाकारताप्रतिक्षेपस्य ज्ञानवादिकृतस्य प्रत्युक्तेरित्यन्यत्र विस्तरः । नन्वस्माभिरपि जीवे-श्वरभावेन द्वित्वमेव प्रतिबिम्बत्वेनोपेयत इति न दोष इति चेत् । न, अतत्स्वभावस्य तत्त्वायोगात्; तत्स्वभावत्वे चैका-ऽनेकवस्त्वङ्गीकारे परमताश्रयणात्; तदुक्तं

ग्रन्थकृतैवान्यत्र– "तद्विभागानामेव नीत्यात्मत्वात्" इति ।

एतेन 'अज्ञानतद्विषयतोपाध्यवच्छिन्नत्वेन चैतन्यस्य जीवे-श्वरत्वविभागः' इत्यपि मतं निरस्तम्, स्वभावतोऽनवच्छिन्नस्योपाधिसहस्रेणाप्यवच्छेत्तुमशक्यत्वात्; आकाशेऽपि घटाद्यवच्छिन्नत्वस्य चित्रस्वभावत्व एव सुवचत्वात्, अन्यथा तत्संबन्धानिरुक्तेः; अवच्छिन्ना-ऽनवच्छिन्नस्वभावब्रह्मोपगमे च परमताङ्गीकारात्, स्वनीत्याऽनिर्मोक्षापाताच्चेति । न चावच्छिन्नत्वं विभागरूपमवास्तवम्, अनवच्छिन्नत्वं त्वविभागरूपं वास्तवमिति युक्तम्, विपर्ययस्यापि सुवचत्वात्; अन्यथा "यथा यथाऽर्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा" इति व्यामोहेन शून्यताया एवापत्तेरध्यस्ताविद्यमानरूपप्रकाशोपगमेऽधिष्ठानस्याप्यनावश्यकत्वात्, व्यवहारदृष्टौ चैकानेकरूपस्यैव घटमानत्वात् ।

किञ्च, प्रतीयमानं सर्वेषां स्याद्वादमुद्रानतिभेदि सत्त्वमविशिष्टमपोह्य सत्त्वान्तर-तत्प्रतीत्यनुकूलशक्त्यादिकल्पने व्यसनमात्रमेव परेषाम्, न तु मानमस्ति, "तस्याभिध्यानात्" इत्यादिश्रुतेः– 'तस्यात्मनोऽभिमुखं ध्यानं क्षीणमोहगुणस्थानसंभवी केवलज्ञानाभिमुखः शुक्लध्यानपरिणामः, ततो घातिकर्मक्षयात्, युज्यतेऽनेनेति योजनं केवलिसमुद्घातः, ततो वेदनीयायुःकर्मप्रदेशसमीकरणात् तत्त्वभावः सर्वसंवरः, ततोऽन्तेऽन्तक्रियायां विश्वमायानिवृत्तिः सकलकर्मनिवृत्तिः, प्रतिक्षणं बहुतरनिर्जरासूचनाय 'भूयश्च' इत्युक्तम्, कारणोपचय एव कार्योपचयसिद्धेः' इत्यस्यैवार्थस्य सम्यग्दृष्टिपरिग्रहप्राप्तस्य न्याय्यत्वात्; तदुक्तम्– "[1]सम्मदिट्ठिपरिग्गहियं मिच्छसुअं पि सम्मसुअं" इति ।

१ सम्यग्दृष्टिपरिगृहीतं मिथ्याश्रुतमपि सम्यक्श्रुतम् ।

एवं च 'प्रपञ्चो मिथ्या, दृश्यत्वात्, स्वप्नरथवत्' इत्यनुमानमपि निरस्तम्, मिथ्यात्वस्यात्यन्तासत्त्वरूपस्य साध्यत्वेऽसत्ख्यातिप्रसङ्गात्, अन्यथाप्रतीयमानत्वरूपस्य साध्यत्वेऽन्यथाख्यातेः प्रसङ्गात्, अनिर्वचनीयत्वरूपस्य साध्यत्वे च साध्याप्रसिद्धेः; स्वप्नरथादौ तथात्वासिद्ध्या दृष्टान्तस्य साध्यवैकल्यात्। स्वाभावसामानाधिकरण्यरूपस्य साध्यत्वेऽप्ययमेव दोषः, स्वस्यैव पररूपेण स्वाभावसामानाधिकरण्यात् सिद्धसाधनं वा, परमार्थसत्त्वाभावस्य साध्यत्वेऽपि परमार्थत्वस्यानिरुक्तेः, परमार्थसत्त्वग्राहकप्रत्यक्षेण बाधाच्च। न चानुमानमिथ्यात्वं साधयन्तं लोकायतं प्रति यथा नानुमानबाधोपन्यासः फलवान्, तथोक्तप्रत्यक्षस्यापि प्रपञ्चान्तर्गतत्वेन मिथ्यात्वं साधयन्तमद्वैतवादिनं प्रति न प्रत्यक्षबाधोपन्यासः फलवानिति वाच्यम्; तथा सत्येतदनुमानस्यापि मिथ्यात्वेनासाधकतयोपन्यासानुपपत्तेः। न चैतदनुमानमेव प्रत्यक्षबाधम्, प्रत्यक्षबाधपरिहारे तदनुमानप्रामाण्यम्, एतदनुमानप्रामाण्ये च प्रत्यक्षबाधपरिहार इतीतरेतराश्रयात्, अनन्यथासिद्धत्वेन प्रत्यक्षस्यैव बाधकत्वाच्च। न हि सत्त्वं विना 'सत्' इति प्रत्यक्षमुपपद्यते, शशशृङ्गेऽपि तत्प्रसङ्गात्; उपपद्यते च मिथ्यात्वं विनापि दृश्यत्वमिति।

हेतुरपि दृश्यत्वं दृग्विषयत्वरूपमनिरुक्तिपराहतम्; तथाहि– तद् यदि दृग्-दृश्यस्वरूपसंबन्धविशेषः, तदोभयसंबन्धिरूपस्य तस्य मिथ्यात्व उभयोरपि मिथ्यात्वम्, सत्यत्वे चोभयोरपि सत्यत्वं स्यात्। यदि च दृगभेदः, तदा पक्षे तदसिद्धिः, दृशि च व्यभिचारः। यदि च 'दृष्टो घटः' इत्यादिधीसाक्षिको विषयतापरपर्याय आध्यासिको दृगभेदस्तदा प्रतिवाद्यसिद्धिः, वादिनो दृग्-दृश्याभेदे भागासिद्धिश्च, आध्यासिकदृगभेदे दृगभेदान्तरस्यानवस्थापत्तिभिया वादिनाप्यनङ्गीकारात्; विरुद्धत्वं च, दृश्यत्वस्य मिथ्यात्वाभावव्याप्तत्वादिति न किञ्चिदेतत्।

तदेवं व्यवस्थितमेतत्- प्रतीत्यनुरोधेन नाद्वैतमेव तत्त्वम्, किन्तु प्रपञ्चोऽपि ब्रह्मवत् परमार्थसन्नेवेति ॥ ७ ॥

एतद्वादविषयविभागवार्तामाह—

**अन्ये व्याख्यानयन्त्येवं समभावप्रसिद्धये। अद्वैतदेशना शास्त्रे निर्दिष्टा न तु तत्त्वतः ॥८॥**

अन्ये- जैनाः, व्याख्यानयन्ति- व्याचक्षते, एवं- यदुत, समभावप्रसिद्धये- प्रपञ्चस्याविद्याविलसितत्वमात्रप्रदर्शनेन स्वात्मन्येव प्रतिबन्धस्थैर्यात् शत्रु-पुत्रादौ द्वेष-रागादिभावविच्छेदात् परमचित्तप्रसादरूपसाम्यसिद्ध्यर्थम्, शास्त्रे- श्रात्रकप्रज्ञसिवेदे, अद्वैतदेशना- "आत्मैवेदं सर्वं-ब्रह्मैवेदं सर्वम्" इत्यादिका, निर्दिष्टा, न तु, तत्त्वतः- अद्वैतमेव तत्त्वमित्यभिप्रायेण। अत एव "पुरुष एवेदं सर्वं ग्निम्" इत्यादिश्रुतीनामापातार्थदर्शनजनितो गणधरसंशयस्तासामुक्तार्थमात्मार्थवादत्वेन तदीयसदाशयस्फातये प्रपञ्चसत्यतावेदकश्रुत्यन्तरप्रकटीकरणेन स्वयमेव भगवता निरस्तः। व्यक्तं चैतद् विशेषावश्यकादौ[1]।

यत्तु- "पुरुष एवेदम्" इत्यादावीश्वरस्य सर्वावेशनिबन्धनः सर्वतादात्म्यव्यवहारः' इति नैयायिकादीनां समर्थनम्, तत्तु तदभिमतेश्वरनिरासाद् न शोभते; शोभते तु सर्वतादात्म्यप्रतिपादकश्रुतीनां सर्वविषयतारूपावेशपरत्वम्, निश्चयतः सर्वस्य सर्वज्ञत्वात्; परमत्रापि स्वस्यैव सर्वात्मकत्वादन्यस्यानुपयोगित्वादनात्मप्रतिबन्धनिवृत्त्या साम्यसिद्धिरेव प्रयोजनमिति युक्तं पश्यामः ॥ ८ ॥

१ द्वितीयगणधरवादप्रकरणे।

उक्तव्याख्यानस्य युक्तत्वमेव व्यवस्थापयन्नाह—

**न चैतद्बाध्यते युक्त्या सच्छास्त्रादिव्यवस्थितेः। संसार-मोक्षभावाच्च तदर्थं यत्नासिद्धितः ॥**

न च, एतत्– उक्तव्याख्यानम्, युक्त्या– न्यायेन, बाध्यते। कुतः? इत्याह– सतां घटादिसत्त्वग्राहिणां शास्त्रादीनाम्, आदिनाऽनुमानादिग्रहः, व्यवस्थितेः– प्रामाण्योपपत्तेः। च– पुनः, संसार-मोक्षभावात्– संसार-मोक्षविभागस्य तात्त्विकत्वात्, तदर्थं– स्वर्गरूपसंसार-मोक्षार्थम्; तत्पदेन मोक्षस्यैवानुकर्षणात् सकलपुरुषार्थाग्रणीत्वेन मोक्षस्य प्रसिद्धत्वात्, तत्पदस्य प्रसिद्धार्थत्वाद् वा तदर्थं– मोक्षार्थमिति वा; यत्नसिद्धितः– प्रेक्षावतां यम-नियमादिव्यापारोपपत्तेः ॥ ९ ॥

विपक्षे बाधामाह—

**अन्यथा तत्त्वतोऽद्वैते हन्त! संसार-मोक्षयोः। सर्वानुष्ठानवैयर्थ्यमनिष्टं संप्रसज्यते॥१०॥**

अन्यथा– उक्तविपरीतव्याख्याने, 'हन्त' इति खेदे, संसार-मोक्षयोस्तत्त्वतोऽद्वैते– अविभागे सति, सर्वानुष्ठानस्य– यम-नियमादेः, वैयर्थ्यम्– निष्फलत्वम्, अनिष्टम्– परस्याप्यनभिमतम्, संप्रसज्यते– प्राप्नोति। संसारनिवृत्त्यर्थः, मोक्षार्थो वा मुमुक्षूणां सर्वोऽपि व्यापारः। स चाद्वैतवादे नोपपद्यते, संसारस्यासत्त्वेन नित्यनिवृत्तत्वात्, मोक्षस्यापि सच्चिदानन्दरूपब्रह्मात्मकस्य नित्यत्वेन नित्यावाप्तत्वात्। एवं च प्रपञ्चशून्यतायाः परमार्थत्वे नित्यमुक्ततापरिदूषणं मण्डनेनोक्तम्, तत्र गत्वा स्वगृहे प्रत्यावृत्तम्। अविद्यानिवृत्त्यर्थो मुमुक्षूणां यत्न इति चेत्। न, यतो न तन्निवृत्तिः सती, नाप्यसती, नापि

सद्-ऽसती, द्वैतप्रसङ्गो-द्देश्यत्व-विरोधेभ्यः, ज्ञानजन्यत्वाच्च। अस्तु तर्ह्यनिर्वचनीया, जन्यत्वात्, तदुक्तम्–"जन्यत्वमेव जन्यस्य मायिकत्वसमर्पकम्" इति चेत्। न, अनिर्वचनीयस्य ज्ञाननिवर्त्यत्वनियमाङ्गीकारेण तन्निवृत्तिपरम्पराप्रसङ्गात्। अथ सदद्वैत-व्याकोपादसत्येव सा, असत्त्वेऽपि तस्या उद्देश्यत्व-ज्ञानजन्यत्वादि कल्पयिष्यत इति चेत्। नन्वेवमविद्याप्यसत्येव कार्यजननी कल्प्यतामिति कृतान्तव्याकोपः। कल्प्यादर्शनसंशयस्तूभयत्र तुल्यः। पञ्चमप्रकारत्वाश्रयणं त्वत्यन्ताप्रसिद्धम्।

अस्तु तर्हि चैतन्यात्मिकाऽविद्यानिवृत्तिरिति चेत्। मदुक्तमेवेत्थं चैतन्यस्य सदा सत्त्वेन तदर्थप्रयत्नवैफल्यं दूषणम्। अथ तत्त्वज्ञानोपलक्षितं चैतन्यमज्ञाननिवृत्तिः, तच्च न तत्त्वज्ञानतः प्रागस्ति, उपलक्षणत्वस्य संबन्धाधीनत्वात्; काकसंबन्धो हि गृहस्य काकोपलक्षितत्वमिति चेत्। न, काकोपलक्षितत्वस्याप्येकान्ते काकसंबन्धोत्तरं तदाहितस्वभावानुवृत्त्याऽसंभवदुक्तिकत्वात्, अनेकान्त एव तदुक्तेः 'अयं छत्री' इत्यादाविव योगसत्यपर्यवसानात्। किञ्च, ज्ञानोपलक्षितत्वस्यापि सत्त्वेऽद्वैतव्याघातः, असत्त्व उद्देश्यत्वानुपपत्तिः, मिथ्यात्वे ज्ञाननिवर्त्यत्वापत्तिः, चिन्मात्रत्वे चोक्तदोषानतिवृत्तिरिति न किञ्चिदेतत्।

[1]अथ नाज्ञानस्य निवृत्तिर्नाम ध्वंसः, रूपान्तरपरिणतोपादानस्यैव तद्रूपत्वात्; घटध्वंसो हि चूर्णाकारपरिणता मृदेव। न च चैतन्यस्य रूपान्तरमस्ति। तस्माद् नास्त्येवाज्ञानध्वंसः, किन्त्वज्ञानस्य कल्पितत्वात् तदत्यन्ताभाव एव तन्निवृत्तिः। किं तर्हि तत्त्वज्ञानस्य साध्यम्? इति चेत्। नास्त्येवाज्ञानात्यन्ताभावबोधात्मकत्वबाधव्यतिरेकेण; तदुक्तम्—

१ अतः 'सर्वस्वम्' इति पर्यन्तो वेदान्तिपूर्वपक्षः।

"तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः। अविद्या सह कार्येण नासीदस्ति भविष्यति ॥१॥"

इति। स चायमधिष्ठानात्मक एव, मिथ्याभूतस्य च बाध एव ध्वंस इत्यभिधीयते। अत एव शुक्तिबोधे रजतध्वंसव्यवहारः, न तु शुक्तिबोधेन रजतध्वंसः संभवति, रजतात्यन्ताभावबोधात्मको बाधस्तु शुक्तिज्ञानात्मक एव भवतीति। कथं तर्हि सर्वदा सत इच्छा, तदर्थप्रयत्नविशेषो वा? इति चेत्। नास्माकं परेषामिव मुक्तिर्भिन्ना, किन्तु चिद्रूपैव, नित्यावाप्तैव च, इच्छा-प्रयत्नविशेषौ तु कण्ठगतचामीकरन्यायेनानवाप्तत्वभ्रमात्। तन्निमित्तं चाज्ञानमेव। न चैवं मुक्तेः पुरुषार्थत्वहानिः, ताद्धि न पुरुषकृतिसाध्यत्वम्, विषभक्षणादेरपि तथात्वापत्तेः। नाप्यभिलषितत्वे सति कृतिसाध्यत्वं तत्, गौरवात्, लाघवेनाभिलषितत्वमात्रस्यैव पुरुषार्थत्वौचित्यात्। चन्द्रोदये पुरुषार्थत्वमिष्टमेव, प्रवृत्तिविलम्बस्तु कृतिसाध्यताधीविलम्बात्। ततः सिद्धं नित्यावाप्तस्यैव कण्ठगतचामीकरवच्चैतन्यस्य पुरुषार्थत्वम्। इत्यस्माकं वेदान्तविवेकसर्वस्वमिति चेत्।

"मुक्तौ भ्रान्तिर्भ्रान्तिरेव प्रपञ्चे भ्रान्तिः शास्त्रे भ्रान्तिरेव प्रवृत्तौ।
कुत्र भ्रान्तिर्नास्ति वेदान्तिनस्ते क्लृप्ता मूर्तिर्भ्रान्तिभिर्यस्य सर्वा? ॥ १ ॥"

कथं चास्य भ्रान्तस्य शास्त्रश्रवणाद् नित्यावाप्ते चैतन्येऽनवाप्तत्वभ्रमो न निवर्तते?। कथं वा विदितवेदान्तः स्वयं निवृत्तानवाप्तत्वभ्रमः परमुपदेशेन प्रवर्तयन् प्रतारको न स्यात्?।

---

१ वेदान्तिनाम्। २ पुरुषार्थत्वापत्तेः। ३ तदा पुरुषार्थत्वपरामर्शः।

अथ द्विविधोऽस्माकं समाधिः– लयपूर्वकः, बाधपूर्वकश्च। तत्र पञ्चीकृतपञ्चभूतकार्यं व्यष्टिरूपं समष्टिरूपविराट्कार्यत्वात् तद्व्यतिरेकेण नास्ति, तथा समष्टिरूपमपि पञ्चीकृतपञ्चभूतात्मकं कार्यमपञ्चीकृतमहाभूतकार्यत्वात् तद्व्यतिरेकेण नास्ति, तत्रापि पृथिवी शब्द-स्पर्श-रूप-रस-गन्धाख्यपञ्चगुणा गन्धेतरचतुर्गुणात्मकाऽप्कार्यत्वात् तद्व्यतिरेकेण नास्ति, आपश्च गन्ध-रसेतरत्रिगुणात्मकतेजःकार्यत्वात् तद्व्यतिरेकेण न सन्ति, तदपि गन्ध-रस-रूपेतरद्विगुणवायुकार्यत्वात् तद्व्यतिरेकेण नास्ति, स च शब्दमात्रगुणाकाशकार्यत्वात् तद्व्यतिरेकेण नास्ति, स च शब्दगुण आकाशो 'बहु स्याम्' इति परमेश्वरसंकल्पात्मकाहंकारकार्यत्वात् तद्व्यतिरेकेण नास्ति, सोऽपि मायेक्षणरूपमहत्तत्त्वकार्यत्वात् तद्व्यतिरेकेण नास्ति, तदपि मायापरिणामत्वात् तद्व्यतिरेकेण नास्ति, इत्यनुसन्धानेन विद्यमानेऽपि कार्यकारणात्मके प्रपञ्चे चैतन्यमात्रगोचरो यः समाधिः स लयपूर्वक इत्युच्यते। अयं च सुषुप्तिवत् सबीजः, तत्त्वमस्यादिवेदान्तमहावाक्यार्थज्ञानाभावेनाविद्यातत्कार्यस्याक्षीणत्वात्; एवं चिन्तनेऽपि कारणसत्त्वेन पुनः कृत्स्नप्रपञ्चदर्शनाद् वेदान्तमहावाक्यार्थज्ञानेनाविद्यानिवृत्तौ साक्षिक्रमेण तत्कार्यनिवृत्तेर्हेत्वभावेन पुनरनुत्थानात्। बाधपूर्वस्तु निर्बीजः समाधिः, तत्र लयपूर्वकसमाधावनवाप्तत्वभ्रमनिवृत्तावपि बीजसत्त्वात् पुनस्तदुत्थानात् प्रवृत्तिः; बाधपूर्वकसमाधौ तु कुलालचक्रभ्रमवत् पूर्वसंस्कारवशादेव। उपदेशस्तु शमादिसंपत्त्यर्थमेव, नानवाप्तत्वभ्रमनिवृत्त्यर्थमिति न तद्वैफल्यमिति चेत्। न, अभावबोधातिरिक्ताविद्यानिवृत्त्यभावे[2] उक्तोभयसमाधिविशेषस्यैवासिद्धेः, कल्पितानुलोम-विलोमक्रमवन्निवृत्तिमात्रस्य विशेषाहेतुत्वात्, तादृशक्रमस्यैवानियम्यत्वात्, विविक्तप्रत्ययस्वरूपमात्राद् विशेषे सर्वज्ञज्ञानचरमक्षण एव

१ तद्वैफल्यमित्यन्तोऽयं पूर्वपक्षः। २ सप्तम्यन्तम्।

मुक्तिरिति वदन् सौगत एव विजयेत ।

किञ्च, निवृत्तानवाप्तत्वभ्रमस्यापि पुनस्तद्भ्रमोदयादेव प्रवृत्तिरित्यपूर्वेयं प्रेक्षावत्ता । अपिच, शमाद्यर्थोऽप्युपदेशो व्यर्थ एव, मुक्तिसाधनतायां तस्याप्रामाण्यात् । अथ तत्त्वज्ञानसाधनतायां तत्प्रामाण्यम्, तच्च स्वत एव फलरूपम्, अत एव न तद् विधेयमिति चेत् । न, तत्त्वज्ञानस्य सुख-दुःखहान्यन्यतरत्वाभावेन स्वतःफलरूपत्वानुपपत्तेः । न च दुःखहानिरूपमेव तत्त्वज्ञानमिति स्वतः फलम्, एकस्य भावा-ऽभावोभयरूपत्वविरोधात् । अविरोधे वा भावा-ऽभावकरम्बितोभयवस्त्वापत्तेः । किञ्च, तत्त्वज्ञानेऽपि मुमुक्षयैवेच्छा जायमाना तस्य स्वतःफलत्वं व्याहन्ति । यदि च तत्र स्वरसत एवेच्छा तदा घटादावपि तथैव सा स्यादिति घटादेरपि स्वतःफलत्वापत्तिरिति न किञ्चिदेतत् ।

अपिच, एवमभ्रान्तपुरुषकृतिसाध्यत्वरूपं पुरुषार्थत्वमपि मोक्षस्यानुपपन्नमेव । न चाभिलषितत्वमात्रं[1] तत्, बलवदनिष्टाननुबन्धित्वभ्रमजन्येच्छाविषये विषभक्षणेऽतिव्याप्तेः, अभ्रान्तेच्छाविषयत्वं तु न मुक्तावपि, अनवाप्तत्वभ्रमजन्येच्छाविषयत्वादेव । न चाभिलषितत्वमात्रसत्त्वेऽपि चन्द्रोदये पुरुषार्थत्वं व्यवह्रियते, लक्ष्यीकृतं च तादृशव्यवहारालम्बनमेव तदिति । एतेन 'नानवाप्तत्वभ्रमजन्या मोक्षेच्छा, अवाप्तत्वज्ञानस्येच्छाप्रतिबन्धकस्य दोषेण प्रतिबन्धादेव तदुदयात्' इत्युक्तावपि न क्षतिः, वस्तुतो विवेके सत्यवाप्तत्वज्ञानम्, तस्मिंश्च सति न मुमुक्षा, इति न यावदधिकारसंपत्तिरेव वेदान्तिनः ।

किञ्च, अज्ञानात्यन्ताभावबोधोऽप्यज्ञाननिवृत्तिरूपो यद्यधिष्ठानात्मकः, तदा तस्य तत्त्वज्ञानजन्यत्वादधिष्ठानस्यापि

---

१ ख. ग. घ. च 'तत्र.व'।

तज्जन्यत्वं प्राप्तम् । यदि चातिरिक्तः, तदा तन्निवृत्तिनिवृत्त्यादिपरम्पराप्रसङ्गो दुर्निवारः । अथ संप्रज्ञातसमाधिस्थलीयात्माकारवृत्त्युत्तरं निरोधसमाधिना वृत्तिं विनैवात्मानुभवः, तदा चित्तस्य निरुद्धवृत्तिकत्वेन दर्शनाहेतुत्वेऽपि स्वतःसिद्धस्यात्मदर्शनस्य दुर्निवारत्वाज्जल-तन्दुलादिपूर्णतापगमेऽपि घटस्य वियत्पूर्णतावत् स एवाज्ञानबाधरूपः, तस्यापि प्रवाहपतितनिर्वृत्तिकचित्तपरिणामरूपस्य सह निरोधसंस्कारैः स्वप्रकृतौ लये स्वरूपप्रतिष्ठः पुरुषो भवतीति चेत् । न, तस्य प्रकृतिलयहेत्वभावात्, स्वात्मिकाया अविद्यानिवृत्तेः स्वलयेऽहेतुत्वात्, लयस्यैवानिर्वचनाच्च; तथाहि– लयः किं ध्वंसो वा, बाधो वा, कार्यरूपपरित्यागेन कारणरूपेणावस्थानं वा? । नाद्यः, मिथ्याभूतस्यात्यन्ताभावस्यैवापगमात् । न द्वितीयः, बोधानुपरमेनानिर्मोक्षापातात् । नापि तृतीयः, [2]चित्ताभावात् ।

अथाविद्यापर्यन्तत्वाल्लयस्य न दोषः, लीयते तु सुषुप्तौ, "तन्निगृहीतं न लीयते" इति गौडोक्तं तु निरोधे चित्तवृत्त्यभावो न लयकृतः, किन्तु निग्रहकृत इत्यभिप्रायेणेति चेत् । अपमतमेतत्, लयस्य कार्यक्रमेण निवृत्तिरूपत्वात्, अत्र तु कारणक्रमेण निवृत्तेरभिधानात् । अथात्र कारणक्रमेण बाधरूपनिवृत्त्युत्तरं कार्यक्रमेण लय इति नापमतम्, स च बाधक्रमेणार्थसिद्ध इति न हेत्वनुपपत्तिरिति चेत् । न, अविद्याध्वंसत्वस्यैव तत्त्वज्ञानजन्यतावच्छेदकत्वौचित्यात्, बाधेनैव ध्वंसापलापे घटादेरपि प्रपञ्चस्य ध्वंसाभावे सूक्ष्मतया स्वरूपेणावस्थानस्य सुवचत्वे मुक्तावप्यनुवृत्तिप्रसङ्गः । कारणरूपमेव सूक्ष्मता, नान्येति चेत् । तर्हि प्रपञ्चकारणमविद्या स्वरूपतो न नष्टा, कार्यात्मना तु नष्टेति निवृत्त्य-ऽनिवृत्त्यात्मकतया वस्त्वस्तु । एवं ब्रह्मापि



१ क. 'द्धप्रत्र' । २ ख. ग. घ. च. 'स्थिलभा' ।

साक्षित्वादिरूपेण मुक्तौ नष्टमनष्टं च ब्रह्मरूपेण वस्त्वस्तु । तथाच 'औदयिकादिभावनिष्पन्नसंसारितया निवर्तमानं सिद्धत्वेनोत्पद्यमानं द्रव्यतयाऽनुगतमात्मद्रव्यमेव मुक्ताववतिष्ठते; कर्म च संसारनिबन्धनोदयादिभावालम्बनतया निवर्तमानं द्रव्यतयाऽनुगतमेव ततः पृथग्भावपर्यायेणोत्पद्यते' इत्यार्हतमतमेवाकामेनाप्यभ्युपगन्तव्यम् । अनष्टायां खल्वविद्यायां मुक्तावप्यद्वैतस्यावश्यं व्याघाते किमर्थं संसारदशायामात्मनि साक्षाज्ज्ञान-सुखादिप्रतीतीनामनिर्वचनीयज्ञानाद्यालम्बनतयाऽन्तःकरणधर्माणामेव ज्ञान-सुखादीनां परम्परासंबन्धदोषेण भ्रमत्वं कल्पनीयम् ? । "कामः, संकल्पः, विचिकित्सा, श्रद्धा, धृतिः, अश्रद्धा, अधृतिः, ह्रीः, धीः, भीः, एतत् सर्वं मन एव" इति श्रुतेर्भावमनोऽभिप्रायेणैव घटमानत्वात् । 'मनःपदस्य मनःकारणके लक्षणयैतदुपपत्तिः' इत्यन्ये ।

अथाद्वैतश्रुत्यनुरोधादनाशेऽप्यविद्याया बाधितत्वेन तस्या अतात्त्विकत्वादद्वैततत्त्वाव्याकोप इति चेत् । न, तदा तस्या बाधाविषयत्वेन बाधितत्वायोगात् । ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वं चाविद्यायामिवाविद्यानिष्ठात्यन्ताभावप्रतियोगित्वं ब्रह्मण्यपि तुल्यम्; अन्यथा तु तत्तादात्म्यापत्त्या संसारितापत्तिः । एतेन 'प्राक् पश्चाद् वा घटादेः 'नास्ति' इति प्रतीतेरत्यन्ताभावेनैवोपपत्तौ प्रागभावे ध्वंसे वा मानाभावः, असत्त्वं चात्यन्ताभावादेव' इति निरस्तम्, अनुत्पन्नाप्रच्युताया अविद्याया अत्यन्ताभावोपगमे ब्रह्मणोऽपि तत्प्रसङ्गस्य दुर्निवारत्वात्, प्रागभाव-ध्वंसापलापे प्राक्-पश्चादिति प्रयोगस्यैवानुपपत्तेः, प्रतियोगिनः पुनरुत्पत्ति-पुनरुन्मज्जनादिप्रसङ्गाच्च ।

अथ सर्वस्य ब्रह्मात्मकत्वाद् ब्रह्मणः क्वात्यन्ताभावः ?, ब्रह्म तु न सर्वात्मकमिति तदेव सर्वात्यन्ताभावरूपम्, अत

एव 'ब्रह्मसिद्धावसर्वम्" इति ब्रह्मविशेषणमुक्तमिति चेत्। न, व्याघातात्, सर्वधर्मप्रतियोगितोपरक्ताभावात्मकतया ब्रह्मणः सर्वत्वानपायात्, ब्रह्मस्वरूपवत् सर्वस्य ब्रह्माभिन्नत्वे तु च्छेदापाताच्च। नोच्छिद्यत एव ब्रह्मरूपेण सर्वम्, प्रपञ्चरूपेण चोच्छिद्यत इति चेत्। ब्रह्मापि संसाररूपेणोच्छिद्यते नोच्छिद्यते च ब्रह्मरूपेणेति तुल्यम्। नैकमेव निवर्तते, न निवर्तते चेति चेत्। तुल्योऽयमुभयत्र संत्रासः कातरस्य सः। अनित्यस्य प्रपञ्चस्य कल्पितब्रह्मतादात्म्येन सह निवृत्तिः, नित्यस्य तु ब्रह्मणो नेयमिति चेत्। न, रूपान्तरपरिणतोपादानरूपनिवृत्तिवादेऽनाद्यविद्यातादात्म्यानिवृत्त्याऽनिर्मोक्षापातस्य तदवस्थत्वात्। बाधरूपनिवृत्तिवादे च तस्य निर्विषयत्वाभावेन ब्रह्मरूपतदत्यन्ताभावविषयकेन तेन समानसंवित्संवेद्यतयाऽविद्यारूपब्रह्मात्यन्ताभावोऽपि विषयीक्रियेत। त्रैकालिकी तादात्म्यपरिणामनिवृत्तिरेव खल्वत्यन्ताभावः। अथास्त्वविद्याया ध्वंस एव, स चानिर्वचनीयः; न चानिर्वचनीयस्याज्ञाननिवर्त्यत्वनियमः, अविद्याध्वंसातिरिक्ते तत्संकोचादिति चेत्। न, तथापि मुक्तौ तत्सत्त्वेऽद्वैतसंकोचावश्यकत्वात्, तत्कार्यनिवृत्तीनामप्यनन्तानां तदा सत्त्वे तावतीषूक्तनियमाद्वैतसंकोचस्यातिजघन्यत्वाच्च; मुक्तावद्वैतवचनस्य दृग्-दृश्यसंयोगोपरतिवचनस्य च कर्मनिर्मुक्तत्वाभिप्रायेणैवोपपादयितुं युक्तत्वादिति दिग्।

अपिच, तत्त्वमस्यादिवाक्ये परोक्षत्व-भोक्तृत्वाभ्यामुपस्थितयोरभेदान्वयायोग्यत्वाद् यदि पदद्वयस्य चिन्मात्रे लक्षणा, एतद्वाक्यसामर्थ्यादेव च प्रपञ्चे पारमार्थिकत्वाभावलाभः, भोक्तृत्वादेः पारमार्थिकत्वे तत्पदार्थैक्यासिद्धेर्भोक्तृत्वादेः कल्पितत्वे भोग्यादेरपि कल्पितत्वादिति मन्यते, तदा "नित्यं विज्ञानमानन्दं ब्रह्म" इत्यत्र नित्यत्व-विज्ञानत्वाऽऽनन्दत्वादिनोपस्थितस्याप्यभेदान्वयायोग्यत्वाद् नित्यादिपदानां निर्विशेषब्रह्मणि लक्षणयैतद्वाक्यसामर्थ्यादेव नित्यत्वादे- ॥३०८॥

रपारमार्थिकत्वात् तद्विनिर्मुक्तनिर्विशेषसिद्ध्यापत्तिः । न च निर्विशेषं शशविषाणवत् सिध्यतीति शून्यतैव स्यात् । अथ नित्यानन्दादिपदार्थानां नाभेदविरोधः, तर्हि तत्-त्वंपदार्थयोरपि मा भूद् विरोधः । विरोधश्चेत् , शशविषाणादिवाक्य-तुल्यमेवैतद् वाक्यं स्यात् । यदि चात्र दृढा भक्तिः, तदा जीवे-श्वरयोः शक्त्या शुद्धस्वरूपेणैवाभेद उपपाद्यताम् । न हि 'सोऽयं देवदत्तः' इत्यत्रापि शुद्धाभेदे लक्षणा स्वारसिकी, तत्त्वे-दंताभ्यां पर्यायभेदोपरक्तस्यैवोर्ध्वतासामान्याख्यस्याभेदस्य शक्तितः प्रत्ययात् , प्रत्यभिज्ञायास्तत्समानाकाराभिलापस्य च भेदाभेदग्राहितयैव समर्थनात् , उक्तवाक्याद् भेदा-ऽभेदयोः समारोपव्यवच्छेददर्शनाच्च । किञ्च, एवमेकतरविशेषणं न प्रयुञ्जीत, 'सोऽस्ति' इत्यादिनाऽप्यभेदस्य प्रतिपादयितुं शक्य-त्वात् , विशिष्टाभेदप्रत्यायनार्थमुक्तप्रयोगसमर्थनं तु भेदाभेदवादिनः शोभते, न त्वखण्डार्थप्रतीतिवादिन इति न किञ्चि-देतदनन्तदेवोदितम् ।

एतेन 'गौरश्वः' इत्यादिकं जातितोऽर्थं प्रत्याययति, 'पचति पठति' इत्यादिकं तु क्रियातः, 'शुक्लः कृष्णः' इत्यादिकं गुणतः, 'धनी गोमान्' इत्यादिकं च संबन्धत इति, ब्रह्म तु जाति-क्रिया-गुण-संबन्धरहितं मुख्यया वृत्त्या न केनापि शब्देन प्रति-पादयितुं शक्यते, परन्तु यथा कथञ्चिल्लक्षणयैव 'तत्त्वमसि' इत्यादिवाक्यात् तद्बोधः, तत्रापि तात्पर्यस्य नियामकत्वाद् निर्दो-षत्वमहिम्ना वृत्तिं विनैव वा ततस्तद्बोधः' इति मधुसूदनाभिप्रायोऽपि निरस्तः, अस्य खलु तपस्विनो 'यथा कथञ्चित्' इति वदतो लक्षणायां[1] संशय[2] एव । न हि बहुप्रसिद्ध्यनारूढपदसंबन्धरूपा, शक्यार्थसंबन्धरूपा वा लक्षणा ब्रह्मणि घटते । न चा-

---

१ ख. ग. घ. च. 'न श' । २ क. 'संन्यास ए' ।

खण्डार्थप्रतीतिर्लक्षणया क्वचिद् दृष्टेति। न चास्य महात्मन उत्तरसमाधानपाणिनाऽपि विवेकलोचनमाच्छादयतो दोषदस्योर्न भयम्। न हि वृत्तिं विना क्वचन शब्दात् प्रतीतिः प्रादुर्भवन्ती दृष्टा। यदि च निर्दोषत्वमहिमा शाब्दसामग्रीमातिपत्त्यैव शब्दाद् ब्रह्म बोधयेत् तदा शब्दप्रतिपत्त्यैवासौ स्वातन्त्र्येण तद् बोधयन् कुतो[1] न प्रमाणान्तरतामास्कन्देत्?। न च निर्दोषत्वम[2]त्राविद्यानिवृत्तिरूपम्, तस्याः फलत्वात्, तृतीयप्रतिपत्तौ भावाच्च; तिस्रो हि ब्रह्मणि प्रतिपत्तयः, आद्या शब्दात्, द्वितीया शब्दात् प्रतिपद्य संतानवती, तृतीया तु निर्विकल्पकसाक्षात्काररूपेति; किन्तु श्रवणादिजन्यप्रतिबन्धकादृष्टनिवृत्तिरूपम्[2]। न च श्रवणादिकं वेदान्तवाक्यार्थबोधार्थं विधीयते, येन तत्र सा द्वारं स्यात्, किन्त्वात्मसाक्षात्कारार्थम्; "आत्मा वा रे द्रष्टव्यः श्रोतव्यो[3] मन्तव्यो निदिध्यासितव्यः" इति श्रुतौ 'अग्निहोत्रं जुहोति, यवागुं पचति' इतिवदार्थक्रमस्य बलवत्त्वात्, श्रवण-मननादिभिरात्मा द्रष्टव्य इत्यर्थात्। अत्रापि श्रवणं न वेदान्तानामेव, "श्रोतव्यः श्रुतिवाक्येभ्यः" इत्यत्र श्रुतिपदस्य प्रमाणशब्दमात्रपरत्वात्, अन्यथा नियमा-ऽदृष्टकल्पनागौरवात्। न च गौरवेण मुख्यार्थत्यागेऽविद्याप्रयुक्तिभयाद् रूढित्यागः स्यादिति वाच्यम्; विशेष्यतावच्छेदकप्रकारेण विशिष्टवाचकपदेन बोधे लक्षणाऽभावात्। अत एव विनापि लक्षणां श्येनादाविष्टसाधनबोधः। अत एव न प्रमाणमात्रपरत्वम्, 'श्रुतिपदशक्तौ मुख्यविशेष्ये प्रमाणत्वस्य साक्षादप्रकारत्वात्, तन्मात्रेण तद्बोधने लक्षणापत्तेः' इति मिश्रोक्तेः। अत एव श्रवणे वेदान्तयुक्तरीत्या नियमविधिरपि न न्याय्यः।

नन्वेवमपि शब्दबोधस्यैव तत्प्रयोजकत्वाय नियमा-ऽदृष्टकल्पनावश्यकत्वाद् विशिष्टवाचकश्रुतिपदजन्योपस्थितिसंको-

---

१ क. 'कुतः प्र'। २ 'निर्दोषत्वम्' इति संबध्यते। ३ क. 'व्यो नि'।

चस्यान्याय्यत्वात्, संन्यासाद्यधिकारवत एव श्रवणस्य नियम्यत्वाच्च न नियमविधेरन्याय्यत्वमिति चेत् । न, तथाप्यात्मदर्शनार्थं तद्विधिसिद्धेर्न तज्जन्यदुरितनिवृत्तिसाध्यो वाक्यार्थबोधः। वाक्यार्थबोधोऽपि प्रकृतो विषयस्यापरोक्षत्वादात्मदर्शनरूपः स्वीक्रियत इति चेत् । प्रक्रियामात्रमेतत् । न हि विषयपरोक्षत्वा-ऽपरोक्षत्वनिबन्धनं प्रतिभासस्य परोक्षत्वमपरोक्षत्वं वा, एकत्र विषय उभयप्रतिभासानुपपत्तिप्रसङ्गात्, विषयस्वरूपापरावृत्तेः। अथ वृत्तिधर्म एव परोक्षत्वमपरोक्षत्वं वा, तद्विषयतया च विषयपरोक्षत्वा-ऽपरोक्षत्वव्यवहार इति चेत्। न, सर्वज्ञानानां स्वांशे प्रत्यक्षत्वोपगमविरोधात्। अथ वृत्तेः स्वाकारवृत्तिमन्तरेण भासमानत्वात् शुद्धसाक्ष्यपरोक्षत्वम्, घट-वह्न्यादिविषयांशे तु ज्ञाततयाऽज्ञाततया वा साक्ष्यपरोक्षत्वं नैयायिकानां मानसप्रत्यक्षत्वतुल्यम्, स्वरूपेणापि प्रमाणतोऽपरोक्षत्वं च घटादेरेव, विषयचैतन्य-प्रमातृचैतन्ययोरभेदेन तस्य फलव्याप्यत्वात्, न तु वह्न्यादेः, तत्र वृत्तेर्बहिर्निःसरणाभावेनाभेदाभिव्यक्त्यभावात्, प्रकृते चैकस्यैव चैतन्यस्य शब्दबोधितस्य प्रमातृत्वेन विषयत्वेन चाभेदात् स्वरूपतोऽप्यपरोक्षत्वमिति चेत्। न, देशविशेषावच्छिन्नपर्वतस्येवाखण्डत्वाविशिष्टस्य चैतन्यस्य तत्त्वायोगात्; अन्यथा 'अहं ज्ञानवान्, ज्ञानसामग्रीतः' इत्यत्राप्यनुमितित्वमुच्छिद्येत । किञ्च, कर्मणि स्पष्टत्वं यदि ज्ञानधर्मः, तदा सर्वत्र तत्प्रसङ्गः । यदि च कारणज्ञानस्पष्टता तन्निमित्तम्, तदाऽनवस्था। न चैकान्त एकस्यांशे परोक्षत्वाऽपरोक्षत्वादिकं कर्तृ-कर्म-क्रियाविभागो वा संभवीति न किञ्चिदेतत् ।

अस्माकं त्वनेकान्ताद् नायं दोषः, प्रबलतरज्ञानावरण-वीर्यान्तरायकर्मक्षयोपशमविशेषात् क्वचिद् विषये विज्ञानस्य

---

१ क. 'क्ष्यत्व'।

स्पष्टत्वम्; तद्विपर्ययात्तु क्वचिदस्पष्टत्वम्। अनुमानाद्याधिक्येन नियतवर्णसंस्थानाद्यवगाहनेन विशेषप्रकाशनं हि स्पष्टत्वम्; तदुक्तम्—

"अनुमानाद्यतिरेकेण विशेषप्रतिभासनम्। तद् वैशद्यं मतं बुद्धेरवैशद्यमतः परम् ॥ १ ॥" इति।

'प्रतीत्यन्तराव्यवधानेन प्रकाशनं स्पष्टत्वम्' इति त्वीहादीनां संदेहादिभ्यः समुपजायमानत्वेन निरस्तं देवसूरिभिः[1]। तदिह शब्दादुद्भवदात्मज्ञानं न कथमप्यपरोक्षम्, अस्पष्टत्वात्, इति केवलज्ञानरूपं सकलप्रत्यक्षमेवात्मदर्शनमेष्टव्यम्। तत्र च श्रवणस्य ज्ञान-विज्ञानादिक्रमेणोपयोगः, अत एवोपरतिपदार्थस्य चारित्रस्य न तदङ्गत्वम्, श्रवणस्यैव तदुपकारित्वात्। अत एव च गृहस्थानां स्त्रीणां च तत्र तत्रोक्तस्तदधिकारोऽपि संगच्छते। श्रवणादिविधिश्च मुक्त्यर्थमेव, सम्यग्दृष्टिमधिकृत्य सर्वेषामपि कर्मणां तदर्थमेव विधानात्, विधिसामर्थ्यादेवेहलोकाद्यर्थनिषेधप्राप्तेः। विहितं च मुक्तिपरम्पराकारणमान्तरालिककारणोपनायकतयैव तज्जनयेदिति किं नात्मश्रवणमात्मदर्शनहेतुः स्यात्?। उपकारिकारणं चैतत्, तेन न प्रत्येकबुद्धादीनां श्रवणाभावेऽपि ज्ञानानुपपत्तिः। न च प्राग्भवीयश्रवणादिकमेव तेषां कल्पनीयम्, मरुदेव्यादौ तदभावात्, इत्यन्यत्र समयपरमार्थविस्तरः।

अपि च, स्वमतेऽपि परस्य श्रवणादिजन्यप्रतिबन्धकादृष्टनिवृत्तिरूपनिर्दोषत्वमहिमा न शब्दात् शुद्धब्रह्मबोधे हेतुः, उत्पत्तौ प्रामाण्यस्य स्वतस्त्वभङ्गापत्तेः। ज्ञानसामान्यसामग्रीजन्यत्वं हि तत्। न चोक्तार्थवाक्यार्थप्रमाया निर्दोषत्वजन्यत्वे

१ प्रमाणनयतत्त्वालोकालङ्कारे द्वितीयपरिच्छेदे।

युज्यत एतत्, श्रवणादेः प्रतिबन्धकनिवर्तकत्वात्, प्रतिबन्धकाभावस्य च तुच्छतया हेतुत्वादेव गेहेनर्दिभिः परैरेतद्दोषपरिहारादिति स्वगृहतत्त्वमेव न प्रेक्षितं क्षतक्षामकुक्षिना तपस्विना, ततः सम्यगुत्प्रेक्षितं शाक्यसिंहविनेयेन यत्–'प्रबलदोषमाहात्म्यात् 'खरविषाणम्' इत्यादिवाक्यादलीकस्याखण्डस्य खरविषाणस्येव वेदान्तवाक्यात् परेषां कुवासनादोषमाहात्म्यादलीकस्याखण्डस्य ब्रह्मणो बोधः' इति। एवं च सर्वस्य स्वरूपसत्तादिधर्मसंकीर्णस्य, पररूपासंकीर्णस्यैव चोपलम्भाद् व्यवहारस्य च प्रतियोगिप्रतिपत्तौ तथैवोदयात्, सदसदात्मकमेव जगत्; तदाहुर्वृद्धाः—

"सर्वमस्ति स्वरूपेण पररूपेण नास्ति च। अन्यथा सर्वसत्त्वं स्यात् स्वरूपस्याप्यसंभवः ॥ १ ॥"

न तु सदाद्यद्वैतमेवेति व्यवस्थितम् ॥ १० ॥

चार्वाकीयमताविवेकिशिषु फलं नैवास्ति, बौद्धोक्तयः कर्कन्धूपमितास्तु कण्टकशतैरत्यन्तदुःखप्रदाः।
उन्मादं दधते रसैः पुनरमी वेदान्तताल्द्रुमाः गीर्वाणद्रुम एव तेन सुधिया जैनागमः सेव्यताम् ॥ १ ॥
न काकैश्चार्वाकैः सुगततनयैर्नापि शशकैर्बकैर्नाद्वैतज्ञैरपि च महिमा यस्य विदितः।
मरालाः सेवन्ते तमिह समयं जैनयतयः सरोजं स्याद्वादप्रकरमकरन्दं कृतधियः ॥ २ ॥
क्वचिद् भेदच्छेदः क्वचिदपि हताऽभेदरचना क्वचिद् नात्मख्यातिः क्वचिदपि कृपास्फातिविरहः।
कलङ्कानां शङ्का न परसमये कुत्र तदहो! श्रिता यत् स्याद्वादं सुकृतपरिणामः स विपुलः ॥ ३ ॥

यस्यासन् गुरवोऽत्र जीतविजयप्राज्ञाः प्रकृष्टाशया भ्राजन्ते सनया नयादिविजयप्राज्ञाश्च विद्याप्रदाः ।
प्रेम्णां यस्य च सद्म पद्मविजयो जातः सुधीः सोदरस्तेन न्यायविशारदेन रचितस्तर्कोऽयमभ्यस्यताम् ॥ ४ ॥

इति पण्डितश्रीपद्मविजयसोदरन्यायविशारदपण्डितयशोविजयविरचितायां स्याद्वादकल्पलतानाम्न्यां
शास्त्रवार्तासमुच्चयटीकायामष्टमः स्तबकः ॥



॥ अर्हम् ॥

# अथ नवमः स्तवकः ।

प्रणतान् प्रति निर्वृतिश्रिया स्वहृदो राग इव स्फुटीकृतः ।
त्रिशलातनयस्य संपदे पदयोः पाटलिमा नखत्विषाम् ॥ १ ॥

अपि स्वपिति विद्विषां ततिरपायरात्रिंचरः प्रणश्यति यदाख्यया पठितसिद्धया विद्यया ।
स्तवप्रवणता स्वतः सततमस्य शङ्खेश्वरप्रभोश्चरणपङ्कजे भवति कस्य धन्यस्य न ? ॥ २ ॥

हेतु-युक्तिविलसत्सुवासनं निर्मितोरुकुनयव्यपासनम् ।
भूत-भावि-भवदर्थभासनं शासनं जयति पारमेश्वरम् ॥ ३ ॥

नन्वद्वैते मोक्षार्थानुष्ठानवैयर्थ्यमुक्तम्, मोक्ष एव चोपायाभावाद् नास्तीति किमेतद् दूषणम् ? इति केषाञ्चिद् वार्तान्तरमाह—

**अन्ये पुनर्वदन्त्येवं मोक्ष एव न विद्यते । उपायाभावतः, किंवा न सदा सर्वदेहिनाम् ? ॥१॥**

अन्ये पुनः- नास्तिकप्रायाः, वदन्ति, एवं-यदुत, मोक्ष एव न विद्यते परमार्थतः। कथम्? इत्याह- उपायाभावतः- तत्प्राप्तिहेत्वभावात्, नित्यावाप्तत्वेऽपि तदभिव्यक्तिहेत्वभावात्। सत्युपाये किंवा न सदा-सर्वकालमेव, सर्वदेहिनाम्- सर्वेषामेव संसारिणां स उपायः? । मोक्षवत् तदुपायस्यापि क्वाचित्कत्व-कादाचित्कत्वयोस्तुल्यः पर्यनुयोग इति भावः ॥ १ ॥

प्रस्तुतवाद्येव पराशयमाशङ्क्य परिहरति--

**कर्मादिपरिणत्यादिसापेक्षो यद्यसौ ततः। अनादिमत्त्वात्कर्मादिपरिणत्यादि किं तथा ॥२॥**

यद्यसौ- मोक्षोपायः, कर्मादिपरिणत्यादिसापेक्षः, 'कर्मादि-' इत्यादिना प्रधानादिग्रहः, 'परिणत्यादि' इत्यादिना विवर्तादिग्रहः, तत्सापेक्षोत्पत्तिकः; ततः- तर्हि, अनादिमत्त्वात् कर्मादेः, कर्मादिपरिणत्यादि, किं तथा- किं कादाचित्कम्?, अनादेः कर्मादेः स्वपरिणत्यादावन्यापेक्षाऽभावात् ॥ २ ॥

ननु प्रधानादेर्नित्यस्यैकस्य सहकार्यपेक्षाभावेऽपि प्रवाहेणैव कर्मणोऽनादित्वात् कस्यचित् कर्मणः स्वभावतस्तथापरिणंस्यमानस्योपादानात् तथापरिणत्यादिकं न दुर्घटम्, इत्यत आह—

**तस्यैव चित्ररूपत्वात्तत्तथेति न युज्यते। उत्कृष्टाद्या स्थितिस्तस्य यज्जातानेकशः किल ॥३॥**

१ ख. ग. घ. च. 'णामादि'।

तस्यैव– अधिकृतस्यैव कर्मणः, चित्ररूपत्वात्– विचित्रस्वभावात्, तत्– परिणत्यादिकम्, तथा– कादाचित्कम्, इति न युज्यते– न घटते, यत्– यस्मात्, तस्य– कर्मणः, उत्कृष्टाद्या–उत्कृष्टा ग्रन्थ्यवाप्त्यवच्छिन्ना, अपकर्षवर्ती च, स्थितिः, अनेकशः– बहुवारम्, जाता, 'किल' इत्याप्तवचनमेतत्।

तथाचापकृष्टस्थितिकादिस्वभाववतः कर्मणो मोक्षोपायजननपरिणतिशालित्वेऽभव्यादीनामपि तल्लाभप्रसङ्गः, तेषामपि तीर्थकरादिविभूतिं दृष्ट्वा ग्रन्थ्यवाप्तौ श्रुतसामायिकलाभश्रवणात्। किञ्च, एवं दर्शनादेः स्वभावजनितत्वेन मोक्षः पुरुषकृतिसाध्यो न स्यादिति परं प्रत्युक्तं तदर्थानुष्ठानवैयर्थ्यं स्वयमप्यनिवारितम्। अपि च, प्रथमनिर्गुणस्यैव सतो गुणावाप्त्यावग्रेऽपि किं गुणापेक्षया ?। अपि च, सर्वमुक्तिसिद्धान्तो नास्ति जैनानाम्, तदभावे चायोग्यत्वशङ्कया कथं मोक्षोपाये प्रेक्षावतां निराकुलप्रवृत्त्युपपत्तिः ?। न च शम-दम-भोगानभिषङ्गादिना मुमुक्षुचिह्नेन तच्छङ्कानिवृत्तिः, शमादिमत्त्वानिश्चयानन्तरं प्रवृत्तिः, प्रवृत्त्युत्तरं च शमादिसंपत्तिरित्यन्योन्याश्रयात्। एतेन 'शमादिमत्त्वेन योग्यता' इत्यपि प्रत्युक्तम्, भव्यत्वजातिभेदोपगमविरोधाच्चेत्याद्यूहनीयम् ॥ ३ ॥

अत्र समाधानवार्तामाह—

५३ **अत्रापि वर्णयन्त्यन्ये विद्यते दर्शनादिकः। उपायो मोक्षतत्त्वस्य परः सर्वज्ञभाषितः॥४॥**

अत्रापि– मोक्षाभाववादे, वर्णयन्त्यन्ये– मोक्षवादिनो जैनाः, विद्यते दर्शनादिकः– दर्शन-ज्ञान-चारित्ररूपः, उपायः–

प्राप्तिहेतुः, मोक्षतत्त्वस्य– द्रव्य-क्षेत्र-काल-भावभेदेन शुद्धात्मस्वरूपावस्थानरूपस्य, परः– उत्कृष्टः, सर्वज्ञभाषितः– वीतरागभणितः, नासर्वज्ञभाषितः, अभाषितो वा।

अत्र 'मोक्षतत्त्वस्य, इति तत्त्वपदेनान्याभिमतमोक्षस्याभावादेव तदुपायः शशशृङ्गोपायतुल्य इति ध्वनितम्; तथाहि— 'समानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंस एव मोक्षः' इति नैयायिकमतं न रमणीयम्, अतीतदुःखवद् वर्तमानदुःखस्यापि स्वत एव नाशादपुरुषार्थत्वप्रसङ्गात्। न च हेतूच्छेदे पुरुषव्यापारः, प्रायश्चित्तवदिति वाच्यम्; तथा सति दुःखानुत्पादस्य दुःखसाधनध्वंसस्यैव वा प्रयोजनत्वप्रसङ्गात्। न च चरमदुःखध्वंसेऽन्वय-व्यतिरेकाभ्यां तत्त्वज्ञानस्य प्रतियोगिवद् हेतुत्वम्, प्रतियोगिनमुत्पाद्य तेन तदुत्पादनात्, पुरुषार्थसाधनतया दुःख-तत्साधनयोरपि प्रवृत्तिदर्शनादिति वाच्यम्; चरमत्वस्यार्थसमाजसिद्धत्वेन कार्यतानवच्छेदकत्वात्, अन्त्यदुःख[1] उपान्त्यदुःखस्यैव हेतुत्वेन तस्य तत्त्वज्ञानेनोत्पादयितुमशक्यत्वात्, भोगेनैव कर्मणां नाशे नानाभवभोग्यकर्मणामेकभवे भोक्तुमशक्यत्वात्, तत्कर्मभोगस्य चापूर्वकर्मार्जकत्वेनानिर्मोक्षापातात्। न च तत्त्वज्ञानबलार्जितेन कायव्यूहेन तत्तत्कर्मभोगाद् नानिर्मोक्ष इति सांप्रतम्, मनुजादिशरीरसत्त्वे शूकरादिशरीरोत्पादायोगात्। देवादीनां तु वैक्रियशरीरादिकर्मोदयमहिम्नैव नानाशरीरश्रवणोपपत्तेरिति।

' "दुःखेनात्यन्तविमुक्तश्चरति" इति श्रुतिस्वरसाद् दुःखात्यन्ताभाव एव मुक्तिः, दुःखसाधनध्वंस एव च स्ववृत्तिदुःख-

१ सप्तम्यन्तम्।

स्यात्यन्ताभावसंबन्धः, स च साध्य एव' इति तदेकदेशिमतमपि न सांप्रतम्; दुःखसाधनध्वंसस्य दुःखात्यन्ताभावसंबन्धत्वे मानाभावात्।

'दुःखध्वंसस्तोम एव मुक्तिः' इत्यपि केषाञ्चित् तदेकदेशिनां मतं वार्तम्; स्तोमस्य कथमप्यसाध्यत्वात्।

'आनन्दमयपरमात्मनि जीवात्मलयो मुक्तिः' इति त्रिदण्डिमतमपि न पेशलम्; एकादशेन्द्रिय-सूक्ष्ममात्रावास्थितपञ्चभूतात्मकलिङ्ग-शरीरापगमरूपलयस्य नामान्तरेण नामकर्मक्षयरूपत्वादेव। यदि चोपाधिशरीरनाशे औपाधिकजीवनाशो लयः, तदा तेन रूपेणाकाम्यत्वादपुरुषार्थत्वात्।

'अनुपप्लवा चित्तसंततिर्मुक्तिः' इति बौद्धबुद्धिरपि न सूक्ष्मा, संततेरवस्तुत्वेनासाध्यत्वात्। न च संततिपतितक्षणानामेव पूर्वोत्तरभावेन हेतुहेतुमद्भावात् तत्साध्यत्वम्, संसारानुच्छेदप्रसङ्गात्, सर्वज्ञज्ञानचरमक्षणस्यापि मुक्तज्ञानप्रथमक्षणहेतुत्वेन तत्संततिपतितत्वात्। अथ न हेतु-फलभावमात्रादेकसंततिव्यवस्था, अपि तूपादान-हेतुफलभावात्; न च सर्वज्ञज्ञानस्य चरमक्षण उपादानम्; आलम्बनप्रत्ययो हि सः, समनन्तरप्रत्ययश्चोपादानमिति चेत्। न तुल्यजातीयस्योपादानत्वे मुक्तचित्त-सर्वज्ञज्ञानयोस्तुल्यजातीयतानपायात्; सर्वज्ञज्ञानचरमक्षणस्याद्यमुक्तचित्तानुपादानत्वे तस्यानुपादानस्यैवोत्पत्तेर्जागराद्यप्रत्ययेऽप्युपादानानुमानोच्छेदात्, अन्वयिद्रव्याभावे बद्ध-मुक्तव्यवस्थानुपपत्तेरिति।

'स्वातन्त्र्यं मुक्तिः' इत्यपरेषां मतमपि न क्षोदक्षमम्, तद् यदि कर्मनिवृत्तिरेव तदा सिद्धान्तसिन्धावेव निमज्जनात्।

---

१ सप्तम्यन्तम्। २ आर्हतसिद्धान्तप्रवेशात्, सिद्धसाधनादिति यावत्।

यदि चैश्वर्यमेव तत्, तदाऽभिमानाधीनतया तस्य संसारविलसितत्वात्।

'प्रकृति-तद्विकारोपधानविलये पुरुषस्य स्वरूपेणावस्थानं मोक्षः' इति सांख्यमतमपि न निर्मलसंख्यासमुज्जृम्भितम्, स्वरूपावस्थानस्य कूटस्थात्मरूपस्यासाध्यत्वात्, प्रकृत्यादिप्रक्रियायां प्रमाणाभावाच्च।

'अग्रिमचित्तानुत्पादे पूर्वचित्तनिवृत्तिर्मुक्तिः' इत्यन्येषां मतमपि कुवासनाविलसितम्, अग्रिमचित्तानुत्पादस्य प्रागभावरूपस्यासाध्यत्वात्, चित्तनिवृत्तेरनुद्देश्यत्वाच्च।

'आत्महानं मुक्तिः' इति पापिष्ठमतमपि पिष्टमेव, वीतरागजन्मादर्शनन्यायेन नित्यतया सिद्धस्यात्मनः सर्वथा हातुमशक्यत्वात्, आत्महानस्यानुद्देश्यत्वाच्च।

'नित्यनिरतिशयसुखाभिव्यक्तिर्मुक्तिः' इति तौतातितमतमपि नातिचतुरस्रम्, एकान्ततः सुखस्य नित्यत्वे संसारदशायामपि तदभिव्यक्तिप्रसङ्गात्, सुखमात्रस्य स्वगोचरसाक्षात्कारजनकत्वनियमात्, तज्ज्ञानस्याप्यभिव्यक्तिरूपस्य नित्यत्वात्, "नित्यं विज्ञानमानन्दं ब्रह्म" इति श्रुत्या ज्ञान-सुखयोरभेदबोधनात्। अनित्यज्ञानरूपतदभिव्यक्तेर्दोषाभावसाध्याया उपगमे तस्या नाशनियमेन मुक्तस्य पुनरावृत्तिप्रसङ्गात्; तदभिव्यक्तिप्रवाहस्य च शरीरादिहेत्वपेक्षां विनाऽनुपपत्तेः। उपपत्तौ वा एकस्या एव तदभिव्यक्तेर्दोषाभावजन्यायाः, सुखस्य च तादृशस्य तावद्दूरमवस्थानौचित्यात्। एतेन 'अविद्यानिवृत्तौ विज्ञान-सुखात्मकः केवल आत्मैवापवर्गः' इति वेदान्तिमतमपि निरस्तम्, ज्ञानसुखात्मकब्रह्मणो नित्यत्वे मुक्त-संसारिणोर-

१ स्वातन्त्र्यस्य तदाऽनुकर्षः।

विशेषापातात्, अविद्याया असत्त्वेन नित्यनिवृत्तत्वाच्चेति दिग्। 'परः' इत्यनेन ज्ञान-क्रिययोः समुच्चयेन मोक्षोपायत्वं सूचितम्। विवेचयिष्यते चात्र नयमतभेदविचारः स्वयमेव ग्रन्थकृतोपरिष्टात्।

ये तु ज्ञानदुर्नयावलम्बिन औपनिषदाः 'ज्ञानमेव मोक्षोपायः, तच्च साक्षिणि कल्पितम्, साक्ष्यमनृतत्वाद् नास्त्येव, साक्ष्येव तु परमार्थसत्, इति विचाररूपम्, योगस्तु चित्तदोषनिराकरणेनान्यथा सिद्धः' इति प्रतिजानते; तेषामुत्पन्नमात्र एव तत्त्वज्ञाने संसारोच्छेदापत्तिः। न च प्रारब्धस्याज्ञाननिवृत्तौ प्रतिबन्धकत्वाद् नायं दोष इति सांप्रतम्; अज्ञाननिवर्तकस्वभावस्य तत्त्वज्ञानस्य तन्निवृत्तौ प्रतिबन्धककृतविलम्बायोगात्। न हि शुक्तितत्त्वज्ञानेन रजतभ्रमे निवर्तनीये प्रतिबन्धककृतविलम्बो दृश्यते। दृश्यत एव 'पीतः शङ्खः' इत्यादौ श्वैत्यानुमित्यादावपि पित्तकृतः पीतत्वभ्रमनिवृत्तिविलम्ब इति चेत्। तथापि साक्षात्कारिभ्रमनिवृत्तौ तत्त्वसाक्षात्कारे सति प्रतिबन्धककृतो विलम्बो न दृश्यत एव। न च पराभिमतं भावरूपमज्ञानमेवास्ति, इति किं तत्त्वज्ञानेन निवर्तनीयम्?।

किञ्च, प्रारब्धस्य प्रतिबन्धकत्वं न कारणीभूताभावप्रतियोगित्वम्, अभावस्य तुच्छत्वेन परैः कारणत्वानभ्युपगमात्, किन्तु कार्यानुकूलशक्तिविघटकत्वम्। विघटनं च नाशः कुण्ठनं वेत्यन्यदेतत्। न चैकस्यैव ज्ञानस्य मुक्तिपर्यन्तमवस्थानम्, इत्यन्तिमतत्त्वज्ञान एव तच्छक्तिः कल्प्या, अनन्तशक्तिनाश-कुण्ठनादिकल्पने गौरवात्, अन्यथेदानींतनतत्त्वज्ञानेऽपि तत्कल्पनं दुर्निवारं स्यादिति गतं प्रारब्धप्रतिबन्धकत्वेन। इत्थमेव स्वीकारे च प्राच्यज्ञानवत् प्राच्यकर्मणोऽप्यान्तिमतत्त्वज्ञानो-

१ ख. ग. घ. च. 'स्य तन्नि'।

पकारकतया समप्राधान्यमेव, आगमेऽप्यात्मदर्शनस्येव सम्यक्क्रियाया अपि मुक्तिहेतुत्वं सिद्धमेव। सूक्ष्मेक्षणेन तत्र प्रयोजकत्वविश्रामोऽप्युभयत्र तुल्यः। अन्तिमज्ञानक्षण इवान्तिमपुरुषव्यापारक्षणेऽपि मुक्तिजननी शक्तिस्तुल्येति विवेकः।

येऽपि पातञ्जला योगपदाभिधेयां सम्यक्क्रियामेव मोक्षहेतुत्वेनोपयन्ति, परमार्थभूतस्य चित्तस्यादर्शनेन साक्षिदर्शने निरोधातिरिक्तोपायाभावादिति; तेऽपि भ्रान्ताः, सर्वज्ञस्य चित्तदर्शनार्थं समाधिव्यापारायोगात्, अन्यथा सर्वज्ञस्वभावपरित्यागादचेतनादविशेषापत्तेः। अथ निस्तरङ्गमहोदधिकल्पो ह्यात्मा, तत्तरङ्गकल्पाश्च महदादिपवनयोगतो वृत्तय इति तन्निराकरणेनैवात्मनः स्वरूपप्रतिष्ठेति चेत्। न, आत्मनः प्राक् तद-ऽतत्स्वभावत्वयोरनुष्ठानवैयर्थ्यात्, विषयग्रहणपरिणामरूपाकारसंपृक्तज्ञानस्य मुक्तावप्यनपायाच्च। तस्माद् न चित्तदर्शनार्थं योगिनां समाधौ व्यापारः, किन्तु चित्तपृथक्करणार्थमेव। तत्र च क्रियाया इव ज्ञानस्यापि हेतुत्वमव्याहतमेव। केवलाभोगपूर्वक एव हि योगनिरोधव्यापार इति विभावनीयम्।

इत्थं च यदुक्तं वशिष्ठेन—

"द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव!। योगश्चित्तनिरोधो हि ज्ञानं सम्यगवेक्षणम्॥ १॥" इति।

तदपि ज्ञान-कर्मसमुच्चयमनुरुणद्धि।

यत्तु 'अयमस्याभिप्राय उन्नीयते मधुसूदनेन– 'प्रथमः प्रकारः प्रपञ्चसत्यत्ववादिनाम्, द्वितीयस्त्वद्वैतवादिनाम्' इति, अत एवोक्तं तेनैव—

"असाध्यः कस्यचिद् योगः कस्यचिद् तत्त्वनिश्चयः। प्रकारौ द्वौ ततो देवो जगाद परमः शिवः ॥१॥" ' इति।

तत्तु वादद्वयस्य वास्तवत्वं शिवस्योभयपथभ्रान्तिजनकत्वेन प्रतारकतां व्यञ्जयतीति न किञ्चिदेतत्। न ह्यनेकान्ताश्रयणं विना नयमतभेदादिकं संगच्छत इति।

केचित्तु ज्ञान-कर्मणोस्तुल्य(त्व)वत् समुच्चयमपि स्वीकुर्वन्ति, तथाच भास्करीयाः–'तीर्थविशेषस्नान-यम-नियमादीनां तावद् निःश्रेयसकारणत्वं शब्दबलादेवावगम्यते। तत्र तत्त्वज्ञानव्यापारकत्वं न शाब्दम्, न वान्यथानुपपत्त्या, तत्त्वज्ञानस्यापि व्यवहितस्यादृष्टद्वारकत्वावश्यकत्वेऽत्राप्यदृष्टस्यैव द्वारत्वौचित्यात्, ज्ञानिनामपि यमादावधिकारानपायाच्च। श्रुतिरपि "अन्धं तमः प्रविशन्ति ये विद्यामुपासते, ततो भूय इव ते तमो यउ विद्यायां रताः" तथा "विद्यां चाविद्यां च" इत्यादिः "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति तु तत्त्वज्ञानस्यापवर्गसामग्रीनिवेशनियमपरम्, न तु वाक्यान्तरावधृतकारणव्युदासार्थम्। कर्मणां समुच्चयश्चात्र स्वस्वाश्रमविहितानां साधारणानां यमादीनाम्, असाधारणानामपि यज्ञादीनामीश्वरार्पणबुद्ध्या विहितानामिति न यावत्कर्मसमुच्चयानुपपत्तिदोषः' इति। तेऽपि बाह्याः परमार्थावेदिनः, न हि कर्मणो ज्ञानस्य वाऽदृष्टद्वारा मोक्षजनकत्वमस्ति, कर्मद्रव्यरूपस्य तस्य[1] संसारार्जकत्वात्। द्रव्यरूपता च तस्य 'चेतनस्य स्व-परज्ञस्य तदात्मनो हीनमातृगर्भस्थानप्रवेशस्तत्संबद्धान्यनिमित्तः, अनन्यनेयत्वे सति तत्प्रवेशा(शव)त्, मत्तस्याशुचिस्थानप्रवेशात्' इत्यादिना सिद्धा।

यत्तु गृहान्तरानुप्रवेशवद् देहाद् देहान्तरानुप्रवेशस्याभिलाषपूर्वकत्वादनन्यथासिद्धो हेतुर्न द्रव्यविशेषसाधकः, तदुक्तम्–

१ तस्य– अदृष्टस्य।

"दुःखे[1] विपर्यासमतिस्तृष्णा वाऽवन्ध्यकारणम् । जन्मिनो यस्य ते न स्तो न स जन्माधिगच्छति ॥१ ॥"

इति सौगताकूतम् । तदसत्, प्रेत्य हीनशुन्यादिगर्भेऽभिलाषासंभवात् । एवं चात्मप्रदेशात् कर्मप्रदेशानां पृथक्करणरूपया निर्जरयैव व्यापारवत्त्वं कर्मणो ज्ञानस्य वा, न तु कर्मणा परेषामपि 'धर्मेण पापमपनुदति' इत्याद्येतदर्थावेदकम् ।

येऽप्याहुरुदयनमतानुसारिणः– 'कर्मणा यावदनुकूलोपसंहारकेण तत्त्वज्ञानमुपसंहृत्यैव मोक्षो जननीयः' इत्यावश्यकत्वात् तत्त्वज्ञानमेव कर्मणां द्वारम् । अनुमानमपि– तीर्थविशेषस्नानादीनि तत्त्वज्ञानद्वारकाणि, मोक्षजनककर्मत्वात्, यमादिवत् । न चात्र योगत्वमुपाधिः, "कथयति भगवानिहान्तकाले भवभयकातरतारकं प्रबोधम्" इत्यादिपुराणात्; "रुद्रस्तारकं व्याचष्टे" इत्यादिश्रुतेश्च तत्त्वज्ञानद्वारा मुक्तिजनके वाराणसीप्रायणादौ साध्याव्यापकत्वात् । तेषां च कर्मणां सत्त्वशुद्धिद्वारा तत्त्वज्ञानहेतुत्वम् । कार्यविशेषाच्च न व्यभिचारः । श्रुतिरपि तत्त्वज्ञान-कर्मणोः कारणतामात्रं बोधयति, न तु तुल्यकक्षतया समुच्चयम्' इति तेऽपि भ्रान्ताः, हिंसामिश्रितानां स्नानादीनामीश्वरार्पणबुद्ध्यादिना सत्त्वशुद्धिद्वारा तत्त्वज्ञानाहेतुत्वात्; अन्यथा ब्रह्महत्या-श्येनयागादीनामपि तद्बुद्ध्या क्रियमाणानां तथात्वप्रसङ्गात्, वाराणसीप्रायणादेरपि नियमतः सत्त्वशुद्ध्यभावात्, बहूनामपि तत्र म्रियमाणानां रौद्रध्यानादिलिङ्गोपलम्भात्, तत उपदेशेन ज्ञानकल्पने मानाभावात्; अन्यथा तदुपदेशस्यान्येनापि संनिहितश्रोत्रेण श्रवणप्रसङ्गात्, तदेकश्रवणयोग्योपदेशे श्रद्धामात्रात्, तत्त्वज्ञानप्रतिबन्धकादृष्टनाशककर्मणां मोक्षे जनयितव्ये तत्त्वज्ञानद्वारकत्ववत् तत्त्वज्ञानस्यापि मुक्तिप्रतिबन्धकप्रारब्धनाशकयोगिप्रयत्नविशेषकर्मद्वारक-

१ ख. ग. घ. च. 'दुःखवि' ।

त्वसाम्याच्च। अन्तिमतत्त्वज्ञानमेव मुक्तिहेतुरिति न तत्र कर्मद्वारकत्वमिति चेत्। तर्हि अन्तिमकर्मैव तत्त्वज्ञानजनकमस्तु, इति का तत्र सत्त्वशुद्धिद्वारकत्वप्रतिज्ञा?। अन्तिमं कर्मैव च मुक्तिहेतुः, न त्वत्र तत्त्वज्ञानद्वारकत्वमित्यपि च न दुर्वचम्। केवलज्ञानमनुवृत्तं ब्रुवतां किं कर्मव्यापारकत्वव्यसनेन? इति चेत्। अनभिज्ञोऽसि, न हि वयं कर्मणामपि भावतश्चारित्ररूपेणानुवृत्ततां न ब्रूमः, उत्तरोत्तरविशुद्ध्याऽविशुद्धपर्यायापगमेऽपि पर्यायवतोऽनपगमात्। युक्तं चैतत्, इत्थमेव ज्ञान-मुक्त्यादावनुगतहेतुहेतुमद्भावादिव्यवहारोपपत्तेः, बाह्यकर्मणां तदभिव्यञ्जकतयैवोपयोगात्, इदमेव भावतः सत्त्वशुद्धिः, कर्मापगमस्तु द्रव्यतः; तदाहुः—

"यः कर्मपुद्गलादानच्छेदः स द्रव्यसंवरः। भवहेतुक्रियात्यागः स पुनर्भावसंवरः॥ १॥" इति दिग्।

एतेन ' "न कर्मणा न प्रजया धनेन नान्यः पन्था विद्यतेऽयनाय, नास्त्यकृतः कृतेन"

"कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते। तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः॥ १॥"

इत्यादि-श्रुति-स्मृतिशतेन कर्मणां निषेधात्, "तपसा कल्मषं हन्ति" इत्यादिना तत्त्वज्ञानोत्पत्तिप्रतिबन्धकदुरितनिवृत्त्यैवान्यथासिद्धिप्रदर्शनात्, यागकारणताग्रहोत्तरकल्प्येनापूर्वेणोपजीव्य विरोधेन यागान्यथासिद्ध्यभावेऽपि प्रतिबन्धकाभावस्य कार्यमात्रकारणतायाः प्रागेवावधारणात् तेन कर्मणोऽन्यथासिद्धेः सुवचत्वात्; मङ्गल-कारीर्योरिव वृष्टि-समाप्त्योर्न कर्मणां मुक्तिहेतुत्वम्, किन्तु ज्ञानस्यैव, "ज्ञानादेव तु कैवल्यम्" "तमेव विदित्वाऽतिमृत्युमेति" "तरति शोकमात्मवित्"

